# पाठ्य-पुस्तक-निर्माण-समितिः

## संस्कृतवाङ्मयादर्शः (द्वितीयो भागः)

### वरिष्ठोपाध्याय-कक्षायै स्वीकृतं पाठ्यपुस्तकम्

संयोजकः व्याख्याकारश्च- डॉ. निरञ्जनः साहुः
संभागीय-संस्कृत-शिक्षाधिकारी,
अजमेर-संभागः, अजमेरम्।

व्याख्याकाराः- श्रीरामानुजः पाण्डेयः (प्राध्यापकः)
राजकीय-वरिष्ठोपाध्याय-संस्कृत-विद्यालयः,
रामसिंहपुरा, जयपुरम्।
सदस्यः राष्ट्रिय-संस्कृत-परिषद्,
भारत-सर्वकारः, नव-देहली।

डॉ.रघुवीरप्रसादः शर्मा (प्राध्यापकः)
निदेशालय-संस्कृतशिक्षा, राजस्थानम्, जयपुरम्।
सदस्यः राजस्थान-राज्यसंस्कृत-परामर्श-मण्डलम्,
राजस्थान-सर्वकारः।

डॉ.अनिलकुमारः शर्मा (प्राध्यापकः)
राजकीय-वरिष्ठोपाध्याय-संस्कृत-विद्यालयः,
विराटनगरम्, जयपुरम्।

# पाठ्यक्रम–निर्माण–समितिः

## संस्कृतवाङ्मयादर्शः ( द्वितीयो भागः )
## वरिष्ठोपाध्याय-कक्षायै स्वीकृतं पाठ्यपुस्तकम्

संयोजक– श्री विमल कुमार जैन (आई.ए.एस.)
निदेशक संस्कृत शिक्षा, राजस्थान, जयपुर

सदस्य–
1. श्री बहादुर सिंह गुर्जर
सहायक निदेशक, संस्कृत शिक्षा, राजस्थान, जयपुर

2. श्री नाथूलाल सुमन, संयुक्त सचिव
उच्च शिक्षा शासन सचिवालय, जयपुर

3. योगेन्द्र धामा, व्याख्याता
राजकीय महाविद्यालय, अलवर

4. डॉ. हरि सिंह राजपुरोहित, व्याख्याता,
राजकीय महाविद्यालय, ओसियां, जोधपुर

5. श्री हरिओम गौतम, व्याख्याता
राजकीय शास्त्री संस्कृत महाविद्यालय, भरतपुर

6. श्री रामावतार सिंह, प्रधानाध्यापक,
आदर्श राजकीय प्रवेशिका संस्कृत विद्यालय, धौलपुर

7. श्री प्रदीप कुमार भट्ट, प्रधानाध्यापक,
आदर्श राजकीय प्रवेशिका संस्कृत विद्यालय, डूंगरपुर

8. श्री महेश चन्द्र शर्मा, वरि. अध्यापक,
राजकीय वरि.उपाध्याय संस्कृत विद्यालय, सावर, अजमेर

## प्रास्ताविकं किञ्चित्

संस्कृतभाषा सर्वभाषाजननी विद्यते। भाषाया: रूपद्वयं ख्यातम्। शास्त्रीयं व्यावहारिकञ्च। शास्त्रीयभाषा व्याकरणसम्मतास्ति। व्यावहारिकभाषा विना व्याकरणं भाषितुं शक्यते किन्तु शास्त्रमवगन्तुं पठितुं लेखितुञ्च व्याकरणस्यावश्यकता भवति। यतोहि व्याकरणं मूलं सर्वशास्त्राणाम्। लघुसिद्धान्तकौमुदी व्याकरणस्य सर्वोत्तमं प्रवेशद्वारं वर्तते। पूर्वप्रवेशिका-नवमीकक्षात: लघुसिद्धान्तकौमुदीत: संस्कृत-शिक्षा-विभागे स्तरानुसारं प्रकरणानि पाठ्यक्रमे निर्धारितानि सन्ति। माध्यमिक-शिक्षा-बोर्ड-राजस्थान- पक्षत: वरिष्ठोपाध्यायकक्षायां **संस्कृतवाङ्मयादर्श: ( द्वितीयो भाग: )** नाम पुस्तकं निधारितम्।

**अत्र पुस्तके पञ्च भागा: सन्ति।**

**प्रथमभागे** लघुसिद्धान्तकौमुदीत: संपूर्णं तद्धितप्रकरणं तथा भू-धातो: दशलकारेषु सिद्धि-प्रयोगाश्च सन्ति। छात्राणां सुखबोधाय सूत्राणां सरला व्याख्या संपादिता लिखिता च लेखकेन धीमता डॉ.अनिल कुमारशर्ममहोदयेन। येन छात्रा: व्याकरणं पठितुं रुचिमन्त: भवेयु:।

**द्वितीयभागे** श्रीमता अम्बिकादत्तव्यासेन विरचितम् आधुनिक-संस्कृत-उपन्यास-शिवराजविजय-नाम गद्यकाव्यं सुप्रसिद्धं विद्यते। अस्मात् काव्यात् प्रथमविरामस्य द्वितीय: नि:श्वास: पाठ्यक्रमे निर्धारित:। अस्य नि:श्वासस्य गद्यखण्डानां प्रसंग-व्याख्या-भावार्था: सरलसंस्कृतेन विदुषा लेखकेन श्रीमता रामानुजपाण्डेयमहोदयेन छात्राणां ज्ञानवर्धनाय कृता: सन्ति।

**तृतीयभागे** लोकाचारपरिज्ञानाय नैतिक-चारित्रिकमूल्यवर्धनाय महाकविना भर्तृहरिणा विरचितस्य नीतिशतकस्य एकपञ्चाशत्-श्लोकत: शतं श्लोकपर्यन्तं प्रसङ्ग-पदच्छेद-अन्वय-व्याख्या-भावार्थ-व्याकरण-कोष-छन्दोऽलङ्कारा: सरलसंस्कृतेन लिखिता: विद्यन्ते।

**चतुर्थभागे** श्रीमता अमरसिंहेन विरचितस्य अमरकोषस्य पाठ्यक्रमे मनुष्यवर्ग: विद्यते। एतेन छात्राणां कोषज्ञानं वर्धिष्यते। छात्रा: सरलसंस्कृते वाक्यरचनां श्लोकरचनां च कर्तुं शक्नुवन्ति। तृतीय-चतुर्थ- भागयो: व्याख्याया: लेखनं डॉ. निरञ्जनसाहुना संयोजकेन संपादितम्। मन्ये छात्ररञ्जनाय भविष्यति।

**पञ्चमभागे** ज्योतिषशास्त्रस्य प्रवेशाय पञ्चाङ्गज्ञानाय ज्योतिष-अवकहडाचक्रस्य श्लोका: सन्ति। एतेषां श्लोकानां सरलसंस्कृतेन वैज्ञानिकपद्धत्या प्रसंग-अन्वय-व्याख्या-भावार्था: विदुषा डॉ.रघुवीर-प्रसादशर्ममहोदयेन सुलिखिता: सन्ति।

पुस्तकमिदं सुरुचिरं ज्ञानवर्धकं कर्तुं संलग्ना: विद्वांस: सुलेखका: व्याख्याकारा: साधुवादार्हा:। यै: प्रत्यक्ष-परोक्षरूपेण विद्वद्भि: मार्गदर्शनं प्रदत्तं, तेभ्य: वयं हार्दिककृतज्ञतां ज्ञापयाम:। अत्र पुस्तके अज्ञानजा: मुद्रणजा: वा प्रमादजा: जाता: दोषा: क्षन्तव्या:। अध्यापका: छात्राश्च निवेद्यन्ते यत् स्वमन्तव्य-प्रस्तावा: सूचनीया: । आगामिनि प्रकाशने दोषा: अपाकरिष्यन्ते इति सादरं निवेदनम्।

**संयोजक: लेखकाश्च**

## कक्षा- वरिष्ठोपाध्यायः

## विषयः- संस्कृतवाङ्मयः

**समयः**- 3:15 होरा **पूर्णाङ्कः**-80

| क्रं.सं. | अधिगमक्षेत्रम् | अङ्कभारः |
|---|---|---|
| (1) | लघुसिद्धान्तकौमुदी (तद्धितप्रकरणम्), भू-धातोः दशलकारेषु रूपसिद्धयः (20+10) | 30 |
| (2) | शिवराजविजयः (प्रथमविरामस्य द्वितीयः निःश्वासः) | 10 |
| (3) | नीतिशतकम् (51 श्लोकतः 100 श्लोकपर्यन्तम्) | 10 |
| (4) | अमरकोषः (मनुष्य-वर्गः) | 10 |
| (5) | अवकहडाचक्रम् | 10 |
| (6) | रचनानुवादः | 10 |

---

| क्रं.सं. | पाठ्य-वस्तूनि | | | अङ्कभारः |
|---|---|---|---|---|
| 1. | **लघुसिद्धान्तकौमुदी-** | | | 30 |
| | (क) तद्धितप्रकरणम् (रूपसिद्धयः + सूत्रव्याख्या) | | 15 + 05 | |
| | (ख) भू-धातोः दशलकारेषु (रूपसिद्धयः + सूत्रव्याख्या) | | 07 + 03 | |
| 2. | **शिवराजविजयः ( प्रथमविरामस्य द्वितीयः निःश्वासः )** | | | 10 |
| | (क) सप्रसंगव्याख्या भावार्थश्च | (3 + 2) | 05 | |
| | (ख ) कवि-परिचयः | | 02 | |
| | (ग) विषयवस्तु-प्रश्नाः | | 03 | |
| 3. | **नीतिशतकम् ( 51 श्लोकतः 100 श्लोकपर्यन्तम् )** | | | 10 |
| | (क) सप्रसंगव्याख्या भावार्थश्च | (3 + 2) | 05 | |
| | (ख ) कवि-परिचयः | | 02 | |
| | (ग) विषयवस्तु-प्रश्नाः | | 03 | |
| 4. | **अमरकोषः** (मनुष्यवर्गः) | | | 10 |
| | (क) अतिलघूत्तरात्मक-प्रश्नाः | | 04 | |
| | (ख) लघूत्तरात्मक-प्रश्नाः | | 06 | |
| 5. | **अवकहडाचक्रम्** | | | 10 |
| | (क) अतिलघूत्तरात्मक-प्रश्नाः | | 04 | |
| | (ख) लघूत्तरात्मक-प्रश्नाः | | 06 | |
| 6. | **रचनानुवादकौमुदी** | | | 10 |
| | (क) संस्कृतानुवादः | | 03 | |
| | (ख) अशुद्धिसंशोधनम् | | 02 | |
| | (ग) निबन्धलेखनम् | (150 शब्दैः) | | 05 |

निर्धारितपुस्तके-

1. संस्कृत-वाङ्मयादर्शः (द्वितीयो भागः) । 2. रचनानुवादकौमुदी (डॉ. कपिलदेव द्विवेदी)

# विषयानुक्रमणिका

## व्याकरणशास्त्रस्य संक्षिप्तपरिचयः

''व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति शब्दज्ञानजनकं व्याकरणम्'' । वि + आङ् इत्युपसर्गपूर्वकात् कृ-धातोः करणे ल्युट्प्रत्यये कृते व्याकरणशब्दो निष्पद्यते। सामान्यतः शब्दसाधुत्वज्ञानमेव व्याकरणशास्त्रस्य मुख्यं प्रयोजनमस्ति। स्वयमेव भगवान् पतञ्जलिः प्राह- अथ शब्दानुशासनम् इति। अनुशिष्यन्ते अपशब्देभ्यो विविच्य कथ्यन्ते साधुशब्दा अनेनेत्यनुशासनम्। शब्दानुशासनं नाम-सूत्रवार्तिक-भाष्य-व्याख्यानादिरूपं शास्त्रमिति। अखिलेऽस्मिन् संस्कृतवाङ्मये व्याकरणशास्त्रस्य स्थानं सर्वोपरि वर्तते। यतोहि व्याकरणशास्त्रस्य ज्ञानं विना वेद-स्मृति-पुराण-इतिवृत-काव्यकोशादीनां केषामपि शास्त्रान्तराणां ज्ञानं भवितुं नार्हति, अतः शास्त्रान्तराणां ज्ञानार्थं व्याकरणाध्ययनमावश्यकं मन्यते। व्याकरणमहाभाष्ये भगवता पतञ्जलिना व्याकरणशास्त्रस्य मुख्यानि प्रयोजनानि इमानि प्रोक्तानि-''रक्षोहागमलघ्वसन्देहाः प्रयोजनम्'' इति। अर्थात् रक्षा, ऊह, आगम, लघु, असन्देहाश्च व्याकरणशास्त्राध्ययनस्य मुख्यानि प्रयोजनानि सन्ति। एतदतिरिक्तानि गौणप्रयोजनानि अपि महर्षिणा परिगणितानि।

## व्याकरणविदुषां परिचयः

**महर्षिः पाणिनिः** -व्याकरणशास्त्रपरम्परायां बहवो विद्वांसोऽभूवन्। तेषु महर्षिः पाणिनिरन्यतमः। महर्षेः पाणिनेः जन्मस्थान-जन्मसमयादिविषये विदुषां नैकमत्यं दृश्यते। त्रिकाण्डशेषाख्ये कोषे पाणिनेः षड् नामानि लभन्ते, यथा- पाणिनः, अहिकः, दाक्षीपुत्रः, शालङ्किः, पाणिनिः, शालातुरीयश्च। एभिर्नामभिरेषां गोत्रस्य, माता-पित्रोः देशस्य च निर्णयः कर्तुं शक्यते। एषु पाणिनः पाणिनिश्च इमौ द्वौ गोत्रव्यपदेशजौ स्तः। अस्य जननी दाक्षी आसीत्, अतोऽस्याभिधानं दाक्षीपुत्रोऽप्यस्ति। उक्तञ्च महर्षिणा पतञ्जलिना ''सर्वे सर्वपदादेशा: दाक्षीपुत्रस्य पाणिनेः'' इति। केषाञ्चित् विदुषां मतानुसारमस्य जनकस्य नाम शलङ्कः आसीत्। अतः अस्याभिधानं शालङ्किः सञ्जातम्। शालतुरीयः अस्य जन्मप्रदेशः आसीत्। गणरत्नमहोदधिनामकग्रन्थे अस्य व्युत्पत्तिरित्थं प्राप्यते यत्- ''शालातुरो नाम ग्रामः सोऽभिजनोऽस्यास्तीति शालातुरीयस्तत्र भवान् पाणिनिः''। अतोऽनेन स्पष्टं भवतीति यत् महर्षेः जन्मस्थानं शालातुराख्यो ग्राम एवास्ति, यः साम्प्रतं लाहोरनाम्ना प्रसिद्धो वर्तते। तथैतत् सम्प्रति पाकिस्तानदेशस्य विशालतमेषु नगरेष्वन्यतमं मन्यते।

**शिक्षा**- महर्षेः पाणिनेः प्रारम्भिकी शिक्षा तक्षशिलानामके नगरेऽभूत्। अस्य गुरुः उपवर्षाचार्यः आसीत्। यो नालन्दाविश्वविद्यालयस्य आचार्येषु सुविख्यातः आसीत्। महर्षिः पाणिनिः स्वाध्ययनकाले भगवन्तं शिवं समर्च्य तं प्रसादयामास। शिवोपदेशेन च '**अष्टाध्यायी**' इत्याख्यमद्वितीयं व्याकरणशास्त्रमरचयत्।

महर्षेः स्तुतौ उक्तं यत्-

**येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।**

**जन्मकालः**- पाश्चात्यैः विद्वद्भिः महर्षेः पाणिनेः समयः विक्रमवर्षात् ६५७ वैक्रमात् पूर्वतः २५८ विक्रमवर्षपूर्वं स्वीकृतोऽस्ति। अन्तः साक्ष्यभूतः संस्कृतव्याकरणशास्त्रस्येतिहासे श्रीमान् युधिष्ठिरमीमांसकः वैक्रमाब्दात् २८०० वर्षपूर्वं पाणिनेः कालं निश्चितवान्।

**महर्षिपाणिनेः कृतयः**- १. अष्टाध्यायी, २. सूत्रपाठः, ३. धातुपाठः, ४. गणपाठः, ५. लिङ्गानुशासनम्,६. जाम्बवतीविजयम्।

### आचार्य-कात्यायनः

पाणिनेरष्टाध्यायीमधिकृत्य अनेकैराचार्यैर्विविधा ग्रन्थाः लिखिताः। तेषु महामुनिः कात्यायनः अन्यतमः विद्यते। पाणिनिकात्यायनौ सतीर्थ्यौ आस्ताम्। कात्यायनोऽस्य गोत्रजाभिधानमस्ति। अस्य मूलनाम **वररुचिः**

आसीत्। 'प्रियतद्धिता दाक्षिणात्याः' इत्यनेन महाभाष्यवचनेन प्रतीयते यत् कात्यायनो दाक्षिणात्यः आसीत्। असौ मुनिः स्वकीयगोत्रनाम्नैव प्रसिद्धिमलभत। अस्य वार्तिकग्रन्थो निम्नाङ्कितैर्वार्तिकलक्षणैः परिपूर्णोऽस्ति। यथा–

**उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।**
**तं ग्रन्थं वार्तिकं प्राहुर्वातिकज्ञा मनीषिणः।।**

कात्यायनस्य वार्तिकपाठः पाणिनिव्याकरणस्य एकं महत्त्वपूर्णमङ्गं वर्तते। एतस्मात् कारणात् सूत्रवार्तिक –कारयोरालोके नान्यत् किमपि व्याकरणं प्रादुरभूत्। महामुनिः कात्यायनः महाकविरपि आसीत्। अस्य 'स्वर्गारोहणं' इत्याख्यस्य काव्यस्य वैशिष्ट्यं अनेकेषु ग्रन्थेषु वर्णितं दृश्यते। तद्यथा–

**यः स्वर्गाहरणं कृत्वा स्वर्गमानीतवान् भुवि।**
**काव्येन रुचिरेणैव ख्यातो वररुचिः कविः।।**

### महर्षिः पतञ्जलिः

महामुनिः पतञ्जलिः योग–व्याकरण–वैद्यशास्त्रेषु पारङ्गतः आसीत्। एतेषु विषयेषु बहवः ग्रन्थाः अनेन विरचिताः। उक्तञ्च–

**योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।**
**योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि।।**

असौ महर्षिः महाभाष्यकाररूपेण प्रसिद्धोऽस्ति। नीरसमपि व्याकरणशास्त्रं स्वकीयाभिनवशैल्या सरसं कृतवान्। यदधीत्य दैशिकाः वैदेशिकाश्च विद्वांसः इदं महाभाष्यं मुक्तकण्ठेन प्रशंसन्ति। अस्य ग्रन्थस्य आकरः विशालाकृतित्वात् महाभाष्यनाम सार्थकं प्रतीयते। विष्णुधर्मोत्तरपुराणे महाभाष्यलक्षणं यथा–

**सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।**
**स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।।**

अयं महामुनिः पतञ्जलिः प्राचीनेषु ग्रन्थेषु अनेकैः पर्यायैरवगम्यते। तथाहि गोर्नदीयः, गोणिकापुत्रः, नागनाथः, अहिपतिः, फणिभृत्, शेषराजः, शेषाहिः, चूर्णिकारः, पदकारश्चेति। गोणिकापुत्रशब्दः पतञ्जलेः परिचायकस्तर्हि अस्य मातुर्नाम गोणिका इति प्रतीयते।

**स्थितिकालः**– व्याकरणमहाभाष्ये 'पुष्यमित्रो यजते' 'इह पुष्यमित्रं यजमानः' इत्यादयः प्रयोगाः प्राप्नुवन्ति। अनेन प्रतीयते यदसौ राज्ञः पुष्यमित्रस्य समकालिकः आसीत्। यदि पुष्यमित्रस्य समयः ई. पू. द्वितीयशताब्दी मन्यते तर्हि भाष्यकारस्य कालः ई. पू. १५० भवितुमर्हति। म.म.गिरिधरशर्ममहोदयः अपि भाष्यकारस्य स्थितिकालः ई.पू. द्वितीयाब्द एवाङ्गीकृतवान्।

### भट्टोजिदीक्षितः

वैयाकरणसिद्धान्तकौमुदीकारः श्रीमान् भट्टोजिदीक्षितो महाराष्ट्रियो ब्राह्मण आसीत्। अस्य पितुर्नाम श्रीलक्ष्मीधरभट्टः, भ्राता रङ्गोजिभट्टः, द्वौ पुत्रौ भानुजीदीक्षित–वीरेश्वरदीक्षितौ चास्ताम्। अस्य गुरुः

प्रक्रिया -कौमुद्या: प्रकाशटीकाकार: श्रीशेषकृष्ण: आसीत्। अयं श्रीमत: शेषकृष्णादेव सम्पूर्णं व्याकरणशास्त्र-मधीतवान्। स्वकीये शब्दकौस्तुभे ग्रन्थे स्वयमपि भट्टोजिदीक्षित:श्रीमतेअप्पय्यदीक्षिताय नमस्करोति स्म। यथा-

**अप्पय्यदीक्षितेन्द्रानशेषविद्यागुरूनहं वन्दे।**
**यत् कृति बोधाबोधौ विद्वदविद्वद् विभाजकोपाधौ।।**

**स्थितिकाल:**- डा. वेल्वाकरमतेऽस्य समय: १६५७-१७०७ वि.सं. वर्तते। अन्ये विद्वांस: अस्य काल: १६३६ वि.सं स्वीकुर्वन्ति।

**कृतय:**- श्रीमान् भट्टोजिदीक्षितो व्याकरणशास्त्रे बहून् ग्रन्थान् रचितवान्। १. शब्दकौस्तुभ:, २. तत्त्वकौस्तुभ:, ३. तन्त्रसिद्धान्तदीपिका, ४. वैयाकरणसिद्धान्तकारिका, ५. वैयाकरणसिद्धान्तकौमुदी, ६. प्रौढमनोरमा, ७. वेदभाष्यकार:, ८. तैत्तिरीयसन्ध्याभाष्यम्, ९. तिथिनिर्णय:।

अस्य वैयाकरणसिद्धान्तकौमुदी साम्प्रतमुपलब्धेषु व्याकरणशास्त्रग्रन्थेषु श्रेष्ठं स्थानं भजते।

**आचार्यवरदराज:**

आचार्यवरदराज: दाक्षिणात्य: ब्राह्मण: आसीत्। अस्य जनक: श्रीदुर्गातनयो गुरुश्च श्रीभट्टोजिदीक्षित: आस्ताम्। मध्यसिद्धान्तकोमुद्यां वरदराज: स्वकीयं गुरुवरं भट्टोजिदीक्षितं प्राणमत्।

तथाहि-

**नत्वा वरदराज: श्रीगुरून् भट्टोजिदीक्षितान्।**
**करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम्।।**

**वरदराज:**भट्टोजिदीक्षितस्य शिष्य: आसीत्। अत एव वरदराज: स्वगुरो: भट्टोजिदीक्षितस्य समकालिक: आसीदिति प्रतीयते। आचार्यवरदराज: मध्यसिद्धान्तकौमुद्या: रचनानन्तरं व्याकरणशास्त्रस्य प्रथमसोपानरूपां लघुसिद्धान्तकौमुदीं लिखितवान्। स्त्रीप्रत्ययप्रकरणस्यान्ते स्वयमेवग्रन्थकार: इत्थं प्रतिपादयति यत्-

**शास्त्रान्तरे प्रविष्टानां बालानां चोपकारिका।**
**कृता वरदराजेन लघुसिद्धान्तकौमुदी।।**

संस्कृतव्याकरणस्य शीघ्रं सामान्यज्ञानाय लघुसिद्धान्त-मध्यसिद्धान्तकौमुदीभ्यां सदृश: कोऽपि अन्यो ग्रन्थ: भवितुं न शक्नोति। इत्यत्र नास्ति सन्देहलेश:।

## श्रीवरदराजाचार्यप्रणीता
## लघुसिद्धान्तकौमुदी
## अथ तद्धित-प्रकरणम्
## तत्रादौ साधारणप्रत्ययप्रकरणम्

**997. समर्थानां प्रथमाद्वा ( 4-1-82 ) ॥अधिकारसूत्रम् ॥**

इदं पदत्रयम् अधिक्रियते 'प्राग्दिशो विभक्तिः' इति यावत्।

**998. अश्वपत्यादिभ्यश्च ( 4-1-84 ) ॥विधिसूत्रम् ॥**

एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु। अश्वपतेरपत्यादि आश्वपतम्। गाणपतम्।

---

997. **समर्थानामिति** – समर्थानाम्, प्रथमात्, वा इति पदत्रयम् अधिक्रियते 'प्राग्दिशो विभक्तिः' इति सूत्रं यावत्। समर्थानाम् इत्यत्र निर्धारणे षष्ठीविभक्तिः अर्थश्च समर्थानां मध्य इति। समर्थेषु पदेषु प्रथमानिर्दिष्टा-देव विकल्पेन प्रत्ययोत्पत्तिर्भवति। समर्थानामिति बहुवचननिर्देशाद् अनेकसमर्थसमुदाय एवैतस्य प्रवृत्तिरिति केचन। सामर्थ्यमत्र परिनिष्ठितत्वं गृह्यते। सूत्रेऽस्मिन् वा ग्रहणात् तद्धितप्रत्ययो विकल्पेन भवति। अतः पक्षे उपगोः अपत्यम् इति वाक्यप्रयोगोऽपि सम्भवः।

* **तद्धितप्रत्ययसम्बन्धिनः स्मरणीयांशाः** –

(1) कृतसन्धिकार्येभ्य एव शब्देभ्य तद्धितप्रत्ययाः भवन्ति।

(2) तस्यापत्यम्, तेन रक्तं रागात्, तेन प्रोक्तम्, तस्य समूहः, तत आगतः इत्यादि प्रत्ययविधायकसूत्रेषु तस्य, तेन, ततः आदिप्रथमपठितपदेभ्यः, तद्बोध्य-शब्देभ्य एव तद्धितप्रत्ययाः भवन्ति।

(3) तद्धितप्रत्ययाः विकल्पेन भवन्ति, अतः पक्षे वाक्यं तथा यथासम्भवं समासोऽपि शक्यः।

(4) तद्धितप्रत्ययाः सुबन्तेभ्य एव भवन्ति केवलप्रातिपदिकेभ्य एव न। यत्र प्रातिपदिकेभ्यः विधानं कथितं तत्रापि तत्तत्प्रकृतिकसुबन्तेभ्य एव विधानमवगन्तव्यम्।

(5) तद्धितप्रत्ययानां विधानेऽपि समर्थपरिभाषा (समर्थः पदविधिः) प्रवृत्ता भवति। अतः समर्थपदेभ्य एव तद्धितप्रत्ययानाम् उत्पत्तिर्भवति, असमर्थपदेभ्यः न। यथा– 'ऋद्धस्य उपगोरपत्यम्, कम्बलमुपगोरपत्यं देवदत्तस्य' इत्यादिषु उपगुशब्दात् अपत्यार्थे अण्प्रत्ययो न भवति।

998. **अश्वपत्यादिभ्यः च इतिच्छेदः**। अश्वपतिशब्द आदिर्येषां ते अश्वपत्यादयः, तेभ्यः = अश्वपत्यादिभ्यः। तद्गुणसंविज्ञानबहुव्रीहि-समासः। **अश्वपत्यादिगणपठितशब्देभ्योऽण्प्रत्ययो भवेत् 'तेन दीव्यति खनति जयति जितम्' इति सूत्रात् प्राक् अर्थेषु।**

**अश्वपत्यादिगणो यथा– अश्वपतिः।** ज्ञानपतिः। शतपतिः। धनपतिः। गणपति स्थानपतिः। यज्ञपतिः। राष्ट्रपतिः। कुलपतिः। गृहपतिः। पशुपतिः। धान्यपतिः। धन्वपतिः। बन्धुपतिः। धर्मपतिः। सभापतिः। प्राणपतिः। क्षेत्रपतिः।

### रूपसिद्धिः

**आश्वपतम्** – अश्वपतेरपत्यादि इति लौकिकविग्रहे अश्वपति ङस् इत्यलौकिकविग्रहे ''अश्वपत्यादिभ्यश्च'' इति सूत्रेण अश्वपतिशब्दात् अपत्यार्थे अण्प्रत्ययेऽनुबन्धलोपे, अश्वपति ङस् अ इति जाते, ''कृत्तद्धितसमासाश्च'' इति सूत्रेण समग्र-समुदायस्य प्रातिपदिकसञ्ज्ञायां ''सुपो धातुप्रातिपदिकयोः'' इति सूत्रेण सुपो लुकि, अश्वपति अ इति जाते, ''तद्धितेष्वचामादेः'' इति सूत्रेण आदेः अकारस्य आकारे वृद्धौ, आश्वपति अ इति जाते, ''यचिभम्'' इति सूत्रेण भसञ्ज्ञायां, ''यस्येति च'' इति सूत्रेण इकारलोपे, ''स्वौजस्.'' इत्यादिना सूत्रेण प्रथमैकवचने सुप्रत्यये आश्वपत सु इति जाते, नपुंसके ''अतोऽम्'' इति सु इत्यस्य स्थाने अमादेशे, आश्वपत अम् इति जाते, ''अमिपूर्वः'' इतिसूत्रेण

**999. दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ( 4-1-85 ) ॥विधिसूत्रम् ॥**

दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात्।

अणोऽपवादः। दितेरपत्यं दैत्यः। अदितेरादित्यस्य वा अपत्यम्-

**1000. हलो यमां यमि लोपः ( 8-4-63 ) ॥विधिसूत्रम् ॥**

वा स्यात्। इति यलोपः। आदित्यः। प्राजापत्यः।

(वा.) देवाद्यञञौ। दैव्यम्। दैवम्।

(वा.) बहिषष्टिलोपो यञ् च। बाह्यः।

(वा.) ईकक् च।

---

अकाराकारयोः अकारे पूर्वरूपे 'आश्वपतम्' इति रूपं सिद्धम्।

**गाणपतम्** – गणपतेरपत्यादि इतिविग्रहे, गणपति ङस् इत्यलौकिक-विग्रहे ''अश्वपत्यादिभ्यश्च'' इति सूत्रेण गणपति शब्दात् अपत्यार्थे अण्प्रत्ययेऽनुबन्धलोपे, गणपति ङस् अ इति जाते, प्रादिपदिकत्वात् सुपोलुकि, गणपति अ इति जाते, ''तद्धितेष्वचामादे'' रिति आदिवृद्धौ, गाणपति अ इति जाते, भसञ्ज्ञायां यस्येति चेति इकारलोपे, गाणपत इति जाते, प्रातिपदिकत्वात्स्वादिकार्ये 'गाणपतम्' इति रूपं सिद्धम्। इत्थमेव अश्वपत्यादिगणस्या-न्यशब्दानां सिद्धिरपि बोद्धव्या।

**विशेषः** – लघुसिद्धान्तकौमुद्यां मुख्यतः प्राग्दीव्यतीयार्था इमे सन्ति- (1) तस्यापत्यम् (2) तेन रक्तं रागात् (3) नक्षत्रेण युक्तः कालः (4) दृष्टं साम (5) परिवृतो रथः (6) तत्रोद्धृतममत्रेभ्यः (7) संस्कृतं भक्षाः (8) साऽस्य देवता (9) तस्य समूहः (10) तदधीते तद्वेद (11) तदस्मिन्नस्तीति देशे तन्नाम्नि (12) तेन निवृत्तम् (13) तस्य निवासः (14) अदूरभवश्च (15) शेषे (16) तत्र जातः (17) प्रायभवः (18) सम्भूते (19) तत्र भवः (20) तत आगतः (21) प्रभवति (22) तद् गच्छति पथिदूतयोः (23) अभिनिष्क्रामति द्वारम् (24) अधिकृत्य कृते ग्रन्थे (25) सोऽस्य निवासः (26) तेन प्रोक्तम् (27) तस्येदम् (28) तस्य विकारः। एभ्योऽतिरिक्ताः केचनान्येऽपि अर्थाः अष्टाध्याय्यामुल्लिखिताः।

999. दित्यदित्यादित्यपत्युत्तरपदात् ण्यः इतिच्छेदः। पतिशब्दः उत्तरपदं यस्य सः पत्युत्तरपदः (शब्दः), बहुव्रीहिसमासः। दितिश्च अदितिश्च आदित्यश्च पत्युत्तरपदश्च दित्यदित्यादित्यपत्युत्तरपदम्, तस्मात् = दित्यदित्यादित्यपत्युत्तरपदात्, समाहारद्वन्द्वः। **दीव्यतः प्रागर्थेषु दिति, अदिति, आदित्य पत्युत्तरपदेभ्यः च तद्धितसञ्ज्ञकः ण्यप्रत्ययो भवेदित्यर्थः।** प्राग्दीव्यतोऽण् इत्यधिकृतः अणोऽपवादः।

**रूपसिद्धिः**

**दैत्यः** – दितेरपत्यं पुमान् इत्यर्थे दितिशब्दात् ''दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः'' इति सूत्रेण ण्यप्रत्यये, ''चुटू'' इति णकारेत्सञ्ज्ञायां, ''तस्य लोपः'' इति लोपे, दिति य इति जाते, ''तद्धितेष्वचामादेः'' इति सूत्रेण आद्यचो वृद्धौ, दैति य इति जाते, भसञ्ज्ञायां ''यस्येति च'' इति इकारलोपे स्वादिकार्ये 'दैत्यः' इति रूपं सिद्धम्। अदितेरपत्यम् आदित्योऽपि दैत्यः इतिवत् सिध्यति।

1000. **हलो यमामिति – हलः यमां यमि लोपः इतिच्छेदः। हलः ( व्यञ्जनात् परे ) परेषां यम्प्रत्याहारस्थवर्णानां लोपः स्याद् यमि परे इत्यर्थः।** य व र ल ञ म ङ ण न इति यम्। यथासंख्यमनुदेशः समानाम् इति परिभाषानुसारं यपरे यकारस्य वपरे वकारस्येत्यादि प्रकारेण लुप्यमानयमः तादृशि एव यमि लोपो भवति।

**आदित्यः** – आदित्यस्य अपत्यम् आदित्यः। आदित्यशब्दात् ''दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः'' इति सूत्रेण ण्यप्रत्ययेऽनुबन्धलोपे आदित्य य इति जाते, पर्जन्यवल्लक्षणप्रवृत्तिरितिन्यायात् ''तद्धितेष्वचामादेरिति'' आदिवृद्धा

1001. **किति च ( 7-2-115 ) ॥विधिसूत्रम् ॥**

किति तद्धिते च अचामादेरचो वृद्धिः स्यात्। बाहीकः।

(वा.) **गोरजादिप्रसङ्गे यत्।**

गोरपत्यादि गव्यम्।

---

आदित्य य इति जाते, भसञ्ज्ञायाम् अलोपे आदित्य् य इति जाते, ''हलो यमां यमि लोपः'' इति विकल्पेन पूर्वयलोपे स्वादिकार्ये 'आदित्यः' इति रूपं सिद्धम्।

**प्राजापत्यः** – प्रजापतेरपत्यं प्राजापत्यः। प्रजापतिशब्दात् दित्यदित्यादित्येत्यादिना ण्यप्रत्ययेऽनुबन्धलोपे प्रजापति य इति जाते, आदिवृद्धौ प्राजापति य इति जाते भसञ्ज्ञायामिकारलोपे प्राजापत् य इति जाते, प्रातिपदिकत्वात्स्वादिकार्ये 'प्राजापत्यः' इति रूपं सिद्धम्। एवमेव सैनापत्यम्, बार्हस्पत्यम् इत्यादयोऽपि बोद्धव्याः।

**देवाद्यञञाविति** – प्राग्दीव्यतीयेष्वर्थेषु देवशब्दाद् यञ्प्रत्ययः अञ्प्रत्ययश्च भवतः।

**रूपसिद्धिः**

**दैव्यम्** – देवस्य अपत्यादि इत्यर्थे देवशब्दाद् ''देवाद्यञञौ'' इति वार्तिकेन यञि, अनुबन्धलोपे देव य इति जाते, ञित्वात् आदिवृद्धौ दैव य इति जाते, भत्वादकारलोपे दैव् य इति जाते, प्रातिपदिकात्स्वादिकार्ये 'दैव्यम्' इति रूपं सिद्धम्।

**दैवम्** – देवस्य अपत्यादि इत्यर्थे अञ्प्रत्येयऽनुबन्धलोपे आदिवृद्धौ दैव अ इति जाते, भत्वादकारलोपे दैव् अ इति जाते, प्रातिपदिकात्स्वादिकार्ये 'दैवम्' इति रूपं सिद्धम्।

**बहिषष्टिलोप इति**– प्राग्दीव्यतीयेष्वर्थेषु बहिस् इत्यव्ययाद् यञ् स्यात् बहिस् इत्यस्य टि (इस्) लोपोऽपि स्यादित्यर्थः।

**रूपसिद्धिः**

**बाह्यः** – बहिर्भव इत्यर्थे बहिस् शब्दात् बहिषष्टिलोपो यञ्चेति वार्तिकेन यञि टिलोपे च कृते बह् य इति जाते, ञित्वाद् आदिवृद्धौ बाह्य इति जाते, प्रातिपदिकात्स्वादिकार्ये बाह्यः इति रूपं सिद्धम्। स्त्रीलिङ्गे टापि बाह्या नपुंसि च बाह्यम् इति रूपद्वयम्।

**ईकक्चेति** – बहिष प्राग्दीव्यतीयेष्वर्थेषु ईकक् प्रत्ययः प्रकृतेष्टिलोपश्चेत्यर्थः। ईककोऽन्त्यककार इत्सञ्ज्ञकः।

1001. **किति चेति** – तद्धितेष्वचामादेरित्यतोऽचामादेरिति, मृजेर्वृद्धिरित्यतो वृद्धिरिति चानुवर्तते। अतः अत्रोक्तं **किति अचामादेरचो वृद्धिः स्यादित्यर्थः।**

**रूपसिद्धिः**

**बाहीकः** – बहिर्भव इत्यर्थे बहिस् शब्दाद् ''ईकक् च'' इति वार्तिकेन ईकक्प्रत्यये टिलोपे च कृते बह् ईक इति जाते, किति चेति आदिवृद्धौ, प्रातिपदिकात्स्वादिकार्ये 'बाहीकः' इति रूपं सिद्धम्।

**विशेषः** – अव्ययान्तं भमात्रे टिलोप इत्यस्य अनित्यताज्ञापनाय उभाभ्यां वार्तिकाभ्यां टिलोपः क्रियते।

**गोरजादिप्रसङ्गे यदिति– गोशब्दात् प्राग्दीव्यतीयेष्वर्थेषु अन्येषु वा अजादिप्रत्ययप्रसङ्गे यत्प्रत्ययः स्यादित्यर्थः।**

**रूपसिद्धिः**

**गव्यम्** – गोरपत्यम्, गवि भवम्, गोभ्य आगतम्, गौर्देवताऽस्य गोरिदम् इत्याद्यर्थेषु गो शब्दात् ''प्राग्दीव्यतोऽण्'' इति अणं प्रबाध्य ''गोरजादिप्रसङ्गे यत्'' इति यत्-प्रत्ययेऽनुबन्धलोपे गो य इति जाते, ''वान्तो यि प्रत्यये'' इति वार्तिकेन ओकारस्य स्थाने अवादेशे स्वादिकार्ये 'गव्यम्' इति रूपं सिद्धम्।

**विशेषः** – प्रकृतवार्तिके अजादिप्रसङ्गे इत्यस्यार्थः अणादिप्रत्यय-प्रसङ्ग इति। अच् आदिर्यस्य स अजादिरिति बहुव्रीहिसमासाद् अणादय एव गृह्यन्तेऽजादित्वात्।

1002. **उत्सादिभ्योऽञ्( 4-1-86 ) ॥विधिसूत्रम् ॥**
(प्राग्दीव्यतीप्येष्वर्थेषु) औत्सः।
इत्यपत्यादिविकारान्तार्थाः साधारणप्रत्ययाः।

---

1002. **उत्सादिभ्य इति** - उत्सादिभ्यः अञ् इतिच्छेदः। उत्स शब्दः आदिर्येषां ते उत्सादयः, तेभ्यः = उत्सादिभ्यः। तद्गुण संविज्ञान बहुव्रीहिसमासः। **प्राग्दीव्यतीयेष्वर्थेषु उत्सादिगणपठितशब्देभ्योऽञ् स्यात्। अणस्तदपवादानाञ्चैतद् बाधकम्।**

**उत्सादिगणो यथा** - उत्स। उदपान। विकर। विनद। महानद। महानस। महाप्राण। तरुण। तुलन। बष्कय। धेनु। पृथिवी। पङ्क्ति। जगता। त्रिष्टुभ्। अनुष्टुभ्। जनपद। भरत। उशीनर। ग्रीष्म। पीलु। कुल। उदस्थान। वृष। भल्लकीय। रथन्तर। मध्यन्दिन। बृहत्। महत्। सत्त्वत्। कुरू। पञ्चाल। इन्द्रावसान। उष्णिह्। ककुभ्। सुवर्ण। सुपर्ण। देव।

**रूपसिद्धिः**

**औत्सः ( मण्डूक इत्यादिः )** उत्से भव औत्सः। उत्सशब्दात् ''उत्सादिभ्योऽञ्'' इति सूत्रेण अञ्प्रत्ययेऽनुबन्धलोपे, ञित्वात् ''तद्धितेष्वचामादेः'' इति सूत्रेण आदिवृद्धौ औत्स अ इति जाते, भत्वाद् ''यस्येति च'' इति अकारलोपे स्वादिकार्ये 'औत्सः' इति रूपं सिद्धम्।

॥ इति साधारणप्रत्ययप्रकरणम् ॥

## ॥ अभ्यासः ॥

**वस्तुनिष्ठात्मकप्रश्नाः –**

1. समर्थानां प्रथमाद्वा इति सूत्रमस्ति –
   (क) विधिसूत्रम्  (ख) सञ्ज्ञासूत्रम्
   (ग) गणसूत्रम्  (घ) अधिकारसूत्रम्
2. अश्वपत्यादिभ्योऽण् भवति –
   (क) स्वार्थे  (ख) दीव्यतीत्यर्थे
   (ग) प्राग्दीव्यतीयेष्वर्थेषु  (घ) अश्वपति इत्यर्थे
3. आदित्यशब्दः सिद्यति –
   (क) दितेः  (ख) अदितेः
   (ग) आदित्यात्  (घ) खगाभ्याम्

**अतिलघूत्तरात्मकप्रश्नाः –**

1. गाणपतम् इत्यस्यार्थः कः?
2. आश्वपतम् इत्यत्र कः प्रत्ययः केन विधीयते?
3. ण्यप्रत्ययः कस्यापवादः?
4. पत्युत्तरपदात् कः प्रत्ययो भवति?
5. आदित्यः इत्यत्र यलोपो केन भवति?
6. दैव्यम् इत्यत्र प्रकृतिप्रत्ययौ लेख्यौ।
7. दैवम् इत्यत्र कः प्रत्ययः केन क्रियते?
8. बाह्यः इत्यत्र टिलोपः केन भवति?
9. बाहीकः इत्यत्र आदिवृद्धिविधायकं नियमं लिखन्तु।
10. गव्यम् इत्यत्र प्रकृतिप्रत्ययौ कौ? लिखन्तु।

**लघूत्तरात्मकप्रश्नाः –**

1. दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः इति सूत्रं सपदच्छेदं व्याख्यायताम्?
2. उत्सादिभ्योऽञ् इति सूत्रार्थः लिख्यताम्।
3. देवाद्यञञौ इतिवार्तिकार्थं लिखन्तु।

**निबन्धात्मकप्रश्नाः –**

1. अधोलिखिताः प्रयोगाः ससूत्रं साधनीयाः।
   आश्वपतम्, गाणपतम्, दैत्यः, आदित्यः, प्राजापत्यः, दैव्यम्, दैवम्, बाह्यः, बाहीकः, औत्सः।
2. प्रकरणस्थसूत्राणां वार्तिकानाञ्च निम्नलिखितप्रारूपानुसारं सारणी निर्मातव्या।
   सूत्रम्/वार्तिकम्।  सूत्रार्थः/वार्तिकार्थः  उदाहरणानि
3. अश्वपत्यादिगणस्थशब्दान् ससूत्रं साधयन्तु।
4. उत्सादिगणस्थशब्दान् ससूत्रं साधयन्तु।
5. पुस्तकस्थप्राग्दीव्यतीयार्थाः लेखनीयाः।

## अथाऽपत्याधिकारः

**1003. स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्( 4-1-87 ) ॥अधिकारसूत्रम् ॥**

'धान्यानां भवने' इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां, क्रमाद् नञ्स्नञौ स्तः। स्त्रैणः। पौंस्नः।

**1004. तस्यापत्यम्( 4-1-92 ) ॥विधिसूत्रम् ॥**

षष्ठ्यन्तात् कृतसन्धेः समर्थाद् अपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया: वा स्युः।

**1005. ओर्गुणः( 6-4-146 ) ॥विधिसूत्रम् ॥**

उवर्णान्तस्य भस्य गुणस्तद्धिते। उपगोरपत्यम्-औपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः।

---

1003. **स्त्रीपुंसाभ्यामिति** – स्त्रीपुंसाभ्याम्, नञ्स्नञौ, भवनात् इतिच्छेदः। स्त्री च पुमान् च स्त्रीपुंसौ, ताभ्याम् = स्त्रीपुंसाभ्याम् इतरेतरद्वन्द्वः। **धान्यानां भवने क्षेत्रे खञ् इति सूत्रतः पूर्वोक्तेष्वर्थेषु स्त्रीशब्दात् पुंसशब्दाच्च प्राग्दीव्यतीयेष्वर्थेषु क्रमाद् नञ्प्रत्ययः स्नञ्प्रत्ययश्च भवतः।**

**रूपसिद्धिः**

**स्त्रैणः** – स्त्रिया अपत्यं पुमान्, स्त्रीषु भवः, स्त्रीणां समूहः, स्त्रीभ्यः आगतः, स्त्रीभ्यो हितम्, स्त्रीणामयम् वा स्त्रैणः। इत्यत्र तत्तदर्थेषु तत्तत्सुबन्तस्त्रीशब्दात् ''स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्'' इत्यधिकारात् ''तस्यापत्यम्'' इत्यादितत्तत्सूत्रैः नञ् प्रत्यये, अनुबन्धलोपे स्त्री न इति जाते, ''तद्धितेष्वचामादेः'' इति सूत्रेण आदिवृद्धौ स्त्रै न इति जाते, ''अट्कुप्वाङ्नुम्व्यवायेऽपि'' इति नस्य णत्वे स्त्रैण इति जाते, स्वादिकार्ये 'स्त्रैणः' इति रूपं सिद्धम्।

**पौंस्नः** – पुंसोऽपत्यम्, पुंसु भवः, पुंसां समूहः, पुंभ्यः आगतः, पुम्भ्यो हितः, पुंसामयं वा पौंस्नः। इत्यत्र तत्तदर्थेषु तत्तत्सुबन्त-पुंस् इति प्रातिपदिकात् ''स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्'' इत्यधिकारात् ''तस्यापत्यम्'' इत्यादि तत्तत्सूत्रैः स्नञ्प्रत्ययेऽनुबन्धलोपे पुंस् स्न इति जाते, आदिवृद्धौ पौंस् स्न इति जाते, ''स्वादिष्वसर्वनामस्थाने'' इति पदसञ्ज्ञायां, ''संयोगान्तस्य लोपः'' इति संयोगान्तसलोपे, ''निमित्तापाये नैमित्तिकस्याप्य पायः'' इति परिभाषया अनुस्वारस्य मकारे मकारस्य च ''नश्चापदान्तस्य झलि'' इति अनुस्वारे विशेष्यानुसारं स्वादिकार्ये 'पौंस्नः' इति रूपं सिद्धम्।

1004. **तस्यापत्यमिति** – तस्य अपत्यमितिच्छेदः। तस्य इति सर्वनामरूपं षष्ठ्यन्तानां परामर्शकम्। तद्धिताः, प्रत्ययः, परश्च, समर्थानां प्रथमाद् वा, ङ्याप्प्रातिपदिकात् इत्यधिकृताः। **कृतसन्धेः समर्थाद् एकार्थीभावसामर्थ्ययुक्त-षष्ठ्यन्त-प्रातिपदिकाद् अपत्यम् इत्यर्थे तद्धितसञ्ज्ञकप्रत्ययाः विकल्पेन भवन्तीत्यर्थः।** सामर्थ्यं परिनिष्ठितत्वं कृतसन्धिकार्यं वेति। अत उक्तं षष्ठ्यन्तात् कृतसन्धेरिति। तस्मात् सूत्थितस्यापत्यं सौत्थितिरिति प्रयोगः सिद्धः। अन्यथा कृतसन्धिं विना सु उत्थितस्यापत्यम् इत्यर्थे सावुत्थितिरित्यनिष्टरूपापत्तिः।

**विशेषः** – औत्सर्गिकाः प्रत्ययाः प्राग्दीव्यतोऽण् इत्यादिना उक्ता एव, वक्ष्यमाणाः ''अत इञ्'' इत्यादयः प्रत्ययाः अपि भवन्त्येवेत्यर्थः।

1005. **ओर्गुण इति** – ओः गुणः इतिच्छेदः। 'ओः' इति उशब्दस्य षष्ठ्येकवचने रूपं तच्च भसञ्ज्ञकस्य अङ्गस्य विशेषणम्। अतः 'येन विधिस्तदन्तस्य' इत्यनेन विशेषणात् तदन्तविधिः भूत्वा 'उवर्णान्तस्य भस्याङ्गस्य' इति भवति। **तद्धिते परे उवर्णान्तस्य भसंज्ञकस्य गुणः स्यादिति। यथा उपगोरपत्यम् औपगवः।**

**रूपसिद्धिः**

**औपगवः** – उपगोरपत्यं पुमान् औपगवः। ''तस्यापत्यम्'' इति सूत्रेण अणि, अनुबन्धलोपे उपगु अ इति जाते, णित्वाद् आदिवृद्धौ औपगु अ इति जाते, ''यचिभम्'', इति भसञ्ज्ञायाम्, ''ओर्गुणः'' इति उकारस्य ओकारे गुणे औपगो अ इति जाते, ''एचोऽयवायावः'' इति ओकारस्य अवादेशे औपगव इति जाते, तद्धित्तान्तत्वात् प्रादिपदिकसञ्ज्ञायां स्वादिकार्ये 'औपगवः' इति रूपं सिद्धम्।

**1006. अपत्यं पौत्रप्रभृति गोत्रम् ( 4-1-162 ) ॥सञ्ज्ञासूत्रम् ॥**
अपत्यत्वेन विवक्षितं पौत्रादि गौत्रसञ्ज्ञं स्यात्।

**1007. एको गोत्रे ( 4-1-93 ) ॥नियमसूत्रम् ॥**
गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यम् औपगवः।

**1008. गर्गादिभ्यो यञ् ( 4-1-105 ) ॥विधिसूत्रम् ॥**
गोत्रापत्ये। गर्गस्य गोत्रापत्यं गार्ग्यः। वात्स्यः।

1006. **अपत्यं पौत्र-प्रभृतीति** - अपत्यम्, पौत्रप्रभृति, गोत्रम् इतिच्छेदः। अपत्यम् इत्यनुवर्त्तमाने पुनरपत्यग्रहणं पौत्रादीनामपत्यविवक्षायामेव गौत्रत्वबाधनार्थम्। यदि पौत्रादीनां पौत्रत्वादिना एव विवक्षा तदा न भवति गोत्रसञ्ज्ञेति बोध्यम्। पौत्रः प्रभृतिर्यस्य तत् पौत्रप्रभृति, बहुव्रीहिसमासः। **अपत्यरूपेण विवक्षिता ( पौत्रप्रभृति ) पौत्रप्रपौत्रादयः गोत्रसञ्ज्ञकाः भवन्तीत्यर्थः।**

---

1007. **एको गोत्र इति** - एकः गोत्रे इतिच्छेदः। 'एकः' इति शब्दकथनेन अन्यसंख्यानां व्यवच्छेदो भूत्वा 'एक एव' इति नियम उपलभ्यते यत् **गोत्रे विवक्षिते प्रत्ययोत्पत्तिप्रसङ्गे केवलमेक एव प्रत्ययः स्यात्।** यथा उपगोर्गोत्रापत्यम् औपगवः इत्यपि पूर्ववत् सिध्यति।

1008. **गर्गादिभ्य इति** - गर्गादिभ्यः यञ् इतिच्छेदः। गर्गशब्दः आदिर्येषां ते गर्गादयः, तेभ्यः = गर्गादिभ्यः। तद्गुणसंविज्ञानबहुव्रीहिसमासः। **गर्गादिगणपठितप्रातिपदिकेभ्यो गोत्रापत्येऽर्थे तद्धितसञ्ज्ञकः यञ्प्रत्ययः स्यादित्यर्थः।** यञिति ञकारेत्सञ्ज्ञकः। यथा- गार्ग्यः, वात्स्यः। **गर्गादिगणो यथा** - गर्ग। वत्स। वाजाऽसे (गणसूत्रम्/असे = असमासे)। सङ्कृति। अज। व्याघ्रपाद्। विदभृत्। प्राचीनयोग। अगस्ति। पुलस्ति। रेभ। अग्निवेश। शङ्ख। शठ (शट)। एक। धूम। अवट। चमस। धनञ्जय। मनस। वृक्ष। विश्वावसु। जनमान (जरमाण)। लोहित। संशित। बभ्रु। वल्गु। मण्डु। गण्डु। मक्षु (मङ्क्षु)। अलिगु। शङ्कु। लिगु। गुलु (गुहलु)। मन्तु। जिगीषु। मनु। तन्तु। मनायी। भृत्। कथक। कष। तण्ड। वतण्ड। कपि। कत। कुरुकत। अनडुह्। कण्व। शकल। गोकक्ष। अगस्त्य। कुण्डिन। यज्ञवल्क्य। उभय। जात (उभयजात)। विरोहित। वृषगण। रहूगण। शण्डिल। वण (पणक)। कुचुलुक। मुद्गल। पूतिमाष। स्थूण (स्थूरा)। अररक। पिङ्गल। कृष्ण। गोलुन्द। उलूक। तितिक्ष। भिषज्। मडित। मण्डित। दल्भ। चिकित। देवहु। चिकित्सित। इन्द्रहू। एकलू। पिप्पलू। बृहदग्नि। जमदग्नि। सुलाभिन्। उत्कत्थ (उक्थ)। कुटिगु। रुक्ष। तरुक्ष। तलुक्ष। प्रचुल। विलम्ब। विष्णुज। पथ। कन्थु। श्रुव। सूनु (सून)। कर्कटक। पर्णवल्क।

**रूपासिद्धिः**

**गार्ग्यः** - गर्गस्य गोत्रापत्यं गार्ग्यः। गर्गशब्दात् ''गर्गादिभ्यो यञ्'' इति सूत्रेण यञ्प्रत्ययेऽनुबन्धलोपे, गर्ग य इति जाते, ''तद्धितेष्वचामादेः'' इत्यादिवृद्धौ गार्ग य इति जाते, भत्वाद् ''यस्येति च'' इति अकारलोपे, स्वादिकार्ये 'गार्ग्यः' इति रूपं सिद्धम्।

**वात्स्यः** - वत्सस्य गोत्रापत्यं वात्स्यः। वत्सशब्दात् ''गर्गादिभ्यो यञ्'' इति यञ्प्रत्ययेऽनुबन्धलोपे, वत्स य इति जाते, आदिवृद्धौ, वात्स य इति जाते, भत्वाद् ''यस्येति च'' इति अकारलोपे, वात्स्य इति जाते, स्वादिकार्ये 'वात्स्यः' इति रूपं सिद्धम्। एवमेव पुलस्तेर्गोत्रापत्यं पौलस्त्यः, शकलस्य गोत्रापत्यं शाकल्यः, मुद्गलस्य गोत्रापत्यं मौद्गल्यः, यज्ञवल्कस्य गोत्रापत्यं याज्ञवल्क्यः इत्यादयः प्रयोगा अपि बोद्धव्याः।

**1009. यञञोश्च ( 2-4-64 ) ॥विधिसूत्रम् ॥**

गोत्रे यद् यञन्तम् अञन्तं च तदवयवयोरेतयोर्लुक् स्यात्, तत्कृते बहुत्वे, न तु स्त्रियाम्। गर्गाः। वत्साः।

**1010. जीवति तु वंश्ये युवा ( 4-1-163 ) ॥सञ्ज्ञासूत्रम् ॥**

वंश्ये पित्रादौ जीवति ( सति) पौत्रादेर्यद् अपत्यं चतुर्थ्यादि तद् युवसञ्ज्ञमेव स्यात्।

---

1009. **यञञोश्चेति** – यञञोः च इतिच्छेदः। यञ् च अञ् च यञञौ, तयोः = यञञोः। इतरेतरद्वन्द्वः। **गोत्रापत्येऽर्थे यञ्प्रत्ययस्य अञ्प्रत्ययस्य च लुक् स्याद् बहुत्वेऽर्थे ( बहुवचने ) विद्यमानस्यास्त्रीलिङ्गस्येत्यर्थः।** यथा गर्गाः। वत्साः।

**रूपासिद्धिः**

**गर्गाः** – गर्गस्य गोत्रापत्यानि पुमांसः गर्गाः। गर्गशब्दाद् ''गर्गादिभ्यो यञ्'' इति सूत्रेण यञ्प्रत्यये, ''यञञोश्च'' इति यञो लुकि, प्रथमायाः बहुवचने जस् प्रत्ययेऽनुबन्धलोपे गर्ग अस् इति जाते, ''प्रथमयोः पूर्वसवर्णः'' इति अकार-अकारयोः आकारे पूर्वसवर्णदीर्घे गर्गास् इति जाते, ''ससजुषो: रुः'' इति सूत्रेण सस्य रुत्वेऽनुबन्धलोपे गर्गार् इति जाते, ''खरवसानयोर्विसर्जनीयः'' इति रेफस्य विसर्गे 'गर्गाः' इति रूपं सिद्धम्।

**वत्साः** – वत्सस्य गोत्रापत्यानि पुमांसः वत्साः। वत्स-शब्दाद् ''गर्गादिभ्यो यञ्'' इति सूत्रेण यञ्प्रत्यये, ''यञञोश्च'' इति यञो लुकि, प्रथमायाः बहुवचने जसि, पूर्वसवर्णदीर्घे, सस्य रुत्वे विसर्गे 'वत्साः' इति रूपं सिद्धम्।

**गार्ग्यः ( गर्गस्य गोत्रापत्यं पुमान् )**

| **विभक्तिः** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| प्रथमा | गार्ग्यः | गार्ग्यौ | गर्गाः |
| द्वितीया | गार्ग्यम् | गार्ग्यौ | गर्गान् |
| तृतीया | गार्ग्येण | गार्ग्याभ्याम् | गर्गैः |
| चतुर्थी | गार्ग्याय | गार्ग्याभ्याम् | गर्गेभ्यः |
| पञ्चमी | गार्ग्यात् | गार्ग्याभ्याम् | गर्गेभ्यः |
| षष्ठी | गार्ग्यस्य | गार्ग्ययोः | गर्गाणाम् |
| सप्तमी | गार्ग्ये | गार्ग्ययोः | गर्गेषु |
| सम्बोधनम् | हे गार्ग्य ! | हे गार्ग्यौ ! | हे गर्गाः ! |

1010. **जीवति त्विति** – जीवति इति सप्तम्येकवचनान्तं शत्रन्तम्। तु इत्यव्ययपदम्। वंश्ये। युवा इतिच्छेदः। वंशे भवो वंश्यः, पितृपितामहादिः। उत्पादकपित्रादिपरम्परा वंशः। वंश्ये चेत्यादौ जीवति (सति) पौत्रादेर्यद् अपत्यं तस्य युवसञ्ज्ञा भवति अर्थात् पिता, पितामहः, प्रपितामहः एतेषां जीवति सति यत् पौत्रादेरपत्यं तस्य युवसञ्ज्ञा भवति। अपत्यशब्दः लोके पुत्रार्थे प्रसिद्धः परन्तु इह शास्त्रे पुनः पौत्रः इत्यादि अर्थे प्रयुज्यते। शास्त्रेऽस्मिन् अपत्यं त्रिधा प्रयुज्यते –

1. **अनन्तरापत्यम्** – अनन्तरापत्यं केवलं पुत्रः। यथा– गर्गस्य अपत्यं गार्गिः, दक्षस्य अपत्यं दाक्षिः, उपगोरपत्यम् औपगवः इत्यादि।
2. **गोत्रापत्यम्** – गोत्रापत्यं पुत्रस्य पुत्राद् (पौत्राद्) आरभ्य अग्रेऽपि चलति। अस्य विग्रहः गोत्रापत्यम् इति शब्दात् क्रियते यथा– गर्गस्य गोत्रापत्यं गार्ग्यः। उपगोर्गोत्रापत्यम् औपगवः। दक्षस्य गोत्रापत्यं दाक्षिः इत्यादि।
3. **युवापत्यम्** – पितापितामहादेः जीवति सति प्रपौत्राद् आरभ्य अग्रपर्यन्तं युवसञ्ज्ञा क्रियते। तदा गोत्रसञ्ज्ञा न भवति। अस्य विग्रहः यथा– गर्गस्य गोत्रापत्यं युवा गार्ग्यायणः, दक्षस्य गोत्रापत्यं युवा दाक्षायणः इत्यादि।

1011. **गोत्राद्यून्यस्त्रियाम्( 4-1-94 ) ॥नियमसूत्रम् ॥**
यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्। स्त्रियां तु न युवसञ्ज्ञा।

1012. **यञिञोश्च( 4-1-101 ) ॥विधिसूत्रम् ॥**
गोत्रे यौ यञ् इञौ, तदन्तात् फक् स्यात्।

1013. **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्( 7-1-2 ) ॥विधिसूत्रम् ॥**
प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् स्युः। गर्गस्य युवापत्यं गार्ग्यायणः।

1014. **अत इञ्( 4-1-95 ) ॥विधिसूत्रम् ॥**
अपत्येऽर्थे। दाक्षिः।

---

1011. **गोत्राद्यूनीति** - गोत्राद् यूनि अस्त्रियाम् इतिच्छेदः। **गोत्रप्रत्ययान्तादेव यूनि ( युवापत्ये ) अपत्ये विवक्षिते प्रत्ययः स्यात्। स्त्रीलिङ्गे तु युव सञ्ज्ञा न भवति।**

1012. **यञिञोश्चेति** - यञिञोः च इतिच्छेदः। यञ् इञ् प्रत्ययौ स्तः अतः ''प्रत्ययग्रहणे तदन्तग्रहणम्'' इति परिभाषया तदन्तविधिर्भवति। इत्यत्र षष्ठीस्थाने पञ्चमीकर्त्तव्या। यञिञोः = यञिञ्भ्याम् = यञिञन्ताभ्याम् इत्यर्थः। **गोत्रेऽर्थे विहिताद् यञन्ताद् इञन्ताच्च फक्प्रत्ययः स्यादित्यर्थः।** फगिति ककार इत्सञ्ज्ञकः।

1013. **आयनेयीनीयिय इति** - आयनेयीनीयियः, फढखछघाम्, प्रत्ययादीनाम् इतिच्छेदः। आयन् च एय् च ईन् च ईय् च इय् च आयनेयीनीयियः, इतरेतरद्वन्द्वः। फश्च ढश्च खश्च छश्च घ् च फढखछघः, तेषाम् = फढखछघाम् इतरेतरद्वन्द्वः। फादिष्वकार उच्चारणार्थः। घकारस्तु शुद्ध एव पठितः। प्रत्ययस्य आदिः प्रत्ययादिः, तेषाम् = प्रत्ययादीनाम्, षष्ठी-तत्पुरुषः। **प्रत्ययस्य आदीनां फ् ढ् ख् छ् घ् इत्येषां यथाक्रमम् आयन्, एय्, ईन्, ईय्, इय् इत्यादेशाः भवन्तीत्यर्थः।** यथा- गार्ग्यायणः। दाक्षायणः।

**रूपसिद्धिः**

**गार्ग्यायणः** - गर्गस्य युवापत्यमित्यर्थे गर्गस्य गोत्रापत्यमिति गार्ग्यः। गार्ग्यस्य अपत्यं युवा इत्यर्थे यञन्ताद् गार्ग्यशब्दात् ''यञिञोश्च'' इति सूत्रेण फक्प्रत्ययेऽनुबन्धलोपे, गार्ग्य फ इति जाते, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति फ् स्थाने आयन् इत्यादेशे गार्ग्य आयन् अ इति जाते, किति चेत्यादिवृद्धौ, भत्वाद् अकारलोपे, ''अट्कुप्वाङ्नुम्व्यवायेऽपि'' इति सूत्रेण नस्य णत्वे, स्वादिकार्ये गार्ग्यायणः इति रूपं सिद्धम्।

**दाक्षायणः** - दक्षस्य गोत्रापत्यं दाक्षिः। दाक्षेरपत्यं युवा इत्यर्थे इञन्ताद् दाक्षिशब्दाद् ''यञिञोश्च'' इति फक् प्रत्ययेऽनुबन्धलोपे, आयनादेशे, ''किति च'' इत्यादिवृद्धौ दाक्षि आयन् अ इति जाते, भत्वादिकारलोपे दाक्ष् आयन इति जाते, नस्य णत्वे, स्वादिकार्ये 'दाक्षायणः' इति रूपं सिद्धम्।

1014. **अत इञिति** - अतः इञ् इतिच्छेदः। विशेषणात्तदन्तविधिः। **कृतसन्धिकार्यात् अदन्तप्रातिपदिकप्रकृतिक-षष्ठ्यन्ताद् अपत्येऽर्थे इञ्प्रत्ययो भवतीत्यर्थः। अर्थात् अकारान्त-प्रातिपदिकात् अपत्येऽर्थे इञ् प्रत्ययः स्यादित्यर्थः।**

**रूपसिद्धिः**

**दाक्षिः** - दक्षस्य अपत्यं पुमानित्यर्थे अदन्ताद् दक्षशब्दाद् ''अत इञ्'' इति इञ् प्रत्ययेऽनुबन्धलोपे, दक्ष इ इति जाते, आद्यचो वृद्धौ, दाक्ष इ इति जाते, भत्वादकारलोपे, दाक्षि इति जाते, विभक्तिकार्ये 'दाक्षिः' इति रूपं सिद्धम्। इत्थमेव गर्गस्य अपत्यं गार्गिः इत्यादयोऽपि बोद्धव्याः।

**1015. बाह्वादिभ्यश्च ( 4-1-96 ) ॥विधिसूत्रम् ॥**

बाहविः।औडुलौमिः।

(वा.) **लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः।**

बाह्वादेरपवादः।उडुलोमाः।आकृतिगणोऽयम्।

---

1015. **बाह्वादिभ्यश्चेति** - बाह्वादिभ्यः च इतिच्छेदः। बाहुशब्दः आदिः येषां ते बाह्वादयः, तेभ्यः = बाह्वादिभ्यः, तद्गुणसंविज्ञानबहुव्रीहिः। बाहु कश्चिद् ऋषिविशेषः। बाह्वादि एक गणः। **बाह्वादिगणपठितषष्ठ्यन्तसमर्थशब्देभ्यः अपत्येऽर्थे इञ्प्रत्ययः स्यात्।** यथा बाहविः।औडुलौमिः।

**रूपसिद्धिः**

**बाहविः** - बाहोरपत्यं पुमानित्यर्थे बाहुशब्दाद् ''बाह्वादिभ्यश्च'' इति इञ् प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, बाहु इ इति जाते, ''ओर्गुणः'' इति गुणे, बाहो इ इति जाते, ''एचोऽयवायावः'' इति अवादेशे, स्वादिकार्ये 'बाहविः' इति रूपं सिद्धम्।

**औडुलोमिः** - उडुलोम्नोऽपत्यं पुमानिति विग्रहे उडुलोमन्शब्दाद् ''बाह्वादिभ्यश्च'' इति सूत्रेण इञ्-प्रत्ययेऽनुबन्धलोपे उडुलोमन् इ इति जाते, भसञ्ज्ञायां ''नस्तद्धिते'' इति टि (अन्) लोपे उडुलोम् इ इति जाते, आदिवृद्धौ, औडुलोम् इ जाते, स्वादिकार्ये 'औडुलोमिः' इति रूपं सिद्धम्।

* **बाह्वादिगणो यथा** - बाहु। उपबाहु। उपवाकु। विवाकु (निवाकु)। शिवाकु। वटाकु। उपविन्दु। वृक (वृकला)।वृषली।चूडा।मूषिका।कुशला।बलाका।भगला।छगला।ध्रुवका।धुवका।सुमित्रा।दुर्मित्रा।पुष्करसद् (अनुहरत)।देवशर्मन्।अग्निशर्मन्।कुनामन्।सुनामन् पञ्चन्।सप्तन्।अष्टन्।उदञ्चु।शिरस्।शराविन्।मरीचिन्। क्षेमवृद्धिन्। शृङ्खलातोदिन्। खरनादिन्। नगरमर्दिन्। प्राकारमर्दिन्। लोमन्। अजीगर्त। कृष्ण। सलक (सत्यक)। युधिष्टिर।अर्जुन।साम्ब।गद।प्रद्युम्न।राम।उदङ्कः सञ्ज्ञायाम् (गणसूत्रम्)।भद्रशर्मन्।सुधावत्।आकृतिगणोऽयम्।

(वा.) **लोम्नोऽपत्येष्विति- लोमन् इत्यस्माद् अपत्येऽर्थे बहुवचने अकारप्रत्ययः स्यात्।** अयं बाह्वादिभ्यश्चेति इञ् प्रत्ययस्य अपवादोऽस्ति।

**रूपसिद्धिः**

**उडुलोमाः** - उडूनि इव (नक्षत्राणि इव) लोमानि यस्य स उडुलोमा। उडुलोम्नोऽपत्यानि उडुलोमाः। उडुलोमन् शब्दात् ''बाह्वादिभ्यश्च'' इति इञ्प्रत्यये प्राप्ते, तं प्रबाध्य ''लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः'' इति वार्तिकेन अप्रत्यये, उडुलोमन् अ इति जाते, भत्वाद् ''नस्तद्धिते'' इति टिलोपे उडुलोम् अ इति जाते, स्वादिकार्ये उडुलोमा: इति रूपं सिद्धम्।

**1016. अनृष्यानन्तर्ये बिदादिभ्योऽञ् ( 4-1-104 ) ॥विधिसूत्रम्॥**

ये त्वत्रानृषयः, तेभ्योऽपत्ये, अन्यत्र तु गोत्रे। बिदस्य गोत्रं बैदः। बैदौ। बिदाः। पुत्रस्य अपत्यं पौत्रः। पौत्रौ। पौत्राः। एवं दौहित्रादयः।

---

**1016. अनृष्यानन्तर्य इति** – अनृषि आनन्तर्ये बिदादिभ्य अञ् इतिच्छेदः। न ऋषिः = अनृषिः, तेभ्यः = अनृषिभ्यः, नञ्तत्पुरुषः। बिदशब्दः आदिर्येषां ते बिदादयः, तेभ्यः = बिदादिभ्यः, तद्गुणसंविज्ञान-बहुव्रीहिसमासः। अनन्तरम् एव आनन्तर्यम् ( अपत्यम् ), तस्मिन् = आनन्तर्ये। **बिदादिषष्ठ्यन्तसमर्थ-प्रातिपदिकेभ्यः गोत्रापत्येऽर्थे अनृषिभ्योऽञ् प्रत्ययः स्यात्। ऋषिभ्यस्तु गोत्रापत्येऽञ् भवतीत्यर्थः।** बिदादिगणे ऋषयः अनृषय इत्युभौ शब्दौ पठितौ। बैदः, बैदौ, विदाः। पौत्रः। पौत्रौ। पौत्राः।

**रूपसिद्धिः**

**बैदः** – बिदनामकऋषेः पौत्रादिसन्ततिः। बिदस्य गोत्रापत्यमित्यर्थे ''अनृष्यानन्तर्ये बिदादिभ्योऽञ्'' इति अञ्प्रत्ययेऽनुबन्धलोपे, आद्यचो वृद्धौ बैद अ इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'बैदः' इति रूपं सिद्धम्।

**बैदौ** – द्विवचने रूपमिदम्।

**बिदाः** – बिदस्य गोत्रापत्यानीत्यर्थे ''अनृष्यानन्तर्येबिदादिभ्योऽञ्'' इति अञ्प्रत्यये, बहुत्वाद् ''यञञोश्च'' इति अञो लुकि, जसि 'बिदाः' इति रूपं सिद्धम्।

**गोत्रप्रत्ययान्तबिदशब्दस्य रूपाणि** –

| **विभक्तिः** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| प्रथमा | बैदः | बैदौ | बिदाः |
| द्वितीया | बैदम् | बैदौ | बिदान् |
| तृतीया | बैदेन | बैदाभ्याम् | बिदैः |
| चतुर्थी | बैदाय | बैदाभ्याम् | बिदेभ्यः |
| चञ्चमी | बैदात् | बैदाभ्याम् | बिदेभ्यः |
| षष्ठी | बैदस्य | बैदयोः | बिदानाम् |
| सप्तमी | बैदे | बैदयोः | बिदेषु |
| सम्बोधनम् | हे बैद! | हे बैदौ! | हे बिदाः! |

* **बिदादिगणो यथा** – बिद। उर्व। कश्यप। कुशिक। भरद्वाज। उपमन्यु। किलात। किन्दर्भ। विश्वानर। ऋष्टिषेण। ऋतभाग। हर्यश्व। प्रियक। आपस्तम्भ। कूचवार। शरद्वत्। शुनक। धेनु। गोपवन। शिग्रु। बिन्दु। भाजन। अश्वावतान। श्यामाक। श्यमाक। श्यामक। श्यापर्ण। हरित। किन्दास। बह्यस्क। अर्कलूष। बध्योष। विष्णुवृद्ध। प्रतिबोध। रथन्तर। रथीतर। गविष्ठिर। निषाद। मठर। मृद ( मृदु )। पुनर्भू। पुत्र। दुहितृ। ननान्दृ। सृदाकु। पृदाकु। शबर। सम्बक। शाबली। अलस।

**पौत्रः** – पुत्रस्य अनन्तरापत्यं पौत्रः। पुत्रशब्दात् ''अनृष्यानन्तर्ये बिदादिभ्योऽञ्'' इति अञ्प्रत्ययेऽनुबन्धलोपे पुत्र अ इति जाते, आदिवृद्धौ पौत्र अ इति जाते, भत्वादकारलोपे पौत्र इति जाते, स्वादिकार्ये 'पौत्रः' इति रूपं सिद्धम्।

**पौत्रौ** – द्विवचने औप्रत्यये रूपमिदम्।

**पौत्राः** – बहुवचने जसि रूपमिदम्।

**दौहित्रः** – दुहितुरनन्तरापत्यं दौहित्रः। दुहितृशब्दात् ''अनृष्यानन्तर्ये बिदादिभ्योऽञ्'' इति अञि, अनुबन्धलोपे दुहितृ अ इति जाते, आदिवृद्धौ दौहितृ अ इति जाते, ''इको यणचि'' इति यणि ( ऋकारस्य रेफे ) दौहित्र इति जाते, स्वादिकार्ये 'दौहित्रः' इति रूपं सिद्धम्।

* दौहित्रौ, दौहित्राः, नानान्द्रः, नानान्द्रौ, नानान्द्राः इत्यत्र विशेषेण ध्यातव्यं यत् एतेषा बहुवचने अञो लुक् न भवति यतोहि ''यञञोश्च'' इति सूत्रं गोत्रे विहितः अञः लुग्विधानं करोति अनन्तरापत्ये न।

1017. **शिवादिभ्योऽण् ( 4-1-112 ) ॥विधिसूत्रम् ॥**

अपत्ये। शैवः। गाङ्गः।

1018. **ऋष्यन्धक-वृष्णि-कुरुभ्यश्च ( 4-1-114 ) ॥विधिसूत्रम् ॥**

ऋषिभ्यः - वासिष्ठः, वैश्वामित्रः। अन्धकेभ्यः -श्वाफल्कः।

वृष्णिभ्यः - वासुदेवः। कुरुभ्यः - नाकुलः, साहदेवः।

---

1017. **शिवादिभ्य इति** - शिवादिभ्यः अण् इतिच्छेदः। शिवशब्दः आदिर्येषां ते शिवादयः, तेभ्यः = शिवादिभ्यः। तद्गुणसंविज्ञान-बहुव्रीहिः। **अपत्येऽर्थे शिवादिगणपठितेभ्यः षष्ठ्यन्तेभ्यः प्रातिपदि केभ्यः अण्-प्रत्ययो भवतीत्यर्थः। शिवादिगणो यथा** - शिव। प्रोष्ठ। प्रौष्ठिक। चण्ड। जम्भ। मुनि। सन्धि। भूरि। दण्ड। कुठार। ककुभ्। अनभिम्लान। ककुत्स्थ। कोहित। कहोड। रोध। खञ्जन। कोहड। पिष्ट। हेहय। कहूय। कपिञ्जल। परिल। वतण्ड। तृणकर्ण। क्षीरहृद। जलहृद। परिषिक। जटिलिक। गोफिलिक। बधिरिका। मञ्जीरक। वृष्णिक। रेख। आलेखन। विश्रवण। रवण। वर्त्तनाक्ष। पिटक। पिटाक। तृक्षाक। नभाक। ऊर्णनाभ। जरत्कारु। उत्क्षिपा। रोहितिक। आर्यश्वेत। सुपिष्ठ। खर्जूरकर्ण। मसूरकर्ण। तूणकर्ण। मयूरकर्ण। खण्डरक। तक्षन्। ऋष्टिषेण। गङ्ग। विपाशा। यस्क। लह्य। द्रुध। अयःस्थूण। भलन्दन। विरूपाक्ष। भूमि। इला। सपत्नी। त्रिवेणी। कह्वय। वडाक।

**रूपसिद्धिः**

**शैवः** - शिवस्य अपत्यं शैवः। शिव शब्दात् ''अत इञ्'' इति इञं प्रबाध्य ''शिवादिभ्योऽण्'' इति अण्-प्रत्ययेऽनुबन्धलोपे, शिव अ इति जाते, आदिवृद्धौ, भत्वादकारलोपे शैव इति जाते, विभक्तिकार्ये 'शैव' इति रूपं सिद्धम्। स्त्रीलिङ्गे टिड्ढाणञ् इति ङीप्करणेन शैवी इति रूपं सेत्स्यति।

**गाङ्गः** - गङ्गाया अपत्यं गाङ्गः। गङ्गा शब्दात् इञं प्रबाध्य अण्प्रत्यये अनुबन्धलोपे, आदिवृद्धौ, भत्वादाकारलोपे, स्वादिकार्ये 'गाङ्गः' इति रूपं सिद्धम्। इत्थमेव शिवादिगणस्थान्येषां शब्दानां सिद्धिः ज्ञातव्या।

1018. **ऋष्यन्धकेति** - ऋष्यन्धकवृष्णिकुरुभ्यः च इतिच्छेदः।

ऋषयश्च अन्धकाश्च वृष्णयश्च कुरवश्च ऋष्यन्धकवृष्णिकुरवः, तेभ्यः = ऋष्यन्धकवृष्णिकुरुभ्यः। इतरेतरद्वन्द्वसमासः। **ऋषिभ्योऽन्धकेभ्यो वृष्णिभ्यः कुरुभ्यश्चापत्येऽण् तद्धितः प्रत्ययः स्यात्।** अर्थात् ऋषिवाचकेभ्यः अन्धकवृष्णिकुरुरिति त्रिभ्यः वंशेभ्यः उत्पन्नव्यक्तिवाचकेभ्यः अपत्येऽर्थे अण् स्यादित्यर्थः। सूत्रमिदम् 'अत इञ्' इति इञ्-प्रत्ययस्य अपवादत्वेन वर्तते।

**रूपसिद्धिः**

**वासिष्ठः** - वसिष्ठस्य अपत्यं वासिष्ठः। वसिष्ठशब्दात् ''ऋष्यन्धकवृष्णिकुरुभ्यश्च'' इति अणि, अनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'वासिष्ठः' इति रूपं सिद्धम्।

**वैश्वामित्रः** - विश्वामित्रस्य ऋषेरपत्यं वैश्वामित्रः। विश्वामित्रशब्दात् ऋष्यन्धकेति अणि, अनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'वैश्वामित्रः' इति रूपं सिद्धम्।

**श्वाफल्कः** - श्वफल्कस्यापत्यं श्वाफल्कः। श्वफल्कशब्दात् अण्-प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे स्वादिकार्ये 'श्वाफल्कः' इति रूपं सिद्धम्।

**वासुदेवः** - वसुदेवस्यापत्यं वासुदेवः। वसुदेवशब्दादणि, अनुबन्धलोपे, आदिवृद्धौ, भत्वादकारालोपे, स्वादिकार्ये 'वासुदेवः' इति रूपं सिद्धम्।

**नाकुलः** - नकुलस्यापत्यं नाकुलः। नकुलशब्दादणि, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'नाकुलः' इति रूपं सिद्धम्।

**साहदेवः** - सहदेवस्यापत्यं साहदेवः। सहदेवशब्दादणि, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'साहदेवः' इति रूपं सिद्धम्।

**1019. मातुरुत् संख्यासम्भद्रपूर्वायाः ( 4-1-115 ) ॥ विधिसूत्रम् ॥**

संख्यादिपूर्वस्य मातृशब्दस्य 'उद्' आदेशः स्यादणप्रत्ययश्च (अपत्ये)। द्वैमातुरः। षाण्मातुरः। साम्मातुरः। भाद्रमातुरः।

**1020. स्त्रीभ्यो ढक् ( 4-1-120 ) ॥ विधिसूत्रम् ॥**

स्त्रीप्रत्ययान्तेभ्यो ढक्। वैनतेयः।

**1021. कन्यायाः कनीन च ( 4-1-116 ) ॥ विधिसूत्रम् ॥**

चाद् अण्। कानीनो व्यासः कर्णश्च।

---

1019. **मातुरुदिति** - मातुः उत् संख्यासम्भद्रपूर्वायाः इतिच्छेदः। संख्या च सम् च भद्रश्च संख्यासम्भद्राः, संख्यासम्भद्राः पूर्वे यस्याः सा, संख्यासम्भद्रपूर्वा, तस्याः = संख्यासम्भद्रपूर्वायाः। द्वन्द्वगर्भितबहुव्रीहिसमासः। **संख्यापूर्वस्य सम्पूर्वस्य भद्रपूर्वस्य च मातृशब्दस्य उदादेशः स्यात् अपत्येऽर्थे अणप्रत्ययश्च।** अलोऽन्त्यपरिभाषया मातृशब्दस्य अन्त्यऋवर्णस्य स्थाने 'उ' इत्यादेशः स्यात्। उरण् रपरः इति रपरत्वे 'उर्' इति स्यात्। इत्थं मातृ स्थाने मातुर् इति भविष्यति। तस्यापत्यमित्येव सिद्धे उदादेशार्थमिदं सूत्रम्।

**रूपसिद्धिः**

**द्वैमातुरः** - द्वयोः मात्रोरपत्यम् इत्यर्थे द्विमातृशब्दाद् ''मातुरुत् संख्यासम्भद्रपूर्वायाः'' इति सूत्रेण अणि, मातृशब्दस्य उदादेशे, ''उरण् रपरः'' इति रपरत्वे द्विमातुर् अ इति जाते, णित्वादादिवृद्धौ द्वैमातुर इति जाते, स्वादिकार्ये 'द्वैमातुरः' इति रूपं सिद्धम्।

**षाण्मातुरः** - षण्णां मातॄणामपत्यमित्यर्थे षण्मातृशब्दात् अणि, मातुः ऋकारस्य उदादेशे च कृते, रपरत्वे, आदिवृद्धौ षाण्मातुर इति जाते, स्वादिकार्ये षाण्मातुरः इति रूपं सिद्धम्।

**साम्मातुरः** - सम्मातुरपत्यं पुमानित्यर्थे सम्मातृशब्दादणि, ऋकारस्योदादेशे रपरत्वे, आदिवृद्धौ, स्वादिकार्ये 'साम्मातुरः' इति रूपं सिद्धम्।

**भाद्रमातुरः** - भद्रमातुरपत्यं पुमानित्यर्थे भद्रमातृशब्दादणि, मातुरुदादेशे, रपरत्वे, आदिवृद्धौ, स्वादिकार्ये 'भाद्रमातुरः' इति रूपं सिद्धम्।

1020. **स्त्रीभ्य इति** - स्त्रीभ्यः ढक् इतिच्छेदः। स्त्रीभ्य इत्यत्र स्त्रीशब्देन टाप् ङीप् आदिस्त्रीप्रत्ययानां ग्रहणमभीष्टम्। **प्रत्ययग्रहणे तदन्तग्रहणम्** इति परिभाषया तदन्तविधिः। (स्त्रीभ्यः = स्त्रीप्रत्ययान्तेभ्यः) **स्त्रीप्रत्ययान्तषष्ठ्यन्तेभ्य अपत्येऽर्थे ढक् प्रत्ययः स्यादित्यर्थः।** यथा-वैनतेयः।

**रूपसिद्धिः**

**वैनतेयः** - विनताया अपत्यं पुमानित्यर्थे विनताशब्दात् ''स्त्रीभ्यो ढक्'' इति ढकि, अनुबन्धलोपे विनता ढ इति जाते, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति सूत्रेण ढस्य एयादेशे, विनता एय् अ इति जाते, ''किति च'' इत्यादिवृद्धौ वैनता एय इति जाते, भत्वाद् ''यस्येति च'' इत्याकारलोपे स्वादिकार्ये 'वैनतेयः' इति रूपं सिद्धम्। इत्थमेव सुपर्ण्या अपत्यं सौपर्णेयः, द्रौपद्या अपत्यं द्रौपदेयः, कुन्त्या अपत्यं कौन्तेयः, राधाया अपत्यं राधेयः, वासवदत्ताया अपत्यं वासवदत्तेयः इत्यादीनि रूपाणि सिध्यन्ति।

1021. **कन्याया इति** - कन्यायाः कनीन च इतिच्छेदः। सूत्रमिदं 'स्त्रीभ्यो ढक्' इत्यस्यापवादः। **कन्यायाः कनीनादेशः अणप्रत्ययश्च स्यातामपत्येऽर्थे इत्यर्थः।** यथा-कानीनः।

**रूपसिद्धिः**

**कानीनः** - कन्यायाः अपत्यं पुमानित्यर्थे कन्याशब्दात् ''कन्यायाः कनीन च'' इति सूत्रेण अण्-प्रत्यये कन्याशब्दस्य कनीनादेशे च कनीन अ इति जाते, ''तद्धितेष्वचामादेः'' इति सूत्रेण आदिवृद्धौ कानीन अ इति जाते, ''यचिभम्'' इति सूत्रेण भसञ्ज्ञायां ''यस्येति च'' इति अकारलोपे कानीन इति जाते, स्वादिकार्ये 'कानीनः' इति रूपं सिद्धम्।

**1022. राजश्वशुराद्यत्( 4-1-137 ) ॥विधिसूत्रम् ॥**
(वा.) राज्ञो जातावेवेति वाच्यम्।

**1023. ये चाभावकर्मणोः( 6-4-168 ) ॥विधिसूत्रम् ॥**
यादौ तद्धिते परेऽन् प्रकृत्या स्यात्, न तु भावकर्मणोः। राजन्यः। श्वशुर्यः। जातावेवेति किम्?

**1024. अन्( 6-4-167 ) ॥विधिसूत्रम् ॥**
अन् प्रकृत्या स्यादणि परे। राजनः।

**1025. क्षत्राद् घः( 4-1-138 ) ॥विधिसूत्रम् ॥**
क्षत्रियः। जातौ इत्येव। क्षात्रिः अन्यत्र।

**1026. रेवत्यादिभ्यष्ठक्( 4-1-146 ) ॥विधिसूत्रम् ॥**

---

1022. **राजश्वशुरादिति** – राजश्वशुरात् यत् इतिच्छेदः। राजा च श्वशुरश्च राजश्वशुरम्, तस्मात् = राजश्वशुरात्। समाहारद्वन्द्वः। **राजन्-शब्दात् श्वशुरशब्दाच्च यत्प्रत्ययः स्यादपत्येऽर्थे,** अयं यत् प्रत्ययः तस्यापत्यमित्यणः इञश्चापवादः। यथा राजन्यः। श्वशुर्यः।
(वा.) राज्ञ इति– राज्ञः जातौ एव इतिच्छेदः। **राजन्शब्दाज्जातावर्थे एव यत्प्रत्ययः स्यात्।**

1023. **ये चाऽभावकर्मणोरिति** – ये च अभावकर्मणोः इतिच्छेदः। भावश्च कर्म च भावकर्मणी, तयोः = भावकर्मणोः। न भावकर्मणोः, द्वन्द्वगर्भनञ्तत्पुरुषः। यकारादितद्धितप्रत्यये परे 'अन्' इत्यस्य प्रकृतिभावः स्यात्, न तु भावकर्मणोरर्थे। यथा राजन्यः। श्वशुर्यः।

**रूपसिद्धिः**

**राजन्यः** – राज्ञः क्षत्रियजातेः (क्षत्रियायामुत्पन्नः) अपत्यं पुमान् इत्यर्थे राजन्शब्दात् ''राज्ञो जातावेवेति वाच्यम्'' इति नियमाद् ''राजश्वशुराद् यत्'' इति यत्प्रत्ययेऽनुबन्धलोपे, राजन् य इति जाते, भसञ्ज्ञायां ''नस्तद्धिते'' इति टिलोपे प्राप्ते, तं प्रबाध्य ''ये चाभावकर्मणोः'' इति 'अन्' इत्यस्य प्रकृतिभावे, स्वादिकार्ये 'राजन्यः' इति रूपं सिद्धम्।

**श्वशुर्यः** – श्वशुरस्य अपत्यं पुमानित्यर्थे श्वशुरशब्दात् ''राजश्वशुराद्यत्'' इति यत्प्रत्यये, भत्वादकारालोपे श्वशुर्य इति जाते, स्वादिकार्ये 'श्वशुर्यः' इति रूपं सिद्धम्।

1024. **अनिति – अण् प्रत्यये राजन् शब्दस्य अनः प्रकृतिभावः स्यादित्यर्थः।** यथा राजनः।

**रूपसिद्धिः**

**राजनः** – राज्ञः (क्षत्रियजातिभिन्नऽर्थे) (क्षत्रियाच्छूद्रायां वा तदन्यस्यां वा अनूढायाम् उत्पन्नः) अपत्यमित्यर्थे ''तस्यापत्यम्'' इति सूत्रेण अण् प्रत्ययेऽनुबन्धलोपे, राजन् अ इति जाते, भसञ्ज्ञायां, टिलोपं प्रबाध्य ''अन्'' इति अनः प्रकृतिभावे, आदिवृद्धौ, स्वादिकार्ये 'राजनः' इति रूपं सिद्धम्।

1025. **क्षत्रादिति** – क्षत्रात् घः इतिच्छेदः। **क्षत्रशब्दाद् घप्रत्ययः स्याज्जातौ एव अर्थे।**

**रूपसिद्धिः**

**क्षत्रियः** – क्षत्रस्य अपत्यं क्षत्रियः (क्षत्रस्य सन्ततिः, क्षत्रियजातेः व्यक्तिः)। क्षत्रशब्दात् ''क्षत्राद्घः'' इति सूत्रेण घप्रत्यये, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति घस्य इयादेशे क्षत्र इय इति जाते, भत्वादकारालोपे, स्वादिकार्ये 'क्षत्रियः' इति रूपं सिद्धम्।

**क्षात्रिः** – राज्ञः जातिभिन्नेऽर्थे। क्षत्रियात् शूद्रायामन्यस्यां वा जात इत्यर्थे क्षत्रशब्दाद् ''अत इञ्'' इति इञ् प्रत्ययेऽनुबन्धलोपे क्षत्र इ इति जाते, आदिवृद्धौ, भत्वादकारालोपे, स्वादिकार्ये 'क्षात्रिः' इति रूपं सिद्धम्।

1026. **रेवत्यादिभ्य इति** – रेवत्यादिभ्यः ठक् इतिच्छेदः। रेवतीशब्दः आदिर्येषां ते रेवत्यादयः, तेभ्यः = रेवत्यादिभ्यः, तद्गुणसंविज्ञानबहुव्रीहिः। **रेवत्यादिगणपठितशब्देभ्यः अपत्येऽर्थे ठक् प्रत्ययः स्यादित्यर्थः।** रेवत्यादिगणो यथा– रेवती। अश्वपाली। मणिपाली। द्वारपाली। वृकवञ्चिन्। वृकग्राह। कर्णग्राह। दण्डग्राह। कुक्कुटाक्ष। वृकबन्धु। चामरग्राह। ककुदाक्ष।

**1027. ठस्येकः ( 7-3-50 ) ॥विधिसूत्रम् ॥**

अङ्गात् परस्य ठस्य इक आदेशः स्यात्। रैवतिकः।

**1028. जनपदशब्दात् क्षत्रियादञ् ( 4-1-5168 ) ॥विधिसूत्रम् ॥**

जनपद-क्षत्रिय वाचकात्-शब्दाद् अञ् स्यादपत्ये। पाञ्चालः।

**( वा. ) क्षत्रिय-समान-शब्दाद् जनपदात्तस्य राजन्यपत्यवत्। पञ्चालानां राजा पाञ्चालः।**

**( वा. ) पूरोरण् वक्तव्यः। पौरवः।**

**( वा. ) पाण्डोर्ड्यण्। पाण्ड्यः।**

---

**1027. ठस्येक इति** - ठस्य इक इतिच्छेदः। अङ्गात्परस्य ठस्य 'इक' इत्यादेशः स्यात्। यथा- रैवतिकः।

**रूपसिद्धिः**

**रैवतिकः** - रेवत्या अपत्यं रैवतिकः। रेवतीशब्दात् ''रेवत्यादिभ्यष्ठक्'' इति ठक्प्रत्ययेऽनुबन्धलोपे, रेवती ठ इति जाते, ''ठस्येकः'' इति ठस्य इकादेशे रेवती इक इति जाते, ''किति च'' इत्यादिवृद्धौ रैवती इक इति जाते, भत्वादीकारलोपे, स्वादिकार्ये 'रैवतिकः' इति रूपं सिद्धम्। इत्थमेव अश्वपाल्या अपत्यम् आश्वपालिकः। द्वारपाल्या अपत्यं दौवारपालिकः (द्वारादीनाञ्चेति वकारात्पूर्वं औकारागमे) कुक्कुटाक्षस्य अपत्यं कौक्कुटाक्षिकः। दण्डग्राहस्यापत्यं दाण्डग्राहिकः इत्यादयोऽपि बोद्धव्याः।

**1028. जनपदशब्दादिति** - जनपदशब्दात् क्षत्रियात् अञ् इतिच्छेदः। जनपदवाचकः शब्दः जनपदशब्दः, तस्मात् = जनपदशब्दात्, शाकपार्थिवादित्वाद् मध्यमपदलोपितत्पुरुषः। जनपदो नाम देशः। जनपदस्य वाचको जनपदशब्दः। **जनपदस्य वाचको यः क्षत्रियवाचक शब्दः, तस्मात् अपत्येऽर्थे अञ् स्यादित्यर्थः।** यथा पाञ्चालः। पञ्चालशब्दस्य अर्थद्वयम्।

(1) पञ्चालदेशः (देशार्थे पञ्चालादिशब्दाः बहुवचनान्ताः भवन्ति), (2) एकः क्षत्रियविशेषनृपः।

(वा.) क्षत्रियसमानशब्दादिति- क्षत्रियवचन एव शब्द उपचारेण क्षत्रिय इत्युक्तः, एवं जनपदवाचकशब्दो जनपद इति। क्षत्रियेण (क्षत्रियवाचकशब्देन) समानः शब्दो यस्य स तथोक्तः, तस्मात् = क्षत्रिय समानशब्दात् बहुव्रीहिसमासः। **क्षत्रियवाचकशब्दस्य समान जनपदवाचकशब्दात् षष्ठ्यन्ताद् राजन्यर्थे अपत्यवत्प्रत्ययाः स्युरित्यर्थः।**

**रूपसिद्धिः**

**पाञ्चालः** - (पञ्चालो देशविशेषः स एव राजा) पञ्चालस्यापत्यमित्यर्थे पञ्चालशब्दाद् ''जनपदशब्दात् क्षत्रियादञ्'' इति अञ्प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे स्वादिकार्ये 'पाञ्चालः' इति रूपं सिद्धम्। इत्थमेव वैदेहः ऐक्ष्वाक इत्यादयः।

**पाञ्चालः** - पञ्चालानां राजा इत्यर्थे पञ्चालशब्दात् ''क्षत्रियसमानशब्दादिति वार्तिकेन अपत्यार्थवत् ''जनपदशब्दात् क्षत्रियादञ्'' इति सूत्रेण अञ् प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वाद् अकारलोपे, स्वादिकार्ये 'पाञ्चालः' इति रूपं सिद्धम्। इत्यमेव विदेहानां राजा वैदेहः। केकयानां (जनपदानां) राजा कैकेयः इत्यादयः बोद्धव्याः।

(वा.) **पूरोरणिति** - पूरुशब्दो जनपदवाचको नास्ति, अपि तु क्षत्रियवाचकः षष्ठ्यन्त (पूरोः) पूरुरिति प्रातिपदिकात् अपत्येऽर्थेऽण्-प्रत्ययो वक्तव्यः। अत्र प्राग्दीव्यतोऽण् इति अण्प्राप्ते ''ते तद्राजा'' इति तद्राजसञ्ज्ञार्थमेतद् वचनम्। यथा पौरवः।

**रूपसिद्धिः**

**पौरवः** - पूरूणामपत्यं राजा वा इत्यर्थे ''पूरोरण् वक्तव्यः'' इति वार्तिकेन अणि, अनुबन्धलोपे पूरु अ इति जाते, आदिवृद्धौ, पौरु अ इति जाते, ''ओर्गुणः'' इति उकारस्य ओकारे गुणे, पौरो अ इति जाते, ''एचोऽयवायावः'' इति ओकारस्य अवादेशे, पौरव इति जाते, स्वादिकार्ये 'पौरवः' इति रूपं सिद्धम्।

(वा.) **पाण्डोरिति- जनपदक्षत्रियवाचकात् पाण्डुशब्दाद् ड्यण प्रत्ययः स्यादित्यर्थः।**

**रूपसिद्धिः**

**पाण्ड्यः** - पाण्डोरपत्यं पाण्डुजनपदस्य राजा वेत्यर्थे ''पाण्डोर्ड्यण्'' इति वार्तिकेन ड्यणप्रत्ययेऽनुबन्धलोपे पाण्डु य इति जाते, डित्वसामर्थ्यादभस्यापि ''टेः'' इति सूत्रेण टि (उ) लोपे, आदिवृद्धौ, स्वादिकार्ये 'पाण्ड्यः' इति रूपं सिद्धम्।

**1029. कुरुनादिभ्यो ण्यः ( 4-1-172 ) ॥विधिसूत्रम् ॥**

कौरव्यः।नैषध्यः।

**1030. ते तद्राजाः ( 4-1-74 ) ॥सञ्ज्ञासूत्रम्॥**

अञादयः तद्राजसञ्ज्ञाः स्युः।

**1031. तद्राजस्य बहुषु तेनैवास्त्रियाम् ( 2-4-62 ) ॥विधिसूत्रम् ॥**

बहुष्वर्थेषु तद्राजस्य लुक्।तदर्थकृते बहुत्वे, न तु स्त्रियाम्।इक्ष्वाकवः।पञ्चालाः इत्यादि।

---

1029. **कुरुनादिभ्य इति** - कुरुनादिभ्यः ण्यः इतिच्छेदः। न् आदिर्येषां ते नादयः, बहुव्रीहिः। कुरुश्च नादयश्च, कुरुनादयः, तेभ्यः = कुरुनादिभ्यः, इतरेतरद्वन्द्वः। **कुर्वादेः नकारादिभ्य जनपदक्षत्रियवाचकेभ्य अपत्येऽर्थे ण्यप्रत्ययः स्यादित्यर्थः।** यथा कौरव्यः।नैषध्यः।

**रूपसिद्धिः**

**कौरव्यः** - कुरोरपत्यं कौरव्यः। कुरुशब्दः जनपदविशेषस्य क्षत्रियविशेषस्य च वाचकः। कुरुशब्दात् ''कुरुनादिभ्यो ण्यः'' इति ण्यप्रत्यये, अनुबन्धलोपे, आदिवृद्धौ, कौरु य इति जाते, ''ओर्गुणः'' इति गुणे, कौरो य इति जाते, ''वान्तो यि प्रत्यये'' इति ओकारस्य अवादेशे, स्वादिकार्ये 'कौरव्यः' इति रूपं सिद्धम्। कुरूणां (जनपदानां) राजा इत्यर्थे ''क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्'' इति वार्तिकेन अपत्यर्थवत् ण्यप्रत्यये उक्तरूपं सिद्यति।

**नैषध्यः** - निषधस्य अपत्यं नैषध्यः। निषधशब्दात् ण्यप्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'नैषध्यः' इति रूपं सिद्धम्। निषधानां (जनपदानां) राजा इत्यर्थेऽपि ''क्षत्रियसमानेति ण्यप्रत्यये नैषध्यः इति रूपं सिध्यति।''

1030. **ते तद्राजा इति** - ते तद्राजा इतिच्छेदः। जनपदशब्दात् इति सूत्रादारभ्य जनपदवाचकेभ्यः शब्देभ्यो विहितानाम् अञादीनां (अञ्, अण्, ड्यण्, ण्य) तद्राजसञ्ज्ञा स्यादित्यर्थः।

1031. **तद्राजस्येति** - तद्राजस्य बहुषु तेन एव अस्त्रियाम् इतिच्छेदः। न स्त्री अस्त्री, तस्याम् = अस्त्रियाम्, नञ्तत्पुरुषः। बहुत्वविवक्षायां तद्राजसञ्ज्ञक-प्रत्ययस्य लुक् स्यादित्यर्थः। यदि बहुत्वं तद्राजप्रत्ययस्यैव स्यात् परं स्त्रियां नेत्यर्थः। यथा इक्ष्वाकवः।पञ्चालाः।

**रूपसिद्धिः**

**इक्ष्वाकवः** - इक्ष्वाकूणां जनपदविशेषाणां राजानः इक्ष्वाकूणामपत्यानि वेत्यर्थे इक्ष्वाकुशब्दात् जनपदशब्दादिति अञि, अनुबन्धलोपे, इक्ष्वाकु अ इति जाते, ''ते तद्राजा'' इति अञः तद्राजसञ्ज्ञायां ''तद्राजस्य बहुषु तेनैवास्त्रियाम्'' इति अञो लुकि, जसि ''जसि च'' इति गुणे इक्ष्वाको अस् इति जाते, अवादेशे, सस्य रुत्वे विसर्गे 'इक्ष्वाकवः' इति रूपं सिद्धम्।

**पञ्चालाः** - पञ्चालानामपत्यानि राजानो वेत्यर्थे जनपदशब्दादित्यञि, तद्राजसञ्ज्ञायां, तद्राजसञ्ज्ञकस्य अञो लुकि, जसि, पूर्वसवर्णदीर्घे, सस्य रुत्वे विसर्गे 'पञ्चालाः' इति रूपं सिद्धम्।

**1032. कम्बोजाल्लुक् ( 4-1-175 ) ॥विधिसूत्रम्॥**

अस्मात् तद्राजस्य लुक्। कम्बोजः। कम्बोजौ।

(वा.) **कम्बोजादिभ्य इति वक्तव्यम्।**

चोलः। शकः। केरलः। यवनः।

---

1032. **कम्बोजादिति** - कम्बोजात् लुक् इतिच्छेदः। **कम्बोजशब्दात्परे तद्राजस्य अञः लुक् स्यात्।** यथा- कम्बोजः। कम्बोजौ।

**रूपसिद्धिः**

**कम्बोजः** - कम्बोजस्य अपत्यं राजा वेत्यर्थे कम्बोजशब्दात् ''जनपदशब्दादिति अञि,'' ''ते तद्राजाः'' इति अञः तद्राजसञ्ज्ञायां, ''कम्बोजाल्लुक्'' इति अञः लुकि, स्वादिकार्ये 'कम्बोजः' इति रूपं सिद्धम्।

**कम्बोजौ** - कम्बोजस्य अपत्ये राजानौ वेत्यर्थे कम्बोजशब्दादञि, तद्राजसञ्ज्ञायां ''कम्बोजाल्लुक्'' अञः लुकि, द्विवचने औप्रत्यये, वृद्धिरेचीति वृद्धौ 'कम्बोजौ' इति रूपं सिद्धम्।

(वा.) **कम्बोजादिभ्य इति- कम्बोजादिपदेभ्यः तद्राजप्रत्ययस्य लोपः स्यात्, न केवलं कम्बोजशब्दादेवेत्यर्थः।** यथा चोलः। शकः। केरलः। यवनः।

**रूपसिद्धिः**

**चोलः** - चोलस्यापत्यं चोलानां जनपदानां राजा वा चोलः। चोलशब्दात् ''द्वयज्मगधकलिङ्गसूरमसादण्'' इति सूत्रेण अण्प्रत्यये, तद्राजसञ्ज्ञायां, ''कम्बोजादिभ्य इति वक्तव्यम्'' इति अणो लुकि, स्वादिकार्ये 'चोलः' इति रूपं सिद्धम्।

**शकः** - शकस्यापत्यं शकानां जनपदानां राजा वा शकः। शकशब्दात् ''द्वयज्मगध''. इत्यादिना अणि, तद्राजसञ्ज्ञायां ''कम्बोजादिभ्य इति वक्तव्यम्'' इति अणो लुकि, स्वादिकार्ये शकः इति रूपं सिद्धम्।

**केरलः** - केरलस्यापत्यं केरलानां जनपदानां राजा वा केरलः। केरलशब्दात् ''जनपदशब्दात् क्षत्रियादञ्'' इत्यञि, तद्राजसञ्ज्ञायां ''कम्बोजादिभ्य इति वक्तव्यम्'' इति अञो लुकि, स्वादिकार्ये 'केरलः' इति रूपं सिद्धम्।

**यवनः** - यवनस्यापत्यं यवनानां जनपदानां राजा वा यवनः। यवनशब्दात् ''जनपदशब्दात् क्षत्रियादञ्'' इति अञ्प्रत्यये, तद्राजसञ्ज्ञायां, ''कम्बोजादिभ्य इति वक्तव्यम्'' इति वार्तिकेन अञो लुकि, स्वादिकार्ये 'यवनः' इति रूपं सिद्धम्।

॥ पाञ्चालशब्दः ॥

| **विभक्तिः** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| प्रथमा | पाञ्चालः | पाञ्चालौ | पञ्चालाः |
| द्वितीया | पाञ्चालम् | पाञ्चालौ | पञ्चालान् |
| तृतीया | पाञ्चालेन | पाञ्चालाभ्याम् | पञ्चालैः |
| चतुर्थी | पाञ्चालाय | पाञ्चालाभ्याम् | पञ्चालेभ्यः |
| पञ्चमी | पाञ्चालात् | पाञ्चालाभ्याम् | पञ्चालेभ्यः |
| षष्ठी | पाञ्चालस्य | पाञ्चालयोः | पञ्चालानाम् |
| सप्तमी | पाञ्चाले | पाञ्चालयोः | पञ्चालेषु |
| सम्बोधनम् | हे पाञ्चाल! | हे पाञ्चालौ! | हे पञ्चालाः। |

## ॥ अभ्यासः ॥

### वस्तुनिष्ठात्मकप्रश्नाः

1. 'स्त्रैणः' इत्यत्र प्रत्ययोऽस्ति –
   (क) स्नञ्  (ख) नञ्
   (ग) नेञ्  (घ) एण्
2. 'औत्सः' इत्यत्र प्रत्ययोऽस्ति –
   (क) अण्  (ख) अञ्
   (ग) अ  (घ) घ
3. 'ओर्गुणः' इत्यनेन गुणो भवति –
   (क) ओकारस्य  (ख) उकारस्य
   (ग) इकारस्य  (घ) ऋकारस्य
4. 'यञञोश्च' इत्यनेन यञञोः लुक् भवति –
   (क) एकत्वे  (ख) द्वित्वे
   (ग) बहुत्वे  (घ) सर्वत्र

### अतिलघूत्तरात्मकप्रश्नाः

1. तस्यापत्यमित्यस्य अर्थं लिखत।
2. पौस्नः इत्यत्र प्रकृतिप्रत्ययौ लेख्यौ।
3. अपत्यत्वेन विवक्षितं पौत्रादि किं सञ्ज्ञं स्यात्?
4. गोत्रे एक एवापत्यप्रत्ययो भवति, केन?
5. गर्गस्य गोत्रापत्यं को भवति?
6. 'वत्साः' इत्यत्र यञो लुक् केन भवति?
7. युवसञ्ज्ञासूत्रं किम्?
8. यञन्तात् फक् केन भवति?
9. प्रत्ययादेः ढस्य कः आदेशो भवति?
10. दाक्षिरित्यत्र प्रकृतिप्रत्ययौ लेख्यौ।
11. 'अत इञ्' इति इञ् प्रत्ययं कस्मिन् अर्थे करोति?
12. औडुलोमिरित्यस्य विग्रहवाक्यं लिखत।
13. अनृषिभ्यः बिदादिभ्यः कः प्रत्ययः भवति?
14. दुहितुरपत्यमुच्यते –
15. बिदस्य गोत्रापत्यं भवति –
16. 'शैवः' इत्यत्र केन कः प्रत्ययः क्रियते?
17. गङ्गाया अपत्यं भवति –
18. वासिष्ठः इत्यत्र केन कः प्रत्ययः क्रियते?
19. वसुदेवस्य अपत्यमुच्यते –
20. 'द्वैमातुरः' इत्यत्र मातृशब्दस्य क आदेशः?
21. 'षाण्मातुरः' इत्यत्र केन कः प्रत्ययः कस्मिन्नर्थे क्रियते?
22. वैनतेयः इत्यत्र कः प्रत्ययः केन भवति?
23. कानीनः इत्यत्र मूलप्रातिपदिकं किम्?
24. राजश्वशुरात् कः प्रत्ययः भवति?

25. राजन: इत्यत्र प्रकृतिभाव: कस्य भवति?
26. क्षत्रात् क: प्रत्यय:?
27. रेवत्यादिशब्देभ्यो भवति –
28. रैवतिक: इत्यत्र ठस्य स्थाने आदेशो भवति –
29. पञ्चालस्यापत्यं किमुच्यते?
30. पौरव: इत्यत्र पूरो: क: प्रत्यय:?
31. पाण्डो: क: प्रत्यय:?
32. नादिभ्य: प्रत्यय: क:?
33. कौरव्य: इत्यस्य विग्रहवाक्यं किम्?
34. तद्राजसञ्ज्ञासूत्रं किम्?
35. तद्राजसञ्ज्ञकप्रत्यया: लेख्या:।

**लघूत्तरात्मकप्रश्ना:**

1. आयनेयीति सूत्रं प्रपूर्य व्याख्यां कुरुत।
2. प्रकरणस्थसञ्ज्ञासूत्राणि अर्थसहितानि लिखत।
3. ऋष्यन्धकेति सूत्रं प्रपूर्य व्याख्यां कुरुत।
4. मातुरुदिति सूत्रं प्रपूर्य व्याख्यां कुरुत।

**निबन्धात्मकप्रश्ना:**

1. अघोलिखितान् प्रयोगान् ससूत्रं साधयत।

स्त्रैण:, पौंस्न:, औपगव:, गार्ग्य:, वात्स्य:, गर्गा:, गार्ग्यायण:, दाक्षि:, बाहवि:, औडुलोमि:, बैद:, पौत्र:, दौहित्र:, शैव:, गाङ्ग:, वैश्वामित्र:, वासुदेव:, नाकुल:, साहदेव:, षाण्मातुर:, वैनतेय:, कानीन:, राजन्य:, श्वशुर्य:, राजन:, क्षत्रिय:, क्षात्रि:, रैवतिक:, पाञ्चाल:, पौरव:, पाण्ड्य:, नैषध्य:, कौरव्य:, कम्बोज:, चोल:।

2. प्रकरणस्थ सूत्राणां वार्तिकानाञ्च निम्नलिखितप्रारूपानुसारं सारणी निर्मातव्या।

| सूत्रम्/वार्तिकम् | सूत्रार्थ:/वार्तिकार्थ: | उदाहरणानि |
|---|---|---|

3. प्रकरणस्थप्रयोगाणां निम्नलिखितप्रारूपानुसारं सारणी निर्मातव्या।

| प्रयोग: | विग्रहवाक्यम् |
|---|---|
| यथा–स्त्रैण: | स्त्रिया अपत्यम्/<br>स्त्रीषु भव:/<br>स्त्रीणां समूह:/इत्यादि |

4. अधोनिर्दिष्टसूत्राणां सोदाहरणं व्याख्या कार्या।

(1) तद्राजस्य बहुषु तेनैवास्त्रियाम्, (2) जनपदशब्दात्क्षत्रियादञ्, (3) स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्, (4) एको गोत्रे, (5) अनृष्यानन्तर्ये बिदादिभ्योऽञ्, (6) तस्यापत्यम् (7) गोत्राद्यून्यस्त्रियाम् (8) ये चाऽभावकर्मणो:, (9) अपत्यं पौत्रप्रभृति गोत्रम्, (10) बाह्वादिभ्यश्च, (11) ओर्गुण:, (12) स्त्रीभ्यो ढक्, (13) कन्याया कनीन च, (14) अत इञ्, (15) क्षत्राद् घ: (16) कुरुनादिभ्यो ण्य:।

## ॥ अथ रक्ताद्यर्थकाः ॥

1033. **तेन रक्तं रागात् ( 4-2-1 ) ॥ विधिसूत्रम् ॥**
अण् स्यात्। रज्यतेऽनेनेति रागः। कषायेण रक्तं वस्त्रं काषायम्।

1034. **नक्षत्रेण युक्तः कालः ( 4-2-3 ) ॥ विधिसूत्रम् ॥**
अण् स्यात्। (वा.) **तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्।** पुष्येण युक्तं पौषमहः।

1035. **लुबविशेषे ( 4-2-4 ) ॥ विधिसूत्रम् ॥**
पूर्वेण विहितस्य लुप् स्यात्। षष्टिदण्डात्मकस्य कालस्य अवान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः।

1036. **दृष्टं साम ( 4-2-7 ) ॥ विधिसूत्रम् ॥**
तेन इत्येव। वसिष्ठेन दृष्टं वासिष्ठं साम।

1037. **वामदेवाड् ड्यड्-ड्यौ ( 4-2-8 ) ॥ विधिसूत्रम् ॥**
वामदेवेन दृष्टं साम वामदेव्यम्।

---

1033. **तेन रक्तमिति** – तेन, रक्तम्, रागात् इतिच्छेदः। तेनेति तृतीयान्तनिर्देशः। रज्यतेऽनेनेति रागः। निष्ठायां रक्तं वर्णान्तरं प्राप्तम्। राग-शब्देन रञ्जनद्रव्यं गृह्यते। **तेन रक्तं वर्णान्तरं प्राप्तमित्यर्थे रागाद् = रञ्जनद्रव्यवाचकाद् अण्प्रत्ययः स्यादिति।** यथा- काषायम्।

**रूपसिद्धिः**

**काषायम्** – कषायेण रक्तमित्यर्थे रञ्जनद्रव्यवाचकात् कषायशब्दात् ''तेन रक्तं रागात्'' इति सूत्रेण अण्-प्रत्ययेऽनुबन्धलोपे, कषाय अ इति जाते, ''तद्धितेष्वचामादेः'' इति आदिवृद्धौ काषाय अ इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'काषायम्' इति रूपं सिद्धम्।

1034. **नक्षत्रेणेति – नक्षत्रेण युक्तः कालः इत्यर्थे नक्षत्रविशेषवाचकात् शब्दात् अण्प्रत्ययः स्यादित्यर्थः।**
(वा.) **तिष्यपुष्ययोरिति- नक्षत्रेण युक्तः कालः इत्यनेन विहिते नक्षत्र-सम्बन्धिनि अणि परे तिष्यपुष्ययोः शब्दयोः यलोपः स्यादिति वाच्यम्।** यथा- पौषम्।

**रूपसिद्धिः**

**पौषम्** – (अहः) पुष्येण युक्तम् (अहः = दिनम्) इत्यर्थे ''नक्षत्रेण युक्तः कालः'' इत्यणि अनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे पौष्य् अ इति जाते, तिष्यपुष्ययोरिति यलोपे पौष इति जाते, स्वादिकार्ये पौषम् इति रूपं सिद्धम्।

1035. **लुबविशेष इति – नक्षत्रेण युक्तः कालः इत्यादिपूर्वसूत्रेण विहितस्य अणो लुप् स्यात्।** यदि दिनस्य रात्र्या वा स्पष्टज्ञानं न भवति। सूत्रस्थ-अविशेष इति शब्दस्यार्थः विशेषार्थस्य ज्ञानाभावः। अर्थात् षष्टिदण्डात्मकस्य = चतुर्विंशतिहोरारूपकालस्य अवान्तरविशेषः = दिनं रात्रिर्वा इति नावगम्यते इति यथा अद्य पुष्यः।

1036. **दृष्टं सामेति – तेन दृष्टं साम इत्यर्थे तृतीया समर्थाद् अण् प्रत्ययो भवतीत्यर्थः।** वैदिकमन्त्रविशेषः 'सामन्' इति कथ्यते-गीतिषु सामाख्या (मीमांसा. 2-1-36)।

**रूपसिद्धिः**

**वासिष्ठं ( साम )** – वसिष्ठेन दृष्टमित्यर्थे ''दृष्टं साम'' इत्यणि, अनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये (सौ, सोरमि पूर्वरूपे च) वासिष्ठं (सामेति) रूपं सिद्धम्।

1037. **वामदेवादिति** – तेनेति अनुवर्तते। वामदेवात् ड्यड्ड्यौ इति सूत्रच्छेदः। ड्यत् च ड्यश्च ड्यड्ड्यौ, इतरेतरद्वन्द्वः। **तृतीयान्तसमर्थवामदेवात् 'दृष्टं साम' इत्यर्थे ड्यत्, ड्य इति प्रत्ययौ भवत इत्यर्थः।** तकारडकारौ इत्सञ्ज्ञकौ। ड्यत्, ड्य इत्यत्र यकारोऽवशिष्यते। ड्यत् इति प्रत्यये तित् स्वरितः स्वरार्थम्। ड्य इति प्रत्ययाद् उदात्तस्वर इति भेदः।

**रूपसिद्धिः**

**वामदेव्यम्** – वामदेवेन दृष्टं साम इत्यर्थे ड्यत् अथवा ड्यप्रत्ययेऽनुबन्ध लोपे, डित्त्वसामर्थ्यादभस्यापि ''टेः'' इति टिलोपे स्वादिकार्ये वामदेव्यम् इति रूपं सिद्धम्।

**1038. परिवृतो रथः ( 4-2-9 ) ॥विधिसूत्रम् ॥**

अस्मिन्नर्थेऽण्-प्रत्ययो भवति। वस्त्रेण परिवृतो वास्त्रो रथः।

**1039. तत्रोद्धृतममत्रेभ्यः ( 4-2-13 ) ॥विधिसूत्रम् ॥**

(पात्रविशेषवाचिभ्यः सप्तम्यन्तेभ्यः प्रातिपदिकेभ्यः उद्धृतमित्यर्थे तद्धितोऽण् प्रत्ययः स्यात्)। शरावे उद्धृतः शारावः ओदनः।

**1040. संस्कृतं भक्षाः ( 4-2-15 ) ॥विधिसूत्रम् ॥**

सप्तम्यन्तादण् स्यात् संस्कृतेऽर्थे, भक्षाश्चेत्ते स्युः। भ्राष्ट्रेषु संस्कृताः भ्राष्ट्रा यवाः।

**1041. साऽस्य देवता ( 4-2-23 ) ॥विधिसूत्रम् ॥**

(देवताविशेषवाचिनः प्रथमान्तात्समर्थात् प्रातिपदिकाद् 'अस्य' इत्यर्थे तद्धितोऽण् प्रत्ययः स्यात्)। इन्द्रो देवताऽस्येति ऐन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम्।

---

1038. **परिवृतो रथ इति** – तेन परिवृतो रथ इत्यर्थे तृतीयासमर्थाद् अण्स्यात्। यथा वास्त्रो रथः।

**रूपसिद्धिः**

**वास्त्रो रथः** – वस्त्रेण परिवृतः इत्यर्थे ''परिवृतो रथः'' इति अण्प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये वास्त्रो रथः इति रूपं सिद्धम्।

1039. **तत्रोद्धृतमिति** – तत्र उद्धृतम् अमत्रेभ्यः इतिच्छेदः। अमत्र शब्दः पात्रवाचकः। **अमत्रवाचकात् सप्तम्यन्तसमर्थात् तत्र उद्धृतमित्यर्थे यथाविहितः अण्प्रत्ययः स्यादित्यर्थः।** यथा– शारावः (ओदनः)। शरावो मृच्चषकः। उद्धृत्य शरावे निहित इत्यर्थः।

**रूपसिद्धिः**

**शारावः** – शरावे उद्धृतः शाराव ओदनः। शरावशब्दात् ''तत्रोद्धृतममत्रेभ्यः'' इत्यणि, अनुबन्धलोपे, आदिवृद्धौ, भसञ्ज्ञायामकारलोपे, स्वादिकार्ये 'शारावः' इति रूपं सिद्धम्।

1040. **संस्कृतमिति** – संस्कृतम्, भक्षाः इतिच्छेदः। तत्रेत्यनुवर्तते। भक्ष्यन्ते इति भक्षाः, कर्मणि घञ्। 'संस्कृतम्' इति एकवचनं सामान्याभिप्रायेण 'भक्षाः' इति बहुवचनं 'यवाः' 'अपूपाः' इत्यादीन् अभिप्रेत्य कृतमस्ति। **सप्तम्यन्तसमर्थात् संस्कृतेऽर्थेऽणप्रत्ययः स्यात्।** यदि संस्कृतं भक्षाः स्युः। यथा– भ्राष्ट्राः यवाः। संस्कारो हि यत्र पाकादिना विशेषगुणाधानमिति बोद्धव्यम्।

**रूपसिद्धिः**

**भ्राष्ट्राः** – भाष्ट्रेषु संस्कृता इत्यर्थे ''संस्कृतं भक्षाः'' इति अण्प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे जसि भ्राष्ट्रा (यवाः) इति रूपं सिद्धम्।

1041. **साऽस्येति** – सा अस्य देवता इतिच्छेदः। **सा अस्य देवता इत्यर्थे प्रथमान्ताद् अण् स्यात्।** यथा ऐन्द्रम् (हविः)। पाशुपतम्। बार्हस्पत्यम्।

**रूपसिद्धिः**

**ऐन्द्रं ( हविः )** – इन्द्रो देवता अस्येत्यर्थे इन्द्रशब्दात् ''साऽस्य देवता'' इति सूत्रेण अणप्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, नपुंसकलिङ्गे सौ, सोरमि पूर्वरूपे ऐन्द्रमिति रूपं सिद्धम्।

**पाशुपतम्** – पशुपतिर्देवता अस्येति पाशुपतम्। पशुपतिशब्दात् ''साऽस्य देवता'' इत्यणि प्राप्ते परन्तु पत्युत्तरपदात् ''दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः'' इति अणं प्रबाध्य ण्यप्राप्ते, पुनः ण्यप्रत्ययं बाधित्वा अस्य अश्वपत्यादिगणे पाठत्वाद् ''अश्वपत्यादिभ्यश्च'' इत्यणि, अनुबन्धलोपे आदिवृद्धौ, भत्वाद् इकारलोपे, स्वादिकार्ये 'पाशुपतम्' इति रूपं सिद्धम्।

**बार्हस्पत्यम्** – बृहस्पतिर्देवताऽस्येति बार्हस्पत्यम्। बृहस्पतिशब्दात् ''साऽस्य देवता'' इत्यणि प्राप्ते, तं प्रबाध्य ''दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः'' इति सूत्रेण ण्यप्रत्ययेऽनुबन्धलोपे, बृहस्पति य इति जाते, आदिवृद्धौ, रपरत्वे, ब् आर् हस्पति य इति जाते, भत्वाद् इकारलोपे बार्हस्पत् य इति जाते, स्वादिकार्ये 'बार्हस्पत्यम्' इति रूपं सिद्धम्।

**1042. शुक्राद्घन्( 4-2-25 ) ॥विधिसूत्रम् ॥**
शुक्रियम्।

**1043. सोमाट्ट्यण्( 4-2-29 ) ॥विधिसूत्रम् ॥**
सौम्यम्।

**1044. वाय्वृतु-पित्रुषसो यत्( 4-2-30 ) ॥विधिसूत्रम् ॥**
वायव्यम्। ऋतव्यम्।

**1045. रीङ् ऋतः( 7-4-27 ) ॥विधिसूत्रम् ॥**
अकृद् यकारे, असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः। यस्येति च। पित्र्यम्। उषस्यम्।

1042. **शुक्राद् घनिति** - शुक्रात् घन् इतिच्छेदः। **साऽस्य देवतेति षष्ठ्यर्थे शुक्रशब्दाद् घन्प्रत्ययः स्यादित्यर्थः।** यथा शुक्रियम्।

**रूपसिद्धिः**

**शुक्रियम्** - शुक्रो देवता अस्येत्यर्थे ''शुक्राद् घन्'' इति घन्-प्रत्ययेऽनुबन्धलोपे, शुक्र घ इति जाते, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति घस्य इयादेशे, भत्वाद् अकारलोपे, स्वादिकार्ये 'शुक्रियम्' इति रूपं सिद्धम्।

1043. **सोमादिति** - सोमात्+ट्यण् इतिच्छेदः। **साऽस्य देवता इत्यर्थे सोमशब्दात् ट्यण् प्रत्ययः स्यादित्यर्थ।** यथा सौम्यम्।

**रूपसिद्धिः**

**सौम्यम्** - सोमो देवताऽस्येति सौम्यम् (हविः सूक्तं वा)। सोमशब्दात् ''सोमाट्ट्यण्'' इति ट्यण् प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, सौ, सोरमि, पूर्वरूपे 'सौम्यम्' इति रूपं सिद्धम्।

1044. **वाय्वृत्विति** - वायु-ऋतु-पितृ-उषसः यत् इतिच्छेदः। **वायु-ऋतु-पितृ-उषस् इत्येतेभ्यः शब्देभ्यः 'साऽस्य देवता' इत्यर्थे यत्प्रत्ययः स्यादित्यर्थः।** यथा- वायव्यम्, ऋतव्यम्

**रूपसिद्धिः**

**वायव्यम्** - वायुर्देवता अस्येत्यर्थे ''साऽस्य देवता'' इत्यणं प्रबाध्य ''वाय्वृतुपित्रुषसो यत्'' इति यत्प्रत्ययेऽनुबन्धलोपे, वायु य इति जाते, भत्वाद् ''ओर्गुणः'' इति भसञ्ज्ञकस्य उकारस्य ओकारे गुणे वायो य इति जाते, ''वान्तो यि प्रत्यये'' इति ओकारस्य अवादेशे वाय् अव् य इति जाते, प्रातिपदिकत्वात् स्वादिकार्ये 'वायव्यम्' इति रूपं सिद्धम्।

**ऋतव्यम्** - ऋतुर्देवता अस्येति ऋतव्यं हविः। ऋतु शब्दात् अणं प्रबाध्य ''वाय्वृतुपित्रुषसो यत्'' इति यत्प्रत्ययेऽनुबन्धलोपे, ऋतु य इति जाते, भत्वाद् ''ओर्गुणः'' इति उकारस्य ओकारे गुणे ऋतो य इति जाते, ''वान्तो यि प्रत्यये'' इति ओकारस्य अवादेशे ऋत् अव् य इति जाते, प्रादिकत्वात्स्वादिकार्ये 'ऋतव्यम्' इति रूपं सिद्धम्।

1045. **रीङ् ऋत इति** - रीङ्, ऋतः इतिच्छेदः। विशेषणत्वात् तदन्तविधिः अतः ऋदन्तस्य अङ्गस्य इति। कृत् च सार्वधातुकं च कृत्सार्वधातुके, न कृत्सार्वधातुके अकृत्सार्वधातुके, तयोः = अकृत्सार्वधातुकयोः, द्वन्द्व-गर्भनञ्तत्पुरुषः। **कृद्भिन्नयकारे असार्वधातुकयकारे तथा च्विप्रत्यये परे ऋदन्ताङ्गस्य रीङादेशः स्यादित्यर्थः।** यस्येति चेति ईकारलोपे पित्र्यम्। उषस्यम्।

**रूपसिद्धिः**

**पित्र्यम्** - पितरो देवता अस्येति पित्र्यं हविः। पितृशब्दाद् अणं प्रबाध्य ''वाय्वृतुपित्रुषसोयत्'' इति यत् प्रत्ययेऽनुबन्धलोपे, पितृ य इति जाते, ''रीङ् ऋत'' इति ऋकारस्य रीङादेशे अनुबन्धलोपे पित्री य इति जाते, भत्वादीकारलोपे स्वादिकार्ये 'पित्र्यम्' इति रूपं सिद्धम्।

**उषस्यम्** - उषो देवताऽस्येति उषस्यम्। उषस्शब्दाद् अणं प्रबाध्य यत् प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'उषस्यम्' इति रूपं सिद्धम्।

**1046. पितृव्य-मातुल-मातामह-पितामहाः ( 4-2-35 ) ॥विधिसूत्रम् ॥**

एते निपात्यन्ते। पितुर्भ्राता पितृव्यः। मातुर्भ्राता मातुलः। मातुः पिता मातामहः। पितुः पिता पितामहः।

**1047. तस्य समूहः ( 4-2-36 ) ॥विधिसूत्रम् ॥**

काकानां समूहः काकम्।

**1048. भिक्षादिभ्योऽण् ( 4-2-37 ) ॥विधिसूत्रम् ॥**

भिक्षाणां समूहो भैक्षम्। गर्भिणीनां समूहो गार्भिणम्। इह

(वा.) **भस्याढे तद्धिते।** इति पुवद्भावे कृते -

---

1046. **पितृव्यमातुलेति** - सिद्धशब्दानां प्रक्रियादर्शनं विना सूत्रेषु पठनं निपातनं कथ्यते। एतेषु शब्देषु प्रकृति-समर्थविभक्ति प्रत्यय-प्रत्ययार्थानुबन्धानां स्वयमेव कल्पना क्रियते।

**रूपसिद्धिः**

**पितृव्यः** - पितुर्भ्राता इत्यर्थे पितृशब्दाद् व्यत्प्रत्ययो निपात्यते, अनुबन्धलोपे पितृ व्य इति जाते, स्वादिकार्ये 'पितृव्यः' इति रूपं सिद्धम्।

**मातुलः** - मातुर्भ्राता इत्यर्थे मातृशब्दात् डुलच्-प्रत्ययो निपात्यते, तत्रानुबन्धलोपे, मातृ उल इति जाते, डित्वात् ''टेः'' इति टि (ऋकारस्य) लोपे, मात् उल इति जाते, स्वादिकार्ये 'मातुलः' इति रूपं सिद्धम्।

**मातामहः** - मातुः पिता इत्यर्थे मातृशब्दाद् डामहच् प्रत्ययो निपात्यते, अनुबन्धलोपे मातृ आमह इति जाते, डित्वात् ''टेः'' इति टि (ऋ) लोपे मात् आमह इति जाते, स्वादिकार्ये 'मातामहः' इति रूपं सिद्धम्।

**पितामहः** - पितुः पिता इत्यर्थे पितृशब्दाद् डामहच् प्रत्ययो निपात्यते, अनुबन्धलोपे पितृ आमह इति जाते, डित्वात् ''टेः'' इति सूत्रेण टिलोपे पित् आमह इति जाते, स्वादिकार्ये 'पितामहः' इति रूपं सिद्धम्।

1047. **तस्य समूह इति** - तस्य समूहः इतिच्छेदः। षष्ठ्यन्तसमर्थशब्देभ्योऽण्-प्रत्ययः स्यात् समूहेऽर्थे इत्यर्थः। यथा काकम्।

**रूपसिद्धिः**

**काकम्** - काकानां समूह इत्यर्थे काकशब्दात् ''तस्य समूहः'' इति अण्-प्रत्ययेऽनुबन्धलोपे काक अ इति जाते, ''पर्जन्यवल्लक्षणप्रवृत्तिः'' इति न्यायेन आकारस्यापि आकारे आदिवृद्धौ भत्वादकारलोपे काक् अ इति जाते, स्वादिकार्ये 'काकम्' इति रूपं सिद्धम्।

1048. **भिक्षादिभ्य इति** - भिक्षादिभ्यः अण् इतिच्छेदः। भिक्षा (भिक्षाशब्दः) आदिर्येषां ते भिक्षादयः, तेभ्यः = भिक्षादिभ्यः। तद्गुण-संविज्ञान बहुव्रीहिः। **भिक्षादिगणपठितशब्देभ्यः समूहेऽर्थे अण्प्रत्ययः स्यादित्यर्थः।** यथा भैक्षम्। गार्भिणम्। **भिक्षादिगणो यथा** - भिक्षा। गर्भिणी। क्षेत्र। करीष। अङ्गार। चर्मिन्। धर्मिन्। चर्मन्। धर्मन्। सहस्र। युवति। पदाति। पद्धति। अथर्वन् (अर्वन्)। दक्षिण (दक्षिणा)। भूत। विषय। श्रोत्र।

**रूपसिद्धिः**

**भैक्षम्** - 'भिक्षाणां समूहः' इत्यर्थे भिक्षाशब्दाद् ''भिक्षादिभ्योऽण्'' इत्यणि, अनुबन्धलोपे, भिक्षा अ इति जाते, ''तद्धितेष्वचामादेः'' इति इकारस्य आदिवृद्धौ ऐकारे कृते, भैक्षा अ इति जाते, भत्वादाकारलोपे भैक्ष् अ इति जाते, प्रातिपदिकत्वात् स्वादिकार्ये 'भैक्षम्' इति रूपं सिद्धम्।

(वा.) **भस्याढ इति** - भस्य अढे तद्धिते इतिच्छेदः। **ढभिन्ने तद्धिते परे भसञ्ज्ञकाङ्गस्य पुंवद्भावः स्यादित्यर्थः।**

**1049. इनण्यनपत्ये ( 6-4-164 ) ॥विधिसूत्रम् ॥**

अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात्, तेन नस्तद्धिते इति टिलोपो न। युवतीनां समूहो यौवनम्।

**1050. ग्रामजनबन्धुभ्यस्तल् ( 4-2-43 ) ॥विधिसूत्रम् ॥**

(लि.) **तलन्तं स्त्रियाम्।** ग्रामता। जनता। बन्धुता।

(वा.) **गजसहायाभ्यां चेति वक्तव्यम्।** गजता। सहायता।

(वा.) **अह्नः खः क्रतौ।** अहीनः।

---

**1049. इनण्यनपत्य इति** - इन् अणि अनपत्ये इतिच्छेदः। न अपत्यम् अनपत्यम् तस्मिन् = अनपत्ये, नञ्तत्पुरुषः। **अपत्यार्थभिन्नेऽर्थेऽणि परे इनः प्रकृतिभावः स्यादित्यर्थः।** अतः टिलोपः न स्यात्। यथा गार्भिणम्। यौवनम्।

**रूपसिद्धिः**

**गार्भिणम्** - गर्भः अस्ति अस्या इत्यर्थे मत्वर्थीये इन्प्रत्यये ङीपि, णत्वे गर्भिणी इति शब्दः। गर्भिणीनां समूह इत्यर्थे गर्भिणीशब्दाद् ''भिक्षादिभ्योऽण्'' इत्यणि, अनुबन्धलोपे, गर्भिणी अ इति जाते, भसञ्ज्ञायां, ''भस्याढे तद्धिते'' इति पुंवद्भावे गार्भिन् अ इति जाते, ''नस्तद्धिते'' इति टिलोपे प्राप्ते, तं प्रबाध्य ''इनण्यनपत्ये'' इति प्रकृतिभावे, ''अट्कुप्वाङ्नुम्व्यवायेऽपि'' इति णत्वे, स्वादिकार्ये 'गार्भिणम्' इति रूपं सिद्धम्।

**यौवनम्** - युवन् शब्दात् ''यूनस्तिः'' इति तिप्रत्यये युवतिरिति। युवतीनां समूह इत्यर्थे युवतिशब्दाद् ''भिक्षादिभ्योऽण्'' इत्यणि, अनुबन्धलोपे, आदिवृद्धौ यौवति अ इति जाते, भसञ्ज्ञायां, ''भस्याढे तद्धिते'' इति पुवद्भावे, यौवन् अ इति जाते, ''नस्तद्धिते'' इति टिलोपे प्राप्त तं प्रबाध्य ''अन्'' इति अनः प्रकृति भावे, स्वादिकार्ये 'यौवनम्' इति रूपं सिद्धम्। युवति शब्दस्य भिक्षादिगणे पाठसामर्थ्याद् यौवतमिति काशिकाकारमते रूपं सिद्ध्यति। इत्थमेव पदातीनां समूहः पादातम्। करीषाणां समूहः (शुष्कगोमयसमूहः) कारीषम्। दक्षिणानां समूहः दाक्षिणम्। सहस्राणां समूहः साहस्रम्।

**1050. ग्रामजनेति** - ग्रामजनबन्धुभ्यः तल् इतिच्छेदः। **ग्रामशब्दाद्, जनशब्दाद्, बन्धुशब्दाच्च तल्प्रत्ययः स्यात् समूहेऽर्थे।** यथा ग्रामता। जनता। बन्धुता।

(लि.) **तलन्तमिति**- तल्प्रत्ययान्तं स्त्रीलिङ्गं स्यादित्यर्थः।

**रूपसिद्धिः**

**ग्रामता** - ग्रामाणं समूह इत्यर्थे ग्रामशब्दाद् ''ग्रामजनबन्धुभ्यस्तल्'' इति तल् प्रत्ययेऽनुबन्धलोपे, ''तलन्तं स्त्रियाम्'' इति नियमाद् ''अजाद्यतष्टाप्'' इति टापि सवर्णदीर्घे स्वादिकार्ये 'ग्रामता' इति रूपं सिद्धम्।

**जनता** - जनानां समूह इत्यर्थे जनशब्दाद् ''ग्रामजनबन्धुभ्यस्तल्'' इति तल्प्रत्ययेऽनुबन्धलोप ''तलन्तं स्त्रियामिति नियमाद् टापि'' अनुबन्धलोपे सवर्णदीर्घे स्वादिकार्ये 'जनता' इति रूपं सिद्धम्।

**बन्धुता** - बन्धूनां समूह इत्यर्थे बन्धुशब्दाद् ''ग्रामजनबन्धुभ्यस्तल्'' इति तल्प्रत्ययेऽनुबन्धलोपे, बन्धु त इति जाते, तलन्तं स्त्रियामिति नियमाद् ''अजाद्यतष्टाप्'' इति टापि, सवर्णदीर्घे स्वादिकार्ये 'बन्धुता' इति रूपं सिद्धम्।

(वा.) **गजसहाभ्यामिति- षष्ठ्यन्तगजसहायाभ्यां प्रातिपदिकाभ्यां समूहेऽर्थे तल्प्रत्ययः स्यादिति वक्तव्यम्।** यथा गजता। सहायता।

**रूपसिद्धिः**

**गजता** - गजानां समूह इत्यर्थे गजशब्दाद् ''गजसहायाभ्यां चेति वक्तव्यम्'' इति वार्तिकेन तल्प्रत्यये ''तलन्तः'' इति सूत्रेण स्त्रीत्वे ''अजाद्यतष्टाप्'' इति टाप्-प्रत्ययेऽनुबन्धलोपे गजत आ इति जाते, ''अकः सवर्णे दीर्घः'' इति अकार-आकारयोः आकारे सवर्णदीर्घे स्वादिकार्ये 'गजता' इति रूपं सिद्धम्।

**सहायता** - सहायानां समूह (सहायकानां समूहः) इत्यर्थे सहायशब्दाद् ''गजसहायाभ्यां चेति वक्तव्यम्'' इति वार्तिकेन तल्प्रत्ययेऽनुबन्धलोपे, सवर्णदीर्घे स्वादिकार्ये 'सहायता' इति रूपं सिद्धम्।

1051. **अचित्त-हस्ति-धेनोष्ठक् ( 4-2-46 ) ॥ विधिसूत्रम् ॥**

1052. **इसुसुक्तान्तात् कः ( 7-3-51 ) ॥ विधिसूत्रम् ॥**

इस्-उस्-उक्-तान्तात् परस्य ठस्य कः। साक्तुकम्। हास्तिकम्। धैनुकम्।

1053. **तदधीते तद्वेद ( 4-2-58 ) ॥ विधिसूत्रम् ॥**

1054. **न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ( 7-3-3 ) ॥ विधिसूत्रम् ॥**

पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः, किन्तु ताभ्यां पूर्वौ क्रमाद् ऐचावागमौ स्तः। व्याकरणमधीते वेद वा वैयाकरणः।

---

(वा.) **अह्न इति- समूहेऽर्थे क्रतौ विषये विद्यमानाद् अहन्शब्दात् खप्रत्ययः स्यादित्यर्थः।** यथा अहीनः। सोमरसनिश्च्योतनं यज्ञीया आहुतिर्वा सुत्या।

**रूपसिद्धिः**

**अहीनः** - अह्नां समूहः (सुत्याकर्मणां समूहरूप एकः यज्ञविशेषः) इत्यर्थे अहन्शब्दाद् ''अह्नः खः क्रतौ'' इति वार्तिकेन खप्रत्यये, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति खस्थाने ईनादेशे, अहन् ईन इति जाते, ''अह्नष्टखोरेव'' इति नियमानुसरन् ''न स्तद्धिते'' इति भसञ्ज्ञक टिलोपे, अह् ईन इति जाते, स्वादिकार्ये 'अहीनः' इति रूपं सिद्धम्।

1051. **अचित्तेति** - अचित्तहस्तिधेनोः ठक् इतिच्छेदः। अविद्यमानं चित्तं येषां ते = अचित्ताः, नञ्बहुव्रीहिसमासः। अचेतना= अप्राणिवाचका इत्यर्थः अचित्ताश्च हस्ती च धेनुश्च एषां समाहारः, अचित्तहस्तिधेनु, तस्मात् = अचित्तहस्तिधेनोः, समाहारद्वन्द्वेऽपि पुंस्त्वं सौत्रम्। **षष्ठ्यन्त-अचेतनवाचक-प्रातिपदिकेभ्यः हस्तिन् धेनु इति प्रातिपदिकाभ्याञ्च समूहेऽर्थे ठक् प्रत्ययः स्यादित्यर्थः।**

1052. **इसुसुगिति** - इस्-उस्-उक्-तान्तात् कः इतिच्छेदः। इस् च उस् च उक् (उ ऋ लृ) च तश्च इसुसुक्ताः, इसुसुक्ता अन्ताः (अन्तावयवाः) यस्य स इसुसुक्तान्तः, तस्मात, इसुसुक्तान्तात्। द्वन्द्वगर्भबहुव्रीहिसमासः। तकारादकार उच्चारणार्थ उक् प्रत्याहारः। **इसन्त-उसन्त-उगन्त-तकारान्त् इति शब्देभ्यः परस्य ठस्य स्थाने कः स्यादित्यर्थः।**

**रूपसिद्धिः**

**साक्तुकम्** - सक्तूनां समूह इत्यर्थे (सक्तुशब्दः अचित्त अर्थात् अचेतनवस्तुवाचकः) सक्तुशब्दाद् ''अचित्तहस्तिधेनोष्ठक्'' इति ठक् प्रत्ययेऽनुबन्धलोपे सक्तु ठ इति जाते, ''ठस्येकः'' इति इगादेशं प्रबाध्य ''इसुसुक्तान्तात् कः'' इति ठस्य कादेशे, किितिचेति आदिवृद्धौ, स्वादिकार्ये 'साक्तुकम्' इति रूपं सिद्धम्।

**हास्तिकम्** - हस्तिनां समूह इत्यर्थे हस्तिन् शब्दाद् ''अचित्तहस्तिधेनोष्ठक्'' इति ठक् प्रत्ययेऽनुबन्धलोपे हस्तिन् ठ इति जाते, ''ठस्येकः'' इति ठस्य इकादेशे हस्तिन् इक इति जाते, ''किति च'' इत्यादिवृद्धौ, ''नस्तद्धिते'' इति टि (इन्) लोपे हास्त् इक इति जाते, स्वादिकार्ये 'हास्तिकम्' इति रूपं सिद्धम्।

**धैनुकम्** - धेनूनां समूहो धैनुकम्। धेनुशब्दाद् ''अचित्तहस्तिधेनोष्ठक्'' इति ठक्प्रत्ययेऽनुबन्धलोपे, धेनु ठ इति जाते, धेनुशब्दस्य उगन्तत्वात् ''ठस्येकः'' इति इकं प्रबाध्य ''इसुसुक्तान्तात् कः'' इति ठस्य कादेशे धेनु क इति जाते, ''किति च'' इत्यादिवृद्धौ, धैनुक इति जाते, स्वादिकार्ये 'धैनुकम्' इति रूपं सिद्धम्।

1053. **तदधीत इति** - तद्, अधीते, तद्, वेद इतिच्छेदः। तद् इति द्वितीयान्तं पदम्। **द्वितीयान्तात् समर्थशब्दात् तद् अधीते तद् वेद वेत्यर्थे च अण्प्रत्ययः स्यादित्यर्थः।**

1054. **न य्वाभ्यामिति** - न इत्यव्ययपदम्, य्वाभ्याम्, पदान्ताभ्याम्, पूर्वौ, तु इत्यव्ययपदम्, ताभ्याम्, ऐच् इतिच्छेदः। य् च वश्च य्वौ, ताभ्याम् = य्वाभ्याम्, इतरेतरद्वन्द्वः। वकारादकार उच्चारणार्थः पदान्ताभ्यां य्वाभ्यां (परस्य) न वृद्धिः, तु (किन्तु) ताभ्यां (य्वाभ्याम्) पूर्वौ ऐच्। पदान्त-यकारवकाराभ्यां परस्य अचाम् आद्यचो वृद्धिर्न भवति (तु) किन्तु ताभ्यां यकारवकाराभ्यां पूर्वौ ऐकार-औकारौ (ऐचौ आगमौ) स्यातां ञिति णिति किति च तद्धिते परे इत्यर्थः। यथा वैयाकरणः।

**1055. क्रमादिभ्यो वुन् ( 4-2-60 ) ॥ विधिसूत्रम् ॥**

क्रमकः। पदकः। शिक्षकः। मीमांसकः।

---

**रूपसिद्धिः**

**वैयाकरणः** - व्याकरणम् अधीते वेत्ति वा वैयाकरणः। वि आङ् पूर्वकाद् कृधातोर्ल्युट्प्रत्ययेऽनुबन्धलोपे, यणि व्याकृ यु इति जाते, ''युवोरनाकौ'' इति युकारस्य स्थाने अनादेशे गुणे, रपरत्वे णत्वे व्याकरण इति शब्दो निष्पद्यते। व्याकरणशब्दात् ''तदधीते तद्वेद'' इति अण्प्रत्ययेऽनुबन्धलोपे, व्याकरण अ इति, ''पर्जन्यवल्लक्षणप्रवृत्तिः'' इति न्यायेन ''तद्धितेष्वचामादेरिति वृद्धौ प्राप्ते,'' ''इति वृद्धिनिषेधे, ऐच् आगमे च कृते, व्, ऐ याकरण ''नय्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्'' इति वृद्धिनिषेधे, ऐच् (ऐ) आगमे च कृते व् ऐ याकरण इति जाते, स्वादिकार्ये 'वैयाकरणः' इति रूपं सिद्धम्।

**1055. क्रमादिभ्य इति** - क्रमादिभ्यः वुन् इतिच्छेदः। क्रमशब्द आदिर्येषान्ते क्रमादयः, तेभ्यः = क्रमादिभ्यः, बहुव्रीहिसमासः। **तदधीते तद्वेद इत्यर्थे क्रमादिगणपठितशब्देभ्यः वुन्प्रत्ययः स्यादित्यर्थः**। यथा- क्रममधीते वेत्ति वा क्रमकः, पदमधीते वेत्ति वा पदकः, शिक्षाम् अधीते वेत्ति वा शिक्षकः, मीमासामधीते वेत्ति वा मीमांसकः, सामानि अधीते वेत्ति वा सामकः। क्रमादिगणे उक्तपञ्चशब्दा एव पठिताः।

**रूपसिद्धिः**

**क्रमकः** - क्रमम् अधीते वेद वा इत्यर्थे (वैदिकक्रमपाठम् अधीते वेत्ति वा) क्रमशब्दात् ''क्रमादिभ्यो वुन्'' इति वुन्प्रत्ययेऽनुबन्धलोपे, क्रम वु इति जाते, ''युवोरनाकौ'' इति वु स्थाने अकादेशे, क्रम अक इति जाते, भत्वादकारलोपे क्रम् अक इति जाते, स्वादिकार्ये 'क्रमकः' इति रूपं सिद्धम्।

**पदकः** - पदमधीते वेद वा (वैदिकपदपाठमधीते वेत्ति वा) इत्यर्थे पदशब्दात् ''क्रमादिभ्यो वुन्'' इति वुन् प्रत्ययेऽनुबन्धलोपे पद वु इति जाते, अकादेशे पद अक इति जाते, भत्वादकारलोपे पद् अक इति जाते, स्वादिकार्ये 'पदकः' इति रूपं सिद्धम्।

**शिक्षकः** - शिक्षामधीते वेद वा (शिक्षाग्रन्थमधीते वेत्ति वा) इत्यर्थे वुन् प्रत्ययेऽनुबन्धलोपे, शिक्षा वु इति जाते, ''युवोरनाकौ'' इति वुकारस्य स्थाने अकादेशे शिक्षा अक इति जाते, ''यचि भम्'' इति भसञ्ज्ञायां ''यस्येति च'' इति आकारलोपे शिक्ष्अक इति जाते, स्वादिकार्ये 'शिक्षकः' इति रूपं सिद्धम्।

**मीमांसकः** - मीमांसामधीते वेद वा इत्यर्थे मीमांसाशब्दात् वुन्प्रत्ययेऽनुबन्धलोपे मीमांसा वु इति जाते, अकादेशे मीमांसा अक इति जाते, भत्वादाकारलोपे मीमांस् अक इति जाते, स्वादिकार्ये 'मीमांसकः' इति रूपं सिद्धम्।

## ॥ अभ्यासः ॥

### वस्तुनिष्ठात्मकप्रश्नाः –

1. रज्यतेऽनेन इति –

   (क) रङ्गः (ख) रागः

   (ग) रागम् (घ) कखौ

2. पुष्येण युक्तम् अहः –

   (क) पुष्यः (ख) पौषम्

   (ग) कखौ (घ) पौषः

3. वामदेव्यम् इत्यत्र प्रत्ययोऽस्ति –

   (क) ड्यत् (ख) ड्य

   (ग) कखौ (घ) कोऽपि न

4. यत्प्रत्यान्तं पदमस्ति : –

   (क) वायव्यम् (ख) ऋतव्यम्

   (ग) उषस्यम् (घ) त्रीण्यपि

### अतिलघूत्तरात्मकप्रश्नाः –

1. ऐन्द्रमित्यत्र कस्मिन्नर्थे कः प्रत्ययः?
2. शुक्रशब्दात् कः प्रत्ययः?
3. वासिष्ठमित्यत्र केन कः प्रत्ययः क्रियते?
4. 'पुष्यः' इत्यत्र कस्य लुप् भवति?
5. 'वास्त्रः' इत्यस्य विग्रहवाक्यं किम्?
6. शरावे उद्धृतः को भवति?
7. भ्राष्ट्रा इत्यत्र सप्तम्यन्ताद् भ्राष्ट्रशब्दात् कः प्रत्ययः?
8. बार्हस्पत्यम् इत्यत्र कस्मिन्नर्थे कः प्रत्ययः?
9. सोमशब्दात् साऽस्य देवता इत्यर्थे प्रत्ययो भवति –
10. पितृव्य इत्यत्र कस्य प्रत्ययस्य निपातनं क्रियते?
11. पितामह इति पदे कः प्रत्ययः निपात्यते?
12. काकानां समूहो भवति –
13. भिक्षादिभ्यः कः प्रत्ययः?
14. गार्भिणम् इत्यत्र पुंवद्भावः केन?
15. जनानां समूहः इत्यर्थे केन प्रत्ययेन किं पदं सिध्यति?
16. तल्प्रत्ययान्तशब्दाः कस्मिन् लिङ्गे प्रयुज्यन्ते?
17. 'अहीनः' इत्यत्र प्रकृतिप्रत्ययौ कौ?
18. अचित्तहस्तिधेनोः कः प्रत्ययः?
19. 'वैयाकरणः' इत्यत्र केन कः प्रत्ययः?
20. 'शिक्षकः' इत्यत्र केन कः प्रत्ययः?

### लघूत्तरात्मकप्रश्नाः –

1. साऽस्य देवता इति सूत्रस्य सोदाहरणमर्थो लेख्यः।
2. वाय्वृतुरिति इति सूत्रस्य सोदाहरणमर्थो लेख्यः।
3. ग्रामजनेति सूत्रस्य सोदाहरणं व्याख्या कार्या।

**निबन्धात्मकप्रश्ना: -**

1. अधोलिखित-सूत्राणां सोदाहरणं व्याख्यां कुरुत।

   तेन रक्तं रागात्, नक्षत्रेण युक्त: काल:, दृष्टं साम, वामदेवाड्ड्यड्ड्यौ, परिवृतो रथ:, शुक्राद्घन्, तत्रोद्धृतममत्रेभ्य:, संस्कृतं भक्षा:, सोमाट्ट्यण्, तस्य समूह:, भिक्षादिभ्योऽण्, इसुसुक्तान्तात् क:, तदधीते तद्वेद, न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्। क्रमादिभ्यो वुन्।

2. अधोलिखितपदानां ससूत्रं सिद्धि: कार्या।

   राग:, काषायम्, पौषम्, वासिष्ठम्, वामदेव्यम्, वास्त्र:, शाराव:, भ्राष्ट्रा:, पाशुपतम्, बार्हस्पत्यम्, शुक्रियम्, सौम्यम्, वायव्यम्, पित्र्यम्, मातुल:, मातामह:, काकम्, भैक्षम्, गार्भिणम्, यौवनम्, ग्रामता, गजता साक्तुकम् अहीन: बन्धुता, सहायता, हास्तिकम्, धैनुकम्, वैयाकरण:, क्रमक:, पदक:, मीमांसक:।

3. रक्ताद्यर्थप्रकरणस्थ-सूत्राणां वार्तिकानाञ्च निम्न प्रारूपानुसारं सारणी निर्मेया।

   | सूत्रम्/वार्तिकम् | सूत्रार्थ:/वार्तिकार्थ: | उदाहरणम् |
   | --- | --- | --- |

4. प्रकरणस्थ-प्रयोगाणां निम्नप्रारूपानुरूपं सारणी कर्त्तव्या।

   | विग्रहवाक्यम् | प्रयोग: |
   | --- | --- |
   | यथा रज्यते अनेन इति | राग: |

## अथ चातुरर्थिकाः

1056. **तदस्मिन्नस्तीति देशे तन्नाम्नि ( 4-2-66 ) ॥विधिसूत्रम् ॥**
उदुम्बराः सन्त्यस्मिन् देशे – औदुम्बरो देशः।

1057. **तेन निवृत्तम् ( 4-2-67 ) ॥विधिसूत्रम् ॥**
कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी।

1058. **तस्य निवासः ( 4-2-68 ) ॥विधिसूत्रम् ॥**
शिबीनां निवासो देशः शैबः।

---

अस्मिन् प्रकरणे चत्वार अर्थाः निर्दिष्टाः। यथा (1) तद् अस्मिन् अस्ति (2) तेन निर्वृत्तम् (3) तस्य निवासः (4) अदूरभवश्च एतेषु अर्थेषु प्रत्ययाः विहिताः, तस्मात् प्रकरणस्य प्रत्ययाः चातुरर्थिका इति कथ्यन्ते। चतुर्णाम् अर्थानां समाहार इति चतुरर्थी, चतुरर्थ्यां भव इत्यर्थे अध्यात्मादित्वाट्ठञ्प्रत्ययः। अथवा चतुर्णां सूत्राणाम् अर्थाः, चतुरर्थाः तत्र. भवाः चातुरर्थिकाः।

1056. **तदस्मिन्निति** – तद् अस्मिन् अस्ति इति (अव्ययपदम्) देशे तन्नाम्नि इतिच्छेदः। तत् नाम यस्य तत् तन्नाम, तस्मिन् = तन्नाम्नि, बहुव्रीहिसमासः। **तद् ( प्रथमान्तम् ) अस्मिन् अस्ति इति सप्तम्यर्थे प्रथमासमर्थाद् अण्-प्रत्ययः स्यात् प्रत्ययान्तेन तन्नाम्नि देशे गम्ये सतीत्यर्थः**। इदं सूत्रं 'तदस्यास्त्यस्मिन्निति मतुप्' इति सूत्रस्य अपवादः।

**रूपसिद्धिः**

**औदुम्बरः** – उदुम्बराः सन्ति अस्मिन् देशे इत्यर्थे उदुम्बर-शब्दात् ''तदस्मिन्नस्तीति देशे तन्नाम्नि'' इति सूत्रेण अणप्रत्यये, अनुबन्धलोपे, उदुम्बर अ इति जाते, ''तद्धितेष्वचामादेः'' इत्यादिवृद्धौ, औदुम्बर अ इति जाते, भत्वादकारलोपे, औदुम्बर् अ इति जाते, प्रातिपदिकत्वात्स्वादिकार्ये 'औदुम्बरः' इति रूपं सिद्धम्। इयं स्थानविशेषस्य सञ्ज्ञा।

1057. **तेनेति** – तेन निवृत्तम् इतिच्छेदः। **तृतीयान्तसमर्थशब्दात् तेन निर्वृत्तम् ( बनाया गया, बसाया गया ) इत्यर्थे अण्-प्रत्यय स्यात् तन्नाम्नि देशे गम्ये सति। यथा कौशाम्बी।**

**रूपसिद्धिः**

**कौशाम्बी** – कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी (कुशाम्बनृपेण निर्वृत्ता नगरी) इत्यर्थे कुशाम्बः शब्दात् ''तेन निर्वृत्तम्'' इति अण्-प्रत्ययेऽनुबन्धलोपे कुशाम्ब अ इति जाते, आदिवृद्धौ भत्वादकारलोपे कौशाम्ब् अ इति जाते, स्त्रीत्वविवक्षायां ''टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः'' इति सूत्रेण अणन्तात् कौशाम्बशब्दात् ङीप् प्रत्ययेऽनुबन्धलोपे, कौशाम्ब ई इति जाते, भत्वादकारलोपे कौशाम्ब् ई इति जाते, स्वादिकार्ये 'कौशाम्बी' इति रूपं सिद्धम्। इत्थमेव सहस्रेण निर्वृत्ता साहस्री परिखा। ('खाई' इति भाषायाम्)।

1058. **तस्य निवास इति** – तस्य निवासः इतिच्छेदः। निवसन्ति अस्मिन् इति निवासः। **तस्य निवास इत्यर्थे षष्ठ्यन्त-समर्थाद् अण्-प्रत्ययः स्यात् तन्नाम्नि देशे गम्ये सतीत्यर्थः। यथा शैबः।**

**रूपसिद्धिः**

**शैबः** – शिबीनां निवासः देश (शैबः) इत्यर्थे शिबिशब्दात् ''तस्य निवासः'' इति अण्-प्रत्ययेऽनुबन्धलोपे, शिबि अ इति जाते, आदिवृद्धौ, शैबि अ इति जाते, ''यचिभम्'' इति भसञ्ज्ञायां, ''यस्येति च'' इति इकारलोपे शैब् अ इति जाते स्वादिकार्ये 'शैब' इति रूपं सिद्धम्।

**1059. अदूरभवश्च ( 4-2-80 ) ॥विधिसूत्रम् ॥**

जनपदे वाच्ये चातुरर्थिकस्य लुप्।

**060. जनपदे लुप् ( 4-2-80 ) ॥विधिसूत्रम् ॥**

जनपदे वाच्ये चातुरर्थिकस्य लुप्।

**1061. लुपि युक्तवद् व्यक्तिवचने ( 1-2-51 ) ॥अतिदेशसूत्रम् ॥**

लुपि सति प्रकृतिवल्लिङ्गवचने स्त। पञ्चालानां निवासो जनपदः पञ्चालाः। कुरवः। अङ्गा। बङ्गाः। कलिङ्गाः।

**1062. वरणादिभ्यश्च ( 5-2-51 ) ॥विधिसूत्रम् ॥**

( वरणादिभ्यश्च चातुरर्थिकस्य लुप् स्यात्) ।अजनपदार्थ आरम्भः।वरणानामदूरभवं नगरं वरणाः।

---

1059. जनपदे वाच्ये चातुरर्थिकस्य लुप्।

1060. **जनपदे लुबिति** - जनपदे लुप् इतिच्छेदः। ग्रामाणां समूहो जनपदः (काशिका)। देशस्य भेदा इमे-ग्रामः, नगरम्, नगरी, जनपदः, परिखा वनमित्यादयः। **जनपदेऽभिधेये तन्नाम्नि देशे इत्यर्थे यश्चातुरर्थिकः प्रत्ययो विधीयते, तस्य लुक् स्यादित्यर्थः।**

1061. **लुपि युक्तवदिति** - लुपि युक्तवद् व्यक्तिवचने इतिच्छेदः।व्यक्तिश्च वचनञ्च व्यक्तिवचने, इतरेतरद्वन्द्वः।सूत्रे 'युक्तः' इति प्रकृतिः 'व्यक्ति' इति च लिङ्गम्। प्रकृतिवद् लिङ्गं = व्यक्तिः, वचनं = संख्या चेति। लुपि सति लिङ्गवचने प्रकृतिवत् स्याताम्।अर्थात् लुपः पूर्वं प्रकृतेः यत् लिङ्गं वचनं च आस्तां, ते एव लिङ्गवचने प्रत्यये लुप्तेऽपि भवतः इति सूत्रार्थः।यथा 'पञ्चालाः' इत्यादयः।

**रूपसिद्धिः**

**पञ्चालाः** - पञ्चालानां निवासो जनपद इत्यर्थे पञ्चालशब्दात् ''तस्य निवासः'' इति अण्-प्रत्यये, ''जनपदे लुप्'' इति अणो लुपि पञ्चाल इति जाते, ''लुपि युक्तवद् व्यक्तिवचने'' इति प्रकृतिवद् बहुवचने जसि पूर्वसवर्णदीर्घे 'पञ्चालाः' इति रूपं सिद्धम्।

**कुरवः** - कुरूणां निवासो जनपद इत्यर्थे कुरुशब्दात् ''तस्य निवास'' इत्यणि, अणोलुपि, प्रकृतिवद्भावे बहुवचने जसि अनुबन्धलोपे कुरु अस् इति जाते, जसिचेति गुणे, अवादेशे कुर् अव् अस् इति जाते, सस्य रुत्वे विसर्गे 'कुरवः' इति रूपं सिद्धम्।

**अङ्गाः** - अङ्गानां निवासो जनपद इत्यर्थे अङ्गशब्दादणि, अणो लुपि, प्रकृतिवद्भावे, बहुवचने जसि पूर्व सवर्णदीर्घे 'अङ्गाः' इति रूपं सिद्धम्।

**कलिङ्गाः** - कलिङ्गानां निवासो जनपद इत्यर्थे कलिङ्गशब्दाद् अणि, अणो लुपि, प्रकृतिवद्भावे, बहुवचने जसि पूर्वसवर्णदीर्घे, 'कलिङ्गाः' इति रूपं सिद्धम्।

1062. **वरणादिभ्यश्चेति** - वरणादिभ्यः च इतिच्छेदः। वरणाशब्द आदिर्येषां ते वरणादयः, तेभ्यः = वरणादिभ्यः। तद्गुण-संविज्ञानबहुव्रीहिसमासः। **वरणादिगणपठितशब्देभ्यः परे चातुरर्थिक प्रत्ययस्य लुप् स्यादित्यर्थः।** वरणादिगणो यथा - वरणा (वरण इति काशिका)। गौदौ। शृङ्गी। शाल्मली। शुण्डी। शयाण्डी। पर्णी। ताम्रपर्णी। आलिङ्ग्यायन। जानपदी (जालपदी)। जम्बू। पुष्करः। चम्पा। पम्पा। वल्गु। उज्जयिनी। गया। मथुरा। तक्षशिला। उरसा (उरशा)। गोमती। वलभी। कटुबदरी। शिरीषाः। काञ्ची। सदाण्वी। वाणिकि। वणिक। आकृतिगणोऽयम् (सूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेनास्य आकृतिगणत्त्वं व्यज्यते इति काशिकाकारः)।

**रूपसिद्धिः**

**वरणाः** - वरणानाम् अदूरभवं नगरमित्यर्थे ''अदूरभवश्च'' इत्यणि, ''वरणादिभ्यश्च'' इत्यणो लुपि, ''लुपि युक्तवद् व्यक्तिवचने'' इति प्रकृतिभावे, बहुवचने जसि 'वरणाः' इति रूपं सिद्धम्।

**1063. कुमुद-नड-वेतसेभ्यो ड्मतुप्( 4-2-86 ) ॥विधिसूत्रम् ॥**

**1064. झयः( 8-2-10 ) ॥विधिसूत्रम् ॥**

झयन्तान्मतोर्मस्य वः। कुमुद्वान्। नड्वान्।

**1065. मादुपधायाश्च मतोर्वोऽयवादिभ्यः( 8-2-9 ) ॥विधिसूत्रम् ॥**

मवर्णावर्णान्ताद् मवर्णावर्णोपधाच्च यवादिवर्जितात् परस्य मतोर्मस्य वः। वेतस्वान्।

---

1063. **कुमुदनडवेतसेभ्य इति**- कुमुदनडवेतसेभ्यः ड्मतुप् इतिच्छेदः। कुमुदाश्च नडाश्च वेतसाश्च कुमुदनडवेतसाः, तेभ्यः, कुमुदनडवेतसेभ्यः। इतरेतरद्वन्द्वः। अयं प्रत्ययः यद्यपि चातुरर्थिकः तथापि मत्वर्थे (तद् अस्मिन् अस्ति इति देशे) अभीष्टः। **कुमुदनड-वेतसेभ्यः ड्मतुप्-प्रत्ययः स्यात् चातुरर्थिक इत्यर्थः।** अत्र डकार उपौ च इतः सन्ति। टिलोपार्थञ्चेह डिद्ग्रहणम्।

1064. **झय इति** - झय् इति प्रत्याहारः। प्रातिपदिकस्य विशेषणाद् इह तदन्तविधिः। **झयन्तात् प्रातिपदिकान् मतोर्मस्य वकारादेशः स्यादित्यर्थः।** आदिश्यमानोऽयं वकारः विधीयमानत्वात् सवर्णानां ग्राहको न भवति, अतः मकारस्य अनुनासिकत्वादपि निरनुनासिक एव वकारादेशः। कुमुद्वान्। नड्वान्।

**रुपसिद्धिः**

**कुमुद्वान्** - कुमुदाः सन्ति अस्मिन् देशे इत्यर्थे कुमुदशब्दात् ''कुमुदनडवेतसेभ्यो ड्मतुप्'' इति ड्मतुप्-प्रत्ययेऽनुबन्धलोपे, कुमुद मत् इति जाते, डित्त्वसामर्थ्यादभस्यापि ''टेः'' इति सूत्रेण टिलोपे कुमुद् मत् इति जाते, ''झयः'' इति सूत्रेण मतोः मस्य वत्वे, कुमुद् वत् इति जाते, प्रातिपदिकसञ्ज्ञायां सुविभक्तौ, कुमुद्वत् स् इति जाते, ''अत्वसन्तस्य चाऽधातोः'' इति उपधादीर्घे कुमुद् वात् स् इति जाते, ''उगिदचां सर्वनामस्थानेऽधातोः'' इति नुमागमेऽनुबन्धलोपे, कुमुद् वा न् त् स् इति जाते, ''हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्'' इति सुलोपे, कुमुद्वान् त् इति जाते, ''संयोगान्तस्य लोपः'' इति तलोपे 'कुमुद्वान्' इति रूपं सिद्धम्।

**नड्वान्** - नडाः सन्ति अस्मिन् देशे इत्यर्थे नडशब्दात् ड्मतुप्प्रत्ययेऽनुबन्धलोपे नड मत् इति जाते, डित्त्वसामर्थ्यादभस्यापि टेर्लोपे, नड् मत् इति जाते, ''झयः'' इति मस्य वत्वे नड्वत् इति जाते, प्रातिपदिकत्वात् सुप्रत्ययेऽनुबन्धलोपे, नड्वत् स् इति जाते, ''अत्वसन्तस्य चाऽधातोः'' इति उपधादीर्घे, नुमागमेऽनुबन्धलोपे, नड्वान् त् स् इति जाते, सुलोपे, संयोगान्त-तलोपे च कृते 'नड्वान्' इति रूपं सिद्धम्।

1065. **मादुपधायाश्चेति** - मात्, उपधायाः, च, मतोः, वः (वकाराद् अकार उच्चारणार्थः), अयवादिभ्यः इतिच्छेदः। म् च अश्च मम्, तस्मात् = मात्, समाहारद्वन्द्वः। मतुप्रत्ययाक्षिप्तप्रातिपदिक-विशेषणत्वात्तदन्त विधिः। एतेन मकारान्ताद् अवर्णान्ताच्च प्रातिपदिकादिति लभ्यते। मात् इत्यावर्तते। एतच्चोपधाविशेषणम्, तेन मकारोपधाद् अवर्णोपधाच्च प्रातिपदिकादित्यपि लभ्यते।

**न यवादिभ्यः** - अयवादिभ्यः, नञ्तत्पुरुषः। यवादिराकृतिगणः। **मवर्णान्ताद् अवर्णान्ताद् मादुपधाद् अवर्णोपधाच्च परतः मतोः मस्य वकारो भवति न तु यवादिभ्यः।** यथा- वेतस्वान्।

**यवादिगणो यथा** - यव। दल्मि। ऊर्मि। भूमि। कृमि। क्रुञ्चा। वशा। द्राक्षा। ध्राक्षा। वृक्षा। वेशा। ध्रजि। ध्वजि। सञ्जि। वजि। व्रजि। शञ्जि। निजि। सिजि। सिञ्जि। हरित्। ककुद्। गरुत्। इक्षु। मधु। द्रुम। मण्ड। धूम। आकृतिगणोऽयम्। अत्र गणे 'धूम' इति शब्दः चिन्त्यः यतोहि न्यायवैशेषिकग्रन्थेषु 'धूमवान्' 'धूमवत्त्वात्' इत्यादिशब्दानां बाहुल्येन प्रयोगः प्राप्यते। काशिकानुसारं 'धूमवान्' 'धूमवत्त्वात्' इत्यत्र वत्वम् अशुद्धम्।

**रुपसिद्धिः**

**वेतस्वान्** - 'वेतसाः सन्ति अस्मिन् देशे' इत्यर्थे वेतसशब्दात् ''कुमुदनडवेतसेभ्यो ड्मतुप्'' इति ड्मतुप्प्रत्ययेऽनुबन्धलोपे, डित्त्वात् टेरकारस्य लोपे, वेतस् मत् इति जाते, ''मादुपधायाश्च मतोर्वोऽयवादिभ्यः'' इति मस्य वत्वे, वेतस्वत् इति जाते, पूर्ववत् स्वादिकार्ये 'वेतस्वान्' इति रूपं सिद्धम्। स्त्रियाम् उगितश्चेति ङीपि 'वेतस्वती' इति रूपम्।

**1066. नड-शादाड्ड्वलच्( 4-2-87 ) ॥विधिसूत्रम् ॥**

नड्वल:।शाद्वल:।

**1067. शिखाया वलच्( 4-2-88 ) ॥विधिसूत्रम् ॥**

शिखावल:।

---

**अन्योदाहरणानि -**

(1) मकारान्तप्रातिपदिकेभ्य: -

किम् + मतुप् = किम् + मत् = किम् + वत् = किंवान्। शम् + मतुप् = शम् + मत् = शम् + वत् = शंवान्।

(2) अवर्णान्तप्रातिपदिकेभ्य: -

गुण + मतुप् = गुण + मत् = गुण + वत् = गुणवान्। वृक्ष + मतुप् = वृक्ष + मत् = वृक्ष + वत् = वृक्षवान्। माला + मतुप् = माला + मत् = माला + वत् = मालावान्। विद्या + मतुप् = विद्या + मत् = विद्या + वत् = विद्यावान्।

(3) मकारोपध - प्रातिपदिकेभ्य: -

शमी + मतुप् = शमी + मत् = शमी + वत् = शमीवान्। लक्ष्मी + मतुप् = लक्ष्मी + मत् = लक्ष्मी + वत् = लक्ष्मीवान्।

(4) अकारोपधप्रातिपदिकेभ्य: -

पयस् + मतुप् = पयस् + मत् = पयस् + वत् = पयस्वान्। यशस् + मतुप् = यशस् + मत् = यशस् + वत् = यशस्वान्। भास् + मतुप् = भास् + मत् = भास् + वत् = भास्वान्।

(5) यवादिभ्य: वत्वं न भवति यथा -

यव + मतुप् = यव + मत् = यवमान्। भूमि + मतुप् = भूमि + मत् = भूमिमान्। गरुत् + मतुप् = गरुत् + मत् = गरुत्मान्। कृमि + मतुप् = कृमि + मत् = कृमिमान्। ऊर्मि + मतुप् = ऊर्मि + मत् = ऊर्मिमान्। ककुद् + मतुप् = ककुद् + मत् = ककुद्मान्।

**1066. नडशादादिति** - नडशादात्, ड्वलच् इतिच्छेद:। नडश्च शादश्च नडशादम्, तस्मात् = नड्शादात्। समाहारद्वन्द्व:। **नडशब्दात् शादशब्दात् च तदस्मिन् अस्तीत्यर्थे ड्वलच्-प्रत्यय: स्यादित्यर्थ:।** प्रत्यये डचौ अनुबन्धौ। डित्करणं टिलोपार्थं चित्कारणञ्च अन्तोदात्तस्वरार्थम्। यथा- नड्वल:। शाद्वल:।

**रूपसिद्धि:**

**नड्वल:** - नडा: सन्ति अस्मिन् देशे इत्यर्थे नडशब्दात् ''नडशादाड्ड्वलच्'' इति ड्वलच्-प्रत्ययेऽनुबन्धलोपे, नड वल इति जाते, डित्त्वसामर्थ्यादभस्यापि ''टे:'' इति सूत्रेण टिलोपे नड्वल इति जाते, विभक्तिकार्ये 'नड्वल:' इति रूपं सिद्धम्।

**शाद्वल:** - शादा: सन्ति अस्मिन् देशे इत्यर्थे ''नडशादाड्ड्वलच्'' इति ड्वलच्-प्रत्ययेऽनुबन्धलोपे, शाद वल इति जाते, डित्त्वसामर्थ्यादभस्यापि ''टे:'' इति टिलोपे शाद्वल इति जाते, विभक्तिकार्ये 'शाद्वल:' इति रूपं सिद्धम्।

**1067. शिखाया इति** - शिखाया:, वलच् इतिच्छेद:। **शिखाशब्दात् तदस्मिन्नस्तीति अर्थे वलच्-प्रत्यय: स्यादित्यर्थ:। यथा शिखावल:।**

**रूपसिद्धि:**

**शिखावल:** - शिखा: सन्ति अस्मिन् देशे इत्यर्थे शिखाशब्दात् ''शिखाया वलच्'' इति वलच्-प्रत्ययेऽनुबन्धलोपे, शिखा वल इति जाते, विभक्तिकार्ये 'शिखावल:' इति रूपं सिद्धम्।

## ॥ अभ्यासः ॥

**वस्तुनिष्ठप्रश्नाः –**

1. अण् प्रत्ययो विधीयते –
   (क) तेन निर्वृत्तम् इति सूत्रेण (ख) तस्य निवास इति सूत्रेण
   (ग) अदूरभवश्च इति सूत्रेण (घ) सर्वैः
2. तदस्मिन् अस्तीत्यर्थे तन्नाम्नि देशे गम्ये सति प्रत्ययो भवति –
   (क) घञ् (ख) अण्
   (ग) तुमुन् (घ) णमुल्
3. डित्प्रत्ययोऽस्ति –
   (क) मतुप् (ख) ड्मतुप्
   (ग) ड्वलच् (घ) खगौ द्वावपि
4. शिखाशब्दात् प्रत्ययो भवति –
   (क) ड्वलच् (ख) वल
   (ग) वलच् (घ) कखगाः त्रयोऽपि

**अतिलघूत्तरात्मकप्रश्नाः –**

1. 'उदुम्बराः सन्ति अस्मिन् देशे' इत्यर्थे रूपं सिध्यति –
2. 'शैबः' इत्यस्य विग्रहवाक्यं लिखन्तु।
3. जनपदे वाच्ये चातुरर्थिकरस्य लुप् केन भवति?
4. 'कुरवः' इत्यत्र प्रकृतिभावः केन?
5. 'कुमुद्वान्' इत्यत्र केन कः प्रत्ययः?
6. 'वेतस्वान्' इत्यत्र वत्वं केन?
7. नडशब्दात् केन कः प्रत्ययः?
8. वलच् प्रत्ययान्तं पदं किम्?

**लघूत्तरात्मकप्रश्नाः –**

1. के चातुरर्थिकाः? लिखन्तु।
2. 'तदस्मिन्' इति सूत्रं प्रपूर्य सोदाहरणमर्थं लिखन्तु।
3. 'शाद्वलः' इत्यस्य ससूत्रं सिद्धिः कार्या।
4. मादुपधायाश्च मतोर्वोऽयवादिभ्यः इति सूत्रस्य सोदाहरणं व्याख्या कार्या।
5. 'नडशादाड्ड्वलच्' इति सूत्रस्य उदाहरणसहितम् अर्थं लिखन्तु।

**निबन्धात्मकप्रश्नाः –**

1. अधोलिखितानां प्रयोगाणां सिद्धिः कार्या।
   कौशाम्बी, शैब, वैदिशम्, पञ्चालाः, वरणाः, नड्वान्, वेतस्वान्, शाद्वलः, शिखावलः।
2. प्रकरणस्थसूत्राणां निम्नप्रारूपानुसारं सारणी निर्मेया।
   सूत्रम् सूत्रार्थः उदाहरणम्
3. प्रकरणस्थप्रयोगाणां सविग्रहं सारणी कर्त्तव्या।
   विग्रहवाक्यम् प्रयोगः

## अथ शैषिकाः

**1068. शेषे ( 4-2-91 ) ॥अधिकारसूत्रं विधिसूत्रं च ॥**

अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः।

चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। औपनिषदः पुरुषः। दृषदिपिष्टा दार्षदाः सक्तवः। चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्षः।'तस्य विकारः' इत्यतः प्राक् शेषाधिकारः।

---

**1068. शेष इति** - 'शेषे' इत्यस्य अधिकारे ये प्रत्ययाः विहितास्ते शैषिकाः कथ्यन्ते। इतःपरं ये प्रत्ययाः वक्ष्यन्ते, ते शेषेऽर्थे ज्ञेयाः। शेषोऽर्थः क इति जिज्ञासायामुच्यते-अपत्यादि-चतुरर्थ्यन्तादिति। अपत्यार्थतः चातुरर्थिकान्तं यावदुक्ताः प्रत्यया अपत्यादिचतुरर्थ्यन्ताः प्रत्ययास्तेभ्य अन्योऽर्थः = इतरोऽर्थो व्याकरणशास्त्रे 'शेष' इति कथ्यते। तस्य विकार इत्यतः प्राक् शेषाधिकारः।

**रूपसिद्धिः**

**चाक्षुषम् ( रूपम् )** - चक्षुषा गृह्यते इत्यर्थे चक्षुष्शब्दात् ''शेषे'' इत्यण् प्रत्ययेऽनुबन्धलोपे, चक्षुष् अ इति जाते, ''तद्धितेष्वचामादेः'' इत्यादिवृद्धौ, स्वादिकार्ये (सौ सोरमि पूर्वरूपे) चाक्षुषमिति रूपं सिद्धम्।

**श्रावणः ( शब्दः )** - श्रवणेन गृह्यते इत्यर्थे श्रवणशब्दात् ''शेषे'' इत्यणि, अनुबन्धलोपे, श्रवण अ इति जाते, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'श्रावणः' इति रूपं सिद्धम्।

**औपनिषदः ( पुरुषः )** - उपनिषद्भिः प्रतिपादितः पुरुषः इत्यर्थे 'शेषे' इत्यण् प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, स्वादिकार्ये ''औपनिषदः'' इति रूपं सिद्धम्।

**चातुरम् ( शकटम् )** - चतुर्भिरुह्यते इत्यर्थे (अश्वैः पुरुषैर्वा) अण् प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, स्वादिकार्ये 'चातुरम्' इति सिद्धम्।

**चातुर्दशम् ( रक्षः )** - चतुर्दश्यां दृश्यते चतुर्दशीशब्दात् ''शेषे'' इत्यण्-प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादीकारलोपे, नपुंसके स्वादिकार्ये 'चातुर्दशम्' इति रूपं सिद्धम्।

शैषिकार्थानां कानिचन अन्योदाहरणानि यथा -

1. अश्वैरुह्यते- आश्वो रथः (काशिका)।
2. स्मृतिभिरुपदिष्टः - स्मार्तो धर्मः।
3. ब्रह्म जानाति - ब्राह्मणः ['अन्' इति प्रकृतिभावः]।
4. वितरणेन (दानेन) लङ्घ्यते - वैतरणी नदी।
5. चक्षुषोर्गोचरः - चाक्षुषः विषयः।
6. श्रुतौ विहितम् - श्रौतं कर्म।

**1069. राष्ट्राऽवारपाराद् घखौ ( 4-2-92 ) ॥ विधिसूत्रम् ॥**

आभ्यां क्रमाद् घ-खौ स्त: शेषे। राष्ट्रे जातादि: – राष्ट्रिय:। अवारपारीण:।

(वा.) **अवारपाराद् विगृहीतादपि विपरीताच्चेति वक्तव्यम्।**

अवारीण:। पारीण:। पारावारीण:।

**1070. ग्रामाद् य-खञौ ( 4-2-93 ) ॥ विधिसूत्रम् ॥**

ग्राम्य:। ग्रामीण:।

---

**1069. राष्ट्राऽवारपारादिति** – राष्ट्राऽवारपारात्, घखौ इतिच्छेद:। राष्ट्रञ्च अवारपारञ्च राष्ट्राऽवारपारम्, तस्मात् = राष्ट्रावारपारात्। समाहारद्वन्द्व:। घश्च खश्च घखौ। इतरेतरद्वन्द्व:। **राष्ट्रशब्दात् अवारपारशब्दाच्च शेषेऽर्थे जात:, भव: इत्याद्यर्थे यथासंख्यपरिभाषया क्रमश: घप्रत्यय: खप्रत्यय: च स्याताम्।** यथा राष्ट्रिय:। अवारं च पारं च अवारपारम्, अवारपारे जात: भव: वा अवारपारीण:।

**रूपसिद्धि:**

**राष्ट्रिय:** – राष्ट्रे जात: भवो वेत्यर्थे ''राष्ट्राऽवारपाराद् घखौ'' इति घप्रत्यये, ''आयनेयीनीयिय: फढखछघां प्रत्ययादीनाम्'' इति सूत्रेण घस्य स्थाने इयादेशे राष्ट्र इय् अ इति जाते, भत्वादकारालोपे, राष्ट्रिय इति जाते, विभक्तिकार्ये 'राष्ट्रिय:' इति रूपं सिद्धम्।

**अवारपारीण:** – अवारपारे जात: भवो वेत्यर्थे ''राष्ट्राऽवारपाराद् घखौ'' इति सूत्रेण खप्रत्यये, ''आयनेयीनीयिय: फढखछघां प्रत्ययादीनाम्'' इति खस्य ईनादेशे अवारपार ईन् अ इति जाते, ''यचिभम्'' इति भसञ्ज्ञायां, ''यस्येति च'' इति अकारलोपे अवारपार् ईन् अ इति जाते, ''अट्कुप्वाङ्नुम्व्यवायेऽपि'' इति नस्य णत्वे, स्वादिकार्ये 'अवारपारीण:' इति रूपं सिद्धम्।

(वा.) **अवारपारादिति** – अवारपारात्, विगृहीतात्, अपि, विपरीतात्, च, इति, वक्तव्यम् इतिच्छेद:। **अवारपारशब्दाद् पृथग्भूताद् विपरीताच्च खप्रत्यय: स्यादिति वक्तव्यम् इत्यर्थ:।** यथा– विगृहीतात् = अवारीण:, पारीण:। विपरीतात् = पारावारीण:।

**रूपसिद्धि:**

**अवारीण:** – अवारे भवो जातो वेत्यर्थे अवारशब्दात् ''अवारपाराद् विगृहीतादपि विपरीताच्चेति वक्तव्यम्'' इति वार्तिकसहयोगेन ''राष्ट्राऽवारपाराद्घखौ'' इति ख प्रत्यये, खस्य ईनादेशे भत्वादकारलोपे णत्वे, स्वादिकार्ये 'अवारीण:' इति रूपं सिद्धम्।

**पारीण:** – पारे जातो भवो वेत्यर्थे पारशब्दात् खप्रत्यये, ''आयनेयीनीयिय: फढखछघां प्रत्ययादीनाम्'' इति खस्य ईनादेशे पार ईन् अ इति जाते, भत्वादकारलोपे, नस्य णत्वे, स्वादिकार्ये 'पारीण:' इति रूपं सिद्धम्।

**पारावारीण:** – पारावारे भवो जातो वा इत्यर्थे पारावारशब्दात् ''अवारपाराद् विगृहीतादपि विपरीताच्चेति वक्तव्यम्'' इति वार्तिकसहयोगेन ''राष्ट्राऽवारपाराद् घखौ'' इति खप्रत्यये, खस्य ईनादेशे, पारावार ईन् अ इति जाते, भत्वादकारलोपे, नस्य णत्वे, स्वादिकार्ये 'पारावारीण:' इति रूपं सिद्धम्।

**1070. ग्रामादिति** – ग्रामात्, यखञौ इतिच्छेद:। यश्च खञ् च य-खञौ, इतरेतरद्वन्द्व:। खञि ञकारोऽनुबन्ध:। **सप्तम्यन्तसमर्थाद् ग्राम-शब्दाद् जातो भवो वेत्यादिविशेषेऽर्थे यप्रत्यय: खञ्प्रत्ययश्च भवत इत्यर्थ:।** यथा– ग्राम्य:। ग्रामीण:।

**रूपसिद्धि:**

**ग्राम्य:** – ग्रामे जातो भवो वेत्यर्थे ''ग्रामाद्यखञौ'' इति सूत्रेण यप्रत्यये, भत्वादकारलोपे स्वादिकार्ये 'ग्राम्य:' इति रूपं सिद्धम्।

**ग्रामीण:** – ग्रामे जातो भवो वेत्यर्थे ''ग्रामाद्यखञौ'' इति खञ्प्रत्ययेऽनुबन्धलोपे ग्राम ख इति जाते, आदिवृद्धौ, खस्य ईनादेशे ग्राम ईन् अ इति जाते, भत्वादकारलोपे ग्राम् ईन् अ इति जाते, ''अट्कुप्वाङ्नुम्व्यवायेऽपि'' इति नस्य णत्वे, स्वादिकार्ये 'ग्रामीण:' इति रूपं सिद्धम्।

**071. नद्यादिभ्यो ढक् ( 4-2-96 ) ॥विधिसूत्रम् ॥**

नादेयम्।माहेयम्।वाराणसेयम्।

**1072. दक्षिणा-पश्चात्पुरसस्त्यक् ( 4-2-97 ) ॥विधिसूत्रम् ॥**

दाक्षिणात्य:।पाश्चात्त्य:।पौरस्त्य:।

---

**1071. नद्यादिभ्यइति** - नद्यादिभ्य:, ढक् इतिच्छेद:। नदी (नदीशब्द:) आदिर्येषान्ते नद्यादय:, तेभ्य: = नद्यादिभ्य:, तद्गुणसंविज्ञानबहुव्रीहि:। **नद्यादिगणपठितसुबन्तप्रातिपदिकेभ्य: शैषिकार्थेषु (जाताद्यर्थेषु) ढक्प्रत्यय: स्यादित्यर्थ:।** यथा- नादेयम्।माहेयम्।वाराणसेयम्।नद्यादिगणो यथा- नदी।मही।वाराणसी।श्रावस्ती।कौशाम्बी। वनकौशाम्बी (नवकौशाम्बी इति काशिका)। काशपरी (काशफरी इति काशिका)। खादिरी। पूर्वनगरी। पूर्। वन। गिरि। पाठा (पाठा इति काशिकायाम्)। माया (मावा इति काशिका)। शाल्वा (साल्वा इति काशिका)। दार्वा। दाल्वा।सेतकी (वासेनकी इति काशिका)।वडवाया वृषे (गणसूत्रम्)।शरावती (शब्द कौस्तुभे एव नान्यत्र)।

**रूपसिद्धि:**

**नादेयम्** - नद्यां जातं भवं वेत्यर्थे नदीशब्दात् ''नद्यादिभ्यो ढक्'' इति सूत्रेण ढक्-प्रत्ययेऽनुबन्धलोपे, नदी ढ इति जाते ''आयनेयीनीयिय: फढखछघां प्रत्ययादीनाम्'' इति सूत्रेण ढस्य एयादेशे नदी एय् अ इति जाते, ''किति च'' इति आदिवृद्धौ नादी एय् अ इति जाते, भत्वाद् ''यस्येति च'' इति ईकारलोपे नाद् एय् अ इति जाते, नपुंसकलिङ्गे स्वादिकार्ये 'नादेयम्' इति रूपं सिद्धम्।

**माहेयम्** - मह्यां जातं भवं वेत्यर्थे महीशब्दात् ''नद्यादिभ्यो ढक्'' इति सूत्रेण ढक्प्रत्ययेऽनुबन्धलोपे, ढस्य एयादेशे मही एय् अ इति जाते, आदिवृद्धौ माही एय् अ इति जाते, भत्वादीकारालोपे माहेय इति जाते, स्वादिकार्ये 'माहेयम्' इति रूपं सिद्धम्।

**वाराणसेयम्** - वाराणस्यां जातं भवं वेत्यर्थे वाराणसीशब्दात् ''नद्यादिभ्यो ढक्'' इति ढक्प्रत्ययेऽनुबन्धलोपे, वाराणसी ढ इति जाते, ढस्य एयादेशे, ''किति च'' इति आकारस्य आकारे आदिवृद्धौ, भत्वादीकारालोपे वाराणस् एय् अ इति जाते, स्वादिकार्ये 'वाराणसेयम्' इति रूपं सिद्धम्।

अन्योदाहरणानि यथा -

वने जाता भवा वा वानेया: पादपा:।

कौशाम्ब्यां जातो भवो वा कौशाम्बेयो जन:।

पुरि जातो भवो वा पौरेय:।अथवा पूर्निवासोऽस्य पौरेय:।

गिरौ जातं भवं वा गैरेयम् ('गेरू' इति भाषायाम्)

**1072. दक्षिणेति** - दक्षिणा-पश्चात्-पुरस:, त्यक् इतिच्छेद:। दक्षिणा च पश्चात् च पुरश्च दक्षिणापश्चात्पुर:, तस्मात् = दक्षिणापश्चात्पुरस:, समाहारद्वन्द्व:। पश्चात् पुरस् इति अव्ययाभ्यां साहचर्यात् 'दक्षिणा' इति आजन्त-अव्ययमेव गृह्यते टाबन्तं न। **दक्षिणा पश्चात् पुरस् इत्येभ्य: शब्देभ्यो जाताद्यर्थे त्यक्-प्रत्यय: स्यादित्यर्थ:।** यथा- दाक्षिणात्य:।पाश्चात्त्य:।पौरस्त्य:।

**रूपसिद्धि:**

**दाक्षिणात्य:** - दक्षिणा जातो भवो वेत्यर्थे 'दक्षिणा' इत्यव्ययात् (दक्षिणदिशि जातो भवो वा) ''दक्षिणापश्चात् पुरसस्त्यक्'' इति त्यक्-प्रत्ययेऽनुबन्धलोपे दक्षिणा त्य इति जाते, ''किति च'' इत्यादिवृद्धौ दाक्षिणा त्य इति जाते, स्वादिकार्ये 'दाक्षिणात्य:' इति रूपं सिद्धम्।

**पाश्चात्त्य:** - पश्चात् जातो भवो वा इत्यर्थे 'पश्चात्' इत्यव्ययात् त्यक्-प्रत्ययेऽनुबन्धलोपे, कित्त्वादादिवृद्धौ, स्वादिकार्ये 'पाश्चात्य:' इति रूपं सिद्धम्।

**पौरस्त्य:** - पुरो जातो भवो वेत्यर्थे पुरस्शब्दात् त्यक्-प्रत्ययेऽनुबन्धलोपे, पुरस् त्य इति जाते, कित्त्वादादिवृद्धौ, स्वादिकार्ये 'पौरस्त्य:' इति रूपं सिद्धम्।

**1073. द्यु-प्रागपागुदक् प्रतीचो यत्( 4-2-100 ) ॥विधिसूत्रम् ॥**

दिव्यम्। प्राच्यम्। अवाच्यम्। उदीच्यम्। प्रतीच्यम्।

---

1073. **द्युप्रागिति** - द्यु-प्राग्-अपाग्-उदक्-प्रतीचः, यत् इतिच्छेदः। द्यौश्च प्राङ् च अपाङ् च उदङ् च प्रत्यङ् च द्युप्रागपागुदक्प्रत्यक्, तस्मात् = द्युप्रागपागुदक्प्रतीचः, समाहारद्वन्द्वः। **दिव्, प्राञ्च् अपाञ्च्, उदञ्च्, प्रत्यञ्च् एभ्यः सप्तम्यन्त-समर्थ-प्रातिपदिकेभ्यः जाताद्यर्थे यत्प्रत्ययः स्यात्।** यथा- दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्।

**रूपसिद्धिः**

**दिव्यम्** - दिवि (स्वर्गे) जातं भवं वेत्यर्थे दिव्शब्दात् ''द्युप्रागपागुदक् प्रतीचो यत्'' इति सूत्रेण यत्-प्रत्ययेऽनुबन्धलोपे, दिव् य इति जाते, विभक्तिकार्ये 'दिव्यम्' इति रूपं सिद्धम्।

**प्राच्यम्** - प्राचि (पूर्वदिशायाम्) भवं वेत्यर्थे 'प्र' पूर्वकाद अञ्च् धातोः ''ऋत्विग्दधृक्.'' इत्यादिना क्विनि, सर्वापहारलोपे, प्र अञ्च् इत्यस्माद् ''द्युप्रागपागुदक् प्रतीचो यत्'' इति यत्-प्रत्ययेऽनुबन्धलोपे प्र अञ्च् य इति जाते, ''अनिदितां हल उपधायाः क्ङिति'' इति नलोपे प्र अच् य इति जाते, ''अचः'' इति अकारलोपे प्र च् य इति जाते, ''चौ'' इति पूर्वस्य अणः दीर्घे प्राच् य इति जाते, स्वादिकार्ये 'प्राच्यम्' इति रूपं सिद्धम्।

**अपाच्यम्** - अपाचि (दक्षिणदिशायाम्) जातं भवं वेत्यर्थे 'अप' पूर्वकाद् अञ्च् धातोः क्विनि सर्वापहारलोपे अप अञ्च् इति जाते, ''द्युप्रागपागुदक् प्रतीचो यत्'' इति सूत्रेण यत्-प्रत्ययेऽनुबन्धलोपे, अप अञ्च् य इति जाते, नलोपे अप अच् य इति जाते, ''अचः'' इति अकारलोपे अप च् य इति जाते, ''चौ'' इति पूर्वस्य अणः दीर्घे अपाच्य इति जाते, स्वादिकार्ये 'अपाच्यम्' इति रूपं सिद्धम्।

**उदीच्यम्** - उदीचि (उत्तरदिशायाम्) जातं भवं वेत्यर्थे 'उद्' उपसर्गपूर्वकाद् अञ्च् धातोः क्विनि सर्वापहारलोपे उद् अञ्च् इति जाते, यत्प्रत्ययेऽनुबन्धलोपे, उद् अञ्च् इति जाते, यत्-प्रत्ययेऽनुबन्धलोपे, उद् अञ्च् य इति जाते, नलोपे, उद् अच् य इति जाते, ''उद ईत्'' इति सूत्रेण अच इत्यकारस्य ईत्वे उद् ईच् य इति जाते, स्वादिकार्ये 'उदीच्यम्' इति रूपं सिद्धम्।

**प्रतीच्यम्** - प्रतीचि (पश्चिमदिशायाम्) जातं भवं वेत्यर्थे 'प्रति' पूर्वकाद् अञ्च्-धातो क्विनि सर्वापहारलोपे, यत्-प्रत्ययेऽनुबन्धलोपे, प्रति अञ्च् य इति जाते, नलोपे ''अचः'' इत्यकारलोपे, प्रति च् य इति जाते, ''चौ'' इति सूत्रेण पूर्वस्य अणः (इकारस्य) दीर्घे प्रतीच् य इति जाते, स्वादिकार्ये 'प्रतीच्यम्' इति रूपं सिद्धम्।

**1074. अव्ययात् त्यप् ( 4-2-103 ) ॥ विधिसूत्रम् ॥**

(वा.) **अमेह-क्व-तसि-त्रेभ्य एव।**

अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः।

(वा.) **त्यब्नेर्ध्रुव इति वक्तव्यम्।**

नित्यः।

**1075. वृद्धिर्यस्याचामादिस्तद् वृद्धम् ( 1-1-72 ) ॥ सञ्ज्ञासूत्रम् ॥**

यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद् वृद्धसञ्ज्ञं स्यात्।

**1076. त्यदादीनि च ( 1-1-73 ) ॥ सञ्ज्ञासूत्रम् ॥**

वृद्धसञ्ज्ञानि स्युः।

---

**1074. अव्ययादिति** - अव्ययात्, त्यप् इतिच्छेदः। **अव्ययेभ्यो जाताद्यर्थे त्यप्-प्रत्ययः स्यादित्यर्थः।**

(वा.) **अमेहेति** - अमा-इह-क्व-तसि-त्रेभ्यः, एव इतिच्छेदः। अमा इह क्व तसि त्र इत्येतेभ्य एव अव्ययेभ्यः शेषे त्यप्-प्रत्ययः स्यादित्यर्थः। यथा अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः।

**रूपसिद्धिः**

**अमात्यः** - अमा = समीपे सह वा भवः इत्यर्थे (अमा भवः - अमात्यः मन्त्री) 'अमा' इत्यव्ययात् ''अमेहक्वतसित्रेभ्य एव'' इति वार्तिक-सहयोगेन ''अव्ययात्त्यप्'' इति सूत्रेण त्यप्-प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'अमात्यः' इति रूपं सिद्धम्।

**इहत्यः** - इह (अत्र) भव इह जातो वा इत्यर्थे 'इह' इति अव्ययात् त्यप्-प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'इहत्यः' इति रूपं सिद्धम्।

**क्वत्यः** - क्व (कुत्र) भवो जातो वेत्यर्थे 'क्व' इत्यव्ययात् त्यप्-प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'क्वत्यः' इति रूपं सिद्धम्।

**ततस्त्यः** - तत आगत इत्यर्थे तसिप्रत्ययान्त-ततस् इति अव्ययात् त्यप्-प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'ततस्त्यः' इति रूपं सिद्धम्।

तत्रत्यः - तत्र भव इत्यर्थे त्रप्रत्ययान्त- 'तत्र' इत्यव्ययात्, त्यप्-प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'तत्रत्यः' इति रूपं सिद्धम्।

(वा.) **त्यब्नेर्ध्रुव इति**- 'नि' इत्यव्ययात् ध्रुवेऽर्थे त्यप् स्यादित्यर्थः।

**रूपसिद्धिः**

**नित्यः** - नि = नियतम् = सर्वकालेषु भवो नित्यः। 'नि' इत्यव्ययात् ''त्यब्नेर्ध्रुव इति वक्तव्यम्'' इति वार्तिकेन त्यप्-प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये, 'नित्यः' इति रूपं सिद्धम्।

**1075. वृद्धिर्यस्याचामिति** - वृद्धिः, यस्य अचाम्, आदिः, तद्, वृद्धम् इतिच्छेदः। 'वृद्धिरादैच्' इत्यनुसारम् आत् (आ) ऐच् (ऐ, औ) वर्णाः वृद्धिसञ्ज्ञकाः। **यस्य समुदायस्य अचां मध्ये आदिरच् वृद्धिसञ्ज्ञकः आ ऐ औ वा अस्ति, तस्य समुदायस्य वृद्धसञ्ज्ञा भवतीत्याशयः।**

**1076. त्यदादीनि चेति - त्यदादिगणपठितशब्दाः वृद्धसञ्ज्ञकाः स्युरित्यर्थः।** सर्वादिगणान्तर्गतः त्यदादिगणः। त्यदादिगणो यथा - त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्। त्यद् आदिर्येषां तानि त्यदादीनि, तद्गुणसंविज्ञान-बहुव्रीहिः।

**1077. वृद्धाच्छः ( 4-2-113 ) ॥विधिसूत्रम् ॥**

शालीयः। मालीयः। तदीयः।

(वा.) **वा नामधेयस्य वृद्धसञ्ज्ञा वक्तव्या।** देवदत्तीयः। दैवदत्तः।

**1078. गहादिभ्यश्च ( 4-2-137 ) ॥विधिसूत्रम् ॥**

गहीयः।

---

**1077. वृद्धाच्छ इति** - वृद्धात्, छः इतिच्छेदः। **वृद्धसञ्ज्ञक-सुबन्त-प्रातिपदिकेभ्यः शैषिकश्छप्रत्ययः स्यादित्यर्थः।** यथा- शालीयः। मालीयः। तदीयः।

**रूपसिद्धिः**

**शालीयः** - शालायां जातो भवो वेत्यर्थे शालाशब्दाद् ''वृद्धिर्यस्याचामादिस्तद् वृद्धम्'' इति शालाशब्दस्य वृद्धसञ्ज्ञायां, ''वृद्धाच्छः'' इति छप्रत्यये, शाला छ इति जाते, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति छस्य ईयादेशे, शाला ईय् अ इति जाते, भत्वादाकारलोपे शालीय इति जाते, स्वादिकार्ये 'शालीयः' इति रूपं सिद्धम्।

**मालीयः** - मालायां भव मालाया अयं वेत्यर्थे, ''वृद्धिर्यस्याचामादिस्तद्वृद्धम्'' इति ''वृद्धसञ्ज्ञायां'', ''वृद्धाच्छः'' इति छप्रत्यये, 'छ्' इत्यस्य ईयादेशे माला ईय् अ इति जाते, भत्वादाकारलोपे, स्वादिकार्ये, 'मालीयः' इति रूपं सिद्धम्।

**तदीयः** - तस्माज्जातः तस्यायमित्यर्थे तद्शब्दात् ''त्यदादीनि च'' इति तदः वृद्धसञ्ज्ञायां ''वृद्धाच्छः'' इति छप्रत्यये, छ् इत्यस्य ईयादेशे तद् ईय् अ इति जाते, स्वादिकार्ये 'तदीयः' इति रूपं सिद्धम्।

(वा.) **वा नामधेयस्येति** - कस्यचिद् नाम्नः वृद्धसञ्ज्ञा विकल्पेन वाच्या इत्यर्थः। यथा देवदत्तीयः। दैवदत्तः।

**रूपसिद्धिः**

**देवदत्तीयः, दैवदत्तः** - देवदत्तस्य अयमित्यर्थे देवदत्तशब्दात् ''वा नामधेयस्य वृद्धसञ्ज्ञा वक्तव्या'' इति वार्तिकेन विकल्पेन वृद्धसञ्ज्ञायां, ''वृद्धाच्छः'' इति सूत्रेण छप्रत्यये, छस्य ईयादेशे, भत्वादकारलोपे 'देवदत्तीयः' इति रूपं सिद्धम्। वृद्धसञ्ज्ञाया अभावपक्षे ''तस्येदम्'' इत्यण्-प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये, 'दैवदत्तः' इति रूपं सिद्धम्।

**इत्थमेव** - यज्ञदत्तस्यायं यज्ञदत्तीयो याज्ञदत्तो वा छात्रः। इत्यादयः।

**1078. गहादिभ्य इति** - गहादिभ्यः, च इतिच्छेदः। गहः (गहशब्दः) आदिर्येषां ते गहादयः, तेभ्य = गहादिभ्यः, तद्गुणसंविज्ञानबहुव्रीहिसमासः। **गहादिगणपठित-सुबन्त-प्रातिपदिकेभ्य शैषिकार्थेषु ( भवाद्यर्थे ) छप्रत्यय स्यादित्यर्थः।** यथा गहीयः। गहादिगणो यथा- गह। अन्तःस्थ। सम। विषम। मध्य मध्यमं चाण् चरणे (गणसूत्रम्)। उत्तम। अङ्ग। वङ्ग। मगध। पूर्वपक्ष। अपरपक्ष। अधमशाख। उत्तमशाख। एकशाख। समानशाख। समानग्राम। एकग्राम। एकवृक्ष। एकपलाश। इष्वग्र। इष्वनीक (इष्वनी इति काशिका)। अवस्यन्दनः (अवस्कन्द, काशिका)। कामप्रस्थ। खाडायन। काठेरणि। लावेरणि। सौमित्रि। शैशिरि। आसुत्। देवशर्मन् (दैवशर्मि) श्रौति। आहिंसि। आमित्रि। व्याडि। बैजि (बैदजि इति काशिका)। शौङ्गि। आध्यश्वि। आनृशंसि। अग्निशर्मन् (आग्शिर्मि)। भौजि। वाराटकी। (आराटकि काशिका)। वाल्मीकि (वाल्मिकि)। क्षेमवृद्धिन् (क्षैमबुद्धि)। आश्वत्थि। औद्ग्राहमानि (औद्गाहमानि)। ऐक। विन्दवि। दन्ताग्र। हंस। तन्त्वग्र (तत्त्वग्र)। उत्तर। अन्तर (अनन्तर)। मुखपार्श्वतसोर्लोपः (गणसूत्रम्)। जनपरयोः कुक् च (गणसूत्रम्)। देवस्य च (गणसूत्रम्)। स्वस्य च (गणसूत्रम्)। वेणुकादिभ्यश्छण् (गणसूत्रम्)। आकृतिगणः। अस्य गणस्य अनेके पाठभेदाः प्राप्यन्ते।

**रूपसिद्धिः**

**गहीयः** - गहे (गुहायां) भवो गहीयः। गहशब्दात् ''गहादिभ्यश्च'' इति छप्रत्यये, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति छ् स्थाने ईय् इत्यादेशे गह ईय् अ इति जाते, भत्वादकारलोपे गहीय इति जाते, स्वादिकार्ये 'गहीयः' इति रूपं सिद्धम्। इत्थमेव अन्तःस्थेषु भव अन्तः स्थीयः। समे भवः समादागतो वा समीयः। विषमे भवो विषमाद् आगतो वा विषमीयः। अङ्गेषु भवम् अङ्गीयम्। बङ्गेषु भवं बङ्गीयम् इत्यादयः।

**1079. युष्मदस्मदोरन्यतरस्यां खञ् च ( 4-3-1 ) ॥विधिसूत्रम् ॥**

चाच्छः। पक्षेऽण्। युवयोर्युष्माकं वाऽयं युष्मदीयः। अस्मदीयः।

**1080. तस्मिन्नणि च युष्माकास्माकौ ( 4-3-2 ) ॥विधिसूत्रम्॥**

युष्मदस्मदोरेतावादेशौ स्त खञि अणि च परे। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः।

---

1079. **युष्मदस्मदोरिति** - युष्मदस्मदोः (पञ्चम्यर्थे षष्ठी), अन्यतरस्याम्, खञ्, च इत्यव्ययम् इतिच्छेदः। चकारेण 'गर्त्तोत्तरपदाच्छः' इति छः प्रत्ययः समुच्चीयते। **युष्मदस्मद्भ्यां जाताद्यर्थेषु शैषिकः खञ्-प्रत्ययः स्यात्, चकारात् छप्रत्ययश्च विकल्पेन भवति। पक्षे सामान्यप्राप्तः अण्-प्रत्ययोऽपि स्यात् इत्यर्थः।**

**रूपसिद्धिः**

**युष्मदीयः** - युवयोर्युष्माकं वाऽयम् इत्यर्थे ''युष्मदस्मदोरन्यतरस्यां खञ् च'' इति सूत्रेण छप्रत्यये, छस्य ईयादेशे, युष्मद् ईय् अ इति जाते, स्वादिकार्ये 'युष्मदीयः' इति रूपं सिद्धम्।

**अस्मदीयः** - आवयोरस्माकं वेत्यर्थेऽस्मद्शब्दात् ''युष्मदस्मदोरन्यतरस्यां खञ् च'' इति छप्रत्यये, ईयादेशे, स्वादिकार्ये 'अस्मदीयः' इति रूपं सिद्धम्।

1080. **तस्मिन्नणि चेति** - तस्मिन्, अणि, च इत्यव्ययम्, युष्माकास्माकौ इतिच्छेदः। युष्माकश्च अस्माकश्च युष्माकास्माकौ, इतरेतरद्वन्द्वः। **युष्मदस्मदोः स्थाने क्रमशः युष्माकास्माकौ आदेशौ भवतः खञि अणि च परे।** यथा युष्मदस्मदोः खञि-यौष्माकीणः, आस्माकीनः। अणि-यौष्माकः, आस्माकः।

**रूपसिद्धिः**

**यौष्माकीणः** - युवयोर्युष्माकं वा अयम् इत्यर्थे युष्मद् शब्दात् ''युष्मदस्मदोरन्यतरस्यां खञ् च'' इति सूत्रेण खञ्-प्रत्ययेऽनुबन्धलोपे, ''तस्मिन्नणि च युष्माकास्माकौ'' इति सूत्रेण 'युष्मद्' इत्यस्य स्थाने 'युष्माक' इति सर्वादेशे युष्माक ख इति जाते, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति सूत्रेण ख्-स्थाने ईन्-आदेशे, युष्माक ईन् अ इति जाते, आदिवृद्धौ, भत्वादकारलोपे, ''अट्कुप्वाङ्नुम्व्यवायेऽपि'' इति नस्य णत्वे, स्वादिकार्ये ''यौष्माकीणः'' इति रूपं सिद्धम्।

**आस्माकीनः** - आवयोरस्माकं वाऽयम् इत्यर्थे अस्मद्शब्दात् ''युष्मदस्मदोरन्यतरस्यां खञ् च'' इति खञ्-प्रत्यये, अनुबन्धलोपे, अस्मद् ख इति जाते, ''तस्मिन्नणि च युष्माकास्माकौ'' इति सूत्रेण अस्मदः स्थाने 'अस्माक' इति सर्वादेशे अस्माक ख इति जाते, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति सूत्रेण ख्-स्थाने ईन्-आदेशे, अस्माद् ईन् अ इति जाते, आदिवृद्धौ, भत्वादकारलोपे 'आस्माकीनः' इति रूपं सिद्धम्।

**यौष्माकः** - युवयोर्युष्माकं वाऽयम् इत्यर्थे युष्मद्शब्दात् ''शेषे'' इति सूत्रेण अण्-प्रत्ययेऽनुबन्धलोपे, युष्मद् अ इति जाते, ''तस्मिन्नणि च युष्माकास्माकौ'' इति युष्मदः युष्माकादेशे, युष्माक अ इति जाते, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'यौष्माकः' इति रूपं सिद्धम्।

**आस्माकः** - आवयोरस्माकं वाऽयम् इत्यर्थे अस्मद्शब्दात् अण्-प्रत्ययेऽनुबन्धलोपे, अस्मद् अ इति जाते, अस्मद्शब्दस्य अस्माकादेशे अस्माक अ इति जाते, आदिवृद्धौ, भत्वादकारलोपे आस्माक् अ इति जाते, स्वादिकार्ये 'आस्माकः' इति रूपं सिद्धम्।

1081. **तवकममकावेकवचने ( 4-3-3 ) ॥ विधिसूत्रम् ॥** एकार्थवाचिनोर्युष्मदस्मादोस्तवकममकौ स्तः खञि अणि च। तावकीनः। मामकीनः। तावकः। मामकः। छे तु–

1082. **प्रत्ययोत्तरपदयोश्च ( 7-3-95 ) ॥ विधिसूत्रम् ॥** मपर्यन्तयोरेकार्थवाचिनोर्युष्मदस्मदोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः। त्वदीयः। मदीयः। त्वत्पुत्रः। मत्पुत्रः।

1083. **मध्यान्मः ( 4-3-5 ) ॥ विधिसूत्रम् ॥** मध्यमः।

---

1081. **तवकममकाविति** – तवक-ममकौ, एकवचने, इतिच्छेदः। एकस्य वचनम् (उक्तिः), एकवचनम्, तस्मिन् = एकवचने। षष्ठीतत्पुरुषः। तवकश्च ममकश्च तवकममकौ। इतरेतरद्वन्द्वः। **एकार्थवाचकयोः युष्मदस्मच्छब्दयोः क्रमशः तवक, ममक इत्यादेशौ भवतः खञि परे अणि परे च।** यथा तावकीनः, तावकः इत्यादि।

**रूपसिद्धिः**

**तावकः** – तवायमित्यर्थे युष्मद्शब्दात् ''युष्मदस्मदोरन्यतरस्यां खञ्च'' इति सूत्रेण अण्-प्रत्ययेऽनुबन्धलोपे, युष्मद् अ इति जाते, ''तवकममकावेकवचने'' इति सूत्रेण युष्मद् इत्यस्य स्थाने 'तवक' इत्यादेशे तवक अ इति जाते, णित्वादादिवृद्धौ, भत्वादकारलोपे तावक् अ इति जाते, स्वादिकार्ये 'तावकः' इति रूपं सिद्धम्।

**तावकीनः** – तवायमित्यर्थे युष्मद्शब्दात् खञ्-प्रत्ययेऽनुबन्धलोपे, तवकादेशे, तवक ख इति जाते, खस्य ईनादेशे, तवक ईन् अ इति जाते, ''तद्धितेष्वचामादेः'' इति अकारस्य आकारे आदिवृद्धौ तावक ईन इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'तावकीनः' इति रूपं सिद्धम्।

**मामकीनः** – ममायमित्यर्थे अस्मद्शब्दात् खञ्-प्रत्ययेऽनुबन्धलोपे, ममकादेशे, ममक ख इति जाते, खस्य ईनादेशे, ममक ईन् अ इति जाते, आदिवृद्धौ, मामक ईन् अ इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'मामकीनः' इति रूपं सिद्धम्।

**मामकः** – ममायमित्यर्थे अस्मद्शब्दात् अण्-प्रत्ययेऽनुबन्धलोपे, अस्मद् अ इति जाते अस्मदः ममकादेशे, ममक अ इति जाते, णित्वादादिवृद्धौ, भत्वादकारलोपे मामक् अ इति जाते, स्वादिकार्ये 'मामकः' इति रूपं सिद्धम्।

1082. **प्रत्योत्तरपदयोरिति** – प्रत्ययोत्तरपदयोः, च (इत्यव्ययम्) इतिच्छेदः। प्रत्ययश्च उत्तरपदं च प्रत्ययोत्तरपदे, तयोः = प्रत्ययोत्तरपदयोः, इतरेतरद्वन्द्वः। एकस्य वचनम् एकवचनम्, तस्मिन् = एकवचने, षष्ठीतत्पुरुषः त्वश्च मश्च त्वमौ, इतरेतरद्वन्द्वः। **एकार्थवाचिनोर्युष्मदस्मदोः मपर्यन्तयोः त्वमौ इत्यादेशौ भवतः प्रत्यये उत्तरपदे च परतः।** यथा– त्वदीयः। मदीयः। त्वत्पुत्रः। मत्पुत्रः।

**रूपसिद्धिः**

**त्वदीयः** – तवायमित्यर्थे युष्मद्शब्दात् ''युष्मदस्मदोरन्यतरस्यां खञ् च'' इति छप्रत्यये, युष्मद् छ इति जाते, ''प्रत्ययोत्तरपदयोश्च'' इति युष्म् इत्यस्य स्थाने 'त्व' इत्यादेशे त्व अद् छ इति जाते, ''अतो गुणे'' इति पररूपे त्वद् छ इति जाते, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति सूत्रेण छस्य ईयादेशे त्वद् ईय् अ इति जाते, स्वादिकार्ये 'त्वदीयः' इति रूपं सिद्धम्।

**मदीयः** – ममायमित्यर्थे छप्रत्यये, अस्म्-स्थाने 'म' इत्यादेशे म अद् छ इति जाते, पररूपे, मद् छ इति जाते, छस्य ईयादेशे मद् ईय् अ इति जाते, स्वादिकार्ये 'मदीयः' इति रूपं सिद्धम्।

**त्वत्पुत्रः** – 'तव पुत्रः' इति विग्रहे ''षष्ठी'' इति षष्ठीतत्पुरुषसमासे, सुब्लुकि युष्मद् पुत्र इति जाते, ''प्रत्ययोत्तरपदयोश्च'' इति युष्म्-स्थाने 'त्व' इत्यादेशे त्व अद् पुत्र इति जाते, ''अतो गुणे'' इति पररूपे, ''खरि च'' इति दस्य तकारे चर्त्वे, स्वादिकार्ये 'त्वत्पुत्रः' इति रूपं सिद्धम्।

**मत्पुत्रः** – 'मम पुत्रः' इति विग्रहे, षष्ठीतत्पुरुषसमासे, सुब्लुकि, अस्मद् पुत्र इति जाते, अस्म्-स्थाने 'म' इत्यादेशे, पररूपे मद् पुत्र इति जाते, दस्य तत्वे चर्त्वे मत्पुत्र इति जाते, स्वादिकार्ये 'मत्पुत्रः' इति रूपं सिद्धम्।

1083. **मध्यान्म इति** – मध्यात्, मः इतिच्छेदः। **'मध्ये भवः' इत्याद्यर्थे मध्यशब्दाच्चैषिको मप्रत्ययो भवतीत्यर्थः।** यथा मध्यमः।

**रूपसिद्धिः**

**मध्यमः**– मध्ये भवो मध्यमः। मध्यशब्दात् ''मध्यान्मः'' इति सूत्रेण मप्रत्यये, स्वादिकार्ये 'मध्यमः' इति रूपं सिद्धम्।

**1084. कालाट्ठञ् ( 4-3-8 ) ॥विधिसूत्रम्॥** कालवाचिभ्यष्ठञ् स्यात्। कालिकम्। मासिकम्। सांवत्सरिकम्। (वा.) **अव्ययानां भमात्रे टिलोपः।** सायम्प्रातिकः। पौनः पुनिकः।

**1084. कालाट्ठञिति** – कालात्, ठञ् इतिच्छेदः। इह 'काल' इत्यनेन कालशब्द एव केवलं न गृह्यते अपि तु तत्पर्यायाः मासादयोऽपि कालविशेषवाचकाः गृह्यन्ते। **कालवाचकेभ्यो भवाद्यर्थेषु शैषिकष्ठञ् स्यादित्यर्थः।** यथा कालिकम् इत्यादयः।

**रूपसिद्धिः**

**कालिकम्** – काले भवमित्यर्थे कालशब्दात् ''कालाट्ठञ्'' इति ठञ्-प्रत्ययेऽनुबन्धलोपे, काल ठ इति जाते, ''ठस्येकः'' इति ठस्य 'इक' इत्यादेशे, काल इक इति जाते, ''पर्जन्यवल्लक्षणप्रवृत्तिः'' इति न्यायेन आकारस्यापि आदिवृद्धौ आकारे, भत्वादकारलोपे, स्वादिकार्ये 'कालिकम्' इति रूपं सिद्धम्।

**मासिकम्** – मासे भवमित्यर्थे मासशब्दात् ठञ्-प्रत्ययेऽनुबन्धलोपे मास ठ इति जाते, ठस्य इक इत्यादेशे, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'मासिकम्' इति रूपं सिद्धम्।

**सांवत्सरिकम्** – संवत्सरे भवं जातं वेत्यर्थे संवत्सरशब्दात् ठञ्-प्रत्ययेऽनुबन्धलोपे, ठस्य इकादेशे, संवत्सर इक इति जाते, आदिवृद्धौ, सांवत्सर इक इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'सांवत्सरिकम्' इति रूपं सिद्धम्।

**अन्योदाहरणानि –**

1. समये भवो जातो वा सामयिको विचारः। सामयिकी चर्चा।
2. दिवसे भवं जातं वा दैवसिकं कर्म।
3. दिने भवं जातं वा दैनिकं कृत्यम्।
4. अर्धमासे भवं जातं वा अर्धमासिकं वेतनम्।
5. शर्वर्यां भवं जातं वा शार्वरिकं तमः।
6. उषसि भवं जातं वा औषसिकं विहरणम्।
7. अह्नि भवं जातं वा आह्निकं कृत्यम्।
8. प्रस्थाने (प्रस्थानकाले) भवं प्रास्थानिकं स्वस्त्ययनम्।
9. पूर्वस्मिन् (पूर्वजन्मनि) भवा पौर्विकी जातिः।
10. पर्वणि भवः पार्विकः शर्वरीश्वरः।
11. वर्षे भवा वार्षिकी परीक्षा।
12. पक्षे भवा पाक्षिकी परीक्षा।
13. सप्ताहे भवा साप्ताहिकी परीक्षा।

(वा.) **अव्ययानामिति** अव्ययानाम्, भमात्रे, टिलोपः इतिच्छेदः। **अव्ययवाचिपदानां टेर्लोपः भसञ्ज्ञायां सर्वत्र स्यादिति।** यथा– सायं च प्रातः च सायं प्रातः, द्वन्द्वसमासः। सायं प्रातर्भवः सायंप्रातिकः। पुनः पुनर्भवः पौनः पुनिकः।

**रूपसिद्धिः**

**सायम्प्रातिकः** – 'सायं प्रातर्भवः' इत्यर्थे सायंप्रातर् इति कालवाचकाव्ययात् ''कालाट्ठञ्'' इति ठञ्-प्रत्ययेऽनुबन्धलोपे सायंप्रातर् ठ इति जाते, ''ठस्येकः'' इति ठस्य इकादेशे सायं प्रातर् इक इति जाते, आदिवृद्धौ, सायं प्रातर् इक इति जाते, ''यचि भम्'' इति भसञ्ज्ञायाम् ''अव्ययानां भमात्रे टिलोपः'' इति वार्तिकेन टि (अर्)- लोपे, सायं प्रातिक इति जाते, स्वादिकार्ये 'सायम्प्रातिकः' इति रूपं सिद्धम्।

**पौनः पुनिकः** – 'पुनः पुनर्भवः' इत्यर्थे पुनः पुनर् इति अव्ययात् ठञ्-प्रत्ययेऽनुबन्धलोपे पुनः पुनर् ठ इति जाते, ठस्य इकादेशे, पुनः पुनर् इक इति जाते, आदिवृद्धौ, पौनः पुनर् इक इति जाते, भत्वाद् ''अव्ययानां भमात्रे टिलोपः'' इति टिलोपे पौनः पुन् इक इति जाते, स्वादिकार्ये 'पौनः पुनिकः' इति रूपं सिद्धम्।

अस्य वार्तिकस्य अन्योदाहरणान्यथा –

1. 'उपरिष्टाद्भवः' औपरिष्टः। 'तत्र भवः' इत्यण्।
2. पुरस्ताद् भवः पौरस्तः। 'तत्र भवः' इत्यण्।
3. परस्ताद् भवः पारस्तः। 'तत्र भवः' इत्यण्।
4. उत्तराहि भवः औत्तराहः। 'तत्र भवः' इत्यण्।

**1085. प्रावृष एण्यः ( 4-3-17 ) ॥विधिसूत्रम् ॥**

प्रावृषेण्यः।

**1086. सायं-चिरं-प्राह्णे-प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ( 4-3-23 ) ॥विधिसूत्रम्॥**

सायमित्यादिभ्यश्चतुर्भ्यः, अव्ययेभ्यश्च कालवाचिभ्यष्ट्यु-ट्युलौ स्तस्तयोस्तुट् च। सायन्तनम्। चिरन्तनम्। 'प्राह्णे' 'प्रगे' अनयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्। प्रगेतनम्। ( अव्ययेभ्यः) दोषातनम्।

---

1085. **प्रावृष एण्य इति** - प्रावृषः, एण्यः इतिच्छेदः। कालवाचिनः 'प्रावृष्' इति सुबन्तप्रातिपदिकात् भवाद्यर्थे एण्यप्रत्ययः स्यादित्यर्थः। यथा- प्रावृषेण्यः।

**रूपसिद्धिः**

**प्रावृषेण्यः** - 'प्रावृषि भवः' इत्यर्थे वर्षर्तुवाचकात् 'प्रावृष्' इति स्त्रीलिङ्गशब्दात् ''प्रावृष एण्यः'' इति सूत्रेण 'एण्य' इति प्रत्यये, प्रावृष् एण्य इति जाते, स्वादिकार्ये 'प्रावृषेण्यः' इति रूपं सिद्धम्।

1086. **सायञ्चिरमिति** - सायं चिरं प्राह्णेप्रगेऽव्ययेभ्यः, ट्युट्युलौ, तुट्, च इतिच्छेदः। सायं च चिरं च प्राह्णे च प्रगे च अव्ययानि च सायंचिरंप्राह्णेप्रगेऽव्ययानि, तेभ्यः = सायं चिरं प्राह्णेप्रगेऽव्ययेभ्यः, इतरेतरद्वन्द्वः। ट्युश्च ट्युल् च ट्युट्युलौ, इतरेतरद्वन्द्वः। **कालवाचिभ्यः सायम्, चिरम्, प्राह्णे, प्रगे एभ्य अव्ययेभ्यश्च ट्युट्युलौ प्रत्ययौ स्तः, तयोस्तुडागमश्च स्यादित्यर्थः।** सायम् चिरम् इत्यनयो मान्तत्वं निपात्यते। प्राह्णः सोढोऽस्येति विग्रहे प्राह्णशब्दः, प्रगच्छतीति प्रगः, अनयो एदन्तत्वं निपात्यते। स्वरभेदार्थं ट्युल्-प्रत्यये लित्-करणं ज्ञेयम्।

**रूपसिद्धिः**

**सायन्तनम्** - सायं (सायंकाले) भवमित्यर्थे सप्तम्यन्त-घञन्त-सायशब्दात् ''सायंचिरं प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च'' इति सूत्रेण ट्यु अथवा ट्युल्-प्रत्ययेऽनुबन्धलोपे, ''युवोरनाकौ'' इति 'यु' स्थाने अनादेशे, तुडागमे, सायशब्दस्य मान्तत्वनिपातनात् ''स्वादिष्वसर्वनामस्थाने'' इति सूत्रेण पदसञ्ज्ञायां, मस्यानुस्वारे, परसवर्णे सायन्तन इति जाते, स्वादिकार्ये 'सायन्तनम्' इति रूपं सिद्धम्।

**चिरन्तनम्** - चिरे (प्राचीनकाले) भवमित्यर्थे चिर शब्दात् ट्यौ ट्युलि वा प्रत्ययेऽनुबन्धलोपे, ''युवोरनाकौ'' इति युस्थाने अनादेशे, तुडागमे, चिरशब्दस्य मान्तत्वनिपातनात्, पदसञ्ज्ञायां, मस्यानुस्वारे परसवर्णे च कृते चिरन्तन इति जाते, स्वादिकार्ये 'चिरन्तनम्' इति रूपं सिद्धम्।

**प्राह्णेतनम्** - प्राह्णे (पूर्वाह्णे) जातं वेत्यर्थे प्राह्णशब्दात् ट्युप्रत्यये ट्युल्प्रत्यये वा कृतेऽनुबन्धलोपे, यु स्थाने अनादेशे, तुडागमे, प्राह्णशब्दस्य एदन्तनिपातनात् स्वादिकार्ये 'प्राह्णेतनम्' इति रूपं सिद्धम्।

**प्रगेतनम्**- प्रगे (प्रातः काले) भवं जातं वेत्यर्थे प्रगशब्दात् ट्युप्रत्यये ट्युल्प्रत्यये वा कृते, यु स्थाने अनादेशे, तुडागमे, प्रगशब्दस्य एदन्तनिपातनात्, स्वादिकार्ये 'प्रगेतनम्' इति रूपं सिद्धम्।

**दोषातनम्** - दोषा (रात्रौ) भवमित्यर्थे रात्रिवाचकात् 'दोषा' इत्यव्ययात् ट्युप्रत्यये ट्युल्प्रत्यये वा कृतेऽनुबन्धलोपे दोषा यु इति जाते, यु स्थाने अनादेशे दोषा अन इति जाते, तुडागमेऽनुबन्धलोपे दोषा त् अन इति जाते, स्वादिकार्ये 'दोषातनम्' इति रूपं सिद्धम्।

**अन्योदाहरणान्यथा** -

1. दिवा भवं दिवातनम्।  2. श्वो भवं श्वस्तनम्।
3. ह्यो भवं ह्यस्तनम्।  4. अद्य भवम् अद्यतनम्।
5. पुरा भवं पुरातनम्।  6. सदा भवं सदातनम्। सदा भवः सदातनः।
7. सना (सदा) भवं सनातनम्। सना भवः सनातनः।
8. अधुना भवः-अधुनातनः।  9. इदानीं भवः- इदानीन्तनः।
10. प्राग् (पूर्वं) भवः प्राक्तनः।  11. प्रातर्भवः प्रातस्तनः।
12. ऐषमो भवम् (अस्मिन् वर्षे भवम्) ऐषमस्तनम्।

**1087. तत्र जातः ( 4-3-25 ) ॥विधिसूत्रम् ॥**

सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः। स्रुघ्ने जातः स्रौघ्नः। उत्से जात औत्सः। राष्ट्रे जातो राष्ट्रियः। अवारपारे जातः - अवारपारीणः। इत्यादि।

**1088. प्रावृषष्ठप् ( 4-3-26 ) ॥विधिसूत्रम्॥**

एण्यापवादः। प्रावृषिकः।

**1089. प्रायभवः ( 4-3-39 ) ॥विधिसूत्रम्॥**

तत्रेत्येव। स्रुघ्ने प्रायेण = बाहुल्येन भवति-स्रौघ्नः।

**1090. सम्भूते ( 4-3-41 ) ॥विधिसूत्रम्॥**

स्रुघ्ने सम्भवति-स्रौघ्नः।

---

1087. **तत्र जात इति** - तत्र (तत्रेति सप्तम्यन्तानुकरणम्), जातः, इति पदच्छेदः। **सप्तम्यन्तसमर्थशब्दाद् जाताद्यर्थे अणादयः घादयश्च प्रत्ययाः भवन्तीत्यर्थः।** यथा स्रौघ्नः। औत्सः। राष्ट्रियः। अवारपारीणः इत्यादि। अणिति सामान्य प्रत्ययः, विशिष्टस्थानेषु अपवादैः बाध्यतेऽयम्।

**स्रौघ्नः** - 'स्रुघ्ने जातः' इत्यर्थे ''तत्र जातः'' इति सूत्रेण अण्-प्रत्ययेऽनुबन्धलोपे, स्रुघ्न अ इति जाते, आदिवृद्धौ, स्रौघ्न अ इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'स्रौघ्नः' इति रूपं सिद्धम्।

**औत्सः** - 'उत्से (निर्झरे) जातः' इत्यर्थे (मण्डूकादयः) ''तत्र जातः'' इति सूत्रेण अणं प्रबाध्य ''उत्सादिभ्योऽञ्'' इति अञ्प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, विशेष्यानुसारं विभक्तिकार्ये 'औत्सः' इति रूपं सिद्धम्।

**राष्ट्रियः** - 'राष्ट्रे जातः' इत्यर्थे अणं प्रबाध्य घप्रत्यये, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति सूत्रेण घ् स्थाने इय् इत्यादेशे, भत्वादकारलोपे, विशेष्यानुसारं स्वादिकार्ये 'राष्ट्रियः' इति रूपं सिद्धम्।

**अवारपारीणः** - 'अवारपारे जातः' इत्यर्थे अणं प्रबाध्य ''राष्ट्रावारपाराद् घखौ'' इति खप्रत्यये, खस्य ईनादेशे, भत्वादकारलोपे, नस्य णत्वे, विशेष्यानुसारं स्वादिकार्ये 'अवारपारीणः' इति रूपं सिद्धम्।

1088. **प्रावृषष्ठविति** - प्रावृषः, ठप् इतिच्छेदः। **सप्तम्यन्तात् प्रावृष्शब्दात् जाताद्यर्थे ठप्-प्रत्ययः स्यादित्यर्थः।** प्रावृष एण्य इत्यस्यापवादः। यथा प्रावृषिकः।

**रूपसिद्धिः**

**प्रावृषिकः** - प्रावृषि जातः इत्यर्थे ''प्रावृषष्ठप्'' इति सूत्रेण ठप्-प्रत्ययेऽनुबन्धलोपे, प्रावृष् ठ इति जाते, ''ठस्येकः'' इति ठस्य इकादेशे, स्वादिकार्ये 'प्रावृषिकः' इति रूपं सिद्धम्।

1089. **प्रायभव इति** - प्रायेण (बाहुल्येन) भवतीति प्रायभवः, 'कर्तृकरणे कृता बहुलम्' इति 'तृतीयातत्पुरुषः' इति हरदत्तः। सप्तम्यन्तात् समर्थप्रातिपदिकात् 'प्रायभवः' इत्यर्थे अण्-प्रत्ययः स्यादित्यर्थः। अणिति सामान्येन भवति। पूर्वोक्त-घादयश्च अपवादत्वेन यथास्थानं प्रवृत्ताः भविष्यन्त्येव। यथा स्रौघ्नः।

**रूपसिद्धिः**

**स्रौघ्नः** - स्रुघ्ने प्रायेण (बाहुल्येन) भवतीत्यर्थे स्रुघ्नशब्दात् ''प्रायभवः'' इत्यणि, अनुबन्धलोपे स्रुघ्न अ इति जाते, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'स्रौघ्नः' इति रूपं सिद्धम्। मथुरायां प्रायभवो 'माथुरः' इत्यादि।

1090. **सम्भूत इतिः** - सप्तम्यन्तात् समर्थप्रातिपदिकात् 'सम्भूते' इत्यर्थे अणादयो घादयश्च प्रत्ययाः भवन्तीत्यर्थः। अणिति सामान्येन भवति, विशिष्टस्थानेषु पूर्वोक्त-अपवादप्रत्यया एव प्रवर्तन्ते। यथा स्रौघ्नः।

**रूपसिद्धिः**

**स्रौघ्नः** - स्रुघ्ने सम्भवतीति अर्थे स्रुघ्नशब्दात् ''सम्भूते'' इति अण्-प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'स्रौघ्नः' इति रूपं सिद्धम्।

**1091. कोशाड्ढञ्( 4-3-42 ) ॥विधिसूत्रम्॥**
कौशेयं वस्त्रम्।

**1092. तत्र भवः( 4-3-53 ) ॥विधिसूत्रम्॥**
स्रुघ्ने भवः स्रौघ्नः। औत्सः। राष्ट्रियः।

**1093. दिगादिभ्यो यत्( 4-3-54 ) ॥विधिसूत्रम्॥**
दिश्यम्। वर्ग्यम्।

---

1091. **कोशादिति** - कोशात्, ढञ् इतिच्छेदः। **सप्तम्यन्तात् 'कोश' इति प्रातिपदिकात् सम्भूतेऽर्थे ढञ्-प्रत्ययः स्यादित्यर्थः।** ढञिति ञकारानुबन्धः आदिवृद्ध्यर्थः।

**रूपसिद्धिः**

**कौशेयम्** - कोशे सम्भवति इत्यर्थे कोशशब्दात् ''कोशाड्ढञ्'' इति ढञ्-प्रत्ययेऽनुबन्धलोपे, कोश ढ इति जाते, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति ढस्य एयादेशे, कोश, एय् अ इति जाते, आदिवृद्धौ, कौश एय इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'कौशेयम्' इति रूपं सिद्धम्।

1092. **तत्र भव इति** - तत्र, भवः, इतिच्छेदः। भवतीति भवः, पचादेराकृतिगणत्वादच्प्रत्ययः। **सप्तम्यन्त-समर्थ-प्रातिपदिकात् 'भव' इत्यर्थे अण्-प्रत्ययः स्यादित्यर्थः।** अण् इति सामान्यप्रत्ययः, यथासम्भवम् अपवादप्रत्ययैः बाध्यतेऽयं प्रत्ययः।

**रूपसिद्धिः**

**स्रौघ्नः** - स्रुघ्ने भव इत्यर्थे स्रुघ्नशब्दात् ''तत्र भवः'' इति अण्-प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'स्रौघ्नः' इति रूपं सिद्धम्।

**औत्सः** - उत्से भव इत्यर्थे अणं प्रबाध्य ''उत्सादिभ्योऽञ्'' इति अञ्-प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारालोपे, स्वादिकार्ये 'औत्सः' इति रूपं सिद्धम्।

**राष्ट्रियः** - राष्ट्रे भव इत्यर्थे अणं प्रबाध्य घप्रत्यये, इयादेशे, भत्वादकारलोपे, स्वादिकार्ये 'राष्ट्रियः' इति रूपं सिद्धम्।

1093. **दिगादिभ्य इति** - दिगादिभ्यः, यत्, इतिच्छेदः। दिक् (दिश्शब्दः) आदिर्येषान्ते दिगादयः, तेभ्यः = दिगादिभ्यः। तद्गुणसंविज्ञानबहुव्रीहिसमासः। **सप्तम्यन्तसमर्थेभ्यः दिगादिगणपठितशब्देभ्यो भवार्थे यत्प्रत्ययः स्यादित्यर्थः।** सूत्रमिदं सामान्यप्राप्त-अणः छस्य चापवादः। दिगादिगणो यथा- दिश्। वर्ग। पूग। गण। पक्ष। धाय्य (धाय्या काशिकायाम्)। मित्र। मेधा। अन्तर। पथिन्। रहस्। अलीक। उखा। साक्षिन्। देश। आदि। अन्त। मुख। जघन। मेघ। यूथ। उदकात्संज्ञायाम् (गणसूत्रम्)। न्याय। वंश। वेश (विश काशिकायाम्)। काल। आकाश। अनुवंश। अप्।

**रूपसिद्धिः**

**दिश्यम्** - दिशि भवमित्यर्थे दिश्शब्दात् ''दिगादिभ्यो यत्'' इति सूत्रेण यत्-प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'दिश्यम्' इति रूपं सिद्धम्।

**वर्ग्यम्** - वर्गे भवमित्यर्थे वर्गशब्दात् ''दिगादिभ्यो यत्'' इति यत्-प्रत्ययेऽनुबन्धलोपे, भत्वादकारलोपे, स्वादिकार्ये 'वर्ग्यम्' इति रूपं सिद्धम्।

अस्य अन्योदाहरणानि यथा -

| | | | | | |
|---|---|---|---|---|---|
| (1) आदौ भवः | - | आद्यः। | (2) अन्ते भवः | - | अन्त्यः। |
| (3) वंशे भवः | - | वंश्यः। | (4) यूथे भवः | - | यूथ्यः। |
| (5) पक्षे भवः | - | पक्ष्यः। | (6) गणे भवः | - | गण्यः। |
| (7) अन्तरे भवः | - | अन्तर्यः। | (8) रहसि भवम् | - | रहस्यम्। |
| (9) वने भवः | - | वन्यः। | (10) आकाशे भवः | - | आकाश्यः शब्दः। |

**094. शरीरावयवाच्च ( 4-3-55 ) ॥विधिसूत्रम्॥**

दन्त्यम्। कण्ठ्यम्।

(वा.) अध्यात्मादेष्ठञिष्यते। अध्यात्मं भवम् आध्यात्मिकम्।

---

**1094. शरीरावयवादिति** – शरीरावयवात्, च, इतिच्छेदः। शरीरस्य अवयवः शरीरावयवः, तस्मात् = शरीरावयवात्। षष्ठीतत्पुरुषसमासः। **सप्तमीसमर्थेभ्यः शरीरावयवेभ्यो भवार्थे यत् स्यात्।** अणोऽपवादः। यथा – दन्त्यम्। कण्ठ्यम्।

**रूपसिद्धिः**

**दन्त्यम्** – दन्तेषु भवं दन्त्यम्। दन्तशब्दात् ''शरीरावयवाच्च'' इति सूत्रेण यत्-प्रत्ययेऽनुबन्धलोपे, दन्त य इति जाते, ''यचिभम्'' इति भसञ्ज्ञायां, ''यस्येति च'' इति सूत्रेण भसञ्ज्ञकस्य अकारस्य लोपे, दन्त्य इति जाते, स्वादिकार्ये 'दन्त्यम्' इति रूपं सिद्धम्।

**कण्ठ्यम्** – कण्ठे भवं कण्ठ्यम्। कण्ठशब्दात् ''शरीरावयवाच्च'' इति यत्-प्रत्ययेऽनुबन्धलोपे, भत्वादकारलोपे, स्वादिकार्ये, 'कण्ठ्यम्' इति रूपं सिद्धम्।

(वा.) **अध्यात्मादेरिति** – अध्यात्मादेः, ठञ्, इष्यते इतिच्छेदः। अध्यात्मशब्द आदिर्यस्य सोऽध्यात्मादिः, तस्मात् = अध्यात्मादेः। तद्गुणसंविज्ञानबहुव्रीहिसमासः। **अध्यात्मादिगणपठितशब्देभ्योऽव्ययीभावेभ्य तत्र भवश्चेत्यर्थे ठञ्-स्यादित्यर्थः।** अध्यात्मादिगणे भाष्यकारेण त्रयः शब्दाः गणिताः। यथा-अध्यात्म, अधिदेव, अधिभूत। परन्तु एतान् त्रीन् शब्दान् निदर्शनार्थं मत्वा विद्वद्भिः अध्यात्मादयः आकृतिगणत्वेनाङ्गीकृताः। यत्र भवार्थे ठञ्-प्रत्ययस्य प्रयोगः स्यात् परन्तु तस्य विधायकं सूत्रं वचनं वा न स्यात्तदा सः शब्द अध्यात्मादेरन्तर्गतः बोध्यः।

**रूपसिद्धिः**

**आध्यात्मिकम्** – आत्मनि इति अध्यात्मम् (अव्ययीभावसमासः)। अध्यात्मम् (अध्यात्मे वा) भवम् इत्यर्थे अध्यात्मशब्दात् ''अध्यात्मादेष्ठञिष्यते'' इति वार्तिकेन ठञ्-प्रत्ययेऽनुबन्धलोपे, ठस्य इकादेशे, अध्यात्म इक इति जाते, ञित्वादादिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'आध्यात्मिकम्' इति रूपं सिद्धम्।

अध्यात्मादीनामन्योदाहरणानि यथा –

(1) अमुत्र भवम् आमुत्रिकम् (तत्र अर्थात् पारलौकिकम्)।

(2) इह भवम् ऐहिकम् (अत्र अर्थात् लौकिकम्)।

(3) शेषे भवाः शैषिकाः प्रत्ययाः।

(4) त्रिषु वर्णेषु भवः त्रैवर्णिको धर्मः।

(5) चतुर्षु अर्थेषु भवाः चातुरर्थिकाः प्रत्ययाः।

(6) स्वभावे भवः स्वाभाविको गुणः।

(7) स्वार्थे भवाः स्वार्थिकाः प्रत्ययाः।

(8) क्वचिद् भवं क्वाचित्कम् (इसुसुक्तान्तात्कः)।

(9) कदाचिद् भवं कादाचित्कम् (इसुसुक्तान्तात्कः)।

(10) ऊर्ध्वदेहे भवम् और्ध्वदेहिकं कर्म।

(11) समाने भवः सामानिकः।

(12) समानग्रामे भवः सामानग्रामिकः।

(13) समानदेशे भवः सामानदेशिकः।

**1095. अनुशतिकादीनां च ( 7-3-20 ) ॥विधिसूत्रम्॥**

एषामुभयपदवृद्धिर्ञिति णिति किति च। आधिदैविकम्। आधिभौतिकम्। ऐहलौकिकम्। पारलौकिकम्। आकृतिगणोऽयम्।

**1096. जिह्वामूलाङ्गुलेश्छः ( 4-3-62 ) ॥विधिसूत्रम्॥**

जिह्वामूलीयम्। अङ्गुलीयम्।

---

**1095. अनुशतिकादीनामिति** - अनुशतिकादीनाम्, च, इतिच्छेदः। अनुशतिकः (अनुशतिकशब्दः) आदिर्येषान्ते = अनुशतिकादयः, तेषाम् = अनुशतिकादीनाम्, तद्गुणसंविज्ञानबहुव्रीहिसमासः। आदिवृद्धिप्रकरणे उत्तरपदस्य पूर्वपदस्य चेत्यधिकारे एतत्सूत्रम्। अत उक्तं **यदनुशतिकादिगणपठित-शब्देषूभयपदादिवृद्धिः स्याद् ञिति णिति किति च परे इत्याशयः।**

**अनुशतिकादिगणो यथा** - अनुशतिक। अनुहोड। अनुसंवरण (अनुसंचरण)। अनुसंवत्सर। अङ्गारवेणु। असिहत्य (अस्यहत्य, अस्यहेति)। वध्योग। पुष्करसद्। अनुहरत्। कुरुकत। कुरुपञ्चाल। उदकशुद्ध। इहलोक। परलोक। सर्वलोक। सर्वपुरुष। सर्वभूमि। प्रयोग। परस्त्री। राजपुरुषात् ष्यञि (गणसूत्रम्)। सूत्रनड। आकृतिगणः (तेन-अभिगम, अधिभूत, अधिदेव, चतुर्विद्या, सुखशयन, शतकुम्भ, परदर इत्यादयो गृह्यन्ते)।

**रूपसिद्धिः**

**आधिदैविकम्** - देवेषु इत्यधिदेवम्, विभक्त्यर्थेऽव्ययीभावसमासः। अधिदेवम् अधिदेवे वा भवम् इत्यर्थे अधिदेवशब्दात् ''अध्यात्मादेष्ठञिष्यते'' इति वार्तिकेन ठञ्-प्रत्ययेऽनुबन्धलोपे, ठस्येकादेशे, ''अनुशतिकादीनां च'' इति सूत्रेण उभयपदयोः आदिवृद्धौ, भत्वाद् अकारलोपे, स्वादिकार्ये 'आधिदैविकम्' इति रूपं सिद्धम्।

**आधिभौतिकम्** - भूतेषु इत्यधिभूतम्। विभक्त्यर्थेऽव्ययीभावसमासः। अधिभूतम् (अधिभूते वा) भवम् इत्यर्थे अधिभूतशब्दात् ठञ्-प्रत्ययेऽनुबन्धलोपे, ठस्य इकादेशे, अधिभूत इक इति जाते, ''अनुशतिकादीनां च'' इत्युभयपदवृद्धौ आधिभौत इक इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'आधिभौतिकम्' इति रूपं सिद्धम्।

**ऐहलौकिकम्** - इहलोके भवमित्यर्थे इहलोकशब्दात् ठञ्-प्रत्यये, अनुबन्धलोपे, ठस्य इकादेशे, इहलोक इक इति जाते, उभयपदवृद्धौ, ऐहलौक इक इति जाते, भत्वादकारलोपे, ऐहलौकिक इति जाते, स्वादिकार्ये 'ऐहलौकिकम्' इति रूपं सिद्धम्।

**पारलौकिकम्** - परलोके भवमित्यर्थे परलोकशब्दात् ठञ्-प्रत्ययेऽनुबन्धलोपे, ठस्य इकादेशे, उभयपदवृद्धौ, भत्वादकारलोपे पारलौकिक इति जाते, स्वादिकार्ये 'पारलौकिकम्' इति रूपं सिद्धम्।

अन्योदाहरणानि यथा -

(1) प्रयोगे भवः प्रायौगिकः (अध्यात्मादित्वाट् ठञ्)। (2) उदकशुद्धस्यापत्यम् औदकशौद्धिः (अत इञ् इति इञ्)। (3) पुष्करसदोऽपत्यम्, पौष्करसादिः (बाह्वादिभ्यश्चेति इञ्)। (4) सर्वपुरुषस्येदं सार्वपौरुषम् ('तस्येदम्' इत्यण्)। (5) सर्वभूमेरीश्वरः सार्वभौमः ('तस्येश्वरः' इत्यण्)।

**1096. जिह्वामूलेति** - जिह्वामूलाङ्गुलेः, छः, इतिच्छेदः। जिह्वामूलं च अङ्गुलिश्च जिह्वामूलाङ्गुलि, तस्मात् = जिह्वामूलाङ्गुलेः, समाहारद्वन्द्वेऽपि सौत्रं स्यादित्याशयः। तत्र भव इत्यर्थे जिह्वामूल, अङ्गुलि इत्याभ्यां शब्दाभ्यां छः स्यादित्याशयः। शरीरावयवाच्च इत्यस्यापवादः।

**रूपसिद्धिः**

**जिह्वामूलीयम्** - जिह्वामूले भवमित्यर्थे जिह्वामूलशब्दात् यतं प्रबाध्य ''जिह्वामूलाङ्गुलेश्छः'' इति छप्रत्यये, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति छस्य ईयादेशे, जिह्वामूल ईय् अ इति जाते, भत्वादकारलोपे, विशेष्यानुसारं स्वादिकार्ये 'जिह्वामूलीयम्' इति रूपं सिद्धम्।

**अङ्गुलीयम्** - अङ्गुल्यां भवमित्यर्थे अङ्गुलिशब्दात् यत्-प्रत्ययं प्रबाध्य ''जिह्वामूलाङ्गुलेश्छः'' इति छप्रत्यये, छस्य ईयादेशे, भत्वाद् ''यस्येति च'' इति इकारलोपे स्वादिकार्ये 'अङ्गुलीयम्' इति रूपं सिद्धम्।

**1097. वर्गान्ताच्च ( 4-3-63 ) ॥विधिसूत्रम्॥**

कवर्गीयम्।

**1098. तत आगतः ( 4-3-74 ) ॥विधिसूत्रम्॥**

स्रुघ्नाद् आगतः स्रौघ्नः।

**1099. ठगायस्थानेभ्यः ( 4-3-75 ) ॥विधिसूत्रम्॥**

शुल्कशालाया आगतः शौल्कशालिकः।

---

1097. **वर्गान्ताच्चेति** - वर्गान्तात्, च, इतिच्छेदः। वर्गशब्दोऽन्तः (अन्तावयवः) यस्य स वर्गान्तः, तस्मात् = वर्गान्तात्। बहुव्रीहिसमासः। **सप्तमीसमर्थाद् वर्गशब्दान्ताद् 'भव' इत्यर्थे छप्रत्ययो भवतीत्यर्थः।** यथा कवर्गीयम्। अणोऽपवादः।

**रूपसिद्धिः**

**कवर्गीयम्** - कवर्गे भवमित्यर्थे कवर्गशब्दात् ''तत्र भवः'' इत्यण्-प्राप्ते, तं प्रबाध्य ''वर्गान्ताच्च'' इति सूत्रेण छप्रत्यये, छस्य ईयादेशे कवर्ग ईय् अ इति जाते, भत्वादकारलोपे, स्वादिकार्ये, 'कवर्गीयम्' इति रूपं सिद्धम्। एवमेव चवर्गीयम्, टवर्गीयम्, तवर्गीयम्, पवर्गीयम् इत्यादयः।

1098. **तत आगत इति** - ततः, आगतः, इतिच्छेदः। 'ततः' इति पञ्चम्यन्तनिर्देशः। **पञ्चम्यन्तात् समर्थशब्दात् 'आगत' इत्यर्थे अण्-प्रत्ययः स्यात्।** अणिति सामान्यप्रत्ययः। अस्य पूर्वोक्ता अपवादा अपि यथस्थानं प्रवृत्ताः भविष्यन्ति।

**रूपसिद्धिः**

**स्रौघ्नः** - 'स्रुघ्नाद् आगतः' (स्रुघ्नदेशादागतः) इत्यर्थे स्रुघ्नशब्दात् ''तत आगतः'' इत्यण्-प्रत्ययेऽनुबन्धलोपे, स्रुघ्न अ इति जाते, आदिवृद्धौ, स्रौघ्न अ इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'स्रौघ्नः' इति रूपं सिद्धम्।

**अस्मिन्नर्थेऽपवादा यथा** -

1. राष्ट्रादागतो राष्ट्रिय (राष्ट्राऽवारपाराद् घखौ इति घः)।
2. अवारपारादागतोऽवारपारीणः (राष्ट्राऽवारपाराद् घखौ इति खः)।
3. ग्रामादागतः ग्राम्य ग्रामीणो वा (ग्रामाद् यखञौ)।
4. नद्या आगतः नादेयः (नद्यादिभ्यो ढक्)।
5. स्त्रीभ्य आगतः स्त्रैणः (स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्)।
6. पुम्भ्य आगतः पौंस्नः (स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्)।
7. उत्सादागत औत्सः (उत्सादिभ्योऽञ्)।
8. देवादागतं दैव्यं दैवं वा (देवाद्यञञौ)।

1099. **ठगायेति** - ठक्, आयस्थानेभ्यः, इतिच्छेदः। आयस्य स्थानानि आयस्थानानि, तेभ्यः = आयस्थानेभ्यः, षष्ठीतत्पुरुषः। 'आयस्थान-वाचिभ्यः' इत्यर्थ। स्वामिना ग्रहणीयों ऽशः आय इति। स आय यस्मिन् उत्पद्यते तद् आयस्थानमिति कथ्यते। **आयस्थानवाचिभ्यष्ठक् स्यात्।** यथा शौल्कशालिकः।

**रूपसिद्धिः**

**शौल्कशालिकः** - शुल्कशालाया आगत इत्यर्थे शुल्कशालाशब्दात् ''ठगायस्थानेभ्यः'' इति सूत्रेण ठक्-प्रत्ययेऽनुबन्धलोपे, शुल्कशाला ठ् इति जाते, ''ठस्येकः'' इति ठस्य इकादेशे, शुल्कशाला इक इति जाते, ''किति च'' इति आदिवृद्धौ, शौल्कशाला इक इति जाते, भत्वादाकारलोपे, शौल्कशाल् इक इति जाते, स्वादिकार्ये 'शौल्कशालिकः' इति रूपं सिद्धम्। एवमेव आपणाद् आगत आपणिकः। आकराद् आगतः ('खान' इति भाषायाम्) आकरिकः।

**1100. विद्यायोनिसम्बन्धेभ्यो वुञ् ( 4-3-77 ) ॥विधिसूत्रम्॥**

औपाध्यायकः। पैतामहकः।

**1101. हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ( 4-3-81 ) ॥विधिसूत्रम्॥**

समादागतं समरूप्यम्। विषमरूप्यम्। पक्षे गहादित्वाच्छः - समीयम्। विषमीयम्। देवदत्तरूप्यम्, दैवदत्तम्।

---

1100. **विद्यायोनीति** - विद्यायोनिसम्बन्धेभ्यः, वुञ्, इतिच्छेदः। विद्या शिक्षाग्रहणम्, योनिर्जन्म। विद्या च योनिश्च विद्यायोनी, तत्कृतः सम्बन्धो येषान्ते विद्यायोनिसम्बन्धाः, तेभ्यः = विद्यायोनिसम्बन्धेभ्यः। द्वन्द्वगर्भबहुव्रीहिसमासः। **विद्यायोनिसम्बन्धवाचिभ्यः 'तत आगत' इत्यर्थे वुञ्प्रत्ययो भवतीत्यर्थः।** यथा - औपाध्यायकः। पैतामहकः। उपाध्यायाचार्यशिष्यादयः विद्याकृतसम्बन्धवाचिनः। मातृपितृपितामहमातामहमातुलभ्रातृस्वस्रादयः योनिकृत् (जन्मकृत्) - सम्बन्धवाचिनः।

**रूपसिद्धिः**

**औपाध्यायकः** - उपाध्यायाद् आगत (ग्रन्थो विचारो वा) इत्यर्थे उपाध्यायशब्दात् ''विद्यायोनिसम्बन्धेभ्यो वुञ्'' इति वुञ्-प्रत्यये, अनुबन्धलोपे, उपाध्याय वु इति जाते, ''युवोरनाकौ'' इति 'वु' इत्यस्य स्थाने अकादेशे, आदिवृद्धौ, औपाध्याय अक इति जाते, भत्वादकारलोपे स्वादिकार्ये 'औपाध्यायकः' इति रूपं सिद्धम्।

**पैतामहकः** - पितामहाद् आगत इत्यर्थे पितामहशब्दात् वुञ्-प्रत्ययेऽनुबन्धलोपे, 'वु' इत्यस्य अकादेशे पितामह अक इति जाते, ''तद्धितेष्वचामादेः'' इत्यादिवृद्धौ पैतामह अक इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'पैतामहकः' इति रूपं सिद्धम्।

**अन्योदाहरणान्यथा** -

1. आचार्यादागत आचार्यकः (वृद्धाच्छं परत्वाद् बाधते)।
2. शिष्यादागत शैष्यकः।
3. मातुलादागतो मातुलकः। (वृद्धाच्छं परत्वाद् बाधते)।
4. मातुरागतं मातृकम्। ('ऋतष्ठञ्' इति ऋदन्तत्वाट्ठञ्)।
5. पितुरागतं पैतृकम्। ('ऋतष्ठञ्' इति ऋदन्तत्वाट्ठञ्)।
6. भ्रातुरागतं भ्रातृकम्। (ऋतष्ठञ्)।
7. स्वसुरागतं स्वासृकम्। (ऋतष्ठञ्)।
8. दुहितुरागतं दौहितृकम्। (ऋतष्ठञ्)।

1101. **हेतु-मनुष्येभ्य इति** - हेतुमनुष्येभ्यः, अन्यतरस्याम्, रूप्यः, इतिच्छेदः। हेतवश्च मनुष्याश्च हेतुमनुष्याः, तेभ्यः = हेतुमनुष्येभ्यः। इतरेतर-द्वन्द्वसमासः। **हेतुवाचकेभ्यो मनुष्यवाचकेभ्यश्च शब्देभ्यस्तत आगत इत्यर्थे विकल्पेन रूप्यप्रत्ययः स्यात्** पक्षे यथा प्राप्त-अणादयः स्युः। यथा समरूप्यम् इत्यादयः।

**रूपसिद्धिः**

**समरूप्यम्, समीयम्** - समाद् आगतम् (उचितहेतोरागतम्) इत्यर्थे हेतुवाचकात् समशब्दाद् ''हेतु मनुष्येभ्योऽन्यतरस्यां रूप्यः'' इति सूत्रेण विकल्पेन रूप्यप्रत्यये, स्वादिकार्ये 'समरूप्यम्' इति रूपं सिद्धम्। पक्षे ''गहादिभ्यश्च'' इति छप्रत्यये, छस्य ईयादेशे सम ईय् अ इति जाते, भत्वादकारलोपे समीय इति जाते, स्वादिकार्ये 'समीयम्' इति रूपम्, इत्थं 'समरूप्यम्' 'समीयम्' इति रूपद्वयं सिद्धम्।

**विषमरूप्यं, विषमीयम्** - विषमादागतम् इत्यर्थे विकल्पेन रूप्य प्रत्यये, स्वादिकार्ये 'विषमरूप्यम्' इति रूपम्, पक्षे छप्रत्यये, छस्य ईयादेशे, भत्वादकारलोपे, स्वादिकार्ये 'विषमीयम्' इति रूपम्, इत्थं 'विषमरूप्यम्', 'विषमीयम्' इति रूपद्वयं निष्पन्नम्।

**देवदत्तरूप्यं, दैवदत्तम्** - देवदत्तादागतमित्यर्थे मनुष्यवाचकाद् देवदत्तशब्दात् ''हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः'' इति विकल्पेन रूप्यप्रत्यये, स्वादिकार्ये 'देवदत्तरूप्यम्' इति रूपं पक्षे ''तत आगतः'' इत्यणि, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'दैवदत्तम्' इति रूपम्, इत्थं देवदत्तरूप्यं दैवदत्तमिति रूपद्वयं सिद्धम्।

1102. **मयट् च ( 4-3-82 ) ॥विधिसूत्रम्॥**
सममयम्। देवदत्तमयम्।

1103. **प्रभवति ( 4-3-83 ) ॥विधिसूत्रम्॥**
हिमवत: प्रभवति - हैमवती गङ्गा।

1104. **तद्गच्छति पथिदूतयो: ( 4-3-85 ) ॥विधिसूत्रम्॥**
स्रुघ्नं गच्छति स्रौघ्न:, पन्था: दूतो वा।

1105. **अभिनिष्क्रामति द्वारम्( 4-3-86 ) ॥विधिसूत्रम्॥**
स्रुघ्नम् अभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम्।

1101. **मयट् चेति** - मयट्, च, इतिच्छेद:। **हेतुवाचिभ्यो मनुष्यवाचिभ्यश्च तत आगत इत्यर्थे मयट्-प्रत्यय: स्यादित्यर्थ:।** यथा सममयम्। देवदत्तमयम्।

---

**रूपसिद्धि:**

**सममयम्** - समादागतम् (धनादिकम्) इत्यर्थे हेतुवाचकात् समशब्दात् ''मयट् च'' इति मयट्-प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'सममयम्' इति रूपं सिद्धम्। विषमादागतं विषममयम्।

**देवदत्तमयम्** - देवदत्तादागतम् इत्यर्थे देवदत्तशब्दात् ''मयट् च'' इति मयट्-प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'देवदत्तमयम्' इति रूपं सिद्धम्।

1103. **प्रभवतीति** - प्रभवति इति क्रियापदम्। **पञ्चम्यन्तात् 'प्रभवति' इत्यर्थे ( प्रभव: = प्रथमोपलब्धि: प्रथमदर्शनं वा ) अण्-प्रत्यय: स्यादित्यर्थ:।** यथा - हिमवत: प्रभवति हैमवती गङ्गा।

**रूपसिद्धि:**

**हैमवती गङ्गा** - हिमवत: प्रभवति इत्यर्थे हिमवत्-शब्दात् ''प्रभवति'' इति सूत्रेण अण्-प्रत्ययेऽनुबन्धलोपे, हिमवत् अ इति जाते, आदिवृद्धौ, हैमवत इति जाते, ''टिड्ढाणञ्.'' इत्यादिसूत्रेण ङीप्-प्रत्यये, अनुबन्धलोपे हैमवत ई इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'हैमवती' इति रूपं सिद्धम्। इत्थमेव दरदेभ्य: प्रभवति दारदी सिन्धु: (नदी) इत्यादयोऽपि बोद्धव्या:।

1104. **तद्गच्छतीति** - तद् इति द्वितीयान्तं पदम्, गच्छति (इति क्रियापदम्), पथिदूतयो: इतिच्छेद:। पन्थाश्च दूतश्च पथिदूतौ, तयो: = पथिदूतयो:। इतरेतरद्वन्द्वसमास:। **द्वितीयान्ताद् गच्छति इत्यर्थे अण्-प्रत्यय: स्यादित्यर्थ:, गन्ता चेत् पन्था दूतो वेत्यर्थ:।** यथा स्रौघ्न:।

**रूपसिद्धि:**

**स्रौघ्न:** - स्रुघ्नं (देशविशेषं प्रति) गच्छति इत्यर्थे स्रुघ्नशब्दात् ''तद् गच्छति पथिदूतयो:'' इति सूत्रेण अण्-प्रत्ययेऽनुबन्धलोपे, स्रुघ्न अ इति जाते, णित्त्वादादिवृद्धौ, भत्वादकारलोपे स्वादिकार्ये 'स्रौघ्न:' इति रूपं सिद्धम्। एवमेव मथुरां गच्छति माथुर: पन्था: दूतो वा इत्यादयोऽपि बोद्धव्या:।

1105. **अभिनिष्क्रामति इति** - अभिनिष्क्रामति (इति क्रियापदम्), द्वारम्, इति पदच्छेद:। द्वितीयान्ताद् अभिनिष्क्रामति (उसकी ओर निकलता है, उसकी ओर जाता है इति भाषायाम्) इत्यर्थे अण्-प्रत्यय: स्वात् तच्चेत् द्वारं स्यात्। यथा स्रौघ्नं कान्यकुब्जद्वारम्।

**रूपसिद्धि:**

**स्रौघ्नम्** - स्रुघ्नम् अभिनिष्क्रामति (कान्यकुब्जद्वारम्) इत्यर्थे स्रुघ्नशब्दात् ''अभिनिष्क्रामति द्वारम्'' इत्यण्-प्रत्ययेऽनुबन्धलोपे, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'स्रौघ्नम्' इति रूपं सिद्धम्। एवमेव मथुरामभिनिष्क्रामति माथुरं द्वारम्। राष्ट्रम् अभिनिष्क्रामति राष्ट्रियं द्वारम् (राष्ट्राऽवारपाराद् घखौ)।

**1106. अधिकृत्य कृते ग्रन्थे ( 4-3-87 ) ॥विधिसूत्रम्॥**
शरीरकम् अधिकृत्य कृतो ग्रन्थः शारीरकीयः।

**1107. सोऽस्य निवासः ( 4-3-89 ) ॥विधिसूत्रम्॥**
स्रुघ्नो निवासोऽस्य स्रौघ्नः।

**1108. तेन प्रोक्तम् ( 4-3-101 ) ॥विधिसूत्रम्॥**
पाणिनिना प्रोक्तं पाणिनीयम्।

---

1106. **अधिकृत्य इति** - अधिकृत्य इति ल्यबन्तं पदम्, कृते, ग्रन्थे इतिच्छेदः। **द्वितीयान्ताद् अधिकृत्य कृतो ग्रन्थ इत्यर्थेऽण्-प्रत्ययः स्यात्।** अणिति सामान्यप्रत्ययः, अस्य पूर्वोक्ता अपवादाः यथास्थानं प्रवृत्ताः भविष्यन्ति।

**रूपसिद्धिः**

**शारीरकीयः ( वेदान्तः )** - शारीरकम् ( शरीरस्य अयं जीवात्मा, तस्येदम् इत्यण्, शारीर एव शारीरकः स्वार्थे कन्) अधिकृत्य कृतो ग्रन्थ इत्यर्थे शारीरकशब्दात् ''वृद्धिर्यस्याचामादिस्तद् वृद्धम्'' इति सूत्रेण वृद्धसञ्ज्ञायां ''वृद्धाच्छः'' इति सूत्रेण छप्रत्यये, छस्य ईयादेशे, भत्वादकारलोपे, स्वादिकार्ये 'शारीरकीयः' इति रूपं सिद्धम्।

**अन्योदाहरणान्यथा** -

1. शकुन्तलाम् अधिकृत्य कृतं नाटकं शाकुन्तलम् ( अण्)।
2. सुभद्राम् अधिकृत्य कृतो ग्रन्थः सौभद्रः ( अण्)।
3. भरतान् अधिकृत्य कृतमाख्यानम्, भारतम् ( अण्)।
4. भीमरथम् अधिकृत्य कृताऽऽख्यायिका भैमरथी (अण्, ङीप्) आख्यायिकेति वाच्ये क्वचित् तद्धितप्रत्ययस्य लुप् अपि भवति यथा - वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता।

1107. **सोऽस्येति** - सः, अस्य, निवासः इतिच्छेदः। **प्रथमा समर्थाद् अस्य निवास इत्यर्थे अण् स्यात्।** अणिति सामान्यप्रत्ययः, अस्य पूर्वोक्ता अपवादा यथास्थानं प्रवृत्ता भविष्यन्ति।

**रूपसिद्धिः**

**स्रौघ्नः** - स्रुघ्नः (स्रुघ्नदेशः) निवासोऽस्य इत्यर्थे स्रुघ्नशब्दात् ''सोऽस्य निवासः'' इत्यणि, अनुबन्धलोपे, आदिवृद्धौ भत्वादकारलोपे स्वादिकार्ये 'स्रौघ्नः' इति रूपं सिद्धम्। एवमेव मथुरा निवासोऽस्य माथुरः। नदी निवासोऽस्य नादेयः (नद्यादिभ्यो ढक्)। राष्ट्रं निवासोऽस्य राष्ट्रियः (राष्ट्रावारपाराद् घखौ इति घः)। ग्रामो निवासोऽस्य ग्राम्यः ग्रामीणो वा (ग्रामाद् यखञौ)।

1108. **तेन प्रोक्तमिति** - तेन, प्रोक्तम्, इतिच्छेदः। **तृतीयान्तात् 'प्रोक्तम्' इत्यर्थे अण्-प्रत्ययः स्यादित्यर्थः।** प्रोक्तम् = प्रथमप्रकाशितम् = प्रथमव्याख्यातम्। अणिति सामान्यप्रत्ययः। यथावसरमस्यापवादप्रत्ययाः अस्य बाधकाः भवन्ति।

**रूपसिद्धिः**

**पाणिनीयम्** - पाणिनिना प्रोक्तं पाणिनीयं व्याकरणम्। पाणिनिशब्दात् ''तेन प्रोक्तम्'' इति सूत्रेण अण् प्रत्यये प्राप्ते, तं प्रबाध्य ''वृद्धाच्छः'' इति छप्रत्यये, छस्य ईयादेशे, पाणिनि ईय इति जाते, भत्वादिकारलोपे, स्वादिकार्ये 'पाणिनीयम्' इति रूपं सिद्धम्।

एवमेव आपिशलिना प्रोक्तम् आपिशलं व्याकरणम्। (इञश्च इत्यण्)। शौनकेन प्रोक्ता शौनकीया शिक्षा (वृद्धाच्छः)। चन्द्रेण प्रोक्तं चान्द्रं व्याकरणम् (तेन प्रोक्तमित्यण्) इत्यादयोऽपि बोद्धव्याः।

**1109. तस्येदम्( 4-3-120 ) ॥विधिसूत्रम्॥**

उपगोरिदम् औपगवम्।

---

**1109. तस्येदमिति** - तस्य, इदम् इतिच्छेदः। **षष्ठीसमर्थाद् 'इदम्' इत्यर्थे अण्-प्रत्ययः स्यादित्यर्थः।** अणिति सामान्यप्रत्ययः। अणं प्रबाध्य अपवादप्रत्यया यथास्थानं प्रवृत्ता भविष्यन्ति। यथा उपगोरिदम् 'औपगवम्'।

**रूपसिद्धिः**

**औपगवम्** - उपगोः इदम् इत्यर्थे उपगुशब्दात् ''तस्येदम्'' इति अण्-प्रत्ययेऽनुबन्धलापे, उपगु अ इति जाते, आदिवृद्धौ, ''ओर्गुणः'' इति भस्य उकारस्य स्थाने ओकारे गुणे, औपगो अ इति जाते, ''एचोऽयवायावः'' इति ओकारस्य अवादेशे, स्वादिकार्ये 'औपगवम्' इति रूपं सिद्धम्।

**एवमेव** -

1. भीमस्य इयं भैमी बुद्धिः। (अणन्ताद् भैमशब्दात् ''टिड्ढाणञ्.'' इति ङीप्।) भैम्याः (बुद्ध्याः) व्याख्या भैमीव्याख्या। षष्ठीतत्पुरुषे सामान्याधिकरण्याभावात् पुंवद्भावो न।
2. बृहस्पतेरिदं बार्हस्पत्यं नीतिशास्त्रम् ( दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः)
3. अश्वपतेरिदम् आश्वपतं कुलम्। (ण्यं प्रबाध्य अश्वपत्यादिभ्यश्चेत्यण्)
4. देवस्येदं दैव्यं दैवं वा बलम्। (देवाद् यञञौ)।
5. उत्सस्यायम् औत्सः कलकलः। (उत्सादिभ्योऽञ्)।
6. स्त्रिया इदं स्त्रैणं चरितम्। (स्त्रीपुंसाभ्यामिति नञ्)।
7. पुंस इदम् पौंस्नं बलम्। (स्त्रीपुंसाभ्यामिति स्नञ्)।
8. गोरिदं गव्यं पयः। (गोरजादिप्रसङ्गे यत्)।
9. राष्ट्रस्येदं राष्ट्रियं कार्यम्। (राष्ट्रावारपारादिति घः)।
10. अवारपारस्येदम् अवारपारीणं वस्तु। (राष्ट्रावारपारादिति खः)
11. नद्या इदं नादेयं जलम्। (नद्यादिभ्यो ढक्)।
12. शास्त्रस्यायं शास्त्रीयः सिद्धान्तः। (वृद्धाच्छः छस्य ईय्)।
13. मासस्य इदं मासिकं वेतनम्। (कालाट्ठञ्, ठस्येकः)।

## ॥ अभ्यासः ॥

**वस्तुनिष्ठात्मकप्रश्नाः –**

1. 'चाक्षुषम्' इत्यत्र प्रत्ययोऽस्ति –
   (क) अञ्   (ख) अण्
   (ग) अक्   (घ) अ
2. 'राष्ट्रियः' इत्यत्र प्रत्ययोऽस्ति –
   (क) इय्   (ख) घ
   (ग) य   (घ) कोऽपि न
3. 'अमात्यः' इत्यत्र प्रत्ययोऽस्ति –
   (क) त्यक्   (ख) त्य
   (ग) त्यप्   (घ) यत्

**अतिलघूत्तरात्मकप्रश्नाः –**

4. दिव्यम् इत्यत्र केन सूत्रेण कः प्रत्यय?
5. वृद्धिर्यस्याचामादिस्तद् किं सञ्ज्ञं स्यात्?
6. त्यदादिशब्दाः के? लिखत।
7. 'शालीयः' इत्यत्र केन कः प्रत्ययः?
8. गहादिभ्यः कः प्रत्ययः?
9. प्रावृषेण्यः इत्यत्र प्रकृति-प्रत्ययौ कौ?
10. स्रुघ्ने जातः इत्यर्थे केन कः प्रत्ययः?
11. एण्यापवादः कः प्रत्ययः?
12. कोशशब्दात् सम्भूतेऽर्थे कः प्रत्ययः?
13. दिगादिभ्यः कः प्रत्ययः?
14. आध्यात्मिकम् इत्यत्र ठञ्-प्रत्ययः केन?
15. पारलौकिकम् इत्यत्र उभयपदवृद्धिः केन?
16. वर्गान्तात् भवार्थे कः प्रत्ययः?
17. औपाध्यायकः इत्यत्र कस्मिन्नर्थे वुञ्-प्रत्ययः?
18. रूप्यप्रत्ययः केभ्यो भवति?

**लघूत्तरात्मकप्रश्नाः –**

19. हेतु मनुष्येभ्योऽन्यतरस्यां रूप्यः इति सूत्रस्य सोदाहरणं व्याख्या विधेया।
20. शौल्कशालिकः इत्यस्य ससूत्रं सिद्धिः कार्या।
21. अनुशतिकादीनां चेति सूत्रं सोदाहरणं व्याख्यायताम्।
22. सायं चिरमिति सूत्रं प्रपूर्य सोदाहरणं व्याख्यायताम्।
23. कालाट्ठञ् इति सूत्रं सोदाहरणं व्याख्यायताम्।

**निबन्धात्मकप्रश्नाः -**

24. अधोलिखितानां प्रयोगाणां सिद्धिः कार्या।

श्रावणः, चातुरं (शकटम्), राष्ट्रियः, ग्राम्यः, नादेयम्, दाक्षिणात्यः, प्राच्यम्, तत्रत्य, नित्यः, शालीयः, तदीयः, गहीयः, अस्मदीयः, यौष्माकीणः, आस्माकः, तावकः, मामकीनः, त्वदीयः, मत्पुत्रः, मध्यमः, कालिकम्, सायन्तनम्, प्रावृषेण्यः, स्रुघ्ने जातः स्रौघ्नः, प्रावृषिकः, कौशेयम्, दिश्यम्, दन्त्यम्, आधिदैविकम्, जिह्वामूलीयम्, कवर्गीयम्, समीयम्, देवदत्तमयम्, हैमवती, शारीरकीयः, पाणिनीयम्।

25. अधोलिखितानां सूत्राणां व्याख्या विधेया।

(1) राष्ट्रावारपाराद् घखौ। (2) प्रत्ययोत्तरपदयोश्च। (3) शरीरावयवाच्च। (4) ठगायस्थानेभ्यः। (5) द्युप्रागपागुदक्प्रतीचो यत्। (6) ग्रामाद्यखञौ। (7) युष्मदस्मदोरन्यतरस्यां खञ् च। (8) सम्भूते। (9) विद्यायोनिसम्बन्धेभ्यो वुञ्। (10) त्यब्नेर्ध्रुव इति वक्तव्यम्।

26. प्रकरणस्थसूत्राणां वार्तिकानाञ्च निम्नप्रारूपानुसारं सारणी कर्त्तव्या।

सूत्रम्/वार्तिकम्    सूत्रार्थः/वार्तिकार्थः    उदाहरणम्

**इति शैषिकाः।**

## अथ विकाराद्यर्थकाः ( प्राग्दीव्यतीयप्रकरणम् )

1110. **तस्य विकारः ( 4-3-132 ) ॥विधिसूत्रम्॥**

(वा.) **अश्मनो विकारे टिलोपो वक्तव्यः।**

अश्मनो विकार आश्मः। भास्मनः। मार्त्तिकः।

1111. **अवयवे च प्राण्योषधिवृक्षेभ्यः ( 4-3-133 ) ॥विधिसूत्रम्॥**

चाद्विकारे। मयूरस्य अवयवो विकारो वा मायूरः। मौर्वं काण्डं भस्म वा। पैप्पलम्।

---

1110. **तस्य विकार इति** – तस्येति षष्ठ्यन्तस्य बोधकम्। विक्रियते इति विकारः। **षष्ठ्यन्तसमर्थाद् विकार इत्यर्थे अण्-प्रत्ययः स्यादित्यर्थः।** उपादानकारणं (समवायिकारणं) यदा कार्यरूपेण परिणतं भवति तदा विकार उच्यते। यथा आसन्दादयः काष्ठस्य विकारा भवन्ति। यथा-अश्मनो विकारः आश्म इत्यादयः।

(वा.) **अश्मनो विकार इति – विकारार्थे षष्ठीसमर्थाद् अष्मनष्टिलोपो वाच्यः इति।** यथा-आश्मः।

**रूपसिद्धिः**

**आश्मः** – अश्मनो विकार आश्मः। अश्मन् ङस् इति शब्दात् ''तस्य विकारः'' इत्यण्-प्रत्ययेऽनुबन्धलोपे, अश्मन् ङस् अ इति जाते, ''कृत्तदितसमासाश्च'' इति प्रातिपदिकसञ्ज्ञायां, ''सुपो धातुप्रातिपदिकयोः'' इति सुब्लुकि, अश्मन् अ इति जाते, णित्त्वादादिवृद्धौ आश्मन् अ इति जाते, भत्वाद् ''नस्तद्धिते'' इति टि (अन्) लोपे प्राप्ते, तं प्रबाध्य ''अन्'' इति प्रकृतिभावे प्राप्ते, तं प्रबाध्य ''अश्मनो विकारे टिलोपो वक्तव्यः'' इति वार्तिकेन टिलोपे पुनः प्रातिपदिकत्वात् स्वादिकार्ये 'आश्मः' इति रूपं सिद्धम्।

**भास्मनः** – भस्मनो विकार इत्यर्थे भस्मन् ङस् इत्यस्मात् ''तस्य विकारः'' इत्यण्-प्रत्ययेऽनुबन्धलोपे, भस्मन् ङस् अ इति जाते, प्रातिपदिकत्वात् सुब्लुकि, आदिवृद्धौ भास्मन् अ इति जाते, भत्वाद् ''अन्'' इति प्रकृतिभावे, पुनः प्रातिपदिकत्वात्स्वादिकार्ये 'भास्मनः' इति रूपं सिद्धम्।

**मार्तिकः** – मृत्तिकाया विकार इत्यर्थे। मृत्तिका ङस् इत्यस्माद् अण्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, आदिवृद्धौ, मार्तिका अ इति जाते, भत्वादाकारलोपे मार्तिक् अ इति जाते, प्रातिपदिकत्वात् पुनः स्वादिकार्ये 'मार्तिकः' इति रूपं सिद्धम्।

111. **अवयवे चेति** – अवयवे, च, प्राण्योषधिवृक्षेभ्यः, इतिच्छेदः। प्राणिनश्च ओषधयश्च वृक्षाश्च प्राण्योषधिवृक्षाः, तेभ्यः = प्राण्योषधिवृक्षेभ्यः। इतरेतरद्वन्द्वः। **षष्ठ्यन्तेभ्यः प्राणिवाचिभ्यः, ओषधिवाचिभ्यः वृक्षवाचिभ्यश्च अवयवे विकारे चार्थे अण्-प्रत्ययः स्यादित्यर्थः।** यथा मायूरः। इदं सूत्रं विधिसूत्रम् अधिकारसूत्रं च। अस्य अधिकारः चतुर्थाध्यायस्य तृतीयपादान्तं यावत् अर्थात् विकार-प्रकरणान्तं यावद् वर्तते।

**रूपसिद्धिः**

**मायूरः** – मयूरस्य विकार अवयवो वेत्यर्थे मयूर ङस् इत्यस्मात् ''अवयवे च प्राण्योषधिवृक्षेभ्यः'' इत्यधिकारस्य सहाय्येन ''प्राणि-रजतादिभ्योऽञ्'' इति सूत्रेण अञ्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, आदिवृद्धौ मायूर अ इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'मायूरः' इति रूपं सिद्धम्। एवमेव कपोतस्य विकार अवयवो वा कापोतः। तित्तिरस्यावयवो विकारो वा तैत्तिरः। इत्यादि।

**मौर्वम्** – मूर्वाया अवयवो विकारो वा इत्यर्थे मूर्वा ङस् इत्यस्मात् ''अवयवे च प्राण्योषधिवृक्षेभ्यः'' इत्यणि अनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, आदिवृद्धौ मौर्वा अ इति जाते, भत्वादाकारलोपे, प्रातिपदिकत्वात् स्वादिकार्ये 'मौर्वम्' इति रूपं सिद्धम्।

**पैप्पलम्** – पिप्पलस्यावयवो विकारो वेत्यर्थे पिप्पल ङस् इत्यस्मात् ''अवयवे च प्राण्योषधिवृक्षेभ्यः'' इत्यण्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, पिप्पल अ इति जाते, आदिवृद्धौ, भत्वादकारलोपे, प्रातिपदिकत्वात् स्वादिकार्ये 'पैप्पलम्' इति रूपं सिद्धम्।

**1112. मयड् वैतयोर्भाषायामभक्ष्याऽऽच्छादनयोः ( 4-3-141 ) ॥विधिसूत्रम्॥**

प्रकृतिमात्राद् मयड् वा स्याद्विकारावयवयोः। अश्ममयम्। आश्मनम्। अभक्ष्येत्यादि किम्? मौद्गः सूपः। कार्पासम् आच्छादनम्।

---

**1112. मयड् वैतयोरिति** - मयट्, वा, एतयोः, भाषायाम्, अभक्ष्याछादनयोः इतिच्छेदः। भक्ष्यञ्च आच्छादनञ्च भक्ष्याच्छादने, तयोः = भक्ष्याच्छादनयोः, न भक्ष्याच्छादनयोः = अभक्ष्याच्छादनयोः, इतरेतरद्वन्द्वपूर्वनञ् तत्पुरुषः। **एतयोः = विकारावयवयोः अर्थयोः प्रकृतिमात्राद् मयट्-प्रत्ययो विकल्पेन भवति भाषायाम्।** अत्र भाषायामिति कथनात् संस्कृते एव, न तु वेदेष्विति। विकल्पविधानात् पक्षे अणादयः यथा अश्ममयम्, आश्मनम्। ननु विकारावयवयोरधिकारत्वादेव सिद्धे प्रयोजने पुनः एतयोरिति पदं कथमिति चेद्? उच्यते - उक्तेषु वक्षमाणेषु तथापवादविषयेष्वपि वा मयड्विधानाय सूत्रे एतयोरिति पदमस्ति इति दिक्। मयट् इति टित्करणं स्त्रीत्वे ''टिड्ढाणञ्.'' इति ङीप्-विधानार्थम्।

**रूपसिद्धिः**

**अश्ममयम्, आश्मम्** - अश्मनो विकारोऽवयवो वेत्यर्थे (पाषाणः व्यक्तिविशेषो वा इति अश्मनः अर्थद्वयम्) पाषाणवाचकात् अश्मन् ङस् इत्यस्मात् ''मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः'' इति विकारेऽर्थे विकल्पेन 'मयट्'-प्रत्ययेऽनुबन्धलोपे, अश्मन् ङस् मय इति जाते, प्रातिपदिकत्वात् सुब्लुकि, ''स्वादिष्वसर्वनामस्थाने'' इति पदसञ्ज्ञायां ''नलोपः प्रातिपदिकान्तस्य'' इति नलोपे अश्म मय इति जाते, स्वादिकार्ये 'अश्ममयम्' इति रूपम्। पक्षे ''तस्य विकारः'' इत्यण्-प्रत्यये, आदिवृद्धौ, अनिति प्रकृतिभावं प्रबाध्य ''अश्मनो विकारे टिलोपो वक्तव्यः'' इति टि (अन्) लोपे स्वादिकार्ये 'आश्मम्' इति रूपम्, इत्त्थम् अश्ममयम् आश्मम् इति रूपद्वयं निष्पन्नम्।

**अश्ममयम्, आश्मनम्** - अश्मन् नामकः काचिद् व्यक्तिः महाभारते उल्लिखितः। तदा प्राणिवाचकात् अवयवे विकारे चार्थे ''मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः'' इति मयट्-प्रत्ययेऽनुबन्धलोपे पूर्ववत् अश्ममयम् इति रूपम्। पक्षे मयडभावे ''अवयवे च प्राण्योषधिवृक्षेभ्यः'' इति सूत्रेण अण्-प्रत्ययेऽनुबन्धलोपे अश्मन् ङस् अ इति जाते, सुब्लुकि, आदिवृद्धौ, अनिति प्रकृतिभावे, स्वादिकार्ये ''आश्मनम्'' इति रूपं सिद्धम्।

**मौद्गः** - मुद्गानां विकारो मौद्गः सूपः। मुद्ग आम् इत्यस्मात् विकारेऽर्थे ''बिल्वादिभ्योऽण्'' इति अण्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, मुद्ग अ इति जाते, आदिवृद्धौ मौद्ग अ इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'मौद्गः' इति रूपं सिद्धम्। अत्र विकारेऽर्थे अपि मौद्गः सूपः भक्ष्यपदार्थः, अत मयट् न भवति।

**कार्पासम् ( आच्छादनवस्त्रम् )** - कर्पासस्य विकार इत्यर्थे कर्पास ङस् इत्यस्मात् विकारेऽर्थे ''बिल्वादिभ्योऽण्'' इति अण्-प्रत्यये, अनुबन्धलोपे कर्पास ङस् अ इति जाते, सुब्लुकि, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'कार्पासम्' इति रूपं सिद्धम्। अत्र आच्छादनत्वान्न मयट्।

**1113. नित्यं वृद्धशरादिभ्यः ( 4-3-142 ) ॥ विधिसूत्रम् ॥**

आम्रमयम्। शरमयम्।

**1114. गोश्च पुरीषे ( 4-3-143 ) ॥ विधिसूत्रम् ॥**

गोः पुरीषं गोमयम्।

**1115. गोपयसोर्यत् ( 4-3-14 ) ॥ विधिसूत्रम् ॥**

गव्यम्। पयस्यम्।

---

1113. **नित्यं वृद्धेति** - नित्यम् इति द्वितीयैकवचनान्तं क्रियाविशेषणम्, वृद्धशरादिभ्यः इतिच्छेदः। शरः (शरशब्दः) आदिर्येषां ते शरादयः, वृद्धाश्च शरादयश्च वृद्धशरादयः, तेभ्यः = वृद्धाशरादिभ्यः, बहुव्रीहिगर्भद्वन्द्वः। **वृद्धसञ्ज्ञकेभ्यः शरादिगणपठितशब्देभ्यश्च विकारावयवयोः भक्ष्याच्छादनभिन्नयो नित्यं मयट् स्यात् भाषायामित्यर्थः।** यथा आम्रमयम्। शरमयम्। शरादिगणो यथा-शर। दर्भ। मृद। कुटी। तृण। सोम। बल्वज।

**रूपसिद्धिः**

**आम्रमयम्** - आम्रस्य (आम्रवृक्षस्य) विकारोऽवयवो वेत्यर्थे आम्र ङस् इत्यस्मात् ''वृद्धिर्यस्याचामादिस्तद् वृद्धम्'' इति आम्रशब्दस्य वृद्धसञ्ज्ञायां, मयड् वैतयोरिति मयट्प्राप्ते तं प्रबाध्य ''नित्यं वृद्धशरादिभ्यः'' इति मयट्-प्रत्ययेऽनुबन्धलोपे, आम्र ङस् मय इति जाते, सुब्लुकि, स्वादिकार्ये ''आम्रमयम्'' इति रूपं सिद्धम्।

**शरमयम्** - शरस्य ('सरकण्डा' इति भाषायाम्) विकारः अवयवो वेत्यर्थे शर ङस् इत्यस्मात् शरादित्वात् ''नित्यं वृद्धशरादिभ्यः'' इति मयट् - प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये 'शरमयम्' इति रूपं सिद्धम्।

**अन्योदाहरणानि याथ -**

1. शाकस्य विकारोऽवयवो वा शाकमयम् (वृद्धत्वान्मयट्)।
2. दर्भस्य विकारोऽवयवो वा दर्भमयम् (शरादित्वान्मयट्)।
3. तृणस्य विकारोऽवयवो वा तृणमयम् (शरादित्वान्मयट)।
4. सोमस्य विकारोऽवयवो वा सोममयम् (शरादित्वान्मयट्)।
5. कुट्या विकारः कुटीमयम् (शरादित्वान्मयट्)।
6. मृदो विकारो मृन्मयम् (शरादित्वान्मयट्)।

1114. **गोश्चेति** - गोः (षष्ठ्यन्तम्), पुरीषम् इतिच्छेदः। **षष्ठ्यन्तात् गोशब्दात् पुरीषमित्यर्थे मयट् स्यादित्यर्थः।**

**रूपसिद्धिः**

**गोमयम्** - गोः पुरीषम् (गोबर इति भाषायाम्) इत्यर्थे गो ङस् इत्यस्मात् ''गोश्च पुरीषे'' इति सूत्रेण मयट्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये 'गोमयम्' इति रूपं सिद्धम्।

1115. **गोपयसोरिति** - गोपयसोः (षष्ठीद्विवचनान्तः), यत् इतिच्छेदः। **षष्ठ्यन्ताभ्यां गोपयस्शब्दाभ्यां विकारोऽवयवो वेत्यर्थे 'यत्' स्यात्।** अवयवे च प्राण्योषधिवृक्षेभ्य इत्यधिकारात् गोशब्दात् विकारे अवयवे चार्थे पयस्-शब्दाच्च विकारेऽर्थे एव यत् स्यात्।

**रूपसिद्धिः**

**गव्यम्** - गोः विकारोऽवयवो वेत्यर्थे 'गो ङस्' इत्यस्मात् ''गोपयसोर्यत्'' इति यत्-प्रत्ययेऽनुबन्धलोपे, गो ङस् य इति जाते, सुब्लुकि, ''वान्तो यि प्रत्यये'' इति ओकारस्य अवादेशे ग् अव् य इति जाते, स्वादिकार्ये 'गव्यम्' इति रूपं सिद्धम्।

**पयस्यम्** - पयसो विकारः इत्यर्थे पयस् ङस् इत्यस्मात् ''गोपयसोर्यत्'' इति यत्-प्रत्ययेऽनुबन्धलोपे, पयस् ङस् य इति जाते, सुब्लुकि, स्वादिकार्ये 'पयस्यम्' इति रूपं सिद्धम्।

## ॥ अभ्यासः ॥

### वस्तुनिष्ठात्मकप्रश्नाः –

1. अवयवे चेति सूत्रेण प्रत्ययः कस्मिन्नर्थे भवति?

   (क) अवयवेऽर्थे (ख) विकारेऽर्थे

   (ग) विकारावयवयोः (घ) द्वयोरपि न

2. आम्रमयम् इत्यत्र मयड् भवति –

   (क) शरादित्वात् (ख) वृद्धसञ्ज्ञकत्वात्

   (ग) वृद्धशरादित्वात् (घ) सर्वस्मात्

3. गव्यम् इत्यस्य विग्रहवाक्यम् अस्ति –

   (क) गोः पुरीषम् (ख) गोर्विकारोऽवयवो वा

   (ग) गोरपत्यादि (घ) खगौ

### अतिलघूत्तरात्मकप्रश्नाः –

4. अश्मनः विकारो भवति –
5. 'भास्मनः' इत्यस्य विग्रहवाक्यं किम्?
6. मार्तिकः इत्यत्र कः प्रत्ययः केन भवति?
7. 'अवयवे च प्राण्योषधिवृक्षेभ्य' इदं किम्विधं सूत्रम्?
8. अश्ममयम् इत्यत्र कः प्रत्ययः केन भवति?
9. मयडिति टित्करणं किमर्थम्?

**लघूत्तरात्मकप्रश्नाः –**

10. 'मायूरः' इत्यत्र सविग्रहं ससूत्रं प्रत्ययनिर्देशः कर्त्तव्यः?
11. अवयवे च प्राण्योषधिवृक्षेभ्य इति सूत्रं सोदाहरणं व्याख्यायताम्।
12. मयड्वैतयोरिति सूत्रं प्रपूर्य सोदाहरणमर्थं लिखत।

### निबन्धात्मकप्रश्नाः –

13. अधोलिखितानां प्रयोगाणां ससूत्रं सिद्धिः कार्या।

    आश्मः, भास्मनः, मौवम्, पैप्पलम्, आश्मनम्, गोमयम्, शरमयम्, गव्यम्।

14. अधोलिखित सूत्राणां सोदाहरणं व्याख्या कार्या।

    1. नित्यंवृद्धशरादिभ्यः
    2. गोश्च पुरीषे
    3. तस्य विकारः

15. प्रकरणस्थ–सूत्राणां वार्तिकानाञ्च निम्नप्रारूपानुसारं सारणी निर्मेया।

| सूत्रम्/वार्तिकम् | सूत्रार्थः/वार्तिकार्थः | उदाहरणम् |
| --- | --- | --- |

## अथ ठगधिकारः ( प्राग्वहतीय-प्रकरणम् )

1116. **प्राग्वहतेष्ठक् ( 4-4-1 ) ॥अधिकारसूत्रम् ॥**
तद् वहति. इत्यतः प्राक् ठग् अधिक्रियते।

1117. **तेन दीव्यति खनति जयति जितम् ( 4-4-2 ) ॥विधिसूत्रम् ॥**
अक्षैर्दीव्यति खनति जयति जितं वा - आक्षिकः।

1118. **संस्कृतम् ( 4-4-3 ) ॥विधिसूत्रम् ॥**
दध्ना संस्कृतं दाधिकम्। मारीचिकम्।

---

1116. **प्राग्वहतेरिति** - प्राक्, वहतेः, ठक् इतिच्छेदः। **तद् वहति रथ युग प्रासङ्गम् ( 4-4-76 ) इत्यस्मात् पूर्वं येऽर्थाः अनुक्रमिष्यन्ते, तत्र ठक् इत्यधिकृतः स्यादित्यर्थः।** ठक् इत्यत्र ककार इत्संज्ञकः अकारश्च उच्चारणार्थः, प्रत्ययस्य 'ठ्' एव शिष्यते। ठ् इत्यस्य गतिद्वयं भवति ( 1 ) ठस्येकः ( 2 ) इसुसुक्तान्तात् कः।

1117. **तेन दीव्यतीति** - तेन, दीव्यति ( दिवु क्रीडाविजिगीषा. ) लटि प्रथमपुरुषैकवचने रूपम्, खनति इति खनु अवदारणे लटि प्रथमपुरुषैकवचने रूपम्, जयति इति जि जये लटि प्रथमपुरुषैकवचने रूपम्, जितम् इतिच्छेदः। **करण-तृतीयान्तात् ( तेन ) दीव्यति खनति जयति जितम् इत्येतेषु अर्थेषु ठक्-प्रत्ययः स्यादित्यर्थः।** यथा आक्षिकः।

**रूपसिद्धिः**

**आक्षिकः** - अक्षैर्दीव्यति, अक्षैः खनति, अक्षैः जयति, अक्षैः जितम् इत्याद्यर्थेषु अक्ष भिस् इत्यस्मात् ''प्राग्वहतेष्ठक्'' इत्यधिकारे ''तेन दीव्यति खनति जयति जितम्'' इति सूत्रेण ठक्-प्रत्ययेऽनुबन्धलोपे अक्ष भिस् ठ् इति जाते, सुब्लुकि, ''किति च'' इत्यादिवृद्धौ आक्ष ठ् इति जाते, ''ठस्येकः'' इति 'ठ्' इत्यस्य 'इक' इत्यादेशे आक्ष इक इति जाते, भत्वादकारलोपे स्वादिकार्ये 'आक्षिकः' इति रूपं सिद्धम्।

**अन्योदाहरणान्यथा** -

1. शलाकाभिर्दीव्यति - शालाकिकः ( शलाकाओं से खेलने वाला इति भाषायाम् )।
2. हलेन खनति - हालिकः।
3. प्रमाणैर्दीव्यति ( व्यवहरति ) - प्रामाणिकः।
4. तर्केण दीव्यति ( व्यवहरति ) - तार्किकः।
5. मुद्गरेण जयति - मौद्गरिकः।

देवदत्तेन जितम्, शत्रुणा जितम् इत्यादिषु करणतृतीयाया अभावात् 'ठक्' न भवति।

1118. **संस्कृमिति - तेन संस्कृतमित्यर्थे तृतीयासमर्थात् ठक्-प्रत्ययो भवतीत्यर्थः।** यथा दाधिकम्। सतो गुणाधानं ( तदुत्कृष्टकरणम् ) संस्कारः।

**रूपसिद्धिः**

**दाधिकम्** - दध्ना संस्कृतम् इत्यर्थे दधि टा इत्यस्मात् ''संस्कृतम्'' इति सूत्रेण ठक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, दधि ठ् इति जाते, ''किति च'' इति आदिवृद्धौ, ''ठस्येकः'' 'ठ्' इत्यस्य इकादेशे दाधि इक इति जाते, ''यचिभम्'' इति भसञ्ज्ञायां, ''यस्येति च'' इति इकारलोपे, विशेषानुसारं विभक्तिकार्ये 'दाधिकम्' ( भक्तम् ) इति रूपं सिद्धम्।
**मारीचिकम्** - मरीचैः संस्कृतम् ( भक्तम् ) इत्यर्थे 'मरीच भिस्' इत्यस्मात् ''संस्कृतम्'' इति ठकि, अनुबन्धलोपे मरीच भिस् ठ् इति जाते, सुब्लुकि, ठस्य इकादेशे, आदिवृद्धौ, मारीच इक इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'मारीचिकम्' इति रूपं सिद्धम्। एवमेव शुण्ठ्या संस्कृतः-शौण्ठिकः। शर्करया संस्कृतम्-शार्करिकम् ( दुग्धम् )। कर्मभिः संस्कृतः - कार्मिकः ( द्विजः )। विद्यया संस्कृतः वैद्यिकः इत्यादयः।

**1119. तरति ( 4-4-5 ) ॥विधिसूत्रम् ॥**

तेनेत्येव। उडुपेन तरति औडुपिकः।

**1120. चरति ( 4-4-8 ) ॥विधिसूत्रम् ॥**

तृतीयान्ताद् 'गच्छति, भक्षयति' इत्यर्थयोष्ठक् स्यात्। हस्तिना चरति-हास्तिकः। दध्ना चरति-दाधिकः।

**1121. संसृष्टे ( 4-4-22 ) ॥विधिसूत्रम् ॥** दध्ना संसृष्टं दाधिकम्।

**1122. उञ्छति ( 4-4-32 ) ॥विधिसूत्रम् ॥** बदराण्युञ्छतीति बादरिकः।

---

1119. **तरतीति - तेन तरतीत्यर्थे तृतीयान्तात् ठक् स्यादित्यर्थः।** यथा औडुपिकः। उडुपः = लघुनौका।

**रूपसिद्धिः**

**औडुपिकः** - उडुपेन तरतीत्यर्थे 'उडुप टा' इत्यस्मात् ''तरति'' इति सूत्रेण ठक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, ठस्येकादेशे, ''यस्येति च'' इति भस्य अकारस्य लोपे, स्वादिकार्ये 'औडुपिकः' इति रूपं सिद्धम्। नावा तरति नाविकः। घटेन तरति घटिकः इत्यादयोऽपि एवमेव बोद्धव्याः।

1120. **चरतीति - तेन चरतीत्यर्थे ठक्-स्यादित्यर्थः।** यथा हास्तिकः।

**रूपसिद्धिः**

**हास्तिकः** - हस्तिना चरति (गच्छति) इत्यर्थे 'हस्तिन् टा' इत्यस्मात् ''चरति'' इति सूत्रेण ठक्-प्रत्ययेऽनुबन्धलोपे, हस्तिन् टा ठ् इति जाते, सुब्लुकि, आदिवृद्धौ, ठस्येकादेशे ''नस्तद्धिते'' इति भत्वात् टि (इन्) लोपे, स्वादिकार्ये 'हास्तिकः' इति रूपं सिद्धम्।

**दाधिकः** - दध्ना चरति (भक्षयति) इत्यर्थे 'दधि टा' इत्यस्मात् ''चरति'' इति ठक्-प्रत्ययेऽनुबन्धलोपे, दधि टा ठ् इति जाते, सुब्लुकि, आदिवृद्धौ, दाधि ठ् इति जाते, ''ठस्येकः'' इति ठस्य इकादेशे, भत्वादिकारलोपे 'दाधिक' इति जाते, स्वादिकार्ये 'दाधिकः' इति रूपं सिद्धम्। एवमेव शकटेन चरति (गच्छति) शाकटिकः, विमानेन चरन्ति-वैमानिकाः, व्यवहारेण चरति (आचरति)-व्यावहारिकः, जालेन चरति-जालिकः इत्यादयोऽपि ज्ञातव्या।

**विशेषः** - रथः, अश्वः, पादः एतैः त्रिभिः प्रातिपदिकैः ''पर्पादिभ्यःष्ठन्'' इति ष्ठन् प्रत्ययो भवति। किञ्च पर्पादिगणस्थ-पादस्य पदादेशोऽपि भवति। यथा- रथेन चरति - रथिकः। अश्वेन चरति - अश्विकः। पादाभ्यां चरति-पदिकः।

1121. **संसृष्ट इति** - संसृष्टम् एकीभूतम् अभिन्नमिति काशिका। मिश्रितं संसृष्टमुच्यते। यथा लवणं सूपे एकीभूतं भवति। **तृतीयासमर्थात् संसृष्टेऽर्थे ठक् स्यादित्यर्थः।** संस्कृत संसृष्टयोः भेदो भवति। यदा कस्यचिद् द्रव्यस्य गुणाधानं क्रियते तदा संस्कृतम् उच्यते। संसृष्टे तु केवलं संसर्गमात्रमभीष्टम्। यथा दध्ना संसृष्टं दाधिकम्।

**रूपसिद्धिः**

**दाधिकम्** - दध्ना संसृष्टम् इत्यर्थे 'दधि टा' इत्यास्मात् ''संसृष्टे'' इति ठक्-प्रत्ययेऽनुबन्धलोपे दधि टा ठ् इति जाते, सुब्लुकि, ''किति च'' इत्यादिवृद्धौ, ठस्येकादेशे, भसञ्ज्ञायामिकारलोपे, स्वादिकार्ये 'दाधिकम्' इति रूपं सिद्धम्। एवमेव मरीचैः संसृष्टम्-मारीचिकम्, तिलैः संसृष्टाः तैलिकाः (तण्डुलाः), मधुना संसृष्टं माधुकं पयः, शृङ्गवेरेण संसृष्टं शार्ङ्गवेरिकम् इत्यादयोऽपि बोद्धव्याः।

1122. **उञ्छतीति** - कणशः सङ्ग्रहः उञ्छः। **द्वितीयान्तसमर्थात् उञ्छतीत्यर्थे ठक्-स्यादित्यर्थः।** यथा - बदराणि उञ्छति इति बादरिकः।

**रूपसिद्धिः**

**बादरिकः** - बदराणि उञ्छतीत्यर्थे 'बदर शस्' इत्यस्मात् ''उञ्छति'' इति सूत्रेण ठक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, ठस्येकादेशे, भसञ्ज्ञायामकारलोपे, स्वादिकार्ये 'बादरिकः' इति रूपम्। एवमेव कणान्नुञ्छति - 'काणिकः', नीवारान् उञ्छति-नैवारिकः, शाकान् उञ्छति - 'शाकिकः', व्रीहीन् उञ्छति - 'व्रैहिकः', गोधूमान् उञ्छति - 'गौधूमिकः' इत्यादयोऽपि ज्ञातव्याः।

1123. **रक्षति ( 4-4-33 ) ॥ विधिसूत्रम् ॥** समाजं रक्षतीति सामाजिकः।

1124. **शब्ददर्दुरं करोति ( 4-4-34 ) ॥ विधिसूत्रम् ॥**

शब्दं करोति - शाब्दिकः। दर्दुरं करोति - दार्दुरिकः।

1125. **धर्मं चरति ( 4-4-41 ) ॥ विधिसूत्रम् ॥** धर्मं चरति - धार्मिकः।

वा. **अधर्माच्चेति वक्तव्यम्।** अधर्मं चरति - आधर्मिकः।

1126. **शिल्पम् ( 4-4-55 ) ॥ विधिसूत्रम् ॥** मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः।

---

1123. **रक्षतीति - द्वितीयान्त-प्रातिपदिकात् रक्षतीत्यर्थे ठक्-प्रत्ययो भवतीत्यर्थः।** यथा समाजं रक्षति इति सामाजिकः। 'रक्ष पालने' (भ्वा. परस्मै.) इत्यस्य लटि प्रथमपुरुषैकवचने रूपमिदम्।

**रूपसिद्धिः**

**सामाजिकः** - समाजं रक्षतीत्यर्थे 'समाज अम्' इत्यस्मात् ''रक्षति'' इति सूत्रेण ठक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, ठस्येकादेशे, भसञ्ज्ञायामकारलोपे, स्वादिकार्ये 'सामाजिकः' इति रूपं सिद्धम्। एवमेव सन्निवेशं (नगराद् बहिः भ्रमणाय क्रीडनाय च क्षेत्रम्) रक्षति - सान्निवेशिकः। मण्डलं रक्षति-माण्डलिकः। नगरं रक्षति-नागरिकः। ग्रामं रक्षति-ग्रामिकः। कुटुम्बं रक्षति-कौटुम्बिकः इत्यादयोऽपि बोद्धव्याः।

1124. **शब्ददुरमिति** - शब्ददर्दुरम्, करोति इतिच्छेदः। शब्दश्च दर्दुरश्चानयोः समाहारः शब्ददर्दुरम्, समाहारद्वन्द्वः। तत् (द्वि.ए.) = शब्ददर्दुरम्। **शब्ददर्दुरम् = द्वितीयान्ताभ्यां शब्ददर्दुरप्रातिपदिकाभ्यां करोतीत्यर्थे ठक्स्यादित्यर्थः।** यथा शाब्दिकः, दार्दुरिकः (दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः)।

**रूपसिद्धिः**

**शाब्दिकः** - शब्दं करोति (प्रकृतिप्रत्ययविभागपरिकल्पनया व्युत्पादयति) इत्यर्थे 'शब्द अम्' इत्यस्मात् ''शब्ददर्दुरं करोति'' इति ठक्-प्रत्ययेऽनुबन्धलोपे, ''किति च'' इत्यादिवृद्धौ, ठस्येकादेशे भत्वादकारलोपे, स्वादिकार्ये 'शाब्दिकः' इति रूपं सिद्धम्।

**दार्दुरिकः** - दर्दुरं करोति (मृत्पात्रविशेषं करोति इति दार्दुरिकः कुलालः) इत्यर्थे 'दर्दुर अम्' इत्यास्मात् ठक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, ठस्येकादेशे, भत्वादकारलोपे, स्वादिकार्ये 'दार्दुरिकः' इति रूपं सिद्धम्।

1125. **धर्मं चरतीति - धर्मं चरतीत्यर्थे ( द्वितीयान्तधर्मशब्दात् ) ठक् स्यात्।** यथा - धर्मं चरति (आचरति) धार्मिकः।

**रूपसिद्धिः**

**धार्मिकः** - धर्मं चरतीत्यर्थे 'धर्म अम्' इत्यस्मात् ''धर्मं चरति'' इति ठक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, ठस्येकादेशे, भत्वादकारलोपे, स्वादिकार्ये ''धार्मिकः'' इति रूपं सिद्धम्। स्त्रीत्वे ''टिड्ढाणञ्.'' इति ङीपि 'धार्मिकी' कन्या इति।

वा. अधर्माच्चेति - **अधर्मं चरतीत्यर्थेऽपि ठक् स्यादिति वाच्यम्।** यथा आधर्मिकः।

**रूपसिद्धिः**

**आधर्मिकः** - अधर्मं चरतीत्यर्थे 'अधर्म अम्' इत्यस्मात् ''अधर्माच्चेति वक्तव्यम्'' इति ठक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, ठस्येकादेशे, भत्वादकारलोपे स्वादिकार्ये 'आधर्मिकः' इति रूपं सिद्धम्।

1126. **शिल्पम् इति - प्रथमान्तसमर्थात् 'तद् अस्य शिल्पम्' इत्यर्थे ठक्-स्यादित्यर्थः।** कस्याञ्चित् क्रियायाम् अभ्यासपूर्वकं नैपुण्यं विशेष-ज्ञानप्रापणं वा 'शिल्पम्' उच्यते। यथा मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः।

**रूपसिद्धिः**

**मार्दङ्गिकः** - मृदङ्गवादनं शिल्पमस्येत्यर्थे 'मृदङ्ग सु' इत्यस्मात् ''शिल्पम्'' इति सूत्रेण ठक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, ''उरण् रपरः'' इति रपरत्वे, ठस्येकादेशे भत्वादलोपे मार्दङ्गिक इति जाते, स्वादिकार्ये 'मार्दङ्गिकः' इति रूपं सिद्धम्। एवमेव वीणावादनं शिल्पमस्य वैणिकः, पणववादनं (लघु ढोलक इति भाषायाम्) शिल्पमस्य-पाणविकः, मुरजवादनं (मृदङ्ग, तबला इति भाषायाम्) शिल्पमस्य-मौरजिकः, घण्टावादनं शिल्पमस्य घाण्टिकः इत्यादयोऽपि बोद्धव्याः।

**1127. प्रहरणम् ( 4-4-57 ) ॥विधिसूत्रम् ॥**

तदस्येत्येव। असिः प्रहरणमस्य - आसिकः। धानुष्कः।

**1128. शीलम् ( 4-4-61 ) ॥विधिसूत्रम् ॥**

अपूपभक्षणं शीलमस्य आपूपिकः।

**1129. निकटे वसति ( 4-4-73 ) ॥विधिसूत्रम् ॥**

नैकटिको भिक्षुः।

**इति ठगधिकारः**

---

1127. **प्रहरणमिति** - प्रह्रियतेऽनेनेति प्रहरणम् अर्थात् येन प्रहारः क्रियते तत् प्रहरणम्। **तद् अस्य प्रहरणम् इत्यर्थे प्रथमान्तात् ठक्-प्रत्ययो भवतीत्यर्थः।** खड्गधनुरादयः प्रहरणमित्युच्यन्ते। यथा असिः प्रहरणम् अस्य-आसिकः। धनुः प्रहरणमस्य-धानुष्कः।

**रूपसिद्धिः**

**आसिकः** - असिः (खड्गः) प्रहरणमस्येत्यर्थे 'असि सु' इत्यस्मात् ''प्रहरणम्'' इति ठक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, ठस्येकादेशे, भत्वादिकारलोपे, स्वादिकार्ये 'आसिकः' इति रूपं सिद्धम्।

**धानुष्कः** - धनुः प्रहरणमस्येत्यर्थे 'धनुष् सु' इत्यस्मात् ''प्रहरणम्'' इति ठक्-प्रत्ययेऽनुबन्धलोपे धनुष् सु ठ् इति जाते, सुब्लुकि, आदिवृद्धौ, धानुष् ठ् इति जाते, ''इसुसुक्तान्तात्कः'' इति ठस्य कादेशे धानुष् क इति जाते, ''स्वादिष्वसर्वनामस्थाने'' इति पदसञ्ज्ञायां, ''ससजुषो रुः'' इति सस्य रुत्वेऽनुबन्धलोपे, ''खरवसानयोर्विसर्जनीयः'' इति रेफस्य विसर्गे 'धानुः क' इति जाते, 'सोऽपदादौ' इति विसर्गस्य सत्वं प्रबाध्य ''इणः षः'' इति विसर्गस्य षत्वे, स्वादिकार्ये 'धानुष्कः' इति रूपं सिद्धम्। एवमेव चक्रं प्रहरणमस्य - चाक्रिकः। प्रासः ('भाला' इति भाषायाम्) प्रहरणमस्य - प्रासिकः। पाशः प्रहरणम् अस्य (जालः पञ्जरो वा) - पाशिकः। मुष्टिः प्रहरणम् अस्य-मौष्टिकः। दण्डः प्रहरणमस्य - दाण्डिकः। भुशुण्डी प्रहरणम् अस्य ('बन्दूक' इति भाषायाम्) - भौशुण्डिकः। शतघ्नी ('तोप' इति भाषायाम्) प्रहरणमस्य - शातघ्निकः। शक्तिः प्रहरणम् अस्य - शाक्तीकः (शक्तियष्ट्योरीकक्), यष्टिः प्रहरणमस्य-याष्टीकः (शक्तियष्ट्योरीकक्)। इत्यादयोऽपि प्रयोगाः बोद्धव्याः।

1128. **शीलमिति** - शीलं प्राणिनां स्वभावः। फलनिरपेक्षा वृत्तिः। **तदस्य शीलमित्यर्थे प्रथमान्तात् ठक् प्रत्ययः स्यादित्यर्थः।** यथा - आपूपिकः।

**रूपसिद्धिः**

**आपूपिकः** - अपूपभक्षणं शीलमस्येत्यर्थे 'अपूप सु' इत्यस्मात् ''शीलम्'' इति सूत्रेण ठक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, ठस्येकादेशे, भत्वाद् ''यस्येति च'' इत्यकारलोपे, स्वादिकार्ये 'आपूपिकः' इति रूपं सिद्धम्। एवमेव मोदकभक्षणं शीलमस्य मौदकिकः, ताम्बूलचर्वणं शीलमस्य ताम्बूलिकः, करुणा शीलमस्य कारुणिकः, सक्तुभक्षणं शीलमस्य साक्तुकः इत्यादयोऽपि बोद्धव्याः।

1129. **निकटे वसतीति - सप्तमीसमर्थात् निकटशब्दात् वसतीत्यर्थे ठक्-स्यादित्यर्थः।** यथा नैकटिकः भिक्षुः।

**रूपसिद्धिः**

**नैकटिकः** - ग्रामात्क्रोशे वसेन्नित्यं भिक्षुरारण्यको यमी इति शास्त्रीयनियममुल्लङ्घ्य यो भिक्षु निकटे वसति (योगाभ्यासनिमित्तम्) स नैकटिकः। निकटे वसतीत्यर्थे 'निकट ङि' इत्यस्मात् ''निकटे वसति'' इति ठक् प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, ठस्येकादेशे, भत्वादकारलोपे स्वादिकार्ये 'नैकटिकः' इति रूपं सिद्धम्।

**इति ठगधिकार-प्रकरणम्**

## ॥ अभ्यासः ॥

**वस्तुनिष्ठात्मकप्रश्नाः –**

1. 'आक्षिकः' इत्यत्र कस्मिन्नर्थे ठक्-प्रत्ययः?
   (क) दीव्यत्यर्थे (ख) खनतीत्यर्थे
   (ग) जयतीत्यर्थे (घ) सर्वेषु
2. 'दघ्ना संस्कृतं' भवति –
   (क) दाधिकः (ख) दाधिकम्
   (ग) कखौ (घ) कोऽपि न
3. अधर्मं चरति –
   (क) अधार्मिकः (ख) आधर्मिकः
   (ग) कखौ (घ) कोऽपि न

**अतिलघूत्तरात्मकप्रश्ना :-**

4. 'मारीचिकम्' इत्यत्र कस्मिन्नर्थे कः प्रत्ययः?
5. 'औडुपिकः' इत्यत्र केन कः प्रत्ययः?
6. 'चरति' इत्यस्य कोऽर्थः?
7. 'हस्तिना चरति' इत्यत्र चरतीत्यस्य कोऽर्थः?
8. 'संस्कृतम्' इत्यस्य कोऽर्थः?
9. उञ्छः कः?
10. 'दध्ना संसृष्टं किं' भवति?
11. 'सामाजिकः' इत्यत्र कस्मिन्नर्थे ठक्-प्रत्ययः?
12. शब्दं करोतीति उच्यते –
13. प्रथमासमर्थात् 'तद् अस्य शिल्पम्' इत्यर्थे कः प्रत्ययः?
14. धनुः प्रहरणमस्य भवति –
15. 'नैकटिकः' इत्यस्य कोऽर्थः?

**लघूत्तरात्मकप्रश्नाः –**

16. तेन दीव्यतीति सूत्रं प्रपूर्य अर्थं लिखत।
17. संस्कृतसंसृष्टयोरर्थभेदं स्पष्टयत।
18. शब्ददर्दुरं करोति इत्यस्य सोदाहरणमर्थं लिखत।

**निबन्धात्मकप्रश्नाः –**

19. अधोलिखितानां प्रयोगाणां ससूत्रं सिद्धिः कार्या।
    आक्षिकः, दध्नासंस्कृतं दाधिकम्, औडुपिकः, हास्तिकः, बादरिकः, सामाजिकः, शाब्दिकः, धार्मिकः, मार्दङ्गिकः, आसिकः, आपूपिकः, नैकटिकः।
20. अधोलिखितानां सूत्राणां सोदाहरणं व्याख्या कार्या। तरति, चरति, संसृष्टे, उञ्छति, रक्षति, शब्ददर्दुरं करोति, धर्मं चरति, शीलम्।
21. प्रकरणस्थ-सूत्राणां वार्तिकानां च निम्नप्रारूपानुरूपं सारणी लेख्या।
    सूत्रम्/वार्तिकम् सूत्रार्थः/वार्तिकार्थः उदाहरणम्

## अथ यदधिकारः ( प्राग्घितीय-प्रकरणम् )

**1130. प्राग्घिताद् यत् ( 4-4-75 ) ॥अधिकारसूत्रम् ॥**

तस्मै हितम् (5-1-5) इत्यतः प्राग् यदधिक्रियते।

**1131. तद् वहति रथ-युग-प्रासङ्गम् ( 4-4-76 ) ॥विधिसूत्रम् ॥**

रथं वहति रथ्यः। युग्यः। प्रासङ्ग्यः।

**1132. धुरो यड्ढकौ ( 4-4-77 ) ॥विधिसूत्रम् ॥**

'हलि च' इति दीर्घे प्राप्ते –

**1133. न भ-कुर्छुराम् ( 8-2-79 ) ॥विधिसूत्रम् ॥**

भस्य कुर्छुरोरुपधाया दीर्घो न स्यात्। धुर्यः। धौरेयः।

---

1130. **प्राग्घितादिति** – प्राक् (अव्ययम्), हितात्, यत् इतिच्छेदः। 'तस्मै हितम्' इति सूत्रात् पूर्वं यत्प्रत्ययस्य अधिकारोऽस्ति। 'यत्' इत्यत्र तकारानुबन्धः ''यतोऽनावः'' इत्याद्युदात्तस्वरार्थं ''तित्स्वरितम्'' इति स्वरितस्वरार्थञ्च योजितः।

1131. **तद्वहतीति** – तत् (द्वितीयान्तम्), वहति ('वह प्रापणे' लटि प्रथमपुरुषैकवचने रूपम्), रथ-युग-प्रासङ्गम् (रथ-युग-प्रासङ्गशब्दानां समाहारद्वन्द्वात् परे पञ्चम्याः सौत्रः लुक्) इतिच्छेदः। **द्वितीयान्तसमर्थेभ्यः रथयुगप्रासङ्ग इति शब्देभ्यो 'वहति' इत्यर्थे यत्प्रत्ययः स्यादित्यर्थः।** यथा रथ्यः।

**रूपसिद्धिः**

**रथ्यः** – 'रथं वहति' इत्यर्थे 'रथ अम्' इत्यस्मात् ''प्राग्घिताद्यत्'' इत्यधिकारे, ''तद्वहति रथयुगप्रासङ्गम्'' इति यत्प्रत्ययेऽनुबन्धलोपे, रथ अम् य इति जाते, ''यस्येति च'' इति अकारलोपे, स्वादिकार्ये 'रथ्यः' इति रूपं सिद्धम्।

**युग्यः** – युगं वहतीत्यर्थे 'युग अम्' इत्यस्मात् यत्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, भत्वादकारलोपे युग्य इति जाते, स्वादिकार्ये 'युग्यः' इति रूपं सिद्धम्।

**प्रासङ्ग्यः** – प्रासङ्गं वहतीत्यर्थे ('बैलों के लिये जुआ' इति भाषायाम्) 'प्रासङ्ग अम्' इत्यस्मात् यत्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वादकारलोपे, स्वादिकार्ये ''प्रासङ्ग्यः'' इति रूपं सिद्धम्।

1132. **धुरो यदिति** – धुरः, यड्ढकौ इतिच्छेदः। यत् च ढक् च यड्ढकौ, इतरेतरद्वन्द्वः। **द्वितीयान्ताद् धुर्शब्दात् 'वहति' इत्यर्थे यत् ढक् च प्रत्ययौ भवतः।** यथा धुर्यः, धौरेयः। तत्र धुर इत्यस्मात् यति धुर् य इत्यवस्थायां 'हलि च' इति दीर्घे प्राप्ते –

1133. **न भ-कुर्छुरामिति** – न (इत्यव्ययम्), भ-कुर्-छुराम् इतिच्छेदः। भ च कुर् च छुर् च भकुर्छुरः, तेषाम् = भकुर्छुराम्, इतरेतरद्वन्द्वः। भसञ्ज्ञकस्य कुर्-छुर् इत्यनयोश्च उपधाया दीर्घो न भवतीत्यर्थः। यथा – धुर्यः।

**रूपसिद्धिः**

**धुर्यः** – धुरं वहति (युग (जुआ) का वह भाग जो पशु के कन्धे पर डाला जाता है 'धुर्' इत्युच्यते) इत्यर्थे 'धुर् अम्' इत्यस्मात् ''धुरो यड्ढकौ'' इति यत्-प्रत्ययेऽनुबन्धलोपे, धुर् अम् य इति जाते, प्रातिपदिकत्वात्सुपो लुकि, धुर् य इति जाते, ''हलि च'' इति सूत्रेण रेफस्योपधादीर्घे प्राप्ते, ''यचि भम्'' इति सञ्ज्ञायां ''न भ-कुर्छुराम्'' इति सूत्रेण दीर्घस्य निषेधे, धुर् य इति जाते, जलतुम्बिकान्यायेन रेफस्योर्ध्वगमने, स्वादिकार्ये 'धुर्यः' इति रूपं सिद्धम्।

**धौरेयः** – धुरं वहतीत्यर्थे 'धुर् अम्' इत्यस्मात् ''धुरो यड्ढकौ'' इति ढक्-प्रत्ययेऽनुबन्धलोपे धुर् अम् ढ इति जाते, प्रातिपदिकत्वात् सुपो लुकि, ''किति च'' इत्यादिवृद्धौ, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति सूत्रेण ढस्य एयादेशे (ढ् – एय्), स्वादिकार्ये 'धौरेयः' इति रूपं सिद्धम्। धुरं वोढा पशुः सदा रथादीनाम् अग्रे एव भवति। इति सादृश्यात् धुर्यादिशब्दानाम् अग्रः मुख्यः, प्रधानः, श्रेष्ठ इत्याद्यर्थेष्वपि लाक्षणिकाः प्रयोगाः, दृश्यन्ते यथा पण्डितधुर्यः, विद्वद्धौरेयः इत्यादयः। धुर्वहे धुर्य-धौरेय-धुरीणाः सधुरन्धराः इत्यमरः।

**1134. नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्यस्तार्य-तुल्य-प्राप्य-वध्याऽऽनाम्य-सम-समित-सम्मितेषु ( 4-4-91 ) ॥विधिसूत्रम् ॥**

नावा तार्यं नाव्यम्। वयसा तुल्यो वयस्यः। धर्मेण प्राप्यं धर्म्यम्। विषेण वध्यो विष्यः। मूलेन आनाम्यं मूल्यम्। मूलेन समो मूल्यः। सीतया समितं सीत्यम् क्षेत्रम्। तुलया सम्मितं तुल्यम्।

---

1134. **नौवयोघर्मेति** - नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्यः, तार्य-तुल्य-प्राप्य-वध्याऽऽनाम्य-सम-समित-सम्मितेषु इतिच्छेदः। **नौवयो-धर्मविषमूलमूलसीतातुलाभ्यस्तृतीयान्तेभ्यः समर्थ-प्रातिपदिकेभ्यः तार्य-तुल्यप्राप्य-वध्याऽऽनाम्य-समसमितसम्मितेषु अर्थेषु यत्प्रत्ययः स्यादित्यर्थः।** यथा नावा तार्यं नाव्यमित्यादयः। एतेषां कोष्ठकं यथा -

| | **शब्दाः** | **अर्थाः** | **विग्रहाः** | **प्रत्ययाः** | **उदाहरणानि** |
|---|---|---|---|---|---|
| 1. | नौ (नौका) | तार्य | नावा तार्यम् | यत् | नाव्यम् |
| 2. | वयस् (आयुः) | तुल्य | वयसा तुल्यः | यत् | वयस्यः |
| 3. | धर्म | प्राप्य | धर्मेण प्राप्यम् | यत् | धर्म्यम् |
| 4. | विष | वध्य | विषेण वध्यः | यत् | विष्यः |
| 5. | मूल | आनाम्य | मूलेन आनाम्यम् | यत् | मूल्यम् |
| 6. | मूल | सम | मूलेन समः | यत् | मूल्यः |
| 7. | सीता | समित | सीतया समितम् | यत् | सीत्यम् |
| 8. | तुला | सम्मित | तुलया सम्मितम् | यत् | तुल्यम् |

**रूपसिद्धिः**

**नाव्यम्** - नावा तार्यम् इत्यर्थे (नाव्यं जलम्) 'नौ टा' इत्यस्मात् ''नौवयो-धर्म. इत्यादिना सूत्रेण 'तार्य' इत्यर्थे यत्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुपो लुकि, ''वान्तो यि प्रत्यये'' इति औकारस्य आवादेशे 'नाव्य' इति जाते, स्वादिकार्ये 'नाव्यम्' इति रूपं सिद्धम्। नाव्यं त्रिलिङ्गं नौ तार्यम् इत्यमरः।

**वयस्यः** - वयसा तुल्य इत्यर्थे (समवयस्क-मित्रम्), 'वयस् टा' इत्यस्मात् तुल्यार्थे ''नौवयोधर्म.'' इत्यादिना यत्-प्रत्ययेऽनुबन्धलोपे, सुपो लुकि, स्वादिकार्ये 'वयस्यः' इति रूपं सिद्धम्।

**धर्म्यम्** - धर्मेण प्राप्यम् (सुखं, स्वर्गादिकम्) इत्यर्थे 'धर्म टा' इत्यस्मात् ''नौवयोधर्म.'' इत्यादिना सूत्रेण यत्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वादकारलोपे, स्वादिकार्ये 'धर्म्यम्' इति रूपं सिद्धम्।

**विष्यः** - विषेण वध्यः (वधयोग्यः) इत्यर्थे 'विष टा' इत्यस्मात् ''नौवयोधर्म.'' इत्यादिना यत्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वादकारलोपे, स्वादिकार्ये, 'विष्यः' इति रूपं सिद्धम्।

**मूल्यम्** - मूलेन आनाम्यम् (आनाम्य = अभिभवनीय = प्राप्तुं योग्यः लाभः) इत्यर्थे 'मूल टा' इत्यस्मात् ''नौवयोधर्म.'' इत्यादिना यत्प्रत्येऽनुबन्धलोपे, सुब्लुकि, मूल य इति जाते, भत्वादकारलोपे स्वादिकार्ये 'मूल्यम्' इति रूपं सिद्धम्।

**मूल्यः** - मूलेन समः (मूल अर्थात् स्वोपादानकारण-तन्त्वादिना सदृशः पटादिपदार्थः मूल्यः) इत्यर्थे 'मूल टा' इत्यस्मात् यत्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वादकारलोपे, स्वादिकार्ये 'मूल्यः' इति रूपं सिद्धम्।

**सीत्यं ( क्षेत्रम् )** - सीतया समितम् (हलाग्रेण समकृतं क्षेत्रम्) इत्यर्थे यत्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वाद् ''यस्येति च'' इत्याकारलोपे, स्वादिकार्ये 'सीत्यम्' इति रूपं सिद्धम्। सीता लाङ्गलपद्धतिः इत्यमरः।

**तुल्यम्** - तुलया सम्मितम् (तुला (तराजू) द्वारा परिच्छिन्नः (तोला गया)) 'तुला टा' इत्यस्मात् सम्मितार्थे यत्प्रत्येऽनुबन्धलोपे, सुब्लुकि, भत्वाद् आकारलोपे, स्वादिकार्ये 'तुल्यम्' इति रूपं सिद्धम्।

**1135. तत्र साधुः ( 4-4-95 ) ॥ विधिसूत्रम् ॥**

अग्रे साधुः अग्र्यः। सामसु साधुः सामन्यः। ये चाभावकर्मणो इति प्रकृति-भावः। कर्मण्यः। शरण्यः।

**1136. सभाया यः ( 4-4-105 ) ॥ विधिसूत्रम् ॥**

सभ्यः।

## इति यदधिकार-प्रकरणं समाप्तम्

---

**1135. तत्र साधुरिति** - तत्र (इत्यव्यम्), साधुः इतिच्छेदः। **सप्तमीसमर्थात् साधुरित्यर्थे यत्प्रत्ययः स्यादित्यर्थः।** यथा अग्र्यः इत्यादि।

**रूपसिद्धिः**

**अग्र्यः** - अग्रे साधुः (साधुः = प्रवीणो योग्यो वा) इत्यर्थे 'अग्र ङि' इत्यस्मात् ''तत्र साधुः'' इति सूत्रेण यत्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, भत्वादकारलोपे, स्वादिकार्ये, 'अग्र्यः' इति रूपं सिद्धम्।

**सामन्यः** - सामसु साधुः (सामगाने प्रवीणः) इत्यर्थे 'सामन् सुप्' इत्यस्मात् ''तत्र साधुः'' इति यत्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि सामन् य इति जाते, भत्वाद् ''नस्तद्धिते'' इति टि (अन्) लोपे प्राप्ते, ''ये चाऽभावकर्मणोः'' इति अनः प्रकृतिभावे, स्वादिकार्ये, 'सामन्यः' इति रूपं सिद्धम्।

**कर्मण्यः** - कर्मसु साधुः (कर्मकरणे प्रवीणः) इत्यर्थे 'कर्मन् सुप्' इत्यस्मात् ''तत्र साधुः'' इति यत्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वाद् ''नस्तद्धिते'' इति टिलोपे प्राप्ते, ''ये चाऽभावकर्मणोः'' इति प्रकृतिभावे ''अट्कुप्वाङ्नुम्व्य-वायेऽपि'' इति नस्य णत्वे, स्वादिकार्ये 'कर्मण्यः' इति रूपं सिद्धम्।

**शरण्यः** - शरणे (त्राणे) साधुः इत्यर्थे यत्प्रत्ययेऽनुबन्धलोपे, भत्वाद् अकारलोपे, स्वादिकार्ये 'शरण्यः' इति रूपं सिद्धम्।

**1136. सभाया य इति** - सभायाः, यः इतिच्छेदः। **सप्तम्यन्तात् सभाशब्दात् साधुरित्यर्थे यप्रत्ययः स्यादित्यर्थः।** यथा सभ्यः।

**रूपसिद्धिः**

**सभ्यः** - सभायां साधुः इत्यर्थे 'सभा ङि' इत्यस्मात् साधुरर्थे ''सभायाः यः'' इति सूत्रेण यप्रत्यये, भत्वादाकारलोपे, स्वादिकार्ये 'सभ्यः' इति रूपं सिद्धम्।

## ॥ अभ्यासः ॥

**वस्तुनिष्ठात्मकप्रश्नाः –**

1. यत्प्रत्ययान्तं पदमस्ति –

   (क) रथ्यः (ख) वयस्यः

   (ग) अग्र्यः (घ) त्रीण्यपि

2. मूलेन आनाम्यम् –

   (क) मूल्यः (ख) मूल्यम्

   (ग) कखौ (घ) कोऽपि न

3. नौवयोधर्म. इत्यादिना कस्मिन्नर्थे यत्प्रत्ययो विधीयते?

   (क) तार्यम् इत्यर्थे (ख) तुल्यार्थे

   (ग) सम्मितार्थे (घ) सर्वेषु

**अतिलघूत्तरात्मकप्रश्नाः –**

4. रथ्यः इत्यस्य कोऽर्थः?
5. युगं वहति इति किमुच्यते?
6. धुर्यः इति कः प्रत्ययः?
7. धौरेयः इत्यत्र कः प्रत्ययः?
8. सामसु साधुरुच्यते –
9. साधुरित्यस्य कोऽर्थः?

**लघूत्तरात्मकप्रश्नाः –**

10. नौवयोधर्म. इत्यादिसूत्रं पूरयन्तु।
11. धुरो यड्ढकौ इति सूत्रं सोदाहरणं व्याख्यायताम्।
12. तद् वहति रथयुगप्रासङ्गम् इति सूत्रार्थं लिखत।
13. तत्र साधुरित्यस्य सोदाहरणं व्याख्या कार्या।

**निबन्धात्मकप्रश्नाः –**

14. नौवयोधर्मेति सूत्रं सोदाहरणं व्याख्यायताम्।
15. अधोलिखितानां प्रयोगाणां सिद्धिः कार्या।

    प्रासङ्ग्यः, धुर्यः, धौरेयः, नाव्यम्, वयस्यः, सीत्यम्, अग्र्यः, सभ्यः।

16. प्रकरणस्थ–सूत्राणां पूर्ववत्सारणी कर्त्तव्या।

## अथ छयतोरधिकारः

**1137. प्राक्क्रीताच्छः ( 5-1-1 ) ॥अधिकारसूत्रम् ॥**

तेन क्रीतम् ( 1144 ) इत्यतः प्राक् छोऽधिक्रियते।

**1138. उगवादिभ्यो यत् ( 5-1-2 ) ॥अधिकारसूत्रम् ॥**

प्राक् क्रीतादित्येव। **उवर्णान्ताद् गवादिभ्यश्च यत् स्यात्।** छस्यापवादः। शङ्कवे हितं शङ्कव्यं दारु। गव्यम्।

**वा. नाभि नभञ्च।** नभ्यः अक्षः। नभ्यम् अञ्जनम्।

---

1137. **प्राक्क्रीतादिति** - तेन क्रीतमिति सूत्रं वक्ष्यते, ततः पूर्वं येषु सूत्रेषु अथनिर्देशोऽस्ति, न तु प्रत्ययनिर्देशः तत्र छः स्यादित्यर्थः।

1138. **उगवादिभ्य इति** - उगवादिभ्यः, यत् इतिच्छेदः। गोशब्दः आर्दियेषां ते गवादयः, तद्गुणसंविज्ञानबहुव्रीहिः। उश्च गवादयश्च उगवादयः, तेभ्यः = उगवादिभ्यः। इतरेतरद्वन्द्वः। **'तेन क्रीतम्' इत्यर्थे उवर्णान्ताद् गवादिगणपठित-शब्देभ्यः च यत्प्रत्ययो भवतीत्याशयः।** पूर्वोक्त-छप्रत्ययस्यापवादः। यथा शङ्कव्यम्। गव्यम्। गवादिगणो यथा-गो। हविस्। अक्षर। विष। बर्हिस्। अष्टका (इष्टका इति प्रक्रियासर्वस्वे)। स्खदा (स्खद इति काशिकायाम्) युग। मेधा। स्रुच् (स्रज् इति काशिकायाम्)। नाभि नभं च (गणसूत्रम्)। शुनः सम्प्रसारणं वा च दीर्घत्वं तत्सन्नियोगेन चान्तोदात्तत्वम् (गणसूत्रम्)। ऊधसो नङ् च (गणसूत्रम्)। कूप। खद (खट इति काशिकायाम्)। दर (उदर इति काशिकायाम्)। खर। असुर। अध्वन्। क्षर। वेद। बीज। दीप्त (दसि)। स्कद।

**रूपसिद्धिः**

**शङ्कव्यम्** - शङ्कवे हितम् इत्यर्थे (शङ्कु = कीली = खूँटी के लिय उपयोगी इति भाषायाम्) 'शङ्कु ङे' इत्यस्मात् छप्रत्ययं प्रबाध्य ''उगवादिभ्यो यत्'' इति यत्प्रत्ययेऽनुबन्धलोपे शङ्कु ङे य इति जाते, प्रातिपदिकत्वात् सुब्लुकि, ''ओर्गुणः'' इति ओकारे गुणे शङ्को य इति जाते, ''वान्तो यि प्रत्यये'' इति ओकारस्य अवादेशे, स्वादिकार्ये 'शङ्कव्यम्' इति रूपं सिद्धम्।

**गव्यम्** - गोभ्य हितम् इत्यर्थे 'गो भ्यस्' इत्यस्मात् ''तस्मै हितम्'' इति छप्रत्ययं प्रबाध्य ''उगवादिभ्यो यत्'' इति यत्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, ''वान्तो यि प्रत्यये'' इति ओकारस्य अवादेशे, स्वादिकार्ये 'गव्यम्' इति रूपं सिद्धम्।

वा. नाभि नभमिति - नाभि, नभम्, च इतिच्छेदः। **यत्प्रत्यये क्रियमाणे नाभिशब्दस्य 'नभ' इत्यादेशः भवति।** यथा नभ्योऽक्षः। नभ्यम् अञ्जनम् रथादिनाभेः एव गवादिगणे पाठः। शरीरस्थ नाभये हितं 'नाभ्यम्' इति उच्यते।

**रूपसिद्धिः**

**नभ्योऽक्षः** - नाभये हित इत्यर्थे (रथचक्रस्य नाभये हितकरः दण्डः), 'नाभि ङे' इत्यस्मात् 'प्राक्क्रीताच्छः' इति छप्रत्ययं प्रबाध्य ''उगवादिभ्यो यत्'' इति यत्प्रत्ययेऽनुबन्धलोपे ''नाभि नभञ्च'' इति गणसूत्रेण नाभि इत्यस्य नभादेशे नभ य इति जाते, भत्वादकारलोपे, स्वादिकार्ये 'नभ्यः' इति रूपं सिद्धम्।

**नभ्यम् अञ्जनम् ( तैल सिञ्चनम् )** नाभये हितम् इत्यर्थे छं प्रबाध्य यत्प्रत्ययेऽनुबन्धलोपे, नाभेः नभादेशे, भत्वादकारलोपे, स्वादिकार्ये 'नभ्यम्' इति रूपं सिद्धम्।

**उवर्णान्तानामन्योदाहरणानि** -

सक्तुभ्यः हिताः सक्तव्याः धानाः। कमण्डलवे हिताः कमण्डलव्या मृत्। पिचवे (पिचु = रुई इति भाषायाम्) हितः पिचव्यः कर्पासः। परशवे हितं परशव्यम् अयः (लोहः)। चरुभ्यो हिताः चरव्याः (तण्डुलाः) इत्यादयः।

गवादिगणस्यान्योदाहरणानि -

हविषे हितं हविष्यम् आज्यम्। मेधायै हितं मेध्यं चूर्णम्। अध्वने हितम् अध्वन्यं मोदकम्। शुने हितं शुन्यं शून्यं वा एकान्तस्थानम् (श्वन् य इत्यवस्थायां 'शुनः सम्प्रसारण वा च दीर्घत्वम्' इति वस्य उत्वे, पूर्वरूपे, वा दीर्घे च कृते शून्य शुन्यञ्चेति सिध्यतः)। स्रुचे हितं स्रुच्यं काष्ठम् (स्रुच् = स्रुवा) इत्यादयः।

1139. **तस्मै हितम् ( 5-1-5 ) ॥विधिसूत्रम् ॥** वत्सेभ्यो हितो वत्सीयो गोधुक्।
1140. **शरीरावयवाद्यत् ( 5-1-6 ) ॥विधिसूत्रम् ॥** दन्त्यम्। कण्ठ्यम्। नस्यम्।
1141. **आत्मन्-विश्वजन-भोगोत्तरपदात्खः ( 5-1-9 ) ॥विधिसूत्रम् ॥**
1142. **आत्माध्वानौ खे ( 6-4-169 ) ॥विधिसूत्रम् ॥**
एतौ खे प्रकृत्या स्तः। आत्मने हितम् आत्मनीनम्। विश्वजनीनम्। मातृभोगीणः।

---

1139. **तस्मै हितम् इति** - तस्मै, हितम् इतिच्छेदः। **चतुर्थीसमर्थाद् हितम् इत्यर्थे छप्रत्ययः स्यादित्यर्थः।** यथा वत्सीयः। उगवादिभ्य यदेव भविष्यति।

**रूपसिद्धिः**

**वत्सीयः** - वत्सेभ्यो हितः (गोधुक् = ग्वाला) इत्यर्थे 'वत्स भ्यस्' इत्यस्मात् ''तस्मै हितम्'' इति छप्रत्यये, प्रातिपदिकत्वात्सुपो लुकि, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति छस्य ईय् इत्यादेशे (छ् - ईय्), भत्वादकारलोपे, स्वादिकार्ये 'वत्सीयः' इति रूपं सिद्धम्। अन्योदाहरणानि यथा - करभेभ्यो हितः करभीयः उष्ट्रः। मात्रे हितो मात्रीयः पुत्रः। पित्रे हितः पित्रीयः पुत्रः। इत्यादयः।

1140. **शरीरावयवादिति** - शरीरावयवात्, यत् इतिच्छेदः। शरीरस्य अवयवः शरीरावयवः, तस्मात् = शरीरावयवात्। षष्ठीतत्पुरुषः। चतुर्थ्यन्तात् शरीरावयवाद् हितमित्यर्थे यत्प्रत्ययः स्यादित्यर्थः। यथा दन्त्यम् इत्यादि।

**रूपसिद्धिः**

**दन्त्यम्** - दन्तेभ्यो हितम् इत्यर्थे (दन्तफेनादिकम्) 'दन्त भ्यस्' इत्यस्मात् ''शरीरावयवाद्यत्'' इति यत्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वादकारलोपे, स्वादिकार्ये 'दन्त्यम्' इति रूपं सिद्धम्।

**कण्ठ्यम्** - कण्ठाय हितम् इत्यर्थे 'कण्ठ ङे' इत्यस्मात् यत्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वादकारलोपे, स्वादिकार्ये 'कण्ठ्यम्' इति रूपं सिद्धम्।

**नस्यम्** - नासिकायै हितम् इत्यर्थे 'नासिका ङे' इत्यस्मात् यत्प्रत्यये, अनुबन्धलोपे, सुब्लुकि ''नस् नासिकाया यत्-तस्-क्षुद्रेषु'' इति वार्तिकेन 'नासिका' इत्यस्य 'नस्' इत्यादेशे, स्वादिकार्ये 'नस्यम्' इति रूपं सिद्धम्। एवमेव ओष्ठाभ्यां हितम् ओष्ठ्यम्, चक्षुर्भ्यां हितं चक्षुष्यम्, नाभये हितं नाभ्यम्, मूर्ध्ने हितं मूर्धन्यम् इत्यादयोऽपि बोद्धव्याः।

1141. **आत्मन्-विश्वजनेति** - आत्मन्-विश्वजन-भोगोत्तरपदात्, ख इतिच्छेदः। भोगः (भोगशब्दः) उत्तरपदं यस्य स भोगोत्तरपदः, बहुव्रीहिसमासः। आत्मा च विश्वजनश्च भोगोत्तरपदश्चैषां समाहारः - आत्मन्-विश्वजन-भोगोत्तरपदम्, तस्मात् = आत्मन्-विश्वजन-भोगोत्तरपदात्, समाहारद्वन्द्वः। **चतुर्थ्यन्ताद् हितम् इत्यर्थे आत्मन्-विश्वजन इत्याभ्यां शब्दाभ्यां भोगोत्तरपदाच्च खप्रत्ययः स्यादित्यर्थः।** इदं सूत्रम् औत्सर्गिक-छप्रत्ययस्यापवादः।

1442. **आत्माध्वानाविति**- आत्माध्वानौ खे, इतिच्छेदः। आत्मा च अध्वौ च, तौ आत्माध्वानौ, इतरेतरद्वन्द्वः। **आत्मन् अध्वन् इत्येतयोः शब्दयोः प्रकृतिभावः स्यात् खे परे इत्यर्थः।**

**रूपसिद्धिः**

**आत्मनीनम्** - आत्मने हितम् इत्यर्थे 'आत्मन् ङे' इत्यस्मात् ''आत्मन्-विश्वजन-भोगोत्तरपदात्खः'' इति खप्रत्यये, सुब्लुकि, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति खस्य ईनादेशे (ख् - ईन्), ''यचि भम्'' इति भसञ्ज्ञायां, ''नस्तद्धिते'' इति टि (अन्) लोपे प्राप्ते, ''आत्माध्वानौ खे'' इति प्रकृतिभावे, स्वादिकार्ये 'आत्मनीनम्' इति रूपं सिद्धम्।

**विश्वजनीनम्** - विश्वे जनाः - विश्वजनाः, कर्मधारयः। विश्वजनेभ्यो हितम् इत्यर्थे 'विश्वजन भ्यस्' इत्यस्मात् खप्रत्यये, सुब्लुकि, खस्य ईनादेशे, भत्वादकारलोपे, स्वादिकार्ये 'विश्वजनीनम्' इति रूपं सिद्धम्।

**मातृभोगीणः** - मातुर्भोगः (शरीरम्) = मातृभोगः, षष्ठीतत्पुरुषः। मातृभोगाय हितः (आहारः) इत्यर्थे 'मातृभोग ङे' इत्यस्मात् खप्रत्यये, सुब्लुकि, खस्य ईनादेशे मातृभोग ईन् अ इति जाते, भत्वादकारलोपे, ''अट्कुप्वाङ्नुम्व्यवायेऽपि'' इति नस्य णत्वे, स्वादिकार्ये 'मातृभोगीणः' इति रूपं सिद्धम्। एवमेव पितृभोगीणः, राजभोगीनः, आचार्यभोगीनः, स्वभोगीनः इत्यादयोऽपि बोद्धव्याः।

## ॥ अभ्यासः ॥

**वस्तुनिष्ठात्मकप्रश्नाः –**

1. उगवादिभ्यः प्रत्ययो भवति –

(क) छ (ख) यत्

(ग) ख (घ) सर्वे

2. शुने हितं भवति –

(क) शुन्यम् (ख) शून्यम्

(ग) कखौ (घ) कोऽपि न

3. आत्मनीनम् इत्यत्र प्रत्ययोऽस्ति –

(क) ईन (ख) ख

(ग) कखौ (घ) कोऽपि न

**अतिलघूत्तरात्मकप्रश्नाः –**

4. तेन क्रीतम् इत्यतः प्राक् कोऽधिक्रियते?

5. उवर्णान्तात् गवादिभ्यश्च कः प्रत्ययः?

6. उगवादिभ्यो यदिति कस्यापवादः?

7. नभ्यम् इत्यत्र प्रकृतिप्रत्ययौ कौ?

8. दन्तेभ्यः हितम् उच्यते –

**लघूत्तरात्मकप्रश्नाः –**

9. आत्मनिति सूत्रं प्रपूर्य सोदाहरणामर्थं लिखत।

10. उगवादिभ्यो यत् इति सूत्रं सोदाहरणं व्याख्यायताम्।

11. शरीरावयवाद्यत् इति सूत्रार्थं सोदाहरणं लिखत।

**निबन्धात्मकप्रश्नाः –**

12. अधोलिखितपदानां ससूत्र सिद्धिः कार्या।

शङ्कव्यम्, गव्यम्, नभ्यः, वत्सीयः, कण्ठ्यम्, नस्यम्, मातृभोगीणः

13. अधोलिखितसूत्राणां व्याख्या कार्या।

प्राक्क्रीताच्छः, तस्मै हितम्, आत्माध्वानौ खे

14. प्रकरणस्थसूत्राणां पूर्ववत् अर्थोदाहरणसहिता सारणी लेखनीया।

## अथ ठञधिकारः ( आर्हीयाः )

1143. **प्राग्वहतेष्ठञ्( 5-1-18 ) ॥अधिकारसूत्रम् ॥**
तेन तुल्यं क्रिया चेद्वतिः इति वतिं वक्ष्यति, ततः प्राक् ठञधिक्रियते।

1144. **तेन क्रीतम्( 5-1-36 ) ॥विधिसूत्रम् ॥**
सप्तत्या क्रीतं साप्ततिकम्।प्रास्थिकम्।

1145. **तस्येश्वरः( 5-1-41 ) ॥विधिसूत्रम् ॥**
सर्वभूमि – पृथिवीभ्याम् अणञौ स्तः।

1146. **अनुशतिकादीनां च( 7-3-20 ) ॥विधिसूत्रम् ॥**
एषामुभयपदवृद्धिर्ञिति णिति किति च तद्धिते।सर्वभूमेरीश्वरः सार्वभौमः।पार्थिवः।

---

1143. **प्राग्वहतेरिति** – प्राग् (इत्यव्ययम्), वहतेः ठञ् इतिच्छेदः।तेन तुल्यं क्रिया चेद् वतिः इति सूत्रात् प्राक् सूत्रैरर्थनिर्देशे क्रियमाणे, न तु प्रत्ययनिर्देशे सति ठञ्प्रत्ययः स्यादित्यर्थः।

1144. **तेन क्रीतमिति** – तेन, क्रीतम् इतिच्छेदः।**तृतीयासमर्थात् क्रीतमित्यर्थे ठञ्-प्रत्ययः स्यादित्यर्थः।**

**रूपसिद्धिः**

**साप्ततिकम्** – सप्तत्या क्रीतम् इत्यर्थे 'सप्तति टा' इत्यस्मात् ''तेन क्रीतम्'' इति ठञ्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुपो लुकि, ''तद्धितेष्वचामादेः'' इत्यादिवृद्धौ, ''ठस्येकः'' इति ठस्य इकादेशे, साप्तति इक (ठ् – इक), भत्वाद् ''यस्येति च'' इति इकारलोपे, स्वादिकार्ये 'साप्ततिकम्' इति रूपं सिद्धम्।

**प्रास्थिकम्** – प्रस्थेन क्रीतम् इत्यर्थे 'प्रस्थ टा' इत्यस्मात् ठञ्प्रत्यये, अनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, 'ठ्' इत्यस्य इक इत्यादेशे, भत्वादकारलोपे, स्वादिकार्ये 'प्रास्थिकम्' इति रूपं सिद्धम्।

**अन्योदाहरणानि** –

गोपुच्छेन क्रीतम् – गौपुच्छिकम्। अशीत्या क्रीतम् – आशीतिकम्। षष्ठ्या क्रीतम् – षाष्ठिकम्। पणेन क्रीतम् – पाणिकम्।पादेन क्रीतम् – पादिकम्।माषैः क्रीतम् – माषिकम्।वस्त्रेण क्रीतम् – वास्त्रिकम्।

1145. **तस्येश्वर इति** – तस्य, ईश्वरः इतिच्छेदः।**सर्वभूमि – पृथिवीभ्यां तस्येश्वरः इत्यर्थे क्रमाद् अण् अञ् च प्रत्ययौ भवतः। अर्थात् सर्वभूमिशब्दाद् अण् स्यात् एवं पृथिवीशब्दाद् अञ् प्रत्ययः स्यादित्यर्थः**। यथा सार्वभौमः। पार्थिवः।

1146. **अनुशतिकादीनामिति – अनुशतिकादिगणपठितशब्दानाम् उभयपदयोराद्यचो वृद्धिः स्याद् ञितिणिति किति च तद्धिते परे इत्यर्थः।** यथा सार्वभौमः। सूत्रमिदं शैषिकप्रकरणे (1095) व्याख्यातम्। पुनः स्मारयितुं वरदराजः पुनः पठितवान्।

**रूपसिद्धिः**

**सार्वभौमः** – सर्वभूमेरीश्वरः (चक्रवर्ती राजा) इत्यर्थे 'सर्वभूमि ङस्' इत्यस्मात् ''तस्येश्वरः'' इति अण्-प्रत्ययेऽनुबन्धलोपे, सर्वभूमि ङस् अ इति जाते, प्रातिपदिकत्वात् ''सुपो धातुप्रातिपदिकयोः'' इति सुपो लुकि सर्वभूमि अ इति जाते, ''अनुशतिकादीनां च'' इति सूत्रेण 'सर्व' 'भूमि' इत्यनयोः शब्दयोः आद्यचो वृद्धौ कृते सार्वभौमि अ इति जाते ''यचि भम्'' इति भसञ्ज्ञायां, ''यस्येति च'' इति इकारलोपे, स्वादिकार्ये 'सार्वभौमः' इति रूपं सिद्धम्।

**पार्थिवः** – पृथिव्या ईश्वरः (राजा) इत्यर्थे 'पृथिवी ङस्' इत्यस्मात् ''तस्येश्वरः'' इति सूत्रेण अञ्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् ''सुपो धातुप्रातिपदिकयोः'' इति सुपो (ङस् इत्यस्य) लुकि, ''तद्धितेष्वचामादेः'' इति सूत्रेण ऋकारस्य आकारे वृद्धौ, ''उरण् रपरः'' इति रपरत्वे, पार्थिवी अ इति जाते, ''यचिभम्'' इति भसञ्ज्ञायां, ''यस्येति च'' इति ईकारलोपे पार्थिव् अ इति जाते, प्रातिपदिकत्वात्स्वादिकार्ये 'पार्थिवः' इति रूपं सिद्धम्।

**1147. पङ्क्ति-विंशति-त्रिंशच्चत्वारिंशत्-पञ्चाशत्-षष्टि-सप्तत्यशीति-नवति-शतम् ( 5-1-58 ) ॥ विधिसूत्रम् ॥** एते रूढिशब्दा निपात्यन्ते।

---

**1147. पङ्क्ति - विंशतीति** - पङ्क्ति - विंशति - त्रिंशत् - चत्वारिंशत् - पञ्चाशत् - षष्टि - सप्तति - अशीति - नवति - शतम्। पङ्क्त्यादीनां दशानां समाहारद्वन्द्वः। तदस्य परिमाणमित्यर्थे पङ्क्त्यादीनां दशानां समाहारद्वन्द्वः। **तदस्य परिमाणमित्यर्थे पङ्क्त्यादयः शब्दा निपात्यन्ते**। पङ्क्त्यादयः दशशब्दाः स्व-स्व विशिष्टार्थेषु रूढाः अर्थात् लोकप्रचलिताः सन्ति। प्रकृतसूत्रे एतेषां दशशब्दानां निपातनं कृतमस्ति। तात्पर्यमिदमस्ति यत् मुनिवर-पाणिनिः प्रकृति-प्रत्ययान् तथाऽन्यकार्याणि स्वयमेव सम्पाद्य प्रयोगार्हदशशब्दानत्र प्रास्तौत्।

**पङ्क्ति** - पङ्क्तिरेकं वैदिकं छन्दः। यस्मिन् पञ्चपादाः, प्रतिपादम् अष्टौ अक्षराणि भवन्ति। पञ्च (पादाः) परिमाणमस्येति पङ्क्तिः। 'पञ्चन् जस्' इत्यस्मात् 'तदस्य परिमाणम्' इत्यर्थे निपातनात् तिप्रत्यये, सुब्लुकि, प्रकृतेः टि (अन्) लोपे, पञ्च् ति इति जाते, ''चोः कुः'' इति कुत्वे, ''निमित्तापाये नैमित्तिकस्याप्यपायः'' इति न्यायेन ञस्य नत्वे, प न् क् ति इति जाते, ''नश्चापदान्तस्य झलि'' इति अपदान्तनस्य अनुस्वारे, ''अनुस्वारस्य ययि परसवर्णः'' इति अनुस्वारस्य ङकारे परसवर्णे, स्वादिकार्ये 'पङ्क्तिः' इति रूपं सिद्धम्। अत्र तिप्रत्ययः टिलोपश्च कार्यद्वयं निपातनात् ज्ञातव्यम्।

**विंशतिः** - द्वौ दशतौ परिमाणमस्य सङ्घस्येति अर्थे 'द्विदशत्'-शब्दात् तदस्य परिमाणमस्येत्यर्थे प्रकृतसूत्रेण निपातनात् शतिच् (शति) प्रत्ययेऽनुबन्धलोपे, प्रकृतेः विन् इत्यादेशे च, विन् शति इति जाते, नस्यानुस्वारे, स्वादिकार्ये 'विंशतिः' इति रूपं सिद्धम्। मतिशब्दवदुच्चारणमस्य।

**त्रिंशत्** - त्रयो दशतः परिमाणमस्येत्यर्थे 'त्रिदशत्' इत्यस्मात् ''पङ्क्ति.'' इत्यादिना सूत्रेण निपातनात् शत् प्रत्यये प्रकृतेश्च त्रिन्-सर्वादेशे, त्रिन् शत् इति जाते, ''नश्चापदान्तस्य झलि'' इति नस्यानुस्वारे 'त्रिंशत्' इति जाते, स्वादिकार्ये 'त्रिंशत्' इति रूपं सिद्धम्। अस्योच्चारणं स्त्रीलिङ्ग - सरित्शब्दवत् क्रियते।

**चत्वारिंशत्** - चत्वारो दशतः परिमाणमस्येत्यर्थे 'चतुर्दशत्शब्दात्' प्रकृतसूत्रेण निपातनात् शत्-प्रत्यये प्रकृतेश्च 'चत्वारिन्' इति सर्वादेशे, नस्यानुस्वारे, स्वादिकार्ये 'चत्वारिंशत्' इति रूपं सिद्धम्। अस्योच्चारणं सरिद्वत्।

**पञ्चाशत्** - पञ्च दशतः परिमाणमस्येत्यर्थे 'पञ्चदशत्'-शब्दात् प्रकृतसूत्रेण निपातनात् शत्प्रत्यये प्रकृतेश्च 'पञ्चा' इति सर्वादेशे, स्वादिकार्ये, 'पञ्चाशत्' इति रूपं सिद्धम्। अस्य उच्चारणं स्त्रीलिङ्ग-सरिद्वत्।

**षष्टिः** - षड्दशतः परिमाणमस्य सङ्घस्येति षष्टिः। षड्दशत्-शब्दात् प्रकृतसूत्रेण तिप्रत्यये षड्दशतः स्थाने षष् इत्यादेशे च कृते, निपातनात् पदत्वाभावात् जश्त्वाभावे, ''ष्टुना ष्टुः'' इति सूत्रेण तकारस्य टकारे ष्टुत्वे, स्वादिकार्ये 'षष्टिः' इति रूपं सिद्धम्। अस्य उच्चारणं मतिशब्दवद् भवति।

**सप्ततिः** - सप्त दशतः परिमाणमस्य सङ्घस्येति सप्ततिः। सप्तदशत्-शब्दात् ''पङ्क्ति.'' इत्यादिना निपातनात् तिप्रत्यये प्रकृतेश्च 'सप्त' इत्यादेशे (सर्वादेशे), स्वादिकार्ये 'सप्ततिः' इति रूपं सिद्धम्।

**अशीतिः** - अष्टदशतः परिमाणमस्य सङ्घस्येति अशीतिः। अष्टदशत्-शब्दात् निपातनात् तिप्रत्यये प्रकृतेश्च 'अशी' इति सर्वादेशे, स्वादिकार्ये 'अशीतिः' इति रूपं सिद्धम्।

**नवतिः** - नव दशतः परिमाणमस्य सङ्घस्येति नवतिः। नवदशत्-शब्दात् निपातनात् तिप्रत्यये प्रकृतेश्च 'नव' इति सर्वादेशे, स्वादिकार्ये 'नवतिः' इति रूपं सिद्धम्।

**शतम्** - दशदशतः परिमाणमस्य सङ्घस्येति शतम्। दशदशत्-शब्दात् तप्रत्यये प्रकृतेश्च 'श' इति सर्वादेशे, स्वादिकार्ये 'शतम्' इति रूपं सिद्धम्।

**विशेषः** - 'शत' शब्दं विहाय शेषाः विंशत्यादयः स्त्रीलिङ्गे प्रयुज्यन्ते। शतशब्दः नपुंसकलिङ्गः। परन्तु एतेषां सर्वेषाम् एकवचने एव प्रयोगः न तु संख्येयानुसारम् (विशेष्यानुसारम्) द्विवचने बहुवचने वा। यथा-गवां विंशतिः, ब्राह्मणानां त्रिंशत्, फलानां शतम्। परन्तु यदा समूहस्य द्वित्वस्य बहुत्वस्य वा विवक्षा भवति तदा द्विवचनबहुवचनेऽपि भवतः। यथा - गवां द्वे विंशती, छात्राणां द्वे त्रिंशतौ, फलानां त्रीणि शतानि। सङ्ख्यसङ्ख्निोरभेदं मत्वा विंशतिर्गाव, त्रिंशद् ब्राह्मणाः, शतं फलानि इत्यादयः संख्येयपरकाः प्रयोगा अपि भवन्ति।

**1148. तदर्हति ( 5-1-62 ) ॥विधिसूत्रम् ॥**
'लब्धुं योग्यो भवति' इत्यर्थे द्वितीयान्ताट्ठञादयः स्युः। श्वेतच्छत्रमर्हति-श्वैतच्छत्रिकः।

**1149. दण्डादिभ्यो यत् ( 5-1-65 ) ॥विधिसूत्रम् ॥** एभ्यो यत् स्यात्। दण्डमर्हति दण्ड्यः। अर्घ्यः। वध्यः।

**1150. तेन निर्वृत्तम् ( 5-1-75 ) ॥विधिसूत्रम् ॥** अह्ना निर्वृत्तम् आह्निकम्।

---

1148. **तदर्हतीति** - तद्, अर्हति इतिच्छेदः। तद् इति द्वितीयान्तम्। अर्हति इत्यस्य योग्यो भवति इत्यर्थो न, तथा कृते तद् इति द्वितीया न सेत्स्यति। अतः लब्धुं योग्यो भवतीत्यर्थः स्वीकार्यः। तस्माद् **द्वितीयासमर्थाद् लब्धुं योग्यो भवतीत्यर्थे ठञादयः प्रत्यया भवन्तीत्यर्थः**। यथा श्वैतच्छत्रिकः।

**रूपसिद्धिः**

**श्वैतच्छत्रिकः** - श्वेतच्छत्रम् अर्हति इत्यर्थे 'श्वेतच्छत्र अम्' इत्यस्मात् ''तदर्हति'' इत्यनेन लब्धुं योग्य इत्यर्थे ''आर्हादगोपुच्छ-संख्यापरिमाणाट्ठक्'' इति ठक्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, ठस्य इकादेशे, ''किति च'' इत्यादिवृद्धौ, भत्वादकारलोपे स्वादिकार्ये 'श्वैतच्छत्रिकः' इति रूपं सिद्धम्। प्रस्थमर्हति प्रास्थिकः (ठञ्) इत्यादयोऽपि।

1149. **दण्डादिभ्य इति** - दण्डादिभ्यः, यत् इतिच्छेदः। दण्डशब्दः आदिर्येषान्ते दण्डादयः, तेभ्यः = दण्डादिभ्यः, तद्गुणसंविज्ञानबहुव्रीहिः। **तद् ( द्वितीयान्तम् ) अर्हतीत्यर्थे दण्डादिगणपठितशब्देभ्यो यत्स्यादित्यर्थः।** यथा दण्ड्यः। अर्घ्यः। वध्यः। दण्डादिगणो यथा दण्ड, मुसल, मधुपर्क, कशा, अर्घ, मेधा, मेघ, युग, उदक, वध, गुहा, भाग, इभ, स्तव, सुवर्ण, भङ्ग, युध।

**रूपसिद्धिः**

**दण्ड्यः** - दण्डमर्हति इत्यर्थे 'दण्ड अम्' इत्यस्मात् ''दण्डादिभ्यो यत्'' इति यत्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, भत्वादकारलोपे, स्वादिकार्ये 'दण्ड्यः' इति रूपं सिद्धम्।

**अर्घ्यः** - अर्घम् = पूजाविधिम् अर्हति इत्यर्थे यत्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, भत्वादकारलोपे, स्वादिकार्ये, 'अर्घ्यः' इति रूपं सिद्धम्।

**वध्यः** - वधम् (लब्धुमर्हति) अर्हति इत्यर्थे यत्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वादकारलोपे, स्वादिकार्ये 'वध्यः' (मृत्युदण्डयोग्यः) इति रूपं सिद्धम्। एवमेव मुसल्यः, इभ्यः, कश्यः, मधुपर्क्यः, युग्यः, मेध्यः (कालः), उदक्या (कृषिः), स्तव्यो 'देवः' इत्यादयोऽपि ज्ञातव्याः।

1150. **तेन निर्वत्तमिति** - तेन, निर्वृत्तम् इतिच्छेदः। 'तेन' इति करण-तृतीयान्तानुकरणम्। **तृतीयान्तात् कालवाचकाद् 'निर्वृत्तम्' इत्यर्थे ठञ्प्रत्ययः स्यादित्यर्थः**। यथा - आह्निकम्।

**रूपसिद्धिः**

**आह्निकम्** - अह्ना निर्वृत्तम् इत्यर्थे ''अहन् टा'' इत्यस्मात् ''तेन निर्वृत्तम्'' इति ठञ्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, ठ् इत्यस्य इकादेशे, आदिवृद्धौ, ''यचि भम्'' इति भसञ्ज्ञायाम् ''अल्लोपोऽनः'' इति अनः अकारलोपे, स्वादिकार्ये 'आह्निकम्' इति रूपं सिद्धम्।

**अन्योदाहरणान्यथा** -

1. मासेन निर्वृत्तं मासिकम्।
2. अर्धमासेन निर्वृत्तम् आर्धमासिकम्।
3. संवत्सरेण निर्वृत्तं सांवत्सरिकम्।
4. पक्षेण निर्वृत्तं पाक्षिकम्।
5. सप्ताहेन निर्वृत्तं साप्ताहिकम्।
6. मुहूर्तेन निर्वृत्तं मौहूर्तिकम्।

**विशेषः** - चातुरर्थिक-प्रकरणे तेन निर्वृत्तम् इति सूत्रं पठितम्। तत्र तेन इति कर्तृतृतीयान्तानुकरणं कृतमासीत् परन्तु अत्र करणतृतीयान्तानुकरणमस्ति। एतदतिरिक्तमत्र 'कालात्' इत्यस्यापि अधिकार समायाति। अतः अत्र 'तेन' इत्यनेन करणतृतीयान्त-कालवाचक-प्रातिपदिकस्य ग्रहणं क्रियते। निर्वृत्तम् इत्यस्यार्थः निर्वर्तितम् इति उभयत्र।

## ॥ अभ्यासः ॥

**वस्तुनिष्ठात्मकप्रश्नाः –**

1. प्राग्वहतेष्ठञ् इति कीदृशं सूत्रमस्ति?

   (क) सञ्ज्ञासूत्रम् (ख) परिभाषा-सूत्रम्

   (ग) अधिकार सूत्रम् (घ) नियमसूत्रम्

2. अनुशतिकादीनाम् उभयपदवृद्धिर्भवति –

   (क) ञिति (ख) णिति

   (ग) किति (घ) ञिति णिति किति च तद्धिते

3. निपातनात् सिध्यति –

   (क) पङ्क्तिः (ख) पार्थिवः

   (ग) दण्ड्य (घ) सर्वे प्रयोगाः

**अतिलघूत्तरात्मकप्रश्नाः –**

4. सर्वभूमेरीश्वरो भवति –
5. साप्तिकम् इत्यत्र कः प्रत्ययः?
6. त्रिंशत् इत्यत्र निपातनात् कः प्रत्ययः?
7. 'तदर्हति' इत्यत्र अर्हतीत्यस्य कोऽर्थः?

**लघूत्तरात्मकप्रश्नाः –**

8. पङ्क्तिरित्यादिसूत्रं पूरयन्तु।
9. आह्निकम् इत्यस्य विग्रहवाक्यं लिखन्तु।
10. प्रस्थेन क्रीतं भवति –

**निबन्धात्मकप्रश्नाः –**

11. अधोलिखिताः प्रयोगाः ससूत्रं साधनीयाः।

    सार्वभौमः, पार्थिवः, विंशतिः, त्रिंशत्, चत्वारिंशत्, षष्टिः, अशीतिः, श्वैतच्छत्रिकः, दण्ड्यः, वध्यः, अर्घ्यः।

12. अधोलिखितानि सूत्राणि व्याख्येयानि –

    तेन क्रीतम्, तस्येश्वरः, पङ्क्तिविंशति ...... शतम्, तदर्हति, दण्डादिभ्यो यत्

13. प्रकरणस्थसूत्राणां सारणी निर्मेया।

## अथ त्वतलोरधिकारः ( भावकर्मार्थाः )

1151. **तेन तुल्यं क्रिया चेद्वतिः ( 5-1-114 ) ॥विधिसूत्रम् ॥**
(तृतीयान्तात् तुल्यमित्यर्थे वतिप्रत्ययः, यत्तुल्यं तत् क्रिया चेत्)। ब्राह्मणेन तुल्यं ब्राह्मणवद् अधीते। क्रिया चेदिति किम्? गुणतुल्ये मा भूत् - पुत्रेण तुल्यः स्थूलः।

1152. **तत्र तस्येव ( 5-1-115 ) ॥ विधिसूत्रम् ॥** (सप्तम्यन्तात् षष्ठ्यन्ताच्च इवार्थे वतिः प्रत्ययः स्यात्)। मथुरायामिव-मथुरावत् स्रुघ्ने प्राकारः। चैत्रस्येव = चैत्रवद् मैत्रस्य गावः।

1153. **तस्य भावस्त्वतलौ ( 5-1-115 ) ॥विधिसूत्रम् ॥**
प्रकृतिजन्यबोधे प्रकारो भावः। (षष्ठ्यन्ताद् भावेऽर्थे त्वप्रत्ययः तल्प्रत्ययश्च स्यात्)। गोर्भावः - गोत्वं, गोता। त्वान्तं क्लीबम्। तलन्तं स्त्रियाम्।

---

1151. **तेन तुल्यमिति** - तेन, तुल्यम् क्रिया, चेत्, वति इतिच्छेदः। तुल्यमिति 'क्रिया' इति पदस्य विशेषणम्। **तृतीयान्तसमर्थात् तुल्यमित्यर्थे वतिप्रत्ययो भवेत्, यत्तुल्यं तत् क्रिया चेत्।** यथा ब्राह्मणवद् अधीते। 'वति' इत्यत्र 'वत्' इति शिष्यते। अत्र ध्यातव्यं यत् क्रियायाः (षष्ठी) क्रियया सह तुल्यता भवति द्रव्यगुणाभ्यां सह न।

**रूपसिद्धिः**

**ब्राह्मणवद् अधीते** - 'ब्राह्मणेन तुल्यम् अधीते' इत्यर्थे 'ब्राह्मण टा' इत्यस्मात् ''तेन तुल्यं क्रिया चेद्वतिः'' इति सूत्रेण वतिप्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, ब्राह्मणवत् इति जाते, पुनः सुविभक्तौ ''तद्धितश्चासर्वविभक्तिः'' इत्यव्ययसञ्ज्ञायाम्, ''अव्ययादाप्सुपः'' इति सुलोपे 'ब्राह्मणवत्' इति रूपं सिद्धम्।

**क्रिया चेदिति किम्?** - तेन तुल्यमिति सूत्रे क्रिया चेद् इति नोच्येत, तदा पुत्रेण तुल्यः स्थूलः इत्यादावपि पुत्रशब्दाद् वतिप्रत्ययो भूत्वा अनिष्टरूपापत्तिः स्यात्।

1152. **तत्र तस्येवेति** - तत्रेति सप्तम्यन्तस्य द्योतकम्। तस्येति षष्ठ्यन्तस्य बोधकम्। **सप्तम्यन्तसमर्थात् तथा षष्ठ्यन्तसमर्थात् इवार्थे वतिप्रत्ययः स्यादित्यर्थः।** एतन्निर्देशादेव इव योगे षष्ठ्यर्थे सप्तमीति भाष्यवचः। यथा मथुरावत्। चैत्रवत्।

**रूपसिद्धिः**

**मथुरावत्** - मथुरायामिव इत्यर्थे 'मथुरा ङि' इत्यस्मात् ''तत्र तस्येव'' इति वतिप्रत्ययेऽनुबन्धलोपे, सुब्लुकि पुनः सुविभक्तौ ''तद्धितश्चासर्वविभक्तिः'' इति अव्ययसञ्ज्ञायाम्, ''अव्ययादाप्सुपः'' इति सोर्लुकि 'मथुरावत्' इति रूपं सिद्धम्।

**चैत्रवत्** - चैत्रस्य इव इत्यर्थे 'चैत्र ङस्' इत्यस्मात् ''तत्र तस्येव'' इति वतिप्रत्ययेऽनुबन्धलोपे, सुब्लुकि, पुनः सुप्रत्यये, अव्ययसञ्ज्ञायाम्, ''अव्ययादाप्सुपः'' इति सोर्लुकि, 'चैत्रवत्' इति रूपं सिद्धम्।

1153. **तस्य भाव इति** - तस्य, भावः, त्वतलौ इतिच्छेदः। त्वश्च तल् च त्वतलौ, इतरेतरद्वन्द्वः। 'तल्' इति लकार इत् स्वरार्थः। **षष्ठ्यन्त-समर्थाद् 'भाव' इत्यर्थे त्वतलौ प्रत्ययौ भवत इत्यर्थः।** मूलशब्दस्य प्रवृत्तिनिमित्तं भावशब्देनोच्यते। यथा - गोत्वम्। गोता।

**रूपसिद्धिः**

**गोत्वम्** - 'गोर्भावः' इत्यर्थे 'गो ङस्' इत्यस्मात् ''तस्य भावस्त्वतलौ'' इति त्वप्रत्यये, सुब्लुकि, पुनः स्वादिकार्ये नपुंसकलिङ्गे, 'गोत्वम्' इति रूपं सिद्धम्।

**गोता** - 'गोर्भावः' इत्यर्थे 'गो ङस्' इत्यस्मात् तल्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, स्त्रीत्वे टापि स्वादिकार्ये 'गोता' इति रूपं सिद्धम्।

एवमेव घटस्य भावो घटत्वं घटता वा। पशोर्भावः पशुत्वं पशुता वा। विरोधिता, शीतता, विद्वत्त्वं, नृपत्वं, कटुता, पात्रता, दरिद्रता, अविवेकिता, पटुत्वं, सत्यवादित्वं, समत्वञ्चेत्यादयोऽपि बोद्धव्याः।

**1154. आ च त्वात् ( 5-1-119 ) ॥अधिकारसूत्रम् ॥**

ब्रह्मणस्त्व (5-1-135) इत्यतः प्राक् त्वतलौ अधिक्रियेते। अपवादैः सह समावेशार्थमिदम्। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रिया भावः - स्त्रैणम्, स्त्रीत्वम्, स्त्रीता। पौंस्नम्, पुंस्त्वम्, पुंस्ता।

**1155. पृथ्वादिभ्य इमनिज्वा ( 5-1-121 ) ॥विधिसूत्रम् ॥**

( भावे पृथ्वादिभ्य इमनिच् प्रत्ययो वा स्यात्) । वा-वचनम् अणादि-समावेशार्थम्।

**1156. र ऋतो हलादेर्लघोः ( 6-4-161 ) ॥विधिसूत्रम् ॥**

हलोदेर्लघोर्ऋकारस्य रः स्याद् इष्ठेमेयस्सु परतः।

---

**विशेषः** - अत्र 'भावः' इत्यस्यार्थः अभिप्रायः, आशयः धात्वर्थो वा नास्ति। अस्यार्थः 'प्रकृतिजन्य बोधे प्रकारो भावः'। अर्थात् प्रकृतेः समुत्पन्ने बोधे (ज्ञाने) यः विशेषणतया प्रतीयते स भाव इति कथ्यते। यथा 'गो' इयं प्रकृतिरस्ति। अस्य श्रवणात् गोत्वयुक्तव्यक्तेः बोधो भवति। एवंविधे बोधे 'गोत्वम्' इति विशेषणतया प्रतीयते अत भाव उच्यते। तात्पर्यमिदमस्ति यत् अत्र शब्दानां प्रवृत्ति-निमित्तमेव भावः कथितः। जातिशब्देषु जातिरेव प्रवृत्तिनिमित्तं भावो वा भवति। यथा - गोत्वम्, पशुत्वम्, घटत्वम् इत्यादयः गोपशुघटादीनां भावाः सन्ति। कृदन्त-तद्धितान्त-समासेषु सम्बन्ध एव भावो भवति। यथा - कृदन्तेषु 'पाचकत्वम्' अत्र पाचनक्रियया सह कर्तृत्वसम्बन्ध एव भावः। तद्धितान्तेषु औपगवत्वम् समासेषु राजपुरुषत्वं यथा। शुक्लादिषु गुणवाचकेषु तद्गतजातिरेव भावः। सञ्ज्ञाशब्देषु पिण्डस्वरूपमेव भावः।

**1154. आ च त्वादिति** - आ (इत्यव्ययम्), च (इत्यव्ययम्), त्वात् इतिच्छेदः। आङ् इति मर्यादायाम् ''आङ् मर्यादावचने'' इति कर्मप्रवचनीयसञ्ज्ञकः, तस्मात् 'पञ्चम्याङ्परिभिः' द्वारा 'त्वात्' इत्यत्र पञ्चमीविभक्तिः। पञ्चमाध्यायस्य प्रथमपादस्यान्ते 'ब्रह्मणस्त्व' इति यावत् त्वतलोरधिकारः। अत्र पूर्वसूत्रात् त्वतलोरनुवृत्तिर्भवति तया एव त्वतलोः सिद्धि स्यात् तथा किमर्थमेतयोरधिकार इत्युच्यते-अपवादैः सहेति-पृथ्वादिभ्य इमनिज्वा इत्यादिसूत्रविहितैरपवादैः सह समावेशार्थमधिक्रियते, तदभावे उत्तरत्र त्वतलोरुपस्थितिः न स्यात्। गुणवाचिभ्यः कर्मणि विधानार्थमेतत्। चकारात् स्त्रैणः पौंस्नः इत्यादौ नञ्स्नञोः समावेशः, अत्र 'त्वतलौ' अपि भवत इत्यर्थः।

**रूपसिद्धिः**

**स्त्रैणम्, स्त्रीत्वम्, स्त्रीता** - 'स्त्रिया भावः' इत्यर्थे 'स्त्री ङस्' इत्यस्मात् ''स्त्रीपुंसाभ्यां नञ्स्न भवनात्'' इति नञ्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, नस्य णत्वे, स्वादिकार्ये 'स्त्रैणम्' इति रूपं सिद्धम्। पक्षे त्वप्रत्यये स्त्रीत्वम् इति तल्प्रत्यये च स्त्रीता इति रूपत्रयं सिद्धम्।

**पौंस्नम्, पुंस्त्वम्, पुंस्ता** - 'पुंसो भावः' इत्यर्थे 'पुंस् ङस्' इत्यस्मात् स्नञ्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, पौंस् स्न इति जाते, 'स्वादिष्वसर्वनामस्थाने' इति पदसञ्ज्ञायां, ''संयोगान्तस्य लोपः'' इति सलोपे, ''निमित्तापाये नैमित्तिकस्याप्यपायः'' इति न्यायेन अनुस्वारस्य मत्वे, अपदान्त मस्य पुनः अनुस्वारे, स्वादिकार्ये 'पौंस्नम्' इति रूपम्। पक्षे त्वतलोः सुब्लुकि, ''पुमः खय्यम्परे'' इति मस्य रुत्वे, पूर्वस्य अनुनासिके अनुस्वारे च, रेफस्य विसर्गे, सम्पुङ्कानामिति सत्वे पुँस्त्वम्, पुंस्त्वम्, पुँस्ता, पुंस्ता इति।

**1155. पृथ्वादिभ्य इति** - पृथ्वादिभ्यः, इमनिच् वा इतिच्छेदः। पृथुः (पृथुशब्दः) आदिर्येषांते पृथ्वादयः, तेभ्यः = पृथ्वादिभ्यः, तद्गुणसंविज्ञानबहुव्रीहिः। **षष्ठ्यन्तेभ्यः पृथ्वादिगणपठितशब्देभ्यः इमनिच्-प्रत्ययो वा भावे इत्यर्थः।** पृथ्वादिगणो यथा - पृथु। मृदु। महत्। पटु। तनु। लघु। बहु। साधु। आशु। उरु। गुरु। बहुल। खण्ड। दण्ड। चण्ड। अकिञ्चन। बाल। होड। पाक। वत्स। मन्द। स्वादु। ह्रस्व। दीर्घ। प्रिय। वृष। ऋजु। क्षिप्र। क्षुद्र। अणु। 'इमनिच्' इत्यत्र इचावितौ अतः लुप्येते, 'इमन्' इति शिष्यते। इमनिच्-प्रत्ययान्तशब्दाः संस्कृते पुंलिङ्गाः भवन्ति। एतेषां सुबन्तप्रक्रिया राजन्-शब्दवद्भवति। वा वचनम् अणः, ष्यञः अञश्च औत्सर्गिकाणां समावेशार्थः इत्याशयः।

**1156. र ऋत इति** - रः, ऋतः, हलादेः, लघोः इतिच्छेदः। हल् आदिर्यस्य तद् हलादि, तस्य हलादेः, बहुव्रीहिः। **हलादेर्लघुसञ्ज्ञकस्य ऋकारस्य 'र' इत्यादेशो भवति इष्ठन्, इमनिच्, ईयसुन् इत्येषु प्रत्ययेषु परतः।**

**1157. टे:( 6-4-155 ) ॥विधिसूत्रम् ॥**

भस्य टेर्लोप इष्ठेमेयस्सु।

(वा.) **पृथु-मृदु-भृश-कृश-दृढ-परिवृढानामेव रत्वम्।**

पृथोर्भाव: प्रथिमा। (इमनिचोऽभावे-)।

**1158. इगन्ताच्च लघुपूर्वात्( 5-1-130 ) ॥विधिसूत्रम् ॥**

(लघुपूर्वाद् इगन्तात् षष्ठ्यन्तप्रातिपदिकाद् भावे कर्मणि चाण् प्रत्यय: स्यात्)। पार्थवम्। म्रदिमा। मार्दवम्।

---

**1157. टेरिति - भसञ्ज्ञकस्य टेर्लोप: स्याद् इष्ठेमेयस्सु परेषु।**

(वा.) पृथु-मृद्विति- **पृथुमृद्वादीनां षण्णामेव हलादेर्लघोर्ऋकारस्य र: स्यादित्यर्थ:।** यथा - प्रथिमा। म्रदिमा।

**रूपसिद्धि:**

**प्रथिमा** - पृथोर्भाव: इत्यर्थे (विशालता, महत्ता) 'पृथु ङस्' इत्यस्मात् ''पृथ्वादिभ्य इमनिज्वा'' इति सूत्रेण विकल्पेन इमनिच्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुपो लुकि, पृथु इमन् इति जाते, ''र ऋतो हलोदेर्लघो:'' इति ऋकारस्य रादेशे, प्रथु इमन् इति जाते, ''टे:'' इति भस्य टि (उ) लोपे, प्रथ् इमन् (प्रथिमन्) इति जाते, पुन: प्रातिपदिकत्वात् स्वौजसिति प्रथमैकवचने सुप्रत्ययेऽनुबन्धलोपे, प्रथिमन् स् इति जाते, ''सर्वनामस्थाने चाऽसम्बुद्धौ'' इति उपधादीर्घे प्रथिमान् स् इति जाते, ''हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्'' इति सुलोपे, ''नलोप: प्रातिपदिकान्तस्य'' इति नलोपे 'प्रथिमा' इति रूपं सिद्धम्।

**1158. इगन्ताच्चेति** - इगन्तात्, च, लघुपूर्वात् इतिच्छेद:। लघु: पूर्व: = अचां पूर्वो यस्य तत् लघुपूर्वं प्रातिपदिकम्, तस्मात् = लघुपूर्वात्, बहुव्रीहिसमास:। इक् अन्तावयवो यस्य तद् इगन्तम्प्रातिपदिकम्, तस्मात् = इगन्तात्, बहुव्रीहिसमास:। **लघुपूर्वाद् इगन्तात् षष्ठ्यन्त-प्रातिपदिकाद् भावे कर्मणि च अण्-प्रत्ययो भवतीत्यर्थ:।** यथा - पार्थवम्।

**रूपसिद्धि:**

**पार्थवम्** - पृथोर्भाव: (इमनिचोऽभावे) ''इगन्ताच्च लघुपूर्वात्'' इति अण्-प्रत्ययेऽनुबन्धलोपे, पृथु ङस् अ इति जाते, सुब्लुकि आदिवृद्धौ, रपरत्वे पार्थु अ इति जाते भत्वाद् ''ओर्गुण:'' इति उकारस्य ओकारे गुणे, अवादेशे, स्वादिकार्ये 'पार्थवम्' इति रूपं सिद्धम्। 'आ च त्वात्' द्वारा त्वतलोरधिकृतत्वात् पृथुत्वम्, पृथुता प्रयोगौ अपि सेत्स्यत:। इत्थं- प्रथिमा, पार्थवम्, पृथुत्वम्, पृथुता च चत्वारि रूपाणि भविष्यन्ति।

**अन्योदाहरणानि** -

| | | | |
|---|---|---|---|
| 1. | मृदोर्भाव: | - | म्रदिमा, मार्दवम्, मृदुत्वम्, मृदुता। |
| 2. | पटोर्भाव: | - | पटिमा, पाटवम्, पटुत्वम्, पटुता। |
| 3. | लघोर्भाव: | - | लघिमा, लाघवम्, लघुत्वम्, लघुता। |
| 4. | तनोर्भाव: | - | तनिमा, तानवम्, तनुत्वम्, तनुता। |
| 5. | गुरोर्भाव: | - | गरिमा इत्यत्र प्रियस्थिर. इत्यादिना सूत्रेण गुरो: गरादेश:, गौरवम्, गुरुत्वम्, गुरुता। |
| 6. | ऋजोर्भाव: | - | ऋजिमा, आर्जवम्, ऋजुत्वम्, ऋजुता। |
| 7. | अणोर्भाव: | - | अणिमा, आणवम्, अणुत्वम्, अणुता। |
| 8. | बहोर्भाव: | - | भूमा (बहोर्लोपो भू च बहो: इति बहु स्थाने भू इत्यादेश:), बाहवम्, बहुत्वम्, बहुता। |
| 9. | महतोभाव: | - | महिमा, महत्त्वम्, महत्ता। |
| 10. | साधोर्भाव: | - | साधिमा, साधुत्वम्, साधुता। |
| 11. | स्वादोर्भाव: | - | स्वादिमा, स्वादुत्वम्, स्वादुता। |

**1159. वर्णदृढादिभ्यः ष्यञ् च ( 5-1-112 ) ॥विधिसूत्रम् ॥**

चाद् इमनिच्। शौक्ल्यम् शुक्लिमा। दाढ्‍र्यम्, द्रढिमा।

**1160. गुणवचन-ब्राह्मणादिभ्यः कर्मणि च ( 5-1-123 ) ॥विधिसूत्रम् ॥**

चाद् भावे। जडस्य भावः कर्म वा जाड्यम्। मूढस्य भावः कर्म वा मौढ्यम्। ब्राह्मण्यम्। आकृतिगणोऽयम्।

---

**1159.** **वर्णदृढादिभ्य इति** - वर्णदृढादिभ्यः, ष्यञ्, च इतिच्छेदः। दृढः (दृढशब्दः) आदिर्येषां ते दृढादयः, तद्गुणसंविज्ञानबहुव्रीहिः। वर्णाश्च दृढादयश्च वर्णदृढादयः, तेभ्यः = वर्णदृढादिभ्यः, इतरेतरद्वन्द्वः। **षष्ठ्यन्तेभ्यो वर्णवाचिभ्यो दृढादिगणपठितशब्देभ्यश्च भावे ष्यञ्-प्रत्ययो भवति, चकाराद् इमनिच् प्रत्ययोऽपि स्यादित्यर्थः।** ष्यञ् इति 'य' शिष्यते। अत्र षित्करणं स्त्रीत्वे ङीषो विधानार्थम्। ञित्करणम् आदिवृद्ध्यर्थम्। इमनिच्प्रत्ययस्य समुच्चयार्थं सूत्रम् अन्यथा गुण-वचनत्वादेव ष्यञ्-प्रत्ययः सिध्येत्। दृढादिगणो यथा-दृढ। वृढ। परिवृढ। भृश। कृश। शुक्र। चक्र (चुक्र)। आम्र। लवण। ताम्र। अम्ल। शीत। उष्ण। जड। बधिर। पण्डित। मधुर। मूर्ख। मूक। वेर्यात-लाभ-मति-मनः शारदानाम् (ेगणसूत्रम्)। समो मतिर्मनसोर्जवने (गणसूत्रम्) बाल। तरुण। मन्द। स्थिर। बहुल। दीर्घ। मूढ। आकृष्ट।

**रूपसिद्धिः**

**शौक्ल्यं शुक्लिमा वा** - शुक्लस्य भावः इत्यर्थे 'शुक्ल ङस्' इत्यस्मात् ''वर्णदृढादिभ्यः ष्यञ् च'' इति ष्यञ्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'शौक्ल्यम्' इति रूपं सिद्धम्। पक्षे इमनिच्प्रत्ययेऽनुबन्धलोपे, भत्वादकारलोपे, शुक्लिमन् इति जाते, स्वादिकार्ये 'शुक्लिमा' इति रूपं सिद्धम्। 'आ च त्वात्' इत्यधिकारात् त्वतलोः शुक्लत्वम्, शुक्लता इत्यनयोः सिद्धिरपि भवति। एवमेव कृष्णस्य भावः-कार्ष्ण्यम्, कृष्णिमा। हरितस्य भावः- हारित्यम्, हरितिमा। लोहितस्य भावः - लौहित्यम्, लोहितिमा। श्वेतस्य भावः - श्वैत्यम्, श्वेतिमा। इत्यादयोऽपि स्युः।

**दाढ्‍र्यम्, द्रढिमा** - द्रढस्य भाव इत्यर्थे 'दृढ ङस्' इत्यस्मात् ''वर्णदृढादिभ्यः ष्यञ् च'' इति ष्यञ्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, रपरत्वे, भत्वादकारलोपे, स्वादिकार्ये 'दाढ्‍र्यम्' इति रूपम्। पक्षे इमनिच्-प्रत्ययेऽनुबन्धलोपे ''र ऋतो हलादेर्लघोः'' इति ऋकारस्य रत्वे, भसञ्ज्ञायाम्, टि (अ) लोपे द्रढिमन् इति जाते, स्वादिकार्ये, 'द्रढिमा' इति रूपं सिद्धम्।

**1160.** **गुणवचनेति** - गुणवचन-ब्राह्मणादिभ्यः, कर्मणि, च इतिच्छेदः। गुणम् उक्तवन्त इति गुणवचनाः। ब्राह्मणः (ब्राह्मणशब्दः) आदिर्येषां ते ब्राह्मणादयः, तद्गुणसंविज्ञानबहुव्रीहिः। गुणवचनाश्च ब्राह्मणादयश्च गुणवचनब्राह्मणादयः, तेभ्यः = गुणवचनब्राह्मणादिभ्यः, इतरेतरद्वन्द्वः। ब्राह्मणादिरेकः गणः, य आकृतिगणत्वेन अभिमतः। **षष्ठीसमर्थेभ्यो गुणवचनेभ्यो ब्राह्मणादिभ्यश्च भावकर्मणोरर्थयोः ष्यञ्प्रत्ययो भवति।** यथा जाड्यम् इत्यादि। ब्राह्मणादिगणो यथा-ब्राह्मण। वाडव। माणव। अर्हतो नुम् च (ग.सू.)। चोर। धूर्त। आराधय। द्विभाव। विराधय। अपराधय। उपराधय। एकभाव। त्रिभाव। अन्यभाव। अक्षेत्रज्ञ। संवादिन्। संवेशिन्। संभाषिन्। बहुभाषिन्। शीर्षघातिन्। समस्थ। शीर्षपातिन्। विघातिन्। विषमस्थ। परमस्थ। मध्यमस्थ। अनीश्वर। कुशल। चपल। निपुण। पिशुन। कुतूहल। क्षेत्रज्ञ। निश्न। बालिश। अलस। दुष्पुरुष। कापुरुष। राजन्। गणपति। अधिपति। गडुल। दायाद। विशस्ति। विषम। विपात। निपात। सर्ववेदादिभ्यः स्वार्थे (ग.सू.)। चतुर्वेदस्योभयपदवृद्धिश्च (गणसूत्रम्)। शौटीर। मूक। कपि। विशसि। पिशाच। विशाल। धनपति। नरपति। निव। निधान। विष। स्वभाव। निघातिन्। राजपुरुष। विशाय। विशात। नयात। सुहित। दीन। विदग्ध। उचित। समग्र। शील। तत्पर। इदम्पर। यथातथा। पुरस्। पुनः पुनः। अभीक्ष्ण। तरसम। प्रकाम। यथाकाम। निष्कुल। स्वराज। महाराज। युवराज। सम्राज्। अविदूर। अपिशुन। अनृशंस। अयथातथ। अयथापुर। स्वधर्म। अनुकूल। परिमण्डल। विश्वरूप। ऋत्विज्। उदासीन। ईश्वर। प्रतिभू। साक्षिन्। मानुष। आस्तिक। नास्तिक। युगपद्। पूर्वाधर। उत्तराधर। आकृतिगणः।

**1161. सख्युर्यः ( 5-1-125 ) ॥ विधिसूत्रम् ॥**

(षष्ठ्यन्तात् सखि-प्रातिपदिकात् कर्मणि भावे च 'यः' प्रत्ययः स्यात्।)

सख्युर्भावः कर्म वा सख्यम्।

**1162. कपिज्ञात्योर्ढक् ( 5-1-126 ) ॥ विधिसूत्रम् ॥**

(षष्ठ्यन्ताभ्यां कपिज्ञातिप्रातिपदिकाभ्यां भावे कर्मणि च तद्धितो ढक्प्रत्ययः स्यात्)। कापेयम्। ज्ञातेयम्।

---

**रूपसिद्धिः**

**जाड्यम्** - जडस्य भावः कर्म वा इत्यर्थे 'जड ङस्' इत्यस्मात् ''गुणवचनब्राह्मणादिभ्यः कर्मणि च'' इति ष्यञ्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, ''तद्धितेष्वचामादेः'' आदिवृद्धौ, भत्वाद् ''यस्येति च'' इति अकारलोपे, स्वादिकार्ये 'जाड्यम्' इति रूपं सिद्धम्। त्वतलोः अधिकृतत्वात् जडत्वम्, जडता इत्यपि। दृढादिपाठत्वात् जडिमा इत्यपि भावेऽर्थे बोध्यम्।

**मौढ्यम्** - मूढस्य भावः कर्म वा इत्यर्थे ''मूढ ङस्'' इत्यस्मात् ष्यञ्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'मौढ्यम्' इति रूपं सिद्धम्। मूढत्वम्, मूढता। भावे मूढिमा इत्यपि।

**ब्राह्मण्यम्** - ब्राह्मणस्य भावः कर्म वा इत्यर्थे 'ब्राह्मण ङस्' इत्यस्मात् ष्यञ्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, आदिवृद्धौ, भत्वाद् अकारलोपे स्वादिकार्ये 'ब्राह्मण्यम्' इति रूपं सिद्धम्। एवमेव चोरस्य भावः कर्म वा चौर्यम्, चोरत्वम्, चोरता। मूकस्य भावः कर्म वा - मौक्यम्, मूकत्वम्, मूकता। चपलस्य भावः कर्म वा चापल्यम्, चपलत्वम्, चपलता। कुशलस्य भावः कर्म वा कौशल्यम्, कुशलत्वम्, कुशलता। नैपुण्यम्, निपुणत्वम्, निपुणता। वैदग्ध्यम्, विदग्धत्वम्, विदग्धता। दैन्यम्, दीनत्वम्, दीनता। ऐश्वर्यम्, ईश्वरत्वम्, ईश्वरता इत्यादयोऽपि बोद्धव्याः।

**1161. सख्युर्य इति** - सख्युः, यः, इतिच्छेदः। **षष्ठ्यन्तात् सखिशब्दात् कर्मणि भावे च य-प्रत्ययो भवतीत्यर्थः।**

(वा.) पृथु-मृद्विति- पृथुमृद्वादीनां षण्णामेव हलादेर्लघोर्ऋकारस्य रः स्यादित्यर्थः। यथा - प्रथिमा।

**रूपसिद्धिः**

**सख्यम्** - सख्युर्भावः कर्म वा इत्यर्थे 'सखि ङस्' इत्यस्मात् ''सख्युर्यः'' इति यप्रत्यये, प्रातिपदिकत्वात्सुपो लुकि, भत्वाद् इलोपे, स्वादिकार्ये 'सख्यम्' इति रूपं सिद्धम्। सखित्वम्, सखिता इत्यपि।

**1162. कपिज्ञात्योरिति** - कपिज्ञात्योः, ढक् इतिच्छेदः। कपिश्च ज्ञातिश्च कपिज्ञाती, तयोः = कपिज्ञात्योः, इतरेतरद्वन्द्वः। अत्र ककारानुबन्धः आदिवृद्ध्यर्थः। ढस्य एय्। **भावकर्मणोः षष्ठ्यन्त-कपिज्ञातिशब्दाभ्यां ढक्-प्रत्ययो भवतीत्यर्थः।** यथा कापेयम्। ज्ञातेयम्।

**रूपसिद्धिः**

**कापेयम्** - कपेर्भावः कर्म वा इत्यर्थे 'कपि ङस्' इत्यस्मात् ''कपिज्ञात्योर्ढक्'' इति ढक्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुपो लुकि, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति ढस्य एयोदेशे, ''किति च'' इत्यादिवृद्धौ, कापि एय् अ इति जाते, भत्वादिकारलोपे, स्वादिकार्ये 'कापेयम्' इति रूपं सिद्धम्।

**ज्ञातेयम्** - ज्ञातेर्भावः कर्म वा (बन्धुता) इत्यर्थे 'ज्ञाति ङस्' इत्यस्मात् ढक्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, ढस्य एयादेशे, पर्जन्यवल्लक्षणन्यायेन आकारस्य आकारे आदिवृद्धौ, भत्वाद् इकारलोपे, स्वादिकार्ये 'ज्ञातेयम्' इति रूपं सिद्धम्।

**1163. पत्यन्त-पुरोहितादिभ्यो यक् ( 5-1-127 ) ॥विधिसूत्रम् ॥**

( षष्ठ्यन्तेभ्य: पत्यन्तेभ्य: पुरोहितादिभ्यश्च भावे कर्मणि च यक् प्रत्यय: स्यात् ) । सैनापत्यम् । पौरोहित्यम् ।

---

1163. **पत्यन्तपुरोहितादिभ्य इति** – पत्यन्तपुरोहितादिभ्य:, यक्, इतिच्छेद: पति: ( पतिशब्द: ) अन्त: ( अन्तावयव: ) येषां तानि पत्यन्तानि, बहुव्रीहिसमास:। पुरोहित: आदिर्येषां तानि पुरोहितादीनि, बहुव्रीहिसमास:। **पत्यन्तानि च पुरोहितादीनि च पत्यन्तपुरोहितादीनि, तेभ्य: = पत्यन्तपुरोहितादिभ्य:, इतरेतरद्वन्द्व:। भावकर्मणोरर्थयो: षष्ठ्यन्तात् पत्यन्तशब्दात् पुरोहितादिगणपठितशब्दाच्च यक्-प्रत्यय: स्यादित्यर्थ:।** यथा-सैनापत्यम्। पौरोहित्यम्। पुरोहितादि गणो यथा-पुरोहित। राजाऽसे ( गणसूत्रम् ) । संग्रामिक ( ग्रामिक ) । पिण्डिक। सुहित। बाल। मन्द ( बालमन्द ) । खण्डिक। दण्डिक। वर्मिक ( वर्मित ) । कर्मिक। धर्मिक। शिलिक ( शीलिक ) । सूतिक। मूलिक। तिलक ( तिलिका ) अञ्जलिक। अञ्जनिक ( अञ्जतिका ) । ॠषिक ( रूपिक ) । पुत्रिक ( पुत्रक ) । अविक। छत्रिक। पर्षिक। पथिक ( पथिका )। चर्मिक। प्रतिक। सारथि ( सारथिक )। आस्तिक। सूचिक। संरक्ष। सूचक ( संरक्षसूचक ) । नास्तिक। अजानिक। शाक्वर ( राक्वर ) । नागर। चूडिक। एषिक। मिलिक। स्तनिक। चूडितिक। कृषिक। पूतिक। पत्रिक। सलनिक। पक्षिक। जलिक। शर्मिक। तिथ्विक। प्रचिक। प्रविक। परीक्षक ( परिक्षक ) । पूजनिक। मूचिक। स्वरिक।

**रूपसिद्धि:**

**सैनापत्यम्** – सेनाया: पति: सेनापति:, ( षष्ठीतत्पुरुष: ) । सेनापते: भाव: कर्म वा इत्यर्थे 'सेनापति ङस्' इत्यस्मात् ''पत्यन्तपुरोहितादिभ्यो यक्'' इति यक्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुपो लुकि, आदिवृद्धौ, सैनापति य इति जाते, भत्वादिकारलोपे, स्वादिकार्ये 'सैनापत्यम्' इति रूपं सिद्धम्। एवमेव गार्हपत्यम्, प्राजापत्यम् इत्यादयोऽपि ज्ञातव्या:।

**पौरोहित्यम्** – पुरोहितस्य भाव: कर्म वा इत्यर्थे 'पुरोहित ङस्' इत्यस्मात् यक्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुपो लुकि, आदिवृद्धौ, भत्वाद् अकारलोपे स्वादिकार्ये 'पौरोहित्यम्' इति रूपं सिद्धम्। एवमेव राज्ञो भाव: कर्म वा राज्यम् ( 'नस्तद्धिते' इति अन् ( टि ) लोपे ) ।

## ॥ अभ्यासः ॥

**वस्तुनिष्ठात्मकप्रश्नाः –**

1. तेन तुल्यं क्रिया चेत् कः प्रत्ययः?

   (क) वत् (ख) वति

   (ग) कखौ (घ) कोऽपि न

2. गोर्भावः भवति –

   (क) गोत्वम् (ख) गोता

   (ग) कखौ (घ) कोऽपि न

3. यक्–प्रत्ययान्तं रूपमस्ति –

   (क) दाढ्र्यम् (ख) ब्राह्मण्यम्

   (ग) सख्यम् (घ) सैनापत्यम्

**अतिलघूत्तरात्मकप्रश्नाः –**

4. पत्यन्तेभ्यः कः प्रत्ययः?
5. कपेर्भाव कर्म वा भवति –
6. जाड्यं भवति –
7. ब्राह्मणस्य भावः कर्म वा भवति –
8. वर्णदृढादिभ्यः प्रत्ययाः कस्मिन् अर्थे भवन्ति?
9. लघुपूर्वादिगन्तात् कः प्रत्ययः?

**लघूत्तरात्मकप्रश्नाः –**

10. तस्य भावस्त्वलौ इति सूत्रं व्याख्यायताम्।
11. अस्मिन् प्रकरणे भावार्थे के प्रत्ययाः? सोदाहरणं लिख्यन्ताम्।
12. इमनिच्प्रत्ययान्तदशशब्दाः लेखनीयाः।

**निबन्धात्मकप्रश्नाः –**

13. अधोलिखितान् प्रयोगान् ससूत्रं साधयत।

    ब्राह्मणवत्, गोत्वम्, गोता, प्रथिमा, पार्थवम्, शौक्ल्यम्, जाड्यम्, सख्यम्, कापेयम्, सैनापत्यम्, पौरोहित्यम्।

14. अधोलिखितानि सूत्राणि व्याख्यातव्यानि।

    र ऋतो हलादेर्लघोः, पृथ्वादिभ्य इमनिज्वा, वर्णदृढादिभ्यः ष्यञ् च, सख्युर्यः।

13. प्रकरणस्थसूत्राणां वार्तिकानाञ्च अर्थोदाहरणसहिता सारणी निर्मेया।

## अथ भवनाद्यर्थकाः

1164. **धान्यानां भवने क्षेत्रे खञ् ( 5-2-1 ) ॥ विधिसूत्रम् ॥**
भवत्यस्मिन् इति भवनम्। (धान्यानां भवने क्षेत्रेऽर्थे षष्ठ्यन्तेभ्यो धान्य-विशेषवाचिभ्यः प्रातिपदिकेभ्यस्तद्धितः खञ् प्रत्ययः स्यात्)। मुद्गानां भवनं क्षेत्रम् मौद्गीनम्।

1165. **व्रीहिशाल्योर्ढक् ( 5-2-2 ) ॥ विधिसूत्रम् ॥**
(षष्ठ्यन्ताभ्यां व्रीहिशालि-प्रातिपदिकाभ्यां भवने क्षेत्रे तद्धितो ढक्प्रत्ययः स्यात्)। व्रैहेयम्। शालेयम्।

1166. **हैयङ्गवीनं सञ्ज्ञायाम् ( 5-2-23 ) ॥ विधिसूत्रम् ॥**
ह्यो गोदोहशब्दस्य हियङ्गुरादेशः, विकारेऽर्थे खञ् च निपात्यते। दुह्यते इति दोहः - क्षीरम्। ह्योगोदोहस्य विकारः हैयङ्गवीनम् = नवनीतम्।

---

1164. **धान्यानामिति** - भवन्ति जायन्ते उत्पद्यन्तेऽस्मिन् इति भवनम्। उत्पत्तिस्थानं भवनम्। **षष्ठीसमर्थेभ्यः धान्यवाचकेभ्यो भवनेऽर्थे खञ्प्रत्ययो भवति, तद् यदि भवनं क्षेत्रं स्यात्।** यथा मौद्गीनम्।

**रूपसिद्धिः**

**मौद्गीनम्** - मुद्गानां भवनं क्षेत्रम् इत्यर्थे 'मुद्ग आम्' इत्यस्मात् ''धान्यानां भवने क्षेत्रे खञ्'' इति खञ्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, खस्य ईनादेशे, ''तद्धितेष्वचामादेः'' इति सूत्रेण आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये, 'मौद्गीनम्' इति रूपं सिद्धम्। स्कन्दपुराणे धान्यान्यथा -

**यवा-गोधूम-धान्यानि तिलाः कङ्गु-कुलत्थकाः।**
**माषा मुद्गा मसूराश्च निष्पावाः श्याम-सर्षपाः॥**
**गवेधुकाश्च नीवास आढक्यश्च सतीनकाः।**
**चणकाश्चीणकाश्चैव धान्यान्यष्टादशैव तु॥**

1165. **व्रीहिशाल्योरिति** - व्रीहिश्च शालिश्च व्रीहिशाली, तयोः = व्रीहिशाल्योः। इतरेतरद्वन्द्वः। **षष्ठ्यन्ताभ्यां व्रीहि-शालिशब्दाभ्यां भवने क्षेत्रेऽर्थे ढक् प्रत्ययः स्यादित्यर्थः।** खञ्प्रत्ययस्यापवादः। यथा व्रैहेयम्। शालेयम्।

**रूपसिद्धिः**

**व्रैहेयम्** - व्रीहीणां भवनं क्षेत्रमित्यर्थे 'व्रीहि आम्' इत्यस्मात् खञं प्रबाध्य ''व्रीहिशाल्योर्ढक्'' इति ढक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, ढस्य एयादेशे, कित्वादादिवृद्धौ, भत्वादिकारलोपे, स्वादिकार्ये 'व्रैहेयम्' इति रूपं सिद्धम्।

**शालेयम्** - शालीनां भवनं क्षेत्रमित्यर्थे 'शालि आम्' इत्यस्मात् ढक्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, ढस्य एयादेशे, कित्वादादिवृद्धौ, भत्वादिकारलोपे, स्वादिकार्ये 'शालेयम्' इति रूपं सिद्धम्।

1166. **हैयङ्गवीनमिति** - 'ह्यः' इति पूर्वदिवसे, तदोत्पन्नो गोदोहः = गोपयो 'ह्योगोदोह' इति। **षष्ठ्यन्तस्य ह्योगोदोहशब्दस्य स्थाने हियङ्गुरादेशः विकारेऽर्थेस्यात् खञ्प्रत्ययश्च निपात्यते इत्यर्थः।** यथा हैयङ्गवीनम्।

**रूपसिद्धिः**

**हैयङ्गवीनम्** - ह्योगोदोहस्य विकार इत्यर्थे 'ह्योगोदोह ङस्' इत्यस्मात् ''हैयङ्गवीनं सञ्ज्ञायाम्'' इति निपातनात् खञ्प्रत्यये प्रकृतेश्च हियङ्गु इत्यादेशे, सुब्लुकि 'हियङ्गु ख' इति जाते, खस्य ईनादेशे, आदिवृद्धौ, ''ओर्गुणः'' इति भस्य उकारस्य ओकारे गुणे, ''एचोऽयवायावः'' इति अवादेशे, स्वादिकार्ये 'हैयङ्गवीनम्' इति रूपं सिद्धम्।

**1167. तदस्य सञ्जातं तारकादिभ्य इतच् ( 5-2-36 ) ॥ विधिसूत्रम् ॥**

(प्रथमान्तेभ्यस्तारकादिभ्यः सञ्जातमस्य इत्यर्थे तद्धित इतच् प्रत्ययः स्यात्)। तारकाः सञ्जाता अस्य तारकितं नभः। पण्डितः। आकृतिगणोऽयम्।

**1168. प्रमाणे द्वयसज्दघ्नञ्मात्रचः ( 5-2-37 ) ॥ विधिसूत्रम् ॥**

तदस्येत्यनुवर्तते। (तत्प्रमाणमस्य इत्यर्थे प्रमाणे वर्त्तमानात् प्रथमान्तात् प्रातिपदिकाद् द्वयसच् दघ्नच् मात्रच् इत्येते त्रयस्तद्धिताः प्रत्ययाः स्युः) ऊरू प्रमाणमस्य ऊरूद्वयसम्, ऊरूदघ्नम्, ऊरूमात्रम्।

---

1167. **तदस्येति** – तद्, अस्य, सञ्जातम्, तारकादिभ्यः, इतच् इतिच्छेदः। तारकाशब्दः आदिर्येषां तानि तारकादीनि, तेभ्यः = तारकादिभ्यः तद्गुणसंविज्ञानबहुव्रीहिः। चकारानुबन्धः अन्तोदात्तस्वरार्थः। **प्रथमासमर्थेभ्यः तारकादिभ्यः तद् अस्य सञ्जातमित्यर्थे इतच्-प्रत्ययः स्यादित्यर्थः।** तारकितम्। तारकादिगणो यथा – तारका। पुष्प। कर्णक। मञ्जरी। ऋजीष। क्षण। सूच। (सूचक)। मूत्र। निष्क्रमण। पुरीष। उच्चार। प्रचार। विचार। कुड्मल (वड्मल)। कण्टक। मुसल। मुकुल। कुसुम। कुतूहल। स्तबक (स्तवक)। किसलय। पल्लव। खण्ड। वेग। निद्रा। मुद्रा। बुभुक्षा। धेनुष्या। पिपासा। श्रद्धा। अभ्र। पुलक। अङ्गारक। वर्णक। द्रोह। दोह। सुख। दुःख। उत्कण्ठा (उत्कण्ठ)। भर। व्याधि। वर्मन्। व्रण। गौरव। शास्त्र। तरङ्ग। तिलक। चन्द्रक। अन्धकार। गर्व। मुकुर। हर्ष। उत्कर्ष। रण। कुवलय। गर्ध। क्षुध्। सीमन्त। ज्वर। गर। रोग। रोमाञ्च। पण्डा। कज्जल। तृष्। कोरक। कल्लोल। स्थपुट। फल। कञ्चुक। शृङ्गार। अङ्कुर। शैवल। बकुल। श्वभ्र। आराल। कलङ्क। कर्दम। कन्दल। मूर्च्छा। अङ्गार। हस्तक (हस्त)। प्रतिबिम्ब। विघ्न। तन्त्र। प्रत्यय। दीक्षा। गर्ज। गर्भादप्राणिनि। तन्द्रा। स्रवक। कर। आन्दोल। गोर। राग। आकृतिगणोऽयम्।

**रूपसिद्धिः**

**तारकितं नभः** – तारकाः सञ्जाता अस्य (नभसः) इत्यर्थे 'तारका जस्' इत्यस्मात् ''तदस्य सञ्जातं तारकादिभ्य इतच्'' इति इतच्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, भत्वादाकारलोपे, स्वादिकार्ये 'तारकितम्' इति रूपं सिद्धम्।

**पण्डितः ( पुरुषः )** – पण्डा (सदसद्विवेकिनी बुद्धिः) सञ्जाता अस्य इत्यर्थे 'पण्डा सु' इत्यस्मात् इतच्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुपो लुकि, भत्वादाकारलोपे, स्वादिकार्ये 'पण्डितः' इति रूपं सिद्धम्। एवमेव पुष्पितो वृक्षः, कुसुमिता लता, बुभुक्षितो बालः, पिपासितः पुरुषः, पुलकितं वपुः, विहितं कार्यम्, व्याधितः, उत्कण्ठितः, तरङ्गितः सागरः, निद्रितः, रोमाञ्चितः देहः, अभ्रितं नभः, गर्वितो मूर्खः, कलङ्किता युवतिः इत्यादयोऽपि बोधनीयाः।

1168. **प्रमाणे इति** – प्रमाणे, द्वयसज्-दघ्नञ्-मात्रचः इतिच्छेदः। द्वयसच् च दघ्नच् च मात्रच् च द्वयसज्दघ्नञ्मात्रचः, इतरेतरद्वन्द्वः। **प्रथमान्ताद् अस्य प्रमाणमित्यर्थे द्वयसच् दघ्नच्, मात्रच् इत्येते प्रत्ययाः स्युः।** यथा ऊरूद्वयसम् इत्यादि।

**रूपसिद्धिः**

**ऊरूद्वयसम्** – ऊरू प्रमाणमस्य इत्यर्थे 'ऊरू सु' इत्यस्मात् ''प्रमाणे द्वयसज्दघ्नञ्मात्रचः'' इति द्वयसच् प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये ऊरूद्वयसम् इति रूपं सिद्धम्।

**ऊरूदघ्नम्** – ऊरू प्रमाणमस्येत्यर्थे 'ऊरू सु' इत्यस्मात् प्रकृतसूत्रेण दघ्नच्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये 'ऊरूदघ्नम्' इति रूपं सिद्धम्।

**ऊरूमात्रम्** – ऊरू प्रमाणमस्य (ऊरूप्रमाणं नदीजलम्) इत्यर्थे 'ऊरू सु' इत्यस्मात् ''प्रमाणे द्वयसज्दघ्नञ्मात्रचः'' इति मात्रच् प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये ऊरूमात्रम् इति रूपं सिद्धम्। स्त्रीत्वे टिड्ढाणञिति ङीपि ऊरूद्वयसी, ऊरूदघ्नी, ऊरूमात्री इति। एवमेव जानुप्रमाणमस्य-जानुद्वयसम्, जानुदघ्नम्, जानुमात्रम्। नाभिः प्रमाणमस्याः – नाभिद्वयसी, नाभिदघ्नी, नाभिमात्री इत्यादयोऽपि।

**1169. यत्तदेतेभ्यः परिमाणे वतुप् ( 5-2-39 ) ॥विधिसूत्रम् ॥**

('तत्परिमाणमस्य' इत्यर्थे परिमाणे वर्त्तमानेभ्य प्रथमान्तेभ्यो यत्तदेतेभ्यस्तद्धितसञ्ज्ञो वतुप् प्रत्ययः स्यात्)।
यत् परिमाणमस्य यावान्। तावान्। एतावान्।

**1170. किमिदम्भ्यां वो घः ( 5-2-40 ) ॥विधिसूत्रम् ॥** आभ्यां वतुप्, वकारस्य घश्च।

**1171. इदं किमोरीश्की ( 6-3-89 ) ॥विधिसूत्रम् ॥**

दृग्दृशवतुषु इदम ईश्, किमः की स्यात्। कियान्। इयान्।

---

**1167. यत्तदेतेभ्य इति** - यत्तदेतेभ्यः परिमाणे, वतुप् इतिच्छेदः। यत् च तत् च एतत् च तेभ्यः = यत्तदेतेभ्यः इतरेतरद्वन्द्वः। **परिमाणवाचकेभ्यः यद्, तद्, एतद् इति प्रथमासमर्थेभ्य 'तद् अस्य परिमाणम्' इत्यर्थे वतुप्-प्रत्ययो भवतीत्यर्थः।** यथा-यावान्। तावान्। एतावान्।

**रूपसिद्धिः**

**यावान्** - यत्परिमाणमस्येत्यर्थे ('जितना' इति भाषायाम्) 'यद् सु' इत्यस्मात् ''यत्तदेतेभ्यः परिमाणे वतुप्'' इति वतुप्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुपो लुकि, यद् वत् इति जाते, ''आ सर्वनाम्नः'' इति दस्य आत्वे, सवर्णदीर्घे 'यावत्' इति जाते, पुनः प्रातिपदिकसञ्ज्ञायां ''स्वौजस्.'' इत्यादिना प्रथमैकवचने सुप्रत्ययेऽनुबन्धलोपे यावत् स् इति जाते, ''अत्वसन्तस्य चाऽधातोः'' इति उपधादीर्घे यावात् स् इति जाते, ''उगिदचां सर्वनामस्थानेऽधातोः'' इति नुमागमेऽनुबन्धलोपे, यावान् त् स् इति जाते, ''हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्'' इति सुलोपे, ''संयोगान्तस्य लोपः'' इति तलोपे 'यावान्' इति रूपं सिद्धम्। स्त्रीत्वे यावती। नपुंसके यावत्।

**तावान्** - तत् परिमाणमस्येत्यर्थे 'तद् सु' इत्यस्मात् वतुप्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, दस्य आत्वे, सवर्णदीर्घे, तावत् इत्यस्य प्रातिपदिकत्वात् सुप्रत्ययेऽनुबन्धलोपे तावत् स् इति जाते, उपधादीर्घे, नुमागमेऽनुबन्धलोपे, सुलोपे, तलोपे 'तावान्' इति रूपं सिद्धम्। स्त्रीत्वे तावती। नपुंसके तावत्।

**एतावान्** - एतत्परिमाणमस्येत्यर्थे 'एतद् सु' इत्यस्मात् वतुप् प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, दस्य आत्वे, सवर्णदीर्घे, स्वादिकार्ये 'एतावान्' इति रूपं सिद्धम्। स्त्रीत्वे एतावती एतावत्यौ एतावत्यः। नपुंसके एतावत्, एतावती, एतावन्ति।

**1170. किमिदम्भ्यामिति - तदस्य परिमाणमित्यर्थे प्रथमान्ताभ्यां किमिदम् इति शब्दाभ्यां वतुप् स्याद्, वस्य च घ इत्यर्थः।** किमिदम्भ्यां वतुप्प्रत्ययो भवति इति घविधानमेव ज्ञापकमेतस्य।

**1171. इदं किमोरिति** - इदंकिमोः, ईश्की इतिच्छेदः। ईश् च की च ईश्की, इतरेतरद्वन्द्वे सौत्रत्वाद्विभक्तेर्लुक्। अथवा 'ईश्, की' इत्येवं द्वे पदे बोध्ये। **इदम्, किम् इत्यनयोः क्रमशः ईश् की इत्यादेशौ भवतः, दृग्दृश्वतुषु परेषु।** यथा कियान्। इयान्।

**रूपसिद्धिः**

**कियान्** - किं परिमाणमस्येत्यर्थे 'किम् सु' इत्यस्मात् ''किमिदम्भ्यां वो घः'' इति वतुप्-प्रत्ययेऽनुबन्धलोपे वस्य घत्वे च कृते, सुब्लुकि, किम् घत् इति जाते, ''आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्'' इति घस्य इयादेशे, किम् इयत् इति जाते, ''एकदेशविकृतमनन्यवत्'' इति न्यायेन वतु परे ''इदं किमोरीश्की'' इति किमः स्थाने की इति सर्वादेशे, की इयत् इति जाते, भत्वादीकारलोपे, कियत् इति जाते, प्रातिपदिकत्वात् प्रथमैकवचने सुविभक्तौ अनुबन्धलोपे कियत् स् इति जाते, ''अत्वसन्तस्य चाऽधातोः'' इति उपधादीर्घे, उगित्वान्नुमागमे, अनुबन्धलोपे कियान् त् स् इति जाते, हल्ङ्यादिसलोपे, संयोगान्ततलोपे ''कियान्'' इति रूपं सिद्धम्। धीमत्शब्दवद्रूपाणि भवन्ति। स्त्रीत्वे उगित्वात् ङीपि कीयती, कीयत्यौ, कीयत्यः। नदीवत्। नपुंसके कियत्, कियती, कियन्ति। शकृद्वत्।

**इयान्** - इदं परिमाणमस्येत्यर्थे 'इदम् सु' इत्यस्मात् ''किमिदम्भ्यां वो घः'' इति वतुप्-प्रत्ययेऽनुबन्धलोपे वस्य घत्वे च कृते, प्रातिपदिकत्वात् सुब्लुकि, इदम् घत् इति जाते, घस्य इयादेशे, ''इदंकिमोरीश्की'' इति इदमः ईश् इति सर्वादेशेऽनुबन्धलोपे, ई इयत् इति जाते, भत्वादीकारलोपे, इयत् इति जाते, पुनः प्रातिपदिकत्वात्स्वादिकार्ये 'इयान्' इति रूपं सिद्धम्।

**1172. संख्याया अवयवे तयप् ( 5-2-42 ) ॥विधिसूत्रम् ॥**

(अवयवे वर्त्तमानात् संख्यावाचकात् प्रथमान्तात् प्रातिपदिकाद् अस्येत्यर्थे तद्धितस्तयप् प्रत्ययः)। पञ्च अवयवा अस्य पञ्चतयम्।

**1173. द्वित्रिभ्यां तयस्यायज्वा ( 5-2-43 ) ॥विधिसूत्रम् ॥**

(द्वित्रिभ्यां परस्य तयस्य 'अयच्' इत्यादेशो वा स्यात्)। द्वयम्, द्वितयम्। त्रयम्, त्रितयम्।

**1174. उभादुदात्तो नित्यम् ( 5-2-44 ) ॥विधिसूत्रम् ॥**

उभशब्दात् तयपोऽयच् स्यात् स चाद्युदात्तः। उभयम्।

---

**1172. संख्याया इति - प्रथमान्तात् संख्यावाचकाद् अवयवा अस्येत्यर्थे तयप्-प्रत्ययः स्यादित्यर्थः।** यथा पञ्चतयम्।

**रूपसिद्धिः**

**पञ्चतयम्** - पञ्च अवयवा अस्य इत्यर्थे 'पञ्चन् जस्' इत्यस्मात् ''संख्याया अवयवे तयप्'' इति तयप्-प्रत्ययेऽनुबन्धलनोपे, पञ्चन् तय इति जाते, ''स्वादिष्वसर्वनामस्थाने'' इति पदसञ्ज्ञायां, ''नलोपः प्रातिपदिकान्तस्य'' इति नलोपे, नपुंसके स्वादिकार्ये 'पञ्चतयम्' इति रूपं सिद्धम्। स्त्रीत्वविवक्षायां ''टिड्ढाणञिति'' ङीपि, भत्वादकारलोपे, 'पञ्चतयी' इति रूपम्।

1. एवमेव चत्वारोऽवयवा अस्य - चतुष्टयम्।
   (चतुर् इति रेफस्य विसर्गे, विसर्गस्य सत्वे, सस्य षत्वे, ष्टुत्वे रूपम्)
2. षड् अवयवा अस्य - षट्तयम् (षष्+तय इत्यवस्थायां जश्त्वचर्त्वे)।
3. सप्त अवयवा अस्य - सप्ततयम्।
4. अष्टौ अवयवा अस्य - अष्टतयम्।
5. नव अवयवा अस्य - नवतयम्। इत्याद्यपि।

**1173. द्वित्रिभ्यामिति** - द्वित्रिभ्याम्, तयस्य, अयच्, वा इतिच्छेदः। द्विश्च त्रिश्च द्वित्री, ताभ्याम् = द्वित्रिभ्याम्, इतरेतरद्वन्द्वः। **द्वित्रिशब्दाभ्यां परस्य तयप्-प्रत्ययस्य स्थाने अयच् इत्यादेशो वा स्यादित्यर्थः।** यथा द्वयम् इत्यादि। चकारोऽनुबन्धः अन्तोदात्तस्वरार्थः।

**रूपसिद्धिः**

**द्वयं द्वितयं वा** - द्वौ अवयवौ अस्य इत्यर्थे 'द्वि औ' इत्यस्मात् तयप्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि द्वि तय इति जाते, ''द्वित्रिभ्यां तयस्यायज्वा'' इति विकल्पेन तय इत्यस्य स्थाने 'अयच्' इत्यादेशेऽनुबन्धलोपे द्वि अय इति जाते, भत्वादिकारलोपे, स्वादिकार्ये 'द्वयम्' इति रूपं सिद्धम्। पक्षे अयचोऽभावे द्वितयम् इति रूपम्।

**त्रयं त्रितयं वा** - त्रयोऽवयवा अस्येत्यर्थे 'त्रि जस्' इत्यस्मात् तयप्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, त्रि तय इति जाते, तयस्य विकल्पेन अयच् इत्यादेशे, अनुबन्धलोपे, त्रि अय इति जाते, भत्वादिकारलोपे, स्वादिकार्ये, 'त्रयम्' इति रूपं सिद्धम्। पक्षे विकल्पाभावे (अयचोऽभावे) 'त्रितयम्' इति रूपम्।

**1174. उभादुदात्त इति** - उभात्, उदात्तः, नित्यम् इतिच्छेदः। उभशब्दात् तयप्प्रत्ययस्य स्थाने अयच् इत्यादेशो भवतीत्यर्थः। स च नित्यम् आद्युदात्तः। यथा उभयम्।

**रूपसिद्धिः**

**उभयम्** - उभौ अवयवौ अस्येत्यर्थे ''संख्याया अवयवे तयप्'' इति तयप्प्रत्यये, अनुबन्धलोपे, सुब्लुकि, ''उभादुदात्तो नित्यम्'' इति तयस्य अयच् आदेशे भत्वादकारलोपे उभ् अय इति जाते, स्वादिकार्ये 'उभयम्' इति रूपं सिद्धम्। उभयो मणिः। स्त्रीत्वे टिड्ढाणञिति ङीपि 'उभयी' इति रूपम्। उभयशब्दस्य द्विवचनं न भवति।

**1175. तस्य पूरणे डट् ( 5-2-48 ) ॥विधिसूत्रम् ॥**

( संख्यावाचकात् षष्ठ्यन्तात् पूरणेऽर्थे तद्धितो डट् प्रत्ययः स्यात् ) । एकादशानां पूरण एकादशः ।

**1176. नान्तादसंख्यादेर्मट् ( 5-2-49 ) ॥विधिसूत्रम् ॥**

डटो मडागमः । पञ्चानां पूरणः – पञ्चमः । नान्तात् किम्? –

**1177. तिविंशतेर्डिति ( 6-4-142 ) ॥विधिसूत्रम् ॥**

विंशतेर्भस्य तिशब्दस्य लोपो डिति परे । विंशः । असंख्यादेः किम्? एकादशः ।

---

1175. **तस्य, पूरण इति** – तस्य, पूरणे, डट् इतिच्छेदः । **षष्ठ्यन्तात् संख्यावाचकात् पूरणेऽर्थे डट् प्रत्ययः स्यात् ।** डकारटकारौ इत्सञ्ज्ञकौ । 'अ' इति शेषे भवति । डित्त्वाट्टिलोपः । एकादशः ।

**रूपसिद्धिः**

**एकादशः** – 'एकादशानां पूरणः' इत्यर्थे 'एकादशन् आम्' इत्यस्मात् ''तस्य पूरणे डट्'' इति डट्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि 'एकादशन् अ' इति जाते, डित्त्वात् ''टेः'' इति सूत्रेण भस्य टेः ( अनः ) लोपे, स्वादिकार्ये 'एकादशः' इति रूपं सिद्धम् । स्त्रीत्वविवक्षायां टित्त्वात् ''टिड्ढाणञि'' ङीपि 'एकादशी' इति । नपुंसके एकादशम् इति । एवमेव द्वादशः, त्रयोदशः, चतुर्दशः, पञ्चदशः, षोडशः, सप्तदशः, अष्टादशः, इत्यादयोऽपि ज्ञातव्याः ।

1176. **नान्तादिति** – नान्तात्, असंख्यादेः, मट्, इतिच्छेदः । न् अन्तो यस्य तत् नान्तम्, तस्मात् = नान्तात्, बहुव्रीहिः । संख्या आदिर्यस्य तत् संख्यादि, बहुव्रीहिसमासः । न संख्यादि असंख्यादि, तस्माद् असंख्यादेः, नञ्तत्पुरुषः । मटि अकारटकारौ इत्सञ्ज्ञकौ । म् इति शिष्यते । 'मट्' टित् अस्ति अतः ''आद्यन्तौ टकितौ'' इत्यनुसारमयं डट आद्यवयवो भवति । **नान्तात् संख्यावाचकाद् असंख्यादेः परस्य डटः मडागमः स्यादित्यर्थः ।** यथा पञ्चमः ।

**रूपसिद्धिः**

**पञ्चमः** – पञ्चानां पूरण इत्यर्थे 'पञ्चन् आम्' इत्यस्मात् ''तस्य पूरणे डट्'' इति डट्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुपो लुकि, पञ्चन् अ इति जाते, अन्तरङ्गत्वात् टिलोपं प्रबाध्य ''नान्तादसंख्यादेर्मट्'' इति मडागमे अनुबन्धलोपे पञ्चन् म इति जाते, पदसञ्ज्ञायाम्, 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे, स्वादिकार्ये 'पञ्चमः' इति रूपं सिद्धम् । एवमेव सप्तमः, अष्टमः, नवमः । दशमः ।

1177. **तिविंशतेरिति** – ति (लुप्तषष्ठीकं पदम्), विंशतेः, डिति इतिच्छेदः । ड् इद् यस्य स डित्, तस्मिन् = डिति, बहुव्रीहिसमासः । **डिति परे विंशतिशब्दस्य भस्यावयवस्य 'ति' इत्यस्य लोपः स्यादित्यर्थः ।**

**रूपसिद्धिः**

**विंशः** – विंशतेः पूरणः इत्यर्थे 'विंशति ङस्' इत्यस्मात् ''तस्य पूरणे डट्'' इति डट्-प्रत्ययेऽनुबन्धलोपे, विंशति ङस् अ इति जाते, प्रातिपदिकत्वात्सुपो लुकि, भसञ्ज्ञायाम्, ''तिविंशतेर्डिति'' इति तिलोपे, विंश अ इति जाते तिलोपस्य असिद्धत्वात् यस्येति चेति अलोपाभावे ''अतो गुणे'' इति पररूपे, स्वादिकार्ये 'विंशः' इति रूपं सिद्धम् ।

**असंख्यादेः किम्? एकादशः** – नान्तादसंख्यादेर्मट् इति सूत्रे असंख्यादेः इति किमर्थमुक्तम्? – असंख्यादेः परस्य एव टडो मडागमः स्यात् । किन्तु एकादशः इत्यत्र नान्तात् संख्यादेः परः डट् अस्ति, अतः मडागमो न भवति ।

**1178. षट्-कति-कतिपय-चतुरां थुक् ( 5-2-51 ) ॥विधिसूत्रम् ॥**

एषां थुगागमः स्याड्डटि। षण्णां पूरणः-षष्ठः। कतिथः। कतिपय-शब्दस्याऽसंख्यात्वेऽपि अत एव ज्ञापकाड् डट्। कतिपयथः। चतुर्थः।

**1179. द्वेस्तीयः ( 5-2-54 ) ॥विधिसूत्रम् ॥**

डटोऽपवादः। द्वयोः पूरणः - द्वितीयः।

**1180. त्रेः सम्प्रसारणञ्च ( 5-2-55 ) ॥विधिसूत्रम् ॥**

तृतीयः।

---

1178. **षट्-कति इति** - षट्-कति-कतिपय-चतुराम्, थुक्, इतिच्छेदः। षट् च कतिश्च कतिपयश्च चतुश्च षट्कतिकतिपयचतुरः, तेषाम् = षट्कतिकतिपयचतुराम्, इतरेतरद्वन्द्वः। **षष्, कति, कतिपय, चतुर् इत्येषां शब्दानां डटि परे थुगागमो भवति इत्यर्थः।** यथा - षष्ठः।

**रूपसिद्धिः**

**षष्ठः** - 'षण्णां पूरणः' इत्यर्थे 'षष् आम्' इत्यस्मात् ''तस्य पूरणे डट्'' इति डट्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुपो लुकि, षष् अ इति जाते, ''षट्कतिकतिपयचतुरां थुक्'' इति थुगागमेऽनुबन्धलोपे, षष् थ् अ इति जाते, ''ष्टुना ष्टुः'' इति थस्य ठत्वे ष्टुत्वे, स्वादिकार्ये 'षष्ठः' इति रूपं सिद्धम्। स्त्रीत्वे टिड्ढाणञिति ङीपि षष्ठी, नपुंसके 'षष्ठम्' इति रूपं भवति।

**कतिथः** - 'कतीनां पूरणः' इत्यर्थे 'कति आम्' इत्यस्मात् डट्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, थुगागमेऽनुबन्धलोपे कतिथ् अ इति जाते, स्वादिकार्ये 'कतिथः' इति रूपं सिद्धम्।

**कतिपयथः** - 'कतिपयानां पूरणः' इत्यर्थे 'कतिपय आम्' इत्यस्मात् कतिपयशब्दस्याऽसंख्यात्वेऽपि अत एव ज्ञापकात् ''तस्य पूरणे डट्'' इति डट्-प्रत्ययेऽनुबन्धलोपे, कतिपय आम् अ इति जाते, प्रातिपदिकत्वात्सुब्लुकि, कतिपय अ इति जाते, ''षट्कतिकतिपयचतुरां थुक्'' इति थुगागमेऽनुबन्धलोपे, स्वादिकार्ये 'कतिपयथः' इति रूपं सिद्धम्।

**चतुर्थः** - 'चतुर्णां पूरणः' इत्यर्थे 'चतुर् आम्' इत्यस्मात् डट्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, चतुर् अ इति जाते, थुगागमेऽनुबन्धलोपे, स्वादिकार्ये 'चतुर्थः' इति रूपं सिद्धम्।

**विशेषः** - चतुर्शब्दात् पूरणार्थे डट्प्रत्ययस्य अतिरिक्तं ''चतुरश्छयतौ आद्यक्षरलोपश्च'' इति वार्तिकेन छप्रत्यये, आद्यक्षर - लोपे च, छस्य ईयादेशे स्वादिकार्ये 'तुरीयः', यति 'तुर्यः' इति रूपद्वयमपि भवति।

**द्वेस्तीय इति** - द्वेः, तीयः इतिच्छेदः। **षष्ठीसमर्थाद् द्विशब्दात् पूरणेऽर्थे तीयप्रत्ययः स्यादित्यर्थः।** यथा द्वितीयः।

**रूपसिद्धिः**

**द्वितीयः** - 'द्वयोः पूरणः' इत्यर्थे 'द्वि ओस्' इत्यस्मात् ''द्वेस्तीयः' इति सूत्रेण तीयप्रत्यये, प्रातिपदिकत्वात्सुब्लुकि, स्वादिकार्ये 'द्वितीयः' इति रूपं सिद्धम्। स्त्रीत्वविवक्षायां टापि, सवर्ण-दीर्घे 'द्वितीया' इति नपुंसके च 'द्वितीयम्' इत्यपि भवति।

1180. **त्रेः सम्प्रसारणमिति - षष्ठ्यन्तात् त्रिशब्दात् पूरणेऽर्थे तीयप्रत्ययो भवति, त्रि इत्यस्य सम्प्रसारणञ्च स्यादित्यर्थः।** यथा - तृतीयः। डटोऽपवादः।

**रूपसिद्धिः**

**तृतीयः** - 'त्रयाणां पूरणः' इत्यर्थे 'त्रि आम्' इत्यस्मात् डट्-प्रत्ययं प्रबाध्य 'त्रेः सम्प्रसारणञ्च' इति तीयप्रत्यये सुब्लुकि, रेफस्य ऋकारे सम्प्रसारणे तृ इ तीय इति जाते, ''सम्प्रसारणाच्च'' इति ऋकारइकारयो ऋकारे पूर्वरूपे, स्वादिकार्ये 'तृतीयः' इति रूपं सिद्धम्। स्त्रीत्वे टापि, सवर्णदीर्घे तृतीया, नपुंसके तृतीयम् इति।

1181. **श्रोत्रियंश्छन्दोऽधीते ( 5-2-84 ) ॥विधिसूत्रम् ॥** श्रोत्रियः। वेत्यनुवृत्तेश्छान्दसः।
1182. **पूर्वादिनिः ( 5-2-86 ) ॥विधिसूत्रम् ॥** पूर्वं कृतमनेन – पूर्वी
1183. **सपूर्वाच्च ( 5-2-87 ) ॥विधिसूत्रम् ॥**
( विद्यमानपूर्वादपि पूर्वशब्दाद् अनेनेति कर्त्रर्थे तद्धित इनिः प्रत्ययः स्यात् ) ।
1184. **इष्टादिभ्यश्च ( 5-2-88 ) ॥विधिसूत्रम् ॥**
( प्रथमान्तेभ्य इष्टादिभ्योऽनेनेत्यर्थे तद्धित इनिः प्रत्ययः स्यात् ) । इष्टमनेन इष्टी। अधीती।

---

1181. **श्रोत्रियमिति** – श्रोत्रियम्, छन्दः, अधीते, इतिच्छेदः। **'छन्दोऽधीते' इत्यर्थे द्वितीयान्तात् छन्द्स्शब्दाद् घन्-प्रत्ययः, छन्दसः ( प्रकृतेश्च ) श्रोत्रादेशश्च निपात्यते इत्यर्थः।** यथा श्रोत्रियः।

**रूपसिद्धिः**

**श्रोत्रियः** – 'छन्दोऽधीते' इत्यर्थे 'छन्दस् अम्' इत्यस्मात् ''श्रोत्रियंश्छन्दोऽधीते'' इति निपातनात् घन्प्रत्यये, अनुबन्धलोपे, सुब्लुकि, 'छन्दस्' 'इत्यस्य स्थाने श्रोत्र इत्यादेशः निपात्यते, श्रोत्र घ इति जाते, घस्य इयादेशे, भत्वादकारलोपे, स्वादिकार्ये 'श्रोत्रियः' इति रूपं सिद्धम्।

1182. **पूर्वादिनिरिति** – पूर्वात्, इनिः, इतिच्छेदः। **क्रियाविशेषण-पूर्वशब्दात् 'अनेन' इत्यर्थे कर्तरि इनिप्रत्ययः स्यादित्यर्थः।** अत्र इन् इति शिष्यते।

**रूपसिद्धिः**

**पूर्वी** – पूर्वं कृतमनेन इत्यर्थे 'पूर्व अम्' इत्यस्मात् ''पूर्वादिनिः'' इति इनिप्रत्ययेऽनुबन्धलोपे, सुब्लुकि, पूर्व इन् इति जाते, भत्वादकारलोपे, पूर्विन् इत्यस्य प्रातिपदिकसञ्ज्ञायाम्, प्रथमैकवचने सुप्रत्ययेऽनुबन्धलोपे, पूर्विन् स् इति जाते, ''सौ च'' इत्युपधादीर्घे, पूर्वीन् स् इति जाते, हल्ङ्यादिना सलोपे, नलोपे 'पूर्वी' इति रूपं सिद्धम्।

1183. **सपूर्वाच्चेति** – सपूर्वात्, च, इतिच्छेदः। विद्यमानं पूर्वं यस्य तत् सपूर्वम्, तस्मात् = सपूर्वात्, बहुव्रीहिसमासः। **सपूर्वात् पूर्वशब्दात् च 'अनेन' इत्यर्थे कर्तरि इनिप्रत्ययः स्यादित्यर्थः।** यथा – कृतपूर्वी।

**रूपसिद्धिः**

**कृतपूर्वी** – पूर्वं कृतम् अनने इत्यर्थे 'पूर्वं कृतम्' – कृतपूर्वम् इति सुप्सुपा-समासे 'कृतपूर्व सु' इत्यस्मात् ''सपूर्वाच्च'' इति इनिप्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, भत्वादकारलोपे, कृतपूर्विन् इत्यस्य प्रातिपदिकत्वात् सौ उपधादीर्घे, सलोपे नलोपे च कृते 'कृतपूर्वी' इति रूपं सिद्धम्। एवमेव भुक्तपूर्वी इत्यादयः।

1184. **इष्टादिभ्य इति** – इष्टादिभ्यः, च, इतिच्छेदः। इष्टशब्दः आदिर्येषां ते इष्टादयः, तेभ्यः = इष्टादिभ्यः, तद्गुणसंविज्ञानबहुव्रीहिः। इष्टादिरेकः क्तप्रत्ययान्तशब्दानां गणोऽस्ति। **प्रथमान्त-इष्टादिगणपठितशब्देभ्यः 'अनेन' इत्यर्थे कर्तरि तद्धितसञ्ज्ञकः इनिप्रत्ययः स्यादित्यर्थः।** यथा इष्टी। अधीती। इष्टादिगणो यथा – इष्ट। पूर्त। उपासादित (उपसादित)। निगदित। परिगदित। परिवादित। निकथित। निषादित। निपठित। संकलित। परिकलित। संरक्षित। परिरक्षित। अर्चित। गणित। अवकीर्ण। आयुक्त। गृहीत। आम्नात। श्रुत। आम्नातश्रुत। अधीत। आसेवित। अवधारित। अवकल्पित। निराकृत। उपकृत। उपाकृत। अनुयुक्त। अनुगणित। अनुपठित। व्याकुलित। परिकथित। संकल्पित। पठित। विकलित। निपतित। अनुपठित। व्याकुलित। परिकथित। संकल्पित। पठित। विकलित। निपतित। पूर्जित। परिगणित। उपगणित। अपवारित। उपनत। निगृहीत। अपचित।

**रूपसिद्धिः**

**इष्टी ( अध्वरेषु )** – इष्टम् अनेन इत्यर्थे ('यज देवपूजासंगतिकरणदानेषु' धातोः क्तप्रत्यये, वचिस्वपि. इत्यादिना सम्प्रसारणे, पूर्वरूपे, षत्वे, ष्टुत्वे च इष्टम् इति रूपम्) अत्र 'इष्ट सु' इत्यस्मात् ''इष्टादिभ्यश्च'' इति इनिप्रत्यये, अनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, भत्वादकारलोपे इष्टिन् इत्यस्मात् सुप्रत्ययेऽनुबन्धलोपे, उपधादीर्घे, सलोपे नलोपे च कृते 'इष्टी' इति रूपं सिद्धम्।

**अधीती ( व्याकरणे )** – अधीतम् अनेन इत्यर्थे 'अधीत सु' इत्यस्मात् ''इष्टादिभ्यश्च'' इति सूत्रेण इनिप्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वादकारलोपे अधीतिन् इत्यस्मात् सुप्रत्ययेऽनुबन्धलोपे, उपधादीर्घे, सलोपे नलोपे च कृत 'अधीती' इति रूपं सिद्धम्। एवमेव पठिती शास्त्रे, अर्चिती गोविन्दे, उपकृती मित्रेषु, कृती कृत्येषु परिगणिती ज्योतिषि, पूजिती देवेषु, संरक्षिती भृत्यवर्गे इत्यादयोऽपि ज्ञातव्याः। अत्र ध्यात्वयं यत् यदा क्तान्ताद् इनिः क्रियते तदा तस्य इन्नन्तस्य कर्मणि ''क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्'' इति वार्तिकेन सप्तमी भवति।

## ॥ अभ्यासः ॥

**वस्तुनिष्ठात्मकप्रश्नाः –**

1. 'पण्डितः' इत्यत्र प्रत्ययोऽस्ति –

| | | | |
|---|---|---|---|
| (क) | क्त | (ख) | इतच् |
| (ग) | इत | (घ) | कोऽपि न |

2. ऊरूद्वयम् इत्यत्र प्रत्ययः कस्मिन्नर्थे भवति?

| | | | |
|---|---|---|---|
| (क) | प्रमाणे | (ख) | परिमाणे |
| (ग) | कखौ | (घ) | कोऽपि न |

3. द्वयमित्यत्र तयप आदेशो भवति –

| | | | |
|---|---|---|---|
| (क) | अय् | (ख) | अयच् |
| (ग) | कखौ | (घ) | कोऽपि न |

**अतिलघूत्तरात्मकप्रश्नाः –**

4. व्रीहिशालिभ्यां कस्मिन्नर्थे कः प्रत्ययः?
5. हैयङ्गवीनम् इति कस्य विकारः?
6. तारकाः सञ्जाता अस्येत्यस्य तद्धितान्तरूपं किम्?
7. यत्तदेतेभ्यः कस्मिन्नर्थे कः प्रत्ययः?
8. इयान् इत्यत्र कः प्रत्ययः केन क्रियते?
9. संख्यावाचकात् तयप्–प्रत्ययः कस्मिन्नर्थे?
10. षष्ठ्यन्तात् संख्यावाचकात् कस्मिन् अर्थे कः प्रत्ययः?

**लघूत्तरात्मकप्रश्नाः –**

11. इष्टादिभ्यश्चेति सूत्रार्थं लिखन्तु।
12. व्रीहिशाल्योर्ढक् इति सूत्रार्थं लिखन्तु।
13. किमिदम्भ्यां वो घः इति सूत्रार्थं सोदाहरणं लिखन्तु।
14. द्वित्रिभ्यां तयस्यायज्वा इति सूत्रार्थं लिखन्तु।

**निबन्धात्मकप्रश्नाः –**

15. अधोलिखित–विग्रहानुसारं ससूत्रं प्रयोगाः साधनीयाः।

| | | | |
|---|---|---|---|
| 1. | भवनं क्षेत्रम् | 2. | पण्डा सञ्जाता अस्य |
| 3. | तत्परिमाणमस्य | 4. | ह्योगोदोहस्य विकारः |
| 5. | किं परिमाणमस्य | 6. | द्वौ अवयवौ अस्य |
| 7. | उभौ अवयवौ अस्य | 8. | एकादशानां पूरणः |
| 9. | पञ्चानां पूरणः | 10. | विंशतेः पूरणः |
| 11. | षण्णां पूरणः | 12. | द्वयोः पूरणः |

| | | | |
|---|---|---|---|
| 13. | त्रयाणां पूरण: | 14. | छन्दोऽधीते |
| 15. | पूर्वं कृतमनेन | 16. | इष्टमनेन |
| 17. | अधीतमनेन | 18. | पञ्च अवयवा अस्य |

16. अधोलिखितसूत्राणां सोदाहरणं व्याख्या कार्या।

| | | | |
|---|---|---|---|
| 1. | संख्याया अवयवे तयप् | 2. | तस्य पूरणे डट् |
| 3. | नान्तादसंख्यादेर्मट् | 4. | धान्यानां भवने क्षेत्रे खञ् |
| 5. | पूर्वादिनि: | 6. | सपूर्वाच्च |
| 7. | यत्तदेतेभ्य: परिमाणे वतुप् | 8. | प्रमाणे द्वयसज्दघ्नञ्मात्रच: |
| 9. | षट्-कति-कतिपय-चतुरां थुक् | 10. | उभादुदात्तो नित्यम् |

17. एकत: शतं पर्यन्तं संख्या: संस्कृते लेखनीया:।

18. द्वित: दशपर्यन्तं पूरणप्रत्ययान्तसंख्या: पुंल्लिङ्गे स्त्रीलिङ्गे च लेखनीया:।

19. प्रकरणस्थ-सूत्राणाम् अर्थोदाहरणसहिता सारणी निर्मेया।

# अथ मत्वर्थीया:

**1185. तदस्यास्त्यस्मिन्निति मतुप् ( 5-2-94 ) ॥विधिसूत्रम् ॥**
(प्रथमान्तात् प्रातिपदिकाद् अस्यास्तीत्यर्थे अस्मिन्नस्तीत्यर्थे वा तद्धितसञ्ज्ञो मतुप्-प्रत्यय: स्यात्)।
गावोऽस्यास्मिन् वा सन्ति-गोमान्।

**1186. तसौ मत्वर्थे ( 1-4-19 ) ॥सञ्ज्ञासूत्रम् ॥**
तान्तसान्तौ भसञ्ज्ञौ स्तो मत्वर्थे प्रत्यये परे। गरुत्मान्। वसो: सम्प्रसारणम्। विदुष्मान्।
(वा.) **गुणवचनेभ्यो मतुपो लुगिष्ट:।** शुक्लो गुणोऽस्यास्तीति शुक्ल: पट:। कृष्ण:।

---

1185. **तदस्यास्तीति** – तत्, अस्य, अस्ति, अस्मिन्, इति, मतुप्, इतिच्छेद:। **तदस्य अस्ति, तद् अस्मिन् अस्ति इत्यर्थे प्रथमान्ताद् मतुप्प्रत्ययो वा भवतीत्यर्थ:।** यथा गोमान्। मतोरर्थ:, मत्वर्थ:, मत्वर्थेभवा: मत्वर्थीया:। गहादीनामाकृतिगणत्वात् छप्रत्यये, छस्य ईयादेशे, बहुत्वे मत्वर्थीया: इति।

**विशेष:** – सूत्रस्थ-इतिशब्द: 'अस्ति' इत्यस्य विवक्षायां ये मतुबादयो भवन्ति, तेषां विशेषविषयाणां बोधार्थम्। यथा-
**भूम-निन्दा-प्रशंसासु नित्ययोगेऽतिशायने।**
**सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादय: ॥**
अत्र 'अस्ति' इत्यस्य विवक्षायां क्रियमाणेषु मतुबादिषु निम्नविषया: लभ्यन्ते।

1. भूमन् ( भूमा ) = बहुत्वम्, आधिक्यम्, यथा-गोमान्, धनवान्।
2. निन्दा = कुष्ठीपुरुष:, ककुदावर्तिनी कन्या, सङ्खादकी ( दन्तुर: ) ।
3. प्रशंसा = प्रशस्तं रूपम् अस्ति अस्य रूपवान्। मातृमान्। पितृमान्।
4. नित्ययोग: = नित्यसम्बन्ध:, यथा – नित्यं क्षीरमस्त्येषां क्षीरिण: ( वृक्षा: ) ।
5. अतिशायनम् = अतिशय:, अतिशयितम् उदरमस्ति अस्या: उदरिणी ( कन्या ) ।
6. सम्बन्ध: ( संयोग: ) = दण्डोऽस्त्यस्य दण्डी, छत्रमस्त्यस्य छत्री।

**रूपसिद्धि:**

**गोमान्** – गाव: सन्ति अस्य, गाव: सन्ति अस्मिन् वेत्यर्थे 'गो जस्' इत्यस्मात् ''तदस्यास्त्यस्मिन्निति मतुप्'' इति मतुप्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुपो लुकि, गोमत्शब्दात् प्रातिपदिकात् सुप्रत्ययेऽनुबन्धलोपे, गोमत् स् इति जाते, ''अत्वसन्तस्य चाऽधातो:'' इत्युपधादीर्घे, ''उगिदचां सर्वनामस्थानेऽधातो:'' इति नुमागमेऽनुबन्धलोपे, गोमान् त् स् इति जाते, हल्ङ्यादिना सलोपे संयोगान्त-तलोपे च कृते 'गोमान्' इति सिद्धम्।

1186. **तसाविति** – तसौ, मत्वर्थे, इतिच्छेद:। तश्च स् च तसौ, इतरेतरद्वन्द्व:। तकारादकार उच्चारणार्थ:। विशेषणत्वात्तसौ इत्यस्मात्तदन्तविधि:। मतोरर्थ: मत्वर्थ:, तस्मिन् = मत्वर्थे, षष्ठीतत्पुरुष:। **तकारान्ता: सकारान्ताश्च भसञ्ज्ञका: स्यु: मत्वर्थे प्रत्यये परे इत्यर्थ:।** भसञ्ज्ञत्वात् पदसञ्ज्ञाभाव:। अत: पदत्वप्रयुक्तानि कार्याणि न स्युरिति विभिन्नोदाहरणै: ज्ञेयम्।

**रूपसिद्धि:**

**गरुत्मान्** – गरुतौ (पक्षौ) स्तोऽस्येति अर्थे 'गरुत् औ' इत्यस्मात् ''तदस्यास्त्यस्मिन्निति मतुप्'' इति मतुप्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकात् सुपो लुकि, गरुत् मत् इति जाते, पदसञ्ज्ञां प्रबाध्य ''तसौ मत्वर्थे'' इति भसञ्ज्ञायां पदत्वाभावे जश्त्वानुनासिकयोरभावे, प्रातिपदिकत्वात् प्रथमैक-वचने सुविभक्तौ, अनुबन्धलोपे गरुत्मत् स् इति जाते, ''अत्वसन्तस्य चाऽधातो:'' इत्युपधादीर्घे, गरुत्मात् स् इति जाते, उगित्त्वान्नुमि, अनुबन्धलोपे, गरुत्मान् त् स् इति जाते, सलोपे नलोपे च 'गरुत्मान्' इति रूपं सिद्धम्। गरुत्मान्, गरुतमन्तौ, गरुत्मन्त:। 'धीमत्' शब्दवत् रूपाणि स्यु:। एवमेव विद्युत्वान्, मरुत्वान् इत्यादय: ज्ञातव्या:।

**1187. प्राणिस्थादातो लजन्यतरस्याम् ( 5-2-96 ) ॥ विधिसूत्रम् ॥**

चूडाल:, चूडावान्। प्राणिस्थात् किम्? शिखावान् दीप:। प्राण्यङ्गादेव, नेह मेधावान्।

**1188. लोमादि-पामादि-पिच्छादिभ्य: शनेलच: ( 5-2-100 ) ॥ विधिसूत्रम् ॥**

(मत्वर्थे) - लोमादिभ्य: श:। लोमश:, लोमवान्। रोमश:, रोमवान्। पामादिभ्यो न:। पामन:। **अङ्गात् कल्याणे** (गणसूत्रम्)। अङ्गना। **लक्ष्म्या अच्च** (गणसूत्रम्)। लक्ष्मण:। पिच्छादिभ्य इलच्। पिच्छिल:, पिच्छवान्।

---

**विदुष्मान्** - विद्वांस: सन्त्यस्येत्यर्थे (वंश:, देश:, प्रदेशो वा)। 'विद्वस् जस्' इत्यस्मात् मतुप्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, पदसञ्ज्ञां प्रबाध्य भसञ्ज्ञायां वसुस्रंसुरिति सस्य दत्वाभावे, ''वसो: सम्प्रसारणम्'' इति व इत्यस्य उत्वे सम्प्रसारणे, ''सम्प्रसारणाच्च'' इति पूर्वरूपे, विदुस् मत् इति जाते, ''आदेशप्रत्यययो:'' इति सस्य षत्वे, स्वादिकार्ये 'विदुष्मान्' इति रूपं सिद्धम्। एवमेव वपुष्मान्, आयुष्मान्, चक्षुष्मान्, ज्योतिष्मान् धनुष्मान् इत्यादयोऽपि बोधनीया:। **( वा. ) गुणवचनेभ्य इति** - गुणवाचक-शब्देभ्यो मतुपो लुक् स्यात्। यथा शुक्ल:।

**रूपसिद्धि:**

**शुक्ल: ( पट: )** - शुक्ल अस्यास्त्यर्थे 'शुक्ल सु' इत्यस्मात् मतुप्-प्रत्यये, ''गुणवचनेभ्य: मतुपो लुगिष्ट:'' इति वार्तिकेन मतुपो लुकि, स्वादिकार्ये 'शुक्ल:' इति रूपं सिद्धम्। एवमेव कृष्ण: (पट:), नीलो घट इत्यादयोऽपि ज्ञातव्या:।

**1187. प्राणिस्थादिति** - प्राणिस्थात्, आत:, लच्, अन्यतरस्याम् इतिच्छेद:। प्राणिषु तिष्ठतीति प्राणिस्थम्, तस्मात् = प्राणिस्थात्, प्राणिस्थवाचकात् इति भाव:। **प्राणिस्थात् प्रथमान्तात् आदन्तात् मत्वर्थे लच्-प्रत्ययो वा स्यादित्यर्थ:।** यथा चूडाल:। इह चकारानुबन्ध:। स्वरार्थ:।

**रूपसिद्धि:**

**चूडाल:, चूडावान् वा** - चूडा अस्त्यस्येत्यर्थे (चूडाशब्द: प्राणिस्थशिखावाचक:) 'चूडा सु' इत्यस्मात् ''प्राणिस्थादातो लजन्यतरस्याम्'' इति विकल्पेन लच्-प्रत्ययेऽनुबन्धलोपे, चूडा सु ल इति जाते, प्रातिपदिकत्वात्सुब्लुकि, रामशब्दवत्स्वादिकार्ये 'चूडाल:' इति रूपं सिद्धम्। पक्षे विकल्पाभावे (लजभावे) मतुप्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि ''मादुपधायाश्च मतोर्वोऽयवादिभ्य:'' इति मस्य वत्वे, स्वादिकार्ये 'चूडावान्' इति रूपमपि सिध्यति। एवमेव जङ्घाल:, जङ्घावान्, जिह्वाल:, जिह्वावान्, ग्रीवाल:, ग्रीवावान् इत्यादयोऽपि ज्ञातव्या:।

**प्राणिस्थात् किम्? शिखावान् दीप:।**

अत्र दीपस्य अप्राणित्वात् न लच्। यदि प्राणिस्थादिति नोच्येत तर्हि शिखावान् इत्यत्रापि लज्भूत्वा ''शिखालो दीप:'' इति अनिष्टापत्ति: स्यात्।

**प्राण्यङ्गादेव, नेह - मेधावान्।**

भाष्यकारस्य कथनमस्ति यत् सूत्रगत- 'प्राणिस्थात्' इत्यस्य 'प्राण्यङ्गात्' इत्यभिप्रायोऽवगन्तव्य:। अत: 'मेधा' अस्ति अस्येति मेधावान् अत्र 'मेधा' इत्यस्मात् लच् न स्यात्, यतोहि मेधा यद्यपि प्राणिषु तिष्ठति तथापि अमूर्त्तत्वात् न प्राण्यङ्गम्। अत: मतुपि मस्य वत्वे स्वादिकार्ये मेधावान् इति रूपं सिध्यति। एवमेव चिकीर्षावान्, शोभावान्, इच्छावान् (पुरुष:) इत्यादयोऽपि ज्ञातव्या:।

**1188. लोमादिति** - लोमादि-पामादि-पिच्छादिभ्य:, श-न-इलच:, इतिच्छेद:। लोमन्शब्द: आदिर्येषां ते लोमादय:, पामन्शब्द: आदिर्येषां ते पामादय:, पिच्छशब्द: आदिर्येषां ते पिच्छादय:, सर्वत्र तद्गुणसंविज्ञानबहुव्रीहि:। लोमादयश्च पामादयश्च पिच्छादयश्च तेभ्य: = लोमादिपामादिपिच्छादिभ्य:, इतरेतरद्वन्द्व:। शश्च नश्च इलच्च शनेलच:, इतरेतरद्वन्द्व:। **अस्य अस्ति अस्मिन्नित्यर्थे ( मत्वर्थे ) लोमादि-पामादि-पिच्छादिभ्य: प्रथमान्तेभ्य: श-न-इलच्-प्रत्यया: अन्यतरस्यां स्यु:।** पक्षे मतुप्। इलच् इत्यत्र चकारानुबन्ध: स्वरार्थ:। **लोमादिगणो यथा** - लोमन्। रोमन्। बभ्रु। हरि। गिरि। कर्क। कपि। मुनि। तरु। एभ्य: श: भवति।

**1189. दन्त उन्नत उरच् ( 5-2-106 ) ॥विधिसूत्रम् ॥**

(उन्नतोपाधिकात् प्रथमान्ताद् दन्तप्रातिपदिकान्मत्वर्थे उरच् तद्धितः स्यात्)। उन्नताः दन्ताः सन्त्यस्य - दन्तुरः।

---

**पामादिगणो यथा** - पामन्। वामन्। वेमन्। हेमन्। श्लेष्मन्। कद्रू। बलि। श्रेष्ठ। पलल। सामन्। ऊष्मन्। कृमि। अङ्गात् कल्याणे (ग.सू.)। शाकी-पलाली-दद्र्वां ह्रस्वत्वं च (ग.सू.)। विश्वगित्युत्तरपदलोपश्चाकृतसन्धेः (ग.सू.)। लक्ष्म्या अच्च (ग.सू.)। **पिच्छादिगणो यथा** - पिच्छ। उरस्। ध्रुवका। क्षुवका। जटा-घटा-कालात् क्षेपे (ग.सू.)। वर्ण। उदक। पङ्क। प्रज्ञा।

**रूपसिद्धिः**

**लोमशः, लोमवान्** - लोमानि सन्ति अस्येत्यर्थे 'लोमन् जस्' इत्यस्मात् ''लोमादिपामादिपिच्छादिभ्यः शनेलचः'' इति विकल्पेन शप्रत्यये, प्रातिपदिकत्वात् सुब्लुकि, पदसञ्ज्ञायां ''नलोपः प्रातिपदिकान्तस्य'' इति नलोपे, स्वादिकार्ये 'लोमशः' इति रूपं सिद्धम्। पक्षे मतुप्-प्रत्यये, सुब्लुकि, पदत्वे, नलोपे, ''मादुपधायाश्च मतोर्वोऽयवादिभ्यः'' इति मस्य वत्वे, स्वादिकार्ये 'लोमवान्' इति रूपं सिद्धम्।

**रोमशः, रोमवान्** - रोमाणि सन्त्यस्येत्यर्थे 'रोमन् जस्' इत्यस्मात् ''लोमादिपामादिपिच्छादिभ्यः शनेलचः'' इति विकल्पेन शप्रत्यये, प्रातिपदिकत्वात्सुब्लुकि, पदसञ्ज्ञायां ''नलोपः प्रातिपदिकान्तस्य'' इति नलोपे, स्वादिकार्ये, 'रोमशः' इति रूपं सिद्धम्। पक्षे मतुप्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, पदत्वे, नलोपे, मस्य वत्वे, स्वादिकार्ये 'रोमवान्' इति रूपं सिद्धम्। एवमेव गिरिशः, गिरिमान्। कपिशः, कपिमान्। इत्यादि।

**पामनः** - पाम (गीली खुजली इति भाषायाम्) अस्त्यस्येत्यर्थे 'पामन् सु' इत्यस्मात् ''लोमादि.'' इत्यादिना सूत्रेण पामादित्वात् नप्रत्यये, सुब्लुकि, ''नलोपः प्रातिपदिकान्तस्य'' इति नलोपे, स्वादिकार्ये 'पामनः' इति रूपं सिद्धम्। पक्षे मतुपि पूर्ववत् पामवान् इत्यपि बोध्यम्। एवमेव हेम (सुवर्णम्) अस्त्यस्येत्यर्थे हेमनो हेमवान् वा। श्लेष्मणः, श्लेष्मवान्। ऊष्मणः, ऊष्मवान्। कृमिणः, कृमिमान्। इत्यादि।

**अङ्गना** - कल्याणानि अङ्गानि सन्त्यस्या इत्यर्थे 'अङ्ग जस्' इत्यस्मात् ''लोपादि.'' इत्यादिना सूत्रेण नप्रत्यये, सुब्लुकि, स्त्रीत्वे ''अजाद्यतष्टाप्'' इति टाप्-प्रत्ययेऽनुबन्धलोपे, सवर्णदीर्घे, स्वादिकार्ये 'अङ्गना' इति रूपं सिद्धम्।

**लक्ष्मणः** - लक्ष्मीरस्त्यस्येत्यर्थे 'लक्ष्मी सु' इत्यस्मात् ''लोमादि. इत्यादिना विकल्पेन नप्रत्यये, सुब्लुकि, ''लक्ष्म्मा अच्च'' इति ईकारस्य अकारान्तादेशे, लक्ष्मन इति जाते ''अट्कुप्वाङ्नुम् व्यवायेऽपि'' इति नस्य णत्वे, 'लक्ष्मणः' इति रूपं सिद्धम्। पक्षे मतुपि, मस्य वत्वे, 'लक्ष्मीवान्' इत्यपि सिद्धम्।

**पिच्छिलः** - पिच्छमस्त्यस्येत्यर्थे 'पिच्छ सु' इत्यस्मात् ''लोमादि.'' इत्यादिना विकल्पेन 'इलच्' प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वाद् अकारलोपे पिच्छिल इति जाते, स्वादिकार्ये 'पिच्छिलः' इति रूपं सिद्धम्। पक्षे विकल्पाभावे मतुपि, मस्य वत्वे, 'पिच्छवान्' इति रूपं सिद्धम्। एवमेव उरसिलः उरस्वान् वा। पङ्किलः पङ्कवान् वा इत्यादयोऽपि बोद्धव्याः।

1189. **दन्त उन्नत इति** - दन्ते, उन्नते, उरच् इतिच्छेदः। दन्ते इत्यत्र पञ्चम्यर्थे सप्तमी। उन्नते इति दन्तविशेषणम्। **दन्ते उन्नते प्रथमान्ताद् दन्तशब्दात् तदस्यास्त्यस्मिन्निति अर्थे तद्धितसञ्ज्ञक उरच् प्रत्ययः स्यात्।** इह चकारानुबन्धः स्वरार्थः।

**रूपसिद्धिः**

**दन्तुरः** - उन्नता दन्ताः सन्त्यस्येत्यर्थे 'दन्त जस्' इत्यस्मात् ''दन्त उन्नत उरच्'' इति उरच्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वादकारलोपे 'दन्तुर' इति जाते, स्वादिकार्ये 'दन्तुरः' इति रूपं सिद्धम्।

**1190. केशाद्वोऽन्यतरस्याम् ( 5-2-107 ) ॥विधिसूत्रम् ॥**

(प्रथमान्तात् केशप्रातिपदिकाद् मत्वर्थे तद्धितसञ्ज्ञो 'व' प्रत्ययो वा स्यात्। केशवः। केशी। केशिकः। केशवान्।

(वा.) **अन्येभ्योऽपि दृश्यते।**

मणिवः

(वा.) **अर्णसो लोपश्च।**

अर्णवः।

**1191. अत इनिठनौ ( 5-2-115 ) ॥विधिसूत्रम् ॥**

(अदन्तात् प्रातिपदिकान्मत्वर्थे इनिठनौ तद्धितप्रत्ययौ वा स्तः)।

दण्डी, दण्डिकः।

---

1190. **केशादिति** - केशात्, वः, अन्यतरस्याम् इतिच्छेदः। **केशात् तदस्यास्त्यस्मिन्निति अर्थे तद्धितः व प्रत्ययः वा स्यात्।** ननु प्राणिस्थादातो लजन्यतरस्यामिति इत्यस्मात् अनुवृत्तेन एव अन्यतरस्यां ग्रहणेन मतुपः सिद्धिरस्ति, पुनरत्र अन्यतरस्याम् व्यर्थमिति चेत् उच्यते पुनर्ग्रहणम् इनिठनोः समावेशार्थम्।

**रूपसिद्धिः**

**केशवः** - केशाः सन्ति अस्येत्यर्थे 'केश जस्' इत्यस्मात् ''केशाद्वोऽन्यतरस्याम्'' इति विकल्पेन वप्रत्यये, सुब्लुकि, स्वादिकार्ये 'केशवः' इति रूपं सिद्धम्। वप्रत्ययस्य अभावे ''अत इनिठनौ'' इति इनिप्रत्ययेऽनुबन्धलोपे, भत्वादकारलोपे, प्रादिपदिकत्वात् सौ ''सौ च'' इति उपधादीर्घे, सुलोपे, नलोपे 'केशी' इति रूपम्। ठनि, ''ठस्येकः'' इति ठस्य इकादेशे, भत्वादलोपे, स्वादिकार्ये 'केशिकः' इति रूपम्। मतुपि, मस्य वत्वे, स्वादिकार्ये 'केशवान्' इति रूपं निष्पन्नम्।

**वा. अन्येभ्योऽपि इति - अन्यशब्देभ्योऽपि कदाचिद् वप्रत्ययो भवतीत्यर्थः।** यथा मणिवो नागविशेषः।

**रूपसिद्धिः**

**मणिवः** - मणिरस्त्यस्येत्यर्थे 'मणि सु' इत्यस्मात् ''अन्येभ्योऽपि दृश्यते'' इति वार्तिकेन वप्रत्यये, सुब्लुकि, स्वादिकार्ये 'मणिवः' इति रूपं सिद्धम्। एवमेव हिरण्यम् अस्त्यस्येति हिरण्यवः (निधिविशेषः) इत्यादि।

**( वा. ) अर्णस इति - अर्णसो वप्रत्ययः प्रकृतेः सकारस्य च लोपः स्यात्।** अर्णवः।

**रूपसिद्धिः**

**अर्णवः** - अर्णांसि = जलानि सन्त्यस्मिन् इत्यर्थे 'अर्णस् जस्' इत्यस्मात् वप्रत्यये सलोपे च कृते, सुब्लुकि स्वादिकार्ये 'अर्णवः' इति रूपं सिद्धम्।

1191. **अत इनिठनौ इति** - अतः, इनिठनौ, इतिच्छेदः। **प्रथमान्ताद् अदन्ताद् मत्वर्थे इनिठनौ प्रत्ययौ भवत इत्यर्थः।** अन्यतरस्याम् इत्यस्यानुवृत्तेः मतुप्-प्रत्ययोऽपि समुच्चीयते। यथा दण्डी, दण्डिकः।

**रूपसिद्धिः**

**दण्डी दण्डिको वा** - दण्डोऽस्यास्तीत्यर्थे 'दण्ड सु' इत्यस्मात् ''अत इनिठनौ'' इति इनिप्रत्ययेऽनुबन्धलोपे, सुब्लुकि भत्वादलोपे, सौ, 'सौ चेति' उपधादीर्घे, सलोपे, नलोपे 'दण्डी' इति रूपं सिद्धम्। पक्षे ठन्-प्रत्ययेऽनुबन्धलोपे दण्ड ठ् इति जाते, ''ठस्येकः'' इति ठस्य इकादेशे, भत्वादकारलोपे दण्ड् इक इति जाते, स्वादिकार्ये 'दण्डिकः' इति रूपं सिद्धम्। इनिठनोरभावे मतुपि, सुब्लुकि, मस्य वत्वे, स्वादिकार्ये 'दण्डवान्' इत्यपि रूपं निष्पद्यते। एवमेव छत्री, छत्रिकः छत्रवान्। धनी, धनिकः धनवान्।

**1192. व्रीह्यादिभ्यश्च ( 5-2-116 ) ॥विधिसूत्रम् ॥**

( व्रीह्यादिभ्य: प्रथमान्तेभ्यो मतुबर्थे इनिठनौ स्त: ) । व्रीही, व्रीहिक: ।

**1193. अस्-माया-मेधा-स्रजो विनि: ( 5-2-121 ) ॥विधिसूत्रम् ॥**

( असन्ताद् माया-मेधा-स्रज् इत्येतेभ्यश्च मत्वर्थे विनि: स्यात् ) । यशस्वी, यशस्वान् । मायावी । मेधावी । स्रग्वी ।

---

**1192. व्रीह्यादिभ्य इति** - व्रीह्यादिभ्य:, च, इतिच्छेद: । व्रीहिशब्द आदिर्येषां ते, व्रीह्यादय:, तद्गुणसंविज्ञानबहुव्रीहि: । **व्रीह्यादिगणपठित शब्देभ्य मत्वर्थे इनिठनौ प्रत्ययौ भवत: ।** यथा व्रीही, व्रीहिक: । पक्षे मतुप् । व्रीहिमान् ।

**रूपसिद्धि:**

**व्रीही, व्रीहिक:** - व्रीहय: सन्त्यस्यास्मिन् वा इत्यर्थे 'व्रीहि जस्' इत्यस्मात् ''व्रीह्यादिभ्यश्च'' इति इनिप्रत्ययेऽनुबन्धलोपे, सुब्लुकि, भत्वादिकारलोपे व्रीह् इन् इति जाते, स्वादिकार्ये 'व्रीही' इति रूपम् । ठन्पक्षे ''ठस्येक:'' इति ठस्य इकादेशे, भत्वाद् इकारलोपे, स्वादिकार्ये, व्रीहिक: इति रूपम् । अन्यतरस्याम् इति अनुवर्त्तनाद् मतुप्-प्रत्यये 'व्रीहिमान्' इत्यपि बोध्यम् ।

एवमेव - (1) मायाऽस्त्यस्येति मायी, मायिक:, मायावान् । (2) शिखी, शिखावान् । माली, मालावान् । (4) सञ्ज्ञी, सञ्ज्ञावान् । (5) केकी ( मयूर: ), केकावान् । (6) मेखली, मेखलावान् । (7) पताकी, पताकावान् । (8) यवखदिक: ( यवसारवान् ), यवखदवान् । (9) नाविक:, नौमान् । इत्यादयोऽपि बोधनीया: ।

**1193. अस्माया इति** - अस्मायामेधास्रज:, विनि:, इतिच्छेद: । अस् च माया च मेधा च स्रक् चैषां समाहार: - अस्मायामेधास्रक्, तस्मात् = अस्-माया-मेधा-स्रज:, समाहारद्वन्द्वे समासान्ताभाव: सौत्र: । **प्रथमान्ताद् असन्ताद्, माया, मेधा, स्रज् इत्येभ्यश्च शब्देभ्य: मत्वर्थे विनिप्रत्ययो भवतीत्यर्थ: ।** यथा यशस्वी इत्यादय: ।

**रूपसिद्धि:**

**यशस्वी, यशस्वान्** - यश: अस्यास्तीत्यर्थे 'यशस् सु' इत्यस्मात् ''अस्-माया-मेधा स्रजो विनि:'' इति विनिप्रत्ययेऽनुबन्धलोपे, सुब्लुकि, यशस्विन् इति जाते, पदसञ्ज्ञां प्रबाध्य ''तसौ मत्वर्थे'' इति भसञ्ज्ञायाम्, एतेन सस्य रुत्वाभावे, प्रथमैकवचने सुप्रत्ययेऽनुबन्धलोपे यशस्विन् स् इति जाते, ''सौ च'' इत्युपधादीर्घे, सुलोपे, नलोपे 'यशस्वी' इति रूपं सिद्धम् । अन्यतरस्याम् इत्यनुवर्त्तनात् मतुपि सुब्लुकि, यशस् मत् इति जाते, पूर्ववत् भत्वाद् रुत्वाभावे, मस्य वत्वे, यशस्वत् इत्यस्मात् प्रथमैकवचने सुविभक्तौ, अनुबन्धलोपे, ''अत्वसन्तस्य चाऽधातो'' इति उपधादीर्घे, नुमागमेऽनुबन्धलोपे, सुलोपे, संयोगान्ततलोपे 'यशस्वान्' इति रूपं सिद्यति । एवमेव पयस्वी, पयस्वान् । तेजस्वी, तेजस्वान् । ओजस्वी, ओजस्वान् । महस्वी, महस्वान् । मेदस्वी । वर्चस्वी । मनस्वी इत्यादयोऽपि बोद्धव्या: ।

**मायावी** - माया अस्त्यस्येत्यर्थे 'माया सु' इत्यस्मात् विनिप्रत्ययेऽनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये 'मायावी' इति रूपं सिद्धम् । व्रीह्यादिगणे पाठत्वात् इनिपक्षे 'मायी', ठन्-पक्षे 'मायिक:' इति रूपद्वयम् । अन्यतरस्याम् इत्यनुवर्त्तनात् मतुपि 'मायावान्' इति बोध्यम् ।

**मेधावी ( धारणावती बुद्धि: )** - मेधा अस्यास्तीत्यर्थे 'मेधा सु' इत्यस्मात् विनिप्रत्ययेऽनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये 'मेधावी' इति रूपं सिद्धम् । मतुपि 'मेधावान्' इत्यपि सिध्यति ।

**स्रग्वी** - स्रग् ( माला ) अस्यास्तीत्यर्थे 'स्रज् सु' इत्यस्मात् विनिप्रत्ययेऽनुबन्धलोपे, सुब्लुकि, पदसञ्ज्ञायां ''क्विन्प्रत्ययस्य कु:'' इति जस्य गत्वे ( कुत्वे ), स्वादिकार्ये 'स्रग्वी' इति रूपं सिद्धम् । मतुपि, कुत्वे 'स्रग्वान्' इत्यपि सिध्यति ।

**1194. वाचो ग्मिनिः ( 5-2-124 ) ॥विधिसूत्रम् ॥**

(प्रथमान्ताद् 'वाच्' इति प्रातिपदिकान्मत्वर्थे ग्मिनिस्तद्धितप्रत्ययः स्यात्) । वाग्ग्मी ।

**1195. अर्श आदिभ्योऽच् ( 5-2-127 ) ॥विधिसूत्रम् ॥**

(अर्श आदिभ्यः प्रथमान्तेभ्यो मत्वर्थेऽच् तद्धितः प्रत्ययः स्यात्) ।

अर्शोऽस्य विद्यते-अर्शसः । आकृतिगणोऽयम् ।

**1196. अहंशुभमोर्युस् ( 5-2-140 ) ॥विधिसूत्रम् ॥**

(अहम्, शुभम् इत्येताभ्यामव्ययाभ्यां मत्वर्थे तद्धितो युस्-प्रत्ययः स्यात्) । अहंयुरहङ्कारवान् । शुभंयुः शुभान्वितः ।

। इति मत्वर्थीयाः ।

---

**1194. वाचो ग्मिनि इति** - वाचः, ग्मिनि, इतिच्छेदः । **प्रथमान्ताद् वाच्शब्दात् मत्वर्थे ग्मिनिः स्यादित्यर्थः ।** यथा वाग्ग्मी ।

**रूपसिद्धिः**

**वाग्ग्मी** - वाचोऽस्य सन्तीत्यर्थे अथवा प्रशस्ता वाग् अस्यास्तीत्यर्थे 'वाच् सु' इत्यस्मात् ''वाचो ग्मिनिः'' इति ग्मिनिप्रत्ययेऽनुबन्धलोपे, सुब्लुकि, पदसञ्ज्ञायां ''चोः कुः'' इति पदान्त-चकारस्य ककारे, जश्त्वे, वाग्ग्मिन् इति जाते, प्रातिपदिकत्वात्स्वादिकार्ये 'वाग्ग्मी' इति रूपं सिद्धम् ।

**1195. अर्श आदिभ्य इति** - अर्श आदिभ्यः, अच् इतिच्छेदः । अर्शस्शब्द आदिर्येषां तानि अर्श आदीनि, तेभ्यः = अर्श आदिभ्यः, तद्गुणसंविज्ञानबहुव्रीहिः । अचि चकारः इत्सञ्ज्ञकः । चित्करणं स्वरार्थम् । **अर्श आदिभ्यः मत्वर्थे अच्-प्रत्ययः स्यादित्यर्थः ।** अयमाकृतिगणः । यथा अर्शसः ।

**रूपसिद्धिः**

**अर्शसः** -अर्शांसि (गुदकीलकाः, मस्से) विद्यन्तेऽस्येत्यर्थे (अर्शोरोगपीडितः) 'अर्शस् जस्' इत्यस्मात् ''अर्श आदिभ्योऽच्'' इति अच्प्रत्यये, अनुबन्धलोपे, सुब्लुकि, पुनः विभक्तिकार्ये 'अर्शसः' इति रूपं सिद्धम् । अत्र 'अस्मायामेधा' इति विनिप्राप्ते, तं प्रबाध्य अच्-प्रत्ययो भवति । एवमेव उरसः, तुन्दः, अभ्रम् (नभः), कर्दमः (प्रदेशः), अम्लं (फलम्), लवणः, पलितं (शिरः), काणः, खञ्जः, कुण्ठः, खल्वाटः, शुक्लः, नीलः, पद्मा, कमला, पापः (पुरुषः = पापी), बलः (बलवान्), तिमिरा (निशा), समानाधिकरणः, मृगः, आलस्यः इत्यादयोऽपि ज्ञातव्याः ।

**1196. अहं शुभमोर्युस् इति** - अहं शुभमोः, युस् इतिच्छेदः । अहं च शुभं च अहंशुभमौ, तयोः = अहंशुभमोः, इतरेतरद्वन्द्वः । पञ्चम्यर्थे षष्ठीप्रयोगः सौत्रः । **अहंशुभाभ्यां मत्वर्थे युस्-प्रत्ययः स्यादित्यर्थः ।** यथा अहंयुः । शुभंयुः ।

**रूपसिद्धिः**

**अहंयुः** -अहम् (अहङ्कारः) अस्त्यस्येत्यर्थे 'अहम्' इति मान्त-अव्ययात् ''अहंशुभमोर्युस्'' इति युस्-प्रत्ययेऽनुबन्धलोपे, अहम् यु इति जाते, भसञ्ज्ञां प्रबाध्य ''सिति च'' इति पदसञ्ज्ञायां, ''मोऽनुस्वारः'' इति मस्यानुस्वारे ''वा पदान्तस्य'' इति विकल्पेन अनुस्वारस्य परसवर्णे यँ इत्यादेशे, स्वादिकार्ये 'अहयँयुः' इति रूपं पक्षे विकल्पाभावे 'अहंयुः' इति रूपद्वयं सिद्धम् । भानुशब्दवद् रूपाण्यस्य ।

**शुभंयुः** - शुभमस्त्यस्येत्यर्थे शुभम् इति मान्त-अव्ययात् युस्-प्रत्ययेऽनुबन्धलोपे, पदसञ्ज्ञायाम्, पूर्ववत् अनुस्वारे, ''वा पदान्तस्य'' इति विकल्पेन अनुस्वारस्य परसवर्णे 'यँ' इत्यादेशे, स्वादिकार्ये 'शुभयँयुः' इति रूपम् । पक्षे परसवर्णाभावे 'शुभंयुः' इति रूपद्वयं सिद्धम् । भानुशब्दवद्रूपाण्यस्य ।

। इति मत्वर्थीयाः ।

## ॥ अभ्यासः ॥

**वस्तुनिष्ठात्मकप्रश्नाः –**

1. तान्तसान्तो भवतः –

   (क) पदसञ्ज्ञौ (ख) टिसञ्ज्ञौ

   (ग) भसञ्ज्ञौ (घ) तद्राजसञ्ज्ञौ

2. गुणवचनेभ्यः लुग्भवति –

   (क) अणः (ख) मतुपः

   (ग) इनेः (घ) ठनः

3. 'चूडालः' इत्यत्र प्रत्ययोऽस्ति –

   (क) ल (ख) लज्

   (ग) लच् (घ) आलच्

**अतिलघूत्तरात्मकप्रश्नाः –**

4. तसौ कस्मिन्नर्थे भसञ्ज्ञौ?
5. तदस्य अस्ति, तद् अस्मिन् अस्ति इत्यर्थे कः प्रत्ययः?
6. लोमादिभ्यः कः प्रत्ययः?
7. अङ्गना इत्यत्र कः प्रत्ययः?
8. लक्ष्मण इत्यस्य विग्रहः कः?

**लघूत्तरात्मकप्रश्नाः –**

9. 'लोमादि' इत्यादिसूत्रं प्रपूर्य सोदाहरणमर्थं लिखन्तु।
10. तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रस्य अर्थं लिखन्तु।
11. व्रीह्यादिभ्यः कौ प्रत्ययौ कस्मिन्नर्थे भवतः?

**निबन्धात्मकप्रश्नाः –**

12. अधोलिखिताः प्रयोगाः ससूत्रं साधनीयाः?

    गोमान्, चूडालः, लोमशः, लक्ष्मणः, पामनः, दन्तुरः, केशवः, दण्डी, यशस्वी, मेधावी, वाग्ग्मी, अर्शसः, अहंयुः।
13. अधोलिखितसूत्राणि सोदाहरणं व्याख्यातव्यानि।

    दन्त उन्नत उरच्, केशाद्वोऽन्यतरस्याम्, अत इनिठनौ, अस्मायामेधास्रजो विनिः।
14. प्रकरणस्थसूत्राणां वार्तिकानां च सोदाहरणं सारणी लेखनीया।

## अथ प्राग्दिशीयाः

**1197. प्राग्दिशो विभक्तिः ( 5-3-1 ) ॥ सञ्ज्ञासूत्रम् ॥**
दिक्शब्देभ्यः. (5-3-27) इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसञ्ज्ञाः स्युः।

**1198. किं-सर्वनाम-बहुभ्योऽद्व्यादिभ्यः ( 5-3-2 ) ॥ अधिकारसूत्रम् ॥**
किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते।

**1199. पञ्चम्यास्तसिल् ( 5-3-7 ) ॥ विधिसूत्रम् ॥**
पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात्।

**1200. कु तिहोः ( 7-2-104 ) ॥ विधिसूत्रम् ॥**
किमः कुः स्यात् तादौ हादौ च विभक्तौ परतः। कुतः, कस्मात्।

**1201. इदम इश् ( 5-3-3 ) ॥ विधिसूत्रम् ॥** प्राग्दिशीये परे। इतः।

---

1197. **प्राग्दिश इति** – प्राक् (इत्यव्ययम्), दिशः, विभक्तिः, इतिच्छेदः। **दिक्शब्देभ्यः सप्तमी-पञ्चमी प्रथमाभ्यो दिग्देशकालेष्वस्ताति इति सूत्रात् प्राग् ये प्रत्ययाः वक्ष्यन्ते, ते विभक्तिसञ्ज्ञा= स्युरित्यर्थः।** इदं सञ्ज्ञाविषय क-अधिकारसूत्रम्। अत्र विशेषेण ध्यातव्यं यत् समर्थाना प्रथमाद्वा इत्यस्यं 'समर्थानाम्' 'प्रथमात्' इत्यनयोरधिकारयोः अत्र निवृत्तिः भवति। केवलं 'वा' इति पदमेव यथासम्भवमधिक्रियते, अतः वक्ष्यमाणाः प्रत्ययाः विकल्पेन भवन्ति, पक्षे विग्रहपदमपि भवति।

1198. **किं-सर्वनामबहुभ्यः इति** – किं-सर्वनामबहुभ्यः, अद्व्यादिभ्यः, इतिच्छेदः। किम् च सर्वनाम च बहुश्च तेभ्यः = किंसर्वनामबहुभ्यः, इतरेतरद्वन्द्वः। द्विशब्दः आदिर्येषान्ते द्व्यादयः, न द्व्यादयः = अद्व्यादयः, तेभ्यः = अद्व्यादिभ्यः बहुव्रीहिगर्भनञ्तत्पुरुषः। **अद्व्यादिभ्य = द्व्यादिभिन्नेभ्यः सर्वनामभ्यः किंशब्दात् बहुशब्दात् च प्राग्दिशीयाः प्रत्ययाः** स्युः। अधिकारोऽयम्। द्वि, युष्मद्, अस्मद्, भवतु इति चतुरः शब्दान् विहाय अन्यसर्वनामभ्यः प्रत्ययाः स्युरिति। बहुशब्दोऽत्र संख्यावाचकोऽभीष्टः। बहुग्रहणे संख्याग्रहणम् (माहाभाष्ये)।

1199. **पञ्चम्या इति** – पञ्चम्याः, तसिल, इतिच्छेदः। **पञ्चम्यन्तेभ्यः किं-सर्वनाम-बहुभ्यो विकल्पेन तसिल्-प्रत्ययः स्यादित्यर्थः।**

1200. **कुतिहोरिति** – कु, तिहोः, इतिच्छेदः। तिश्च ह् च तिहौ, तयोः = तिहोः, इतरेतरद्वन्द्वः। तकारादिकार उच्चारणार्थः। कु इति लुप्तं प्रथमाकं पदम्। तदादिविधिः। **तादौ हादौ च विभक्तौ परतः किमः कुः स्यादित्यर्थः।** यथा – कुतः। किम क इत्यपवादोऽयम्।

**रूपसिद्धिः**

**कुतः** – कस्मात् इत्यर्थे 'किम् ङसि' इत्यस्मात् ''पञ्चम्यास्तसिल्'' इति विकल्पेन तसिल्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, किम् तस् इति जाते, ''किमः कः'' इति कादेशे प्राप्ते, तं प्रबाध्य ''कु तिहोः'' इति सूत्रेण किमः 'कु' इत्यादेशे, कुतस् इति जाते, प्रातिपदिकत्वात् सुप्रत्ययेऽनुबन्धलोपे, ''तद्धितश्चासर्वविभक्तिः'' इति सूत्रेण अव्ययसञ्ज्ञायाम्, ''अव्ययादाप्सुपः'' इति सुलोपे, सस्य रुत्वे विसर्गे च कृते 'कुतः' इति रूपं सिद्धम्। पक्षे तसिलभावे किमः कादेशे, ''ङसिङ्योः'' इत्यादिना स्मातादेशे 'कस्मात्' इति रूपं सिध्यति।

1201. **इदम इश् इति** – इदमः, इश्, इतिच्छेदः। **इदम् शब्दस्य स्थाने इश्-आदेशः स्यात् प्राग्दिशीये प्रत्यये परे इत्यर्थः।** शित्त्वात् इदमः इश् इति सर्वादेशः। यथा – इतः।

**रूपसिद्धिः**

**इतः** – अस्माद् इत्यर्थे 'इदम् ङसि' इत्यस्मात् शब्दात् ''पञ्चम्यास्तसिल्'' इति विकल्पेन तसिल् प्रत्ययेऽनुबन्धलोपे इतस् इति जाते, प्रातिपदिपदिकत्वात् सुप्रत्ययेऽनुबन्धलोपे, अव्ययसञ्ज्ञायाम् ''अव्ययादाप्सुपः'' इति सुलोपे 'इतः' इति रूपं सिद्धम्। पक्षे 'अस्मात्' इति रूपं सिध्यति।

**1202. अन्( 5-3-5 ) ॥विधिसूत्रम् ॥**

एतदः प्राग्दिशीये ( अन् इत्यादेशः स्यात् ) । अनेकाल्त्वात् सर्वादेशः। अतः। अमुतः। यतः। बहुतः। द्वयादेस्तु द्वाभ्याम्।

**1203. पर्यभिभ्यां च( 5-3-9 ) ॥विधिसूत्रम् ॥**

आभ्यां तसिल् स्यात्। परितः, सर्वत इत्यर्थः। अभितः, उभयत इत्यर्थः।

---

1202. **अनिति – प्राग्दिशीये प्रत्यये एतदः 'अन्' इत्यादेशः स्यात्।** यथा अतः।

**रूपसिद्धिः**

**अतः** – एतस्मात् इत्यर्थे 'एतद् ङसि' इत्यस्मात् विकल्पेन तसिल्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, ''त्यदादीनामः'' इति दस्य अत्वे प्राप्ते तं प्रबाध्य, ''अन्'' इति एतदः अनादेशे, अन् तस् इति जाते, पदसञ्ज्ञायाम्, ''नलोपः प्रातिपदिकान्तस्य'' इति नलोपे अतस् इति जाते, सुप्रत्ययेऽनुबन्धलोपे, अव्ययसञ्ज्ञायाम् ''अव्ययादाप्सुपः'' इति सोर्लुकि, सस्य रुत्वे विसर्गे 'अतः' इति रूपं सिद्धम्। पक्षे त्यदाद्यत्वे, पररूपे, ङसेः स्मातादेशे 'एतस्मात्' इति रूपं सिद्धम्।

**अमुतः** – अमुष्मात् इत्यर्थे 'अदस् ङसि' इत्यस्मात् विकल्पेन तसिल्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, ''त्यादादीनामः'' इति सस्य अत्वे, पररूपे, अद तस् इति जाते, ''अदसोऽसेर्दादु दो मः'' इति 'द' इत्यस्य 'मु' कृते, स्वादिकार्ये 'अमुतः' इति रूपं सिद्धम्। पक्षे विकल्पाभावे अदस् ङसि अत्व-पररूपे दस्य मुभावे, अमु ङसि इति जाते, ङसेः स्मातादेशे, सस्य षत्वे, 'अमुष्मात्' इत्यापि सिद्यति।

**यतः** – यस्मात् इत्यर्थे 'यद् ङसि' इत्यस्मात् विकल्पेन तसिल्-प्रत्ययेऽनुबन्धलोपे सुब्लुकि, त्यदाद्यत्वे, पररूपे यतस् इति जाते, सुप्रत्यये, अव्ययसञ्ज्ञायाम्, ''अव्ययादाप्सुपः'' इति सोर्लुकि, सस्य रुत्वे विसर्गे 'यतः' इति रूपं सिद्धम्। पक्षे त्यदाद्यत्वे, पररूपे ''ङसिङ्योः स्मात्स्मिनौ'' इति ङसेः 'स्मात्' इति आदेशे 'यस्मात्' इति रूपं सिद्धम्।

**बहुतः** – बहुभ्य इत्यर्थे 'बहु भ्यस्' इत्यस्मात् विकल्पेन तसिल् प्रत्यये, अनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये 'बहुतः' इति रूपं सिद्धम्। पक्षे बहुभ्यस् इति जाते, सस्य विसर्गे बहुभ्यः इति रूपं सिद्धम्।

**द्वयादेस्तु इति** – किं सर्वनामबहुभ्योऽद्वयादिभ्य इति सूत्रेण द्वयादिभिन्नेभ्यः किमादिभ्यः प्राग्दिशीयप्रत्ययविधानाद् द्वयादेः तसिलादयो न स्युः। अतः पञ्चमी-द्विवचने 'द्वाभ्याम्' इत्येव सिद्धम्।

1203. **पर्यभिभ्यामिति** – पर्यभिभ्याम्, च, इतिच्छेदः। परिश्च अभिश्च ताभ्याम् = पर्यभिभ्याम्, इतरेतरद्वन्द्वः। **सर्व उभय इत्यर्थाभ्यामेव पर्यभिभ्यां तसिल्-प्रत्ययो भवतीत्यर्थः।** सर्वोभयार्थाभ्यामेव इति वार्तिककारः।

**रूपसिद्धिः**

**परितः** – परि इति सर्वार्थकाद् अव्ययात् ''पर्यभिभ्यां च'' इति तसिल्-प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'परितः' (सर्वतः) इति रूपं सिद्धम्।

**अभितः** – अभि इति उभयार्थकाद् अव्ययात् ''पर्यभिभ्यां च'' इति तसिल्-प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'अभितः' इति रूपं सिद्धम्। अभितः परितः इत्यनयोर्योगे द्वितीया विभक्तिः भवति। यथा – **अभितः केशवं गोपा गावस्तं परितः स्थिताः।( प्रक्रियासर्वस्वे )।**

**1204. सप्तम्यास्त्रल् ( 5-3-10 ) ॥ विधिसूत्रम् ॥**

( सप्तम्यन्तेभ्य: किमादिभ्यस्त्रल् वा स्यात् ) । कुत्र । यत्र । तत्र । बहुत्र ।

**1205. इदमो ह: ( 5-3-11 ) ॥ विधिसूत्रम् ॥**

( सप्तम्यन्ताद् इदमो ह: प्रत्यय: स्यात् ) । त्रलोऽपवाद: । इह ।

**1206. किमोऽत् ( 5-3-12 ) ॥ विधिसूत्रम् ॥**

वाग्रहणमपकृष्यते । सप्तम्यन्तात् किमोऽद्वा स्यात् । पक्षे त्रल् ।

**1207. क्वाति ( 7-2-105 ) ॥ विधिसूत्रम् ॥**

किम: 'क्व' इत्यादेश: स्यादति । क्व, कुत्र ।

---

1204. **सप्तम्यास्त्रलिति** - सप्तम्या:, त्रल्, इतिच्छेद: । **सप्तम्यन्तेभ्य: किं सर्वनामबहुभ्योऽद्व्यादिभ्य: तद्धितस्त्रल् - प्रत्ययो वा स्यादित्यर्थ:** । इह लकारानुबन्ध: उदात्तत्वविधानार्थ: । यथा कुत्र इत्यादय: ।

**रूपसिद्धि:**

**कुत्र** - कस्मिन् इत्यर्थे 'किम् ङि' इत्यस्मात् ''सप्तम्यास्त्रल्'' इति विकल्पेन त्रल्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, ''कु तिहो:'' इति किम: कु: इत्यादेशे कुत्र इति जाते, सुप्रत्यये ''तद्धितश्चाऽसर्वविभक्ति:'' इत्यव्ययसञ्ज्ञायाम् ''अव्ययादाप्सुप:'' इति सोर्लुकि 'कुत्र' इति रूपं सिद्धम् । पक्षे कस्मिन् इत्यपि सिध्यति ।

**यत्र** - यस्मिन् इत्यर्थे 'यद् ङि' इत्यस्मात् विकल्पेन त्रल्प्रत्यये, अनुबन्धलोपे, सुब्लुकि, त्यदाद्यत्वे, पररूपे, 'यत्र' इति जाते, स्वादिकार्ये 'यत्र' इति रूपं सिद्धम् । पक्षे यस्मिन् इत्यपि सिद्धम् ।

**तत्र** - तस्मिन् इत्यर्थे 'तद् ङि' इत्यस्मात् विकल्पेन त्रल् प्रत्यये, अनुबन्धलोपे, सुब्लुकि, त्यदाद्यत्वे, पररूपे, स्वादिकार्ये 'तत्र' इति रूपं सिद्धम् । पक्षे 'तस्मिन्' इत्यपि रूपं सिद्धम् ।

**बहुत्र** - बहुषु इत्यर्थे 'बहु सुप्' इत्यस्मात् विकल्पेन त्रल् प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, सौ, अव्यवसंज्ञायाम्, ''अव्ययादाप्सुप:'' इति सोर्लुकि बहुत्र इति रूपं सिद्धम् । पक्षे बहुषु इत्यपि सिद्यति । एवमेव सर्वस्मिन् = सर्वत्र, अन्यस्मिन् = अन्यत्र, एकस्मिन् = एकत्र, उभयस्मिन् = उभयत्र, विश्वस्मिन् = विश्वत्र, एतस्मिन् = अत्र, अमुष्मिन् = अमुत्र इत्यादयोऽपि बोधनीया: ।

1205. **इदमो ह इति** - इदम:, ह:, इतिच्छेद: । **सप्तम्यन्तात् इदम: स्वार्थे तद्धित: ह: प्रत्यय: स्यादित्यर्थ:** । यथा इह ।

**रूपसिद्धि:**

**इह** - अस्मिन् इत्यर्थे 'इदम् ङि' इत्यस्मात् त्रलं प्रबाध्य ''इदमो ह:'' इति हप्रत्यये, प्रातिपदिकत्वात्सुब्लुकि, ''इदम इश्'' इति इदम: स्थाने इशादेशेऽनुबन्धलोपे, इह इति जाते, स्वादिकार्ये 'इह' इति रूपं सिद्धम् ।

1206. **किमोऽदिति** - किम:, अत्, इतिच्छेद: । **सप्तम्यन्तात् किम: तद्धित: अत्-प्रत्ययो वा स्यादित्यर्थ:** । 'अत्' इत्यत्र तकारानुबन्ध: तित्स्वरार्थ: ।

1207. **क्वाति इति** - क्व, अति, इतिच्छेद: । **अति किम: 'क्व' आदेश: स्यादित्यर्थ:** । ''किम: क:'' इत्यस्यापवाद: । यथा क्व ।

**रूपसिद्धि:**

**क्व, कुत्र** - कस्मिन् इत्यर्थे 'किम् ङि' इत्यस्मात् ''किमोऽत्'' इति सूत्रेण अत्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, किम् अ इति जाते, ''क्वाति'' इति किम: क्वादेशे, क्व अ इति जाते, भत्वाद् अकारलोपे, क्व् अ इति जाते, सुविभक्तौ, अव्ययसञ्ज्ञायाम्, सोर्लुकि 'क्व' इति रूपं सिद्धम् । पक्षे विकल्पाभावे त्रल् प्रत्यये कु इत्यादेशे कुत्र इति रूपं सिध्यति ।

**1208. इतराभ्योऽपि दृश्यन्ते ( 5-3-14 ) ॥विधिसूत्रम् ॥**

पञ्चमी-सप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते। दृशिग्रहणाद् भवदादियोग एव। स भवान्। ततो भवान्। तत्रभवान्। तं भवन्तम्। ततो भवन्तम्। तत्र भवन्तम्। एवं दीर्घायुः, देवानांप्रियः, आयुष्मान्।

**1209. सर्वैकान्य-किं-यत्-तदः काले दा ( 5-3-15 ) ॥विधिसूत्रम् ॥**

सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात्।

---

**1208. इतराभ्योऽपि इति** – इतराभ्यः, अपि, दृश्यन्ते, इतिच्छेदः। **इतराभ्यः विभक्तिभ्यः किं सर्वनामबहुभ्योऽद्व्यादिभ्य अपि तद्धिताः तसिलादयः दृश्यन्ते।**

**रूपसिद्धिः**

**ततो भवान् ( स भवान् )** – 'तद् सु' इत्यस्मात् भवत् शब्दयोगे ''इतराभ्योऽपि दृश्यन्ते'' इति तसिल् प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, स्वादिकार्ये 'ततो भवान्' इति रूपं सिद्धम्।

**तत्र भवान् ( स भवान् )** – 'तद् सु' इत्यस्मात् ''इतराभ्योऽपि दृश्यन्ते'' इति त्रल् प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये 'तत्र भवान्' इति रूपं सिद्धम्। त्रलभावे तसिलभावे च 'स भवान्' इति रूपं सिद्धम्।

**ततो भवन्तम् ( तं भवन्तम् )** – 'तद् अम्' इत्यस्मात् तसिल् प्रत्यये, अनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये 'ततो भवन्तम्' इति रूपं सिद्धम्। पक्षे तसिलभावे 'तं भवन्तम्' इति रूपमपि सिध्यति।

**तत्र भवन्तम् ( तं भवन्तम् )** – 'तद् अम्' इत्यस्मात् त्रल्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये 'तत्र भवन्तम्' इति रूपं सिद्धम्। पक्षे त्रल्-प्रत्ययस्य अभावे 'तं भवन्तम्' इति रूपमपि सिध्यति।

**ततो भवता ( तेन भवता )** – 'तद् टा' इत्यस्मात् तसिल् प्रत्ययेऽनुबन्धलोप, सुब्लुकि, स्वादिकार्ये 'ततो भवता' इति रूपं सिद्धम्। पक्षे 'तेन भवता' इत्यपि बोध्यम्।

**तत्रभवता ( तेन भवता )** – 'तद् टा' इत्यस्मात् त्रल्प्रत्यये रूपमिदम्।

**ततो भवते ( तस्मै भवते )** – 'तद् ङे' इत्यस्मात् तसिल्-प्रत्यये रूपमिदम्।

**तत्र भवते ( तस्मै भवते )** – 'तद् ङे' इत्यस्मात् त्रलि रूपमिदम्।

**ततो भवतः ( तस्माद् भवतः )** – 'तद् ङसि' इत्यस्मात् तसिलि रूपमिदम्।

**तत्र भवतः ( तस्माद् भवतः )** – 'तद् ङसि' इत्यस्मात् त्रलि रूपमिदम्।

**ततो भवतः ( तस्य भवतः )** – 'तद् ङस्' इत्यस्मात् तसिलि रूपमिदम्।

**तत्र भवतः ( तस्य भवतः )** – 'तद् ङस्' इत्यस्मात् त्रलि रूपमिदम्।

**ततो भवति ( तस्मिन् भवति )** – 'तद् ङि' इत्यस्मात् तसिल्-प्रत्यये रूपमिदम्।

**तत्र भवति ( तस्मिन् भवति )** – 'तद् ङि' इत्यस्मात् त्रल्-प्रत्यये रूपमिदम्।

* आसु विभक्तिषु द्विवचने बहुवचने चापि तसिल् प्रत्यये एवं त्रल् प्रत्यये पूर्ववदेव रूपाणि भवन्ति। एवमेव दीर्घायुष् शब्दस्य योगेऽपि सर्वविभक्त्यन्त-तद्शब्दात् तसिल् प्रत्यये एवं त्रल् प्रत्ययो भवति। यथा- ततो दीर्घायुः (स दीर्घायुः), तत्र दीर्घायुः, ततो दीर्घायुषम् (तं दीर्घायुषम्), तत्र दीर्घायुषम्, ततो दीर्घायुषा, तत्र दीर्घायुषा (तेन दीर्घायुषा) ततो दीर्घायुषे, तत्र दीर्घायुषे (तस्मै दीर्घायुषे), ततो दीर्घायुषः तत्रदीर्घायुषः (तस्माद् दीर्घायुषः) ततो दीर्घायुषि, तत्र दीर्घायुषि (तस्मिन् दीर्घायुषि)। एवमेव देवानांप्रिय योगेऽपि आयुष्मत् योगेऽपि च पूर्ववत् तसिल् प्रत्ययः त्रल्-प्रत्ययश्च बोध्यौ।

* अत्रभवान्, तत्र भवान् इत्यादयः पूज्यार्थे प्रयुज्यन्ते। पूज्यः जनः वक्तुः समक्षं भवति चेत् 'अत्रभवान्' इति तथा च दूरं भवति चेत् 'तत्र भवान्' इति प्रयुज्यते। मल्लिनाथानुसारमत्र सुप्सुपेति समासः मतः।

**1209. सर्वैकान्येति** – सर्वैकान्यकिंयत्तदः, काले, दा, इतिच्छेदः। सर्वश्च एकश्च अन्यश्च किं च यत् च तत् चैषां समाहारः, सर्वैकान्यकियत्तद्, तस्माद् = सर्वैकान्यकिंयत्तदः, समाहारद्वन्द्वः। समासान्ताभावः सौत्रः। **सर्व, एक, अन्य, किम्, यद्, तद् इति सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दाप्रत्ययः स्यादिति।** यथा सदा, सर्वदा इत्यादयः। त्रलोऽपवादः।

**1210. सर्वस्य सोऽन्यतरस्यां दि ( 5-3-6 ) ॥ विधिसूत्रम् ॥**

दादौ प्राग्दिशीये सर्वस्य सो वा स्यात्। सर्वस्मिन् काले–सदा, सर्वदा। एकदा। अन्यदा। कदा। यदा। तदा। काले किम्? सर्वत्र देशे।

**1211. इदमो र्हिल् ( 5-3-16 ) ॥ विधिसूत्रम् ॥**

सप्तम्यन्तात् काल इत्येव।

**1212. एतेतौ रथोः ( 5-3-4 ) ॥ विधिसूत्रम् ॥**

इदम्शब्दस्य एत–इत् इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये। अस्मिन् काले–एतर्हि। काले किम्? इह देशे।

---

1210. **सर्वस्य इति** – सर्वस्य, सः अन्यतरस्याम्, दि, इतिच्छेदः। **दकारादिप्राग्दिशीये प्रत्यये परे सर्वशब्दस्य विकल्पेन स आदेशो भवतीत्यर्थः।** यथा सदा।

**रूपसिद्धिः**

**सदा, सर्वदा** – सर्वस्मिन् काले इत्यर्थे 'सर्व ङि' इत्यस्मात् ''सर्वैकान्यकिंयत्तदः काले दा'' इति दाप्रत्यये, प्रातिपदिकत्वात् सुब्लुकि, सर्व दा इति जाते, ''सर्वस्य सोऽन्यतरस्यां दि'' इति विकल्पेन सर्वस्य स आदेशे, सदा पक्षे सर्वदा इत्यनयोः द्वयोरपि ''तद्धितश्चासर्वविभक्तिः'' इत्यव्ययसञ्ज्ञायाम् औत्सर्गिकस्य सुविभक्तेः ''अव्ययादाप्सुपः'' इति सोर्लुकि सदा, सर्वदा इति रूपद्वयं सिद्धम्।

**एकदा** – एकस्मिन् काले इत्यर्थे दाप्रत्यये, सुब्लुकि 'एकदा' इति रूपं सिद्धम्।

**अन्यदा** – अन्यस्मिन् काले इत्यर्थे दाप्रत्यये, सुब्लुकि 'अन्यदा' इति रूपं सिद्धम्।

**कदा** – कस्मिन् काले इत्यर्थे दाप्रत्यये किमः कादेशे, स्वादिकार्ये 'कदा' इति रूपम्।

**यदा** – यस्मिन् काले इत्यर्थे दाप्रत्यये, सुब्लुकि, त्यदाद्यत्वे पररूपे च 'यदा' इति रूपम्।

**तदा** – तस्मिन् काले इत्यर्थे दाप्रत्यये, सुब्लुकि, त्यदाद्यत्वे पररूपे च 'तदा' इति सिद्धम्।

**काले किम्?** सर्वत्र देशे (सर्वस्मिन् देशे) इत्यर्थे कालार्थाभावात् त्रल्–प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये सर्वत्र इति रूपं सिध्यति।

1211. **इदम इति** – इदमः, र्हिल्, इतिच्छेदः। **काले सप्तम्यन्तात् इदमः तद्धितः र्हिल्प्रत्ययः स्यादित्यर्थः।** इदमो ह इत्यस्यापवादोऽयम्। लकारानुबन्धः लित्स्वरार्थः।

**रूपसिद्धिः**

**एतर्हि** – अस्मिन् काले इत्यर्थे 'इदम् ङि' इत्यस्मात् ''इदमो र्हिल्'' इति र्हिल्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, इदम्+र्हि इति जाते, ''इदम इश्'' इति इदमः इशादेशे प्राप्ते, तं प्रबाध्य –

1212. **एतेतौ रथोरिति** – एतेतौ, रथोः, इतिच्छेदः। एतश्च इत् च एतेतौ, इतरेतरद्वन्द्वः। रश्च थ् च रथौ, तयोः = रथोः, इतरेतरद्वन्द्वः। इदम् – शब्दस्य एत–इत इति सर्वादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये प्रत्यये परे इत्यर्थः। इदम इश् इत्यस्यापवादोऽयम्। अनेकाल्त्वात् सर्वादेशः।

**रूपसिद्धिः**

इदम् + र्हि इत्यत्र ''एतेतौ रथोः'' इति इदम 'एत' इति सर्वादेशे, एत र्हि इति जाते, ''तद्धितश्चाऽसर्वविभक्तिः'' इत्यव्ययसञ्ज्ञायां, सुविभक्तौ ''अव्ययादाप्सुपः'' इति सोर्लुकि 'एतर्हि' इति रूपं सिद्धम्।

**काले किम्? इह देशे** – अत्र कालार्थत्वाभावाद् इदमो ह इति हप्रत्यये, इदम इशादेशे इह इति रूपं सिध्यति।

**1213. अनद्यतने र्हिलन्यतरस्याम् ( 5-3-21 ) ॥विधिसूत्रम् ॥**

अनद्यतनकालवृत्तिभ्यः किमादिभ्यो र्हिल् प्रत्ययो वा स्यात्। कर्हि, कदा। यर्हि, यदा। तर्हि, तदा।

**1214. एतदः ( 5-3-5 ) ॥विधिसूत्रम् ॥**

एतद एत-इत् एतौ स्तो रेफादौ थादौ च प्राग्दिशीये। एतस्मिन् ( अनद्यतने ) काले-एतर्हि

**1215. प्रकारवचने थाल् ( 5-3-23 ) ॥विधिसूत्रम् ॥**

प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात् स्वार्थे। तेन प्रकारेण-तथा। यथा।

---

1213. **अनद्यतने र्हिल् इति - सप्तम्यन्तेभ्यः किमादिभ्यः अनद्यतने कालेऽर्थे र्हिल् प्रत्ययो विकल्पेन भवतीत्यर्थः।** यथा- कर्हि, कदा। इत्यादयः।

**रूपसिद्धिः**

**कर्हि, कदा** - कस्मिन् काले इत्यर्थे 'किम् ङि' इत्यस्मात् ''अनद्यतने र्हिलन्यतरस्याम्'' इति विकल्पेन र्हिल्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, ''किमः कः'' इति किमः कादेशे, अव्ययत्वात् सुविभक्तेः लुकि कर्हि इति रूपम्। पक्षे दाप्रत्यये कदा इति रूपद्वयं सिद्धम्।

**यर्हि, यदा** - यस्मिन् काले इत्यर्थे र्हिलि, सुब्लुकि, अत्वे, पररूपे, स्वादिकार्ये यर्हि इति रूपम्। पक्षे दाप्रत्यये यदा इति रूपद्वयं सिद्धम्।

**तर्हि, तदा** - तस्मिन् काले इत्यर्थे र्हिलि, सुब्लुकि, त्यदाद्यत्वे, पररूपे, स्वादिकार्ये तर्हि इति रूपम्। पक्षे दाप्रत्यये तदा इति रूपद्वयं सिद्धम्।

1214. **एतदः इति** - एतदोऽन् इति सूत्रस्य योगविभागे प्रथमः योगः एतदः इत्यस्ति। **एतद्शब्दस्य एत-इत्-इत्यादेशौ भवतः रेफादौ थकारादौ प्रत्यये परे।** यथा एतर्हि।

**रूपसिद्धिः**

**एतर्हि** - एतस्मिन् काले इत्यर्थे 'एतद् ङि' इत्यस्मात् ''अनद्यतने र्हिल्.'' इति र्हिल्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, एतद् र्हि इति जाते, ''एतदः'' इति एतद्स्थाने एत इत्यादेशे एतर्हि इति जाते, अव्ययसञ्ज्ञायां सोर्लुकि 'एतर्हि' इति रूपं सिद्धम्। पक्षे त्रल् प्रत्यये, सुब्लुकि, ''अन्'' इति एतदः अनादेशे, ''नलोपः प्रातिपदिकान्तस्य'' नलोपे, स्वादिकार्ये 'अत्र' इत्यपि बोध्यम्।

1215. **प्रकारवचने इति** - प्रकारवचने, थाल्, इतिच्छेदः। उच्यते अनेनेति वचनम्। प्रकारस्य वचनम्, प्रकारवचनम्, षष्ठीतत्पुरुषः। सामान्यस्य भेदको विशेषोऽत्र प्रकारः। बहुभिः प्रकारैर्भुङ्क्त इत्यतो बहुभिर्विशेषैरित्यवगमात्। सादृश्यं तु नेह गृह्यते सर्वथेत्यादौ तदप्रतीतेः। यथा हरिस्तथा हर इत्यादौ यत्प्रकारवान् हरिस्तत्प्रकारवान् हर इति बोधे जाते हरिसदृशो हर इति फलति। तदभिप्रायेण यथाशब्दस्य सादृश्यार्थकत्वोक्तिः। इहलकारानुबन्धः लित्स्वरार्थः। **प्रकारवचने किंसर्वनामबहुभ्यः थाल् प्रत्ययः स्यादित्यर्थः।** यथा तेन प्रकारेण तथा।

**रूपसिद्धिः**

**तथा** - तेन प्रकारेण (विशिष्टः) इत्यर्थे 'तद् टा' इत्यस्मात् ''प्रकारवचने थाल्'' इति थाल्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, त्यदाद्यत्वे, पररूपे, तथा इति जाते, ''तद्धितश्चाऽसर्वविभक्तिः'' इति अव्ययसञ्ज्ञायां सोर्लुकि 'तथा' इति रूपं सिद्धम्।

**यथा** - येन प्रकारेण (विशिष्टः) इत्यर्थे 'यद् टा' इत्यस्मात् थाल्प्रत्यये, अनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, त्यदाद्यत्वे, पररूपे, यथा इति जाते, अव्ययसञ्ज्ञायां सोर्लुकि 'यथा' इति रूपं सिद्धम्। एवमेव सर्वैः प्रकारैः (विशिष्टः) सर्वथा, अन्येन प्रकारेण (विशिष्टः) अन्यथा, उभयेन प्रकारेण (विशिष्टः) उभयथा, इतरेण प्रकारेण (विशिष्टः) इतरथा इत्यादयोऽपि बोद्धव्याः।

**1216. इदमस्थमुः ( 5-3-24 ) ॥विधिसूत्रम् ॥**

(प्रकारवृत्तेरिदमस्थमुः प्रत्ययः स्यात् स्थार्थे)। थालोऽपवादः।

(वा.) **एतदोऽपि वाच्यः।**

अनेन एतेन वा प्रकारेण - इत्थम्।

**1217. किमश्च ( 5-3-25 ) ॥विधिसूत्रम् ॥**

(प्रकारवृत्तेः किमः स्वार्थे थमुस्तद्धितः स्यात्। थालोऽपवादः)। केन प्रकारेण कथम्।

---

1216. **इदमस्थमु इति** - इदमः, थमुः, इतिच्छेदः। इह उकार इत्। **इदं शब्दात् प्रकारवचने थमुप्रत्ययः स्यादित्यर्थः।** यथा - इत्थम्।

**रूपसिद्धिः**

**इत्थम्** - अनेन प्रकारेण इत्यर्थे 'इदम् टा' इत्यस्मात् ''इदमस्थमु'' इति थमुप्रत्ययेऽनुबन्धलोपे, सुब्लुकि, ''एतेतौ रथोः'' इति इदमः इत्-आदेशे, स्वादिकार्ये 'इत्थम्' इति सिद्धम्।

**( वा. ) एतद अपि - अनेन एतेन वा प्रकारेण इत्यर्थे इदमः एतदो वा शब्दात् थमुप्रत्ययो भवतीत्यर्थः।** यथा इत्थम्।

**रूपसिद्धिः**

**इत्थम्** - एतेन प्रकारेण (विशिष्टः) इत्यर्थे 'एतद् टा' इत्यस्मात् ''एतदोऽपि वाच्यः'' इति वार्तिकेन थमुप्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुपो धातुरिति सुब्लुकि, ''एतदः'' इति सूत्रेण एतद्-स्थाने 'इत्' इति सर्वादेशे 'इत्थम्' इति जाते, अव्ययसञ्ज्ञायां सोर्लुकि 'इत्थम्' इति रूपं सिद्धम्।

1217. **किमश्चेति** - किमः, च, इतिच्छेदः। **किम् शब्दात् प्रकारवचने थमुप्रत्ययः स्यादित्यर्थः।** थालोऽपवादः। यथा- कथम्।

**रूपसिद्धिः**

**कथम्** - केन प्रकारेण (विशिष्टः) इत्यर्थे 'किम् टा' इत्यस्मात् ''किमश्च'' इति थमुप्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुपो लुकि, किम् थम् इति जाते, ''प्राग्दिशो विभक्तिः'' इति थमः विभक्तिसञ्ज्ञायाम्, ''किमः कः'' इति सूत्रेण किमः कादेशे, अव्ययसञ्ज्ञायां सोर्लुकि 'कथम्' इति रूपं सिद्धम्।

॥ इति प्राग्दिशीयप्रकरणम् ॥

## ॥ अभ्यासः ॥

### वस्तुनिष्ठात्मकप्रश्नाः –

1. किम् शब्दात् प्रत्ययो भवति –
   (क) तसिल् (ख) तत्र
   (ग) थमु (घ) सर्वे

2. तसिलादयो दृश्यन्ते –
   (क) सप्तम्यन्तेभ्यः किमादिभ्यः (ख) पञ्चम्यन्तेभ्यः किमादिभ्यः
   (ग) सप्तम्यन्त-पञ्चम्यन्तेभ्यः (घ) सर्वविभक्त्यन्तेभ्यः किमादिभ्यः

3. सप्तम्यन्तेभ्यः किमादिभ्य भवति –
   (क) तसिल् (ख) तत्र
   (ग) अत् (घ) सर्वे

### अतिलघूत्तरात्मकप्रश्नाः –

4. तादौ हादौ च विभक्तौ परतः किमः क आदेशः?
5. इतः इत्यत्र प्रकृति-प्रत्ययौ कौ?
6. पर्यभिभ्यां कः प्रत्ययः?
7. चत्वारि त्रलन्तरूपाणि लेखनीयानि।
8. सर्वैकान्यकिंयत्तदः काले कः प्रत्ययः?
9. दादौ प्राग्दिशीये सर्वस्य क आदेशः?

### लघूत्तरात्मकप्रश्नाः –

10. दृशिग्रहणात् केषां योगे तसिलादयो भवन्ति? सोदाहरणं लिखन्तु।
11. त्रल्-तसिल्-प्रत्यययोः सोदाहरणं भेदं लिखन्तु।
12. प्रकारवचने के प्रत्ययाः भवन्ति? सोदाहरणं लिखन्तु।

### निबन्धात्मकप्रश्नाः –

13. अधोलिखित-प्रयोगाः साधनीयाः तथा एतेषां वाक्यप्रयोगोऽपि कर्त्तव्यः।
    कुतः, इतः, कुत्रः, यत्र, इह, क्व, ततो भवान्, सदा, तर्हि, यथा, तथा, इत्थम्, कथम्।
14. अघोलिखितसूत्राणि अर्थोदाहरणसहितानि व्याख्येयानि।
    किंसर्वनाम बहुभ्योऽद्व्यादिभ्यः, इतराभ्योऽपि दृश्यन्ते, सर्वैकान्यकिंयत्तदः काले दा, पञ्चम्यास्तसिल्, सप्तम्यास्त्रल्, प्रकारवचने थाल्, इदमस्थमु, एतेतौ रथोः।
15. प्रकरणस्थ-सूत्राणां वार्तिकानां च अर्थोदाहरण-सहिता सारणी निर्मातव्या।

## अथ प्रागिवीयाः

1218. **अतिशायने तमबिष्ठनौ ( 5-3-55 ) ॥विधिसूत्रम् ॥**
अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः। अयम् एषाम् अतिशयेन आढ्यः - आढ्यतमः। लघुतमः। लघिष्ठः।

1219. **तिङश्च ( 5-3-56 ) ॥विधिसूत्रम् ॥**
तिङन्तात् अतिशये द्योत्ये तमप् स्यात्।

1220. **तरप्तमपौ घः ( 1-1-21 ) ॥सञ्ज्ञासूत्रम् ॥**
एतौ घसञ्ज्ञौ स्तः।

---

1218. **अतिशायन इति** - अतिशायने, तमबिष्ठनौ, इतिच्छेदः। अतिशयनमेव अतिशायनम्। **अतिशयविशिष्टेऽर्थे प्रातिपदिकसंज्ञकात् स्वार्थे तमबिष्ठनौ प्रत्ययौ भवत इत्यर्थः।** यथा आढ्यतमः। लघुतमः। लघिष्ठः। 'तम' 'इष्ठ' इति शिष्येते।

**रूपसिद्धिः**

**आढ्यतमः** - अयम् एषाम् अतिशयेन आढ्यः इत्यर्थे 'आढ्य सु' इत्यस्मात् "अतिशायने तमबिष्ठनौ" इति तमप्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुपो लुकि, स्वादिकार्ये (विशेष्यानुसारम्) 'आढ्यतमः' इति रूपं सिद्धम्। एवमेव दर्शनीयतमः, सुकुमारतमः, विद्वत्तमः, दुष्टतमः, महत्तमः, दीर्घतमः इत्यादयोऽपि बोद्धव्याः।

**लघुतमो लघिष्ठो वा** - अयमेषामतिशयेन लघुः इत्यर्थे 'लघु सु' इत्यस्मात् तमप्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, पुनः प्रातिपदिकत्वात्स्वादिकार्ये 'लघुतमः' इति रूपं सिद्धम्। पक्षे इष्ठन्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, लघु+इष्ठ इति जाते, भत्वाद् "टेः" इति टि (उकारः) - लोपे, स्वादिकार्ये 'लघिष्ठः' इति रूपं सिद्धम्। स्त्रीत्वे 'लघुतमा' 'लघिष्ठा' इति। एवमेव पटुतमः पटिष्ठो वा इत्यादयोऽपि ज्ञातव्याः।

1219. **तिङश्चेति** - तिङः, च, इतिच्छेदः। प्रातिपदिकभिन्नत्वात् पूर्वसूत्रेण अप्राप्तत्वाद् उक्तम्। **अतिशये द्योत्ये तिङन्तात् तमप्-प्रत्ययो भवतीत्यर्थः।**

1920. **तरप्तमपाविति** - तरप्तमपौ, घः, इतिच्छेदः। तरप् च तमप् च तरप्तमपौ इति इतरेतरद्वन्द्वः। **तरप्-तमपौ घसञ्ज्ञौ स्तः इत्यर्थः।**

**1221. किमेत्तिङव्यय – घादाम्वद्रव्यप्रकर्षे ( 5-4-11 ) ॥विधिसूत्रम् ॥**

किम एदन्तात् तिङोऽव्ययाच्च यो घस्तदन्ताद् आमु: स्यात्, न तु द्रव्यप्रकर्षे। किन्तमाम्। प्राह्णेतमाम्। पचतितमाम्। उच्चैस्तमाम्। द्रव्यप्रकर्षे तु – उच्चैस्तमस्तरु:।

**1222. द्विवचनविभज्योपपदे तरबीयसुनौ ( 5-3-57 ) ॥विधिसूत्रम् ॥**

द्वयोरेकस्य अतिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्त:। पूर्वयोरपवाद:। अयमनयोरतिशयने लघु: – लघुतर:, लघीयान्। उदीच्या: प्राच्येभ्य: पटुतरा:, पटीयांस:।

---

**1921. किमेत्तिङिति** – किमेत्तिङव्यययाद्, आमु, अद्रव्यप्रकर्षे, इतिच्छेद:। किम् च एत् च तिङ् च अव्ययं च किमेत्तिङव्ययानि, तेभ्यो विहित:, किमेत्तिङव्ययविहितो यो घ: किमेत्तिङव्ययघ:, तस्मात् = किमेत्तिङव्ययघात्। द्वन्द्वगर्भपञ्चमीतत्पुरुषे कृते शाकपार्थिवादिवन्मध्यमपदलोपिसमास:। **घप्रत्ययान्तेभ्य: किमादिभ्य: आमु स्याद् अद्रव्यप्रकर्षे इत्यर्थ:।** यथा किन्तमाम्।

**रूपसिद्धि:**

**किन्तमाम्** – इदमेषामतिशयेन किम् इत्यर्थे 'किम् सु' इत्यस्मात् ''अतिशायने तमबिष्ठनौ'' इति तमप्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, पदसञ्ज्ञायां ''मोऽनुस्वार:'' इति मस्यानुस्वारे, किंतम इति जाते, घसञ्ज्ञायां ''किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे'' इति आमुप्रत्ययेऽनुबन्धलोपे, भत्वादकारलोपे किंतमाम् इत्यस्य मान्तत्वात् ''कृन्मेजन्त:'' इति अव्ययसञ्ज्ञायां, सौ, सोर्लुकि ''वा पदान्तस्य'' इति विकल्पेन परसवर्णे 'किन्तमाम्' पक्षे विकल्पाभावे 'किंतमाम्' इति रूपद्वयं सिद्धम्।

**प्राह्णेतमाम्** – अतिशयेन प्राह्णे इत्यर्थे 'प्राह्ण ङि' इत्यस्मात्, तमप्प्रत्यये, अनुबन्धलोपे, सुब्लुकि प्राप्ते ''घकालतनेषु कालनाम्न:'' इत्यलुकि, प्राह्णेतम इति जाते, आमुप्रत्ययेऽनुबन्धलोपे, भत्वादकारलोपे, स्वादिकार्ये 'प्राह्णेतमाम्' इति रूपं सिद्धम्। एवमेव पूर्वाह्णेतमाम् सिद्धति।

**पचतितमाम्** – आसाम् इयमतिशयेन पचति इत्यर्थे ''तिङश्च'' इति सूत्रेण तमप्-प्रत्ययेऽनुबन्धलोपे, 'पचतितम' इति जाते, आमुप्रत्ययेऽनुबन्धलोपे, भत्वादकारलोपे, अव्ययसञ्ज्ञायां सौ, सोर्लुकि 'पचतितमाम्' इति रूपं सिद्धम्।

**उच्चैस्तमाम्** – अतिशयेन उच्चै: इत्यर्थे 'उच्चैस्' इति अव्ययात् तमप्-प्रत्ययेऽनुबन्धलोपे, पदसञ्ज्ञायां सस्य रुत्वे विसर्गे ''विसर्जनीयस्य स:'' इति विसर्गस्य सत्वे उच्चैस्तम इति जाते, आमुप्रत्ययेऽनुबन्धलोपे, भत्वादकारलोपे, अव्ययसञ्ज्ञायां सौ, सोर्लुकि 'उच्चैस्तमाम्' इति रूपं सिद्धम्। अयमुच्चैराक्रोशति, इयमुच्चैस्तराम्। उच्चैस्तमाम्। एवमेव नीचैस्तराम् नीचैस्तमाम्। प्रातस्तराम्, प्रातस्तमाम्। अतितराम्, अतितमाम्। सुतराम्, सुतमाम्। नितराम्, नितमाम्। इत्यादि।

**द्रव्यप्रकर्षे तु – उच्चैस्तमस्तरु:**

सूत्रे अद्रव्यप्रकर्षे इत्युक्तम् अत अत्र द्रव्यप्रकर्षत्वात् न आमु।

**1222. द्विवचनेति** – द्विवचनविभज्योपपदे, तरबीयसुनौ इतिच्छेद:। उच्यतेऽनेनेति वचनम्, करणे ल्युट्। द्वयोरर्थयो: वचनम्, षष्ठीतत्पुरुष:। विभक्तुं योग्यं विभज्यम्। एतत् सूत्रनिपातनात् ण्यतं प्रबाध्य यत्प्रत्यय:। द्विवचनं च विभज्यं च द्विवचनविभज्यम्, समाहारद्वन्द्व:। द्विवचनविभज्यं च तद् उपपदम्-द्विवचनविभज्योपपदम्, तस्मिन् = द्विवचनविभज्योपपदे, कर्मधारय:। तरप् च ईयसुन् च तरबीयसुनौ, इतरेतरद्वन्द्व:। पूर्वयोरपवादोऽयम्। **द्विवचनविभज्योपपदे अतिशायने सुबन्तात् तिङन्तात् च तरप्-प्रत्यय: ईयसुन्-प्रत्ययश्च भवत इत्यर्थ:।** यथा लघुतर:, लघीयान्।

**रूपसिद्धि:**

**लघुतर:, लघीयान्** – अयमनयोरतिशयेन लघु: इत्यर्थे ''लघु सु'' इत्यस्मात् ''द्विवचन.'' इत्यादिना तरप्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, स्वादिकार्ये 'लघुतर:' इति रूपम्। पक्षे ईयसुन् प्रत्यये, अनुबन्धलोपे, भत्वाद् ''टे:'' इत्युकारलोपे लघीयस् इति जाते, प्रातिपदिकसञ्ज्ञायां, सुप्रत्ययेऽनुबघलोपे,

**1223. प्रशस्यस्य श्रः ( 5-3-60 ) ॥ विधिसूत्रम् ॥**

अस्य श्रादेशः स्यादजाद्योः परतः।

**1224. प्रकृत्यैकाच् ( 6-4-163 ) ॥ विधिसूत्रम् ॥**

इष्ठादिषु एकाच् प्रकृत्या स्यात्। श्रेष्ठः। श्रेयान्।

**1225. ज्य च ( 5-3-61 ) ॥ विधिसूत्रम् ॥**

**1226. ज्यादादीयसः ( 6-4-160 ) ॥ विधिसूत्रम् ॥**

(ज्यात् परस्य ईयस आकार आदेशः स्यात्)। आदेः परस्य। ज्यायान्।

---

उगित्वान्नुमागमेऽनुबन्धलोपे, लघीयन् स् स् इति जाते, ''सान्तमहतः संयोगस्य'' इति उपधादीर्घे हल्ङ्यादिलोपे, संयोगान्तलोपे 'लघीयान्' इति रूपं सिद्धम्। अत्र संयोगान्तलोपस्यासिद्धत्वात् नलोपो न। लघीयान्, लघीयांसौ, लघीयांसः। स्त्रीत्वे 'उगितश्चेति' ङीपि लघीयसी, लघीयस्यौ, लघीयस्यः। एवमेव पटुतरः, पटीयान्। साधुतरः, साधीयान्। महत्तरः, महीयान्। अणुतरः, अणीयान्। तनुतरः तनीयान्। इत्यादयोऽपि बोधनीयाः।

**पटुतराः, पटीयांसः** - पटुशब्दात् तरप्-प्रत्यये, स्वादिकार्ये पटुतराः इति रूपम्। पक्षे ईयसुनि, टिलोपे, जसि, स्वादिकार्ये 'पटीयांसः' इत्यपि सिद्ध्यति।

**1223. प्रशस्यस्य इति - प्रशस्य शब्दस्य स्थाने 'श्र' इत्यादेशः स्याद् इष्ठेयसोः परतः।**

* अजादी गुणवचनादेव (5-3-58) इत्यतः आजादी इत्यस्यानुवृत्तिः सप्तम्यां विपरिणमते। अजादी प्रत्ययौ=इष्ठन्-ईयसुनौ गुणवाचकेभ्यः एव भवतः अन्येभ्यः न।

**1224. प्रकृत्यैकाजिति** - तुरिष्ठेमेयः सु इति सूत्रात् इष्ठेमेयः सु इत्यस्य अनुवृत्तिरायाति। एक अच् यस्य स एकाच्, तस्य इष्ठादिषु प्रकृतिभावो भवतीत्यर्थः। यथा श्रेष्ठः। श्रेयान्।

**रूपसिद्धिः**

**श्रेष्ठः** - अयमेषाम् अतिशयेन प्रशस्यः इत्यर्थे 'प्रशस्य सु' इत्यस्मात् इष्ठन्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि ''प्रशस्यस्य श्रः'' इति सूत्रेण प्रशस्य-स्थाने श्र इत्यादेशे, श्र+इष्ठ इति जाते, भत्वाद् ''टेः'' इति टि (अ) लोपे प्राप्ते, ''प्रकृत्यैकाच्'' इति प्रकृतिभावे, ''आद्गुणः'' इति अकार-इकारयोः स्थाने एकारे गुणे, स्वादिकार्ये 'श्रेष्ठः' इति रूपं सिद्धम्।

**श्रेयान्** - अयमनयोरतिशयेन प्रशस्यः इत्यर्थे ''प्रशस्य सु'' इत्यस्मात् ईयसुन्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, प्रशस्य-स्थाने श्रादेशे, प्रकृतिभावे, गुणे पूर्ववत् (लघीयान्-इतिवत्) स्वादिकार्ये 'श्रेयान्' इति रूपं सिद्धम्।

**1225. ज्य चेति** - प्रशस्यशब्दस्य ज्यादेशो भवति इष्ठेयसोः। यथा ज्येष्ठः।

**रूपसिद्धिः**

**ज्येष्ठः** - अयमेषाम् अतिशयेन प्रशस्यः इत्यर्थे 'प्रशस्य सु' इत्यस्मात् इष्ठन्प्रत्यये अनुबन्धलोपे, सुब्लुकि, ''ज्य च'' इति प्रशस्य-स्थाने ज्यादेशे, प्रकृतिभावे, गुणे, स्वादिकार्ये 'ज्येष्ठः' इति रूपं सिद्धम्।

**1226. ज्यादादीयस इति** - ज्याद्, आद्, ईयसः, इतिच्छेदः। **ज्य इत्यतः ईयसः आत् स्यात्। आदेः परस्य इत्यतः ईस्थाने आ भवति।** यथा ज्यायान्।

**रूपसिद्धिः**

**ज्यायान्** - अयमनयोरतिशयेन प्रशस्यः इत्यर्थे 'प्रशस्य सु' इत्यस्मात् ईयसुन्-प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, प्रशस्य-स्थाने ज्यादेशे, ज्य ईयस् इति जाते, ''आदेः परस्य'' इति सहयोगेन ''ज्यादादीयसः'' इति सूत्रेण ईकारस्य आकारे, प्रकृतिभावे, सवर्णदीर्घे, ज्यायस् इति जाते, श्रेयान्इतिवत् स्वादिकार्ये 'ज्यायान्' इति रूपं सिद्धम्।

**1227. बहोर्लोपो भू च बहोः ( 6-4-158 ) ॥विधिसूत्रम् ॥**

बहोः परयोरिमेयसोर्लोपः स्याद् बहोश्च भूरादेशः। भूमा। भूयान्।

**1228. इष्ठस्य यिट् च ( 6-4-159 ) ॥विधिसूत्रम् ॥**

बहोःपरस्य इष्ठस्य लोपः स्याद् यिडागमश्च। भूयिष्ठः।

**1229. विन्मतोर्लुक् ( 5-3-65 ) ॥विधिसूत्रम् ॥**

विनो मतुपश्च लुक् स्यादिष्ठेयसोः। अतिशयेन स्रग्वी-स्रजिष्ठः स्रजीयान्। अतिशयेन त्वग्वान्-त्वचिष्ठः। त्वचीयान्।

---

1227. **बहोर्लोप इति** - बहुशब्दात् परयोः इमचिन्, ईयसुन् परयोः प्रत्यययोः लोपो भवति, बहुशब्दस्य च भू इत्यादेशः, आदेः परस्य इति सहकारेण अनयोरादि इकारीकारयोः लोपो भवतीत्याशयः। यथा - भूमा। भूयान्।

**रूपसिद्धिः**

**भूमा** - बहोर्भाव इत्यर्थे 'बहु ङस्' इत्यस्मात् पृथ्वादित्वादिमनिच्प्रत्यये, अनुबन्धलोपे, सुब्लुकि ''बहोर्लोपो भू च बहोः'' इति इकारलोपे, बहोः स्थाने भूरादेशे, भूमन् इति जाते, राजन्वत् स्वादिकार्ये 'भूमा' इति रूपं सिद्धम्।

**भूयान्** - अयमनयोरतिशयेन बहुः स्वादिकार्ये 'बहु सु' इत्यस्मात् ईयसुन्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, ईकारलोपे, बहोः भूरादेशे 'भूयस्' इति जाते, श्रेयान्वत् स्वादिकार्ये 'भूयान्' इति रूपं सिद्धम्।

1228. **इष्ठस्य इति** - आदेः परस्येति सहकारेण इष्ठस्य आदेरिकारस्य लोपो यिडागमश्च बहो भूरादेशश्च स्यादित्यर्थः। भूयिष्ठः।

**रूपसिद्धिः**

**भूयिष्ठः** - अयमेषामतिशयेन बहु इत्यर्थे 'बहु सु' इत्यस्मात् इष्ठन्प्रत्यये, सुब्लुकि ''इष्ठस्य यिट् च'' इति इकारलोपे, यिडागमे, वहोः भूरादेशे च कृते, स्वादिकार्ये 'भूयिष्ठः' इति रूपं सिद्धम्।

1229. **विन्मतोरिति** - विन्मतोः, लुक्, इतिच्छेदः। विन् च मत् च विन्मतौ, तयोः = विन्मतोः, इतरेतरद्वन्द्वः। **अजाद्योरिष्ठेयसोः विन्मतुपो लुग्भवतीत्याशयः।** यथा स्रजिष्ठः, स्रजीयान्।

**रूपसिद्धिः**

**स्रजिष्ठः** - अतिशयेन स्रग्वी इत्यर्थे 'स्रज् सु' इत्यस्मात् ''अस्मायामेधास्रजो विनिः'' इति विनिप्रत्यये, सुब्लुकि, ''क्विन्प्रत्ययस्य कुः'' इति कुत्वे स्रग्विन् इति जाते, 'स्रग्विन् सु' इत्यस्मात् ''अतिशायने तमबिष्ठनौ'' इति इष्ठन्-प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, ''विन्मतोर्लुक्'' इति विनः लुकि, ''निमित्तापाये नैमित्तिकस्याप्यपायः'' इति गस्य जत्वे, भत्वात् ''टेः'' इति टि ( अज् ) लोपे प्राप्ते, ''प्रकृत्यैकाच्'' इति प्रकृतिभावे , स्वादिकार्ये ''स्रजिष्ठः'' इति रूपं सिद्धम्।

**स्रजीयान्** - अयमनयोरतिशयेन स्रग्वी इत्यर्थे स्रग्विन् शब्दात् ईयसुन्-प्रत्ययेऽनुबन्धलोपे, ''विन्मतोर्लुक्'' इति विन्प्रत्ययस्य लुकि, ''निमित्तापाये.'' इत्यादिना कुत्वनिवृत्तौ, भत्वात् ''टेः'' इति टिलोपे प्राप्ते, प्रकृतिभावे, स्रजीयस् इति जाते, प्रातिपदिकत्वात् स्वादिकार्ये 'स्रजीयान्' इति रूपं सिद्धम्।

**त्वचिष्ठः** - अयमेषामतिशयेन त्वग्वान् इत्यर्थे त्वग्वत्शब्दात् इष्ठन्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, ''विन्मतोर्लुक्'' इति मतुपः लुकि निमित्तापाये. इत्यादिना कुत्वनिवृत्तौ, प्रकृतिभावे, स्वादिकार्ये ''त्वचिष्ठः'' इति रूपं सिद्धम्।

1230. **ईषदसमाप्तौ कल्पब्देश्य-देशीयरः ( 5-3-67 ) ॥ विधिसूत्रम् ॥**
(ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् सुबन्तात्तिङन्ताच्च कल्पब्देश्यदेशीयरः प्रत्ययाः स्युः)।
ईषदूनो विद्वान् विद्वत्कल्पः। विद्वद्देश्यः। विद्वद्देशीयः। पचतिकल्पम्।

1231. **विभाषा सुपो बहुच् पुरस्तात् तु ( 5-3-68 ) ॥ विधिसूत्रम् ॥**
ईषदसमाप्तिविशेष्टेऽर्थे सुबन्तात् बहुज्वा स्यात्, स च प्रागेव न तु परतः। ईषदूनः पटुः बहुपटुः। पटुकल्पः। सुपः किम्? यजतिकल्पम्।

1232. **प्रागिवात् कः ( 5-3-70 ) ॥ अधिकारसूत्रम् ॥**
इवे प्रतिकृतौ (5-3-96) इत्यतः प्राक् काधिकारः।

---

1230. **ईषदसमाप्ताविति** – ईषदसमाप्तौ, कल्पब्देश्यदेशीयरः, इतिच्छेदः। न समाप्तिः – असमाप्तिः, नञ्तत्पुरुषः। ईषच्चासौ असमाप्तिः – ईषदसमाप्तिः, तस्याम् = ईषदसमाप्तौ, कर्मधारयः। कल्पप् च देश्यश्च देशीयर् च कल्पब्देश्य-देशीयरः, इतरेतरद्वन्द्वः। पदार्थानां सम्पूर्णता = समाप्तिः। **ईषदसमाप्त्यर्थ-विशिष्टे सुबन्तात् तिङन्तात् च कल्पबादयः प्रत्ययाः स्युः**। यथा – विद्वत्कल्प इत्यादयः।

**रूपसिद्धिः**

**विद्वत्कल्पः** – ईषदूनो विद्वान् – विद्वत्कल्पः, विद्वद्देश्यः विद्वद्देशीयो वा। 'विद्वस् सु' इत्यस्मात् ''ईषदसमाप्तौ कल्पब्देश्यदेशीयरः'' इति कल्पप्प्रत्ययेऽनुबन्धलोपे, विद्वस् सु कल्प इति जाते, प्रातिपदिकत्वात्सुपो लुकि, पदसञ्ज्ञायां ''वसुस्रंसुध्वंस्वनडुहां दः'' इति सूत्रेण सकारस्य दकारे, विद्वद् कल्प इति जाते, ''खरि च'' इति दकारस्य तकारे चर्त्वे, विद्वत्कल्प इति जाते, प्रातिपदिकत्वात् स्वादिकार्ये 'विद्वत्कल्पः' इति रूपं सिद्धम्। देश्यप्रत्यये 'विद्वद्देश्यः' इति तथा च देशीयर्-प्रत्यये 'विद्वद्देशीयः' इति रूपद्वयमपि सिध्यति।

**पचतिकल्पम्** – ईषदूनं पचति पचतिकल्पं पचतिदेश्यं पचतिदेशीयं वा इत्यर्थे 'पचति' इति तिङन्तात् कल्पप्-प्रत्ययेऽनुबन्धलोपे स्वादिकार्ये पचतिकल्पम् इति रूपं सिद्धम्। एवं देश्यप्रत्यये विद्वद्देश्यः इति तथा देशीयर्-प्रत्यये विद्वद्देशीयम् इति रूपद्वयमपि सिध्यति।

**एवमेव** – पञ्चवर्षकल्पः, पञ्चवर्षदेश्यः, पञ्चवर्षशीयो वा इत्यादयोऽपि बोद्धव्याः।

1231. **विभाषेति** – विभाषा, सुपः, बहुच्, पुरस्तात् (इत्यव्ययम्), तु (इत्यव्ययम्) इतिच्छेदः। **ईषदसमाप्त्यर्थे सुबन्ताद् वा बहुच् स्यात्,** स तु सुबन्ततः पूर्वभागे स्याद्, न तु परभागे। यथा बहुपटुः।

**रूपसिद्धिः**

**बहुपटुः** – 'ईषदूनः पटुः' इत्यर्थे 'पटु सु' इत्यस्मात् ''विभाषा सुपो बहुच् पुरस्तात्तु'' इति सूत्रेण विकल्पेन पूर्वभागे बहुच्-प्रत्ययेऽनुबन्धलोपे 'बहुपटु सु' इति जाते, ''अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'' इति प्रातिपदिक-सञ्ज्ञायां ''सुपो धातुप्रातिपदिकयोः'' इति सुब्लुकि, प्रातिपदिकत्वात् स्वादिकार्ये 'बहुपटुः' इति रूपं सिद्धम्। पक्षे कल्पप् इत्यादिप्रत्यय-परेषु 'पटुकल्पः', 'पटुदेश्यः', 'पटुदेशीयः' इत्यादीनि रूपाण्यपि सिध्यन्ति।

**सुपः किम्?** यजतिकल्पम् –

ईषदूनं यजति इत्यर्थे यजति इत्यस्मात् ''इषदसमाप्तौ कल्पब्देश्यदेशीयरः'' इति कल्पप्-प्रत्यये, स्वादिकार्ये 'यजतिकल्पम्' इति रूपं सिध्यति। प्रकृतसूत्रेण सुबन्तादेव बहुच् प्रत्ययो भवति अत अत्र तिङन्तात् न बहुच् इति भावः। देश्यप्रत्यये यजतिदेश्यम्, देशीयर्-प्रत्यये यजतिदेशीयम् इति रूपद्वयमपि सिध्यति।

1232. **प्रागिवादिति** – प्राक्, इवात्, कः, इतिच्छेदः। **इवे प्रतिकृतौ ( 5-3-96 ) इति सूत्रं यावत् कप्रत्ययोऽधिक्रियते।**

**1233. अव्यय-सर्वनाम्नामकच् प्राक्टेः ( 5-3-71 ) ॥अधिकारसूत्रम् ॥**

कापवादः। तिङश्चेत्यनुवर्तते।

**1234. अज्ञाते ( 5-3-73 ) ॥विधिसूत्रम् ॥**

(अज्ञातविशिष्टार्थात् प्रातिपदिकात् तथैव च तिङन्तात् स्वार्थे यथाविहितं प्रत्ययः स्यात्)। कस्यायमश्वोऽश्वकः। उच्चकैः। नीचकैः। सर्वके:।

(वा.) **ओकार-सकार-भकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र तु सुबन्तस्य टेः प्रागकच्।**

युवकयोः, आवकयोः, युष्मकासु, अस्मकासु, युष्मकाभिः, अस्मकाभिः, त्वयका, मयका।

---

1233. **अव्ययसर्वनाम्नामिति** - अव्ययसर्वनाम्नाम्, अकच्, प्राक्, टेः, इतिच्छेदः। अव्ययानि च सर्वनामानि च अव्ययसर्वनामानि, तेषाम् = अव्ययसर्वनाम्नाम्, इतरेतरद्वन्द्वः। इह तिङश्चेत्यस्यानुवृत्तिरायाति। **अव्ययानां सर्वनाम्नां तिङन्तानां च टेः प्राग् अकच् स्यात् स्वार्थे इत्याशयः।** अयम् अकच्-प्रत्ययः टिभागात् पूर्वं भवति, अतः अकच्-प्रत्ययान्तशब्दः तद्धितान्तो नोच्यते। बहुच्-प्रत्ययोऽपि शब्दस्य आदौ भवति। (अकच्-बहुच्-युक्तयोः शब्दयोः प्रातिपदिकसञ्ज्ञाकरणाय कृत्तद्धितसमासाश्चेति सूत्रे तद्धितान्त इति नोक्तः, अपितु तद्धितयुक्तः इत्युक्तम् इति)।

1234. **अज्ञाते इति** - अज्ञातेऽर्थे विद्यमानात् सुबन्तात् तिङन्तात् च कप्रत्ययः अकच् प्रत्ययश्च स्याताम्। यथा अश्वक इत्यादयः।

(वा.) **ओकार-सकारेति** - ओकारादौ, सकारादौ भकारादौ च सुपि परे सर्वनामसञ्ज्ञकस्य टेः प्राग् अकच् स्यात्, अन्यत्र तु सुबन्त टेः प्राग् अकच्प्रत्ययो भवतीति तात्पर्यम्।

**रूपसिद्धिः**

**अश्वकः** - अज्ञातोऽश्वः इत्यर्थे 'अश्व सु' इत्यस्मात् ''प्रागिवात् कः'' इत्यधिकारे ''अज्ञाते'' इति कप्रत्यये, सुब्लुकि, पुनः विभक्तिकार्ये ''अश्वकः'' इति रूपं सिद्धम्। अत्र अश्वकः इति पशुविशेष अश्वोऽस्ति इति ज्ञातम्, किन्तु अयम् अश्वः कस्यास्तीति अज्ञातम्। अतः उक्तं कस्यायमश्वः इति।

**एवमेव** - अज्ञातो गर्दभः - गर्दभकः। अज्ञातो गजः - गजकः। अज्ञात उष्ट्रः - उष्ट्रकः इत्यादयोऽपि ज्ञातव्याः।

**उच्चकैः** - अज्ञातमुच्चै इत्यर्थे उच्चैस् इत्यव्यात् ''अव्यय-सर्वनाम्नामकच् प्राक्टेः'' इत्यधिकारे ''अज्ञाते'' इति सूत्रेण टेः (ऐस्) प्राक् अकच्-प्रत्ययेऽनुबन्धलोपे, उच्च्+अक्+ऐस् = उच्चकैस् इति जाते, सुप्रत्यये, ''अव्ययादाप्सुपः'' इति सोर्लुकि, सस्य रुत्वे विसर्गे च कृते ''उच्चकैः'' इति रूपं सिद्धम्। एवमेव - अज्ञातं नीचैः नीचकैः। अज्ञातं शनैः - शनकैः। इत्यादयः।

**सर्वके** - अज्ञाताः सर्वे इत्यर्थे 'सर्व जस्' इत्यस्मात् सर्वनामयशब्दात् ''अज्ञाते'' इत्यर्थे ''अव्ययसर्वनाम्नामकच्प्राक्टेः'' इति टेः प्राक् अकच् प्रत्यये, अनुबन्धलोपे, ''अर्थवदधातुरप्रत्ययप्रातिपदिकम्'' इति प्रातिपदिकत्वात्सुब्लुकि, सर्व् अक् अ = सर्वक इति जाते, प्रथमाबहुवचने जस् - प्रत्यये, ''जसः शी'' इति 'शी' आदेशे, गुणे सर्वके इति रूपं सिद्धम्।

**युवकयोः** - अज्ञातयोः युवयो इत्यर्थे 'युष्मद् ओस्' इत्यस्मात् ''ओकार-सकार-भकारादौ.'' इत्यादिना वार्तिकसहकारेण ''अव्ययसर्वनाम्नामकच्प्राक्टेः'' इति सूत्रेण टेः प्राक् अकच्-प्रत्ययेऽनुबन्धलोपे, युष्म् अक् अद् ओस् इति जाते, ''युवावौ द्विवचने'' इति युष्म्-स्थाने युव आदेशे युव अक् अद् ओस् इति जाते, ''अतो गुणे'' इति पररूपे युवकद् ओस् इति जाते, ''योऽचि'' इति दस्य यत्वे सस्य रुत्वे विसर्गे 'युवकयोः' इति रूपं सिद्धम्। एवमेव अज्ञातयोरावयोः 'आवकयोः' इति रूपमपि सिध्यति।

**युष्मकासु** - अज्ञातेषु युष्मासु इत्यर्थे युष्मद् सु (सुप्) इत्यस्मात् ''ओकारसकारभकारादौ.'' इत्यादिना वार्तिकसहकारेण ''अव्ययसर्वनाम्नामकच् प्राक्टेः'' इति अकच्-प्रत्ययेऽनुबन्धलोपे युष्म् अक् अद् सु इति जाते, ''युस्मदस्मदोरनादेशे'' इति दस्य आत्वे, सवर्णदीर्घे 'युष्मकासु' इति रूपं सिद्धम्। एवमेव अज्ञातेषु अस्मासु

1235. **कुत्सिते ( 5-3-74 ) ॥विधिसूत्रम् ॥**

( कुत्साविशिष्टार्थात् प्रातिपदिकात् तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययो भवति ) । कुत्सितोऽश्वः अश्वकः ।

1236. **किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ( 5-3-92 ) ॥विधिसूत्रम् ॥**

( द्वयोरेकस्य निर्धारणे गम्ये किम्, यद्, तद्, इत्येतेभ्यो डतरच् तद्धितप्रत्ययः स्यात् ) । अनयोः कतरो वैष्णवः । यतरः । ततरः ।

---

**युष्मकाभिः** – अज्ञातैः युष्माभिः इत्यर्थे 'युष्मद् भिस्' इत्यस्मात् ओकारेत्यादिना वार्तिकसहकारेण ''अव्ययसर्वनाम्नामकच्प्राक्टे:'' इति अकच्-प्रत्ययेऽनुबन्धलोपे युष्म् अक् अद् भिस् इति जाते, ''युष्मदस्मदोरनादेशे'' इति दस्य आत्वे युष्मक आ मिस् इति जाते, ''अकः सवर्णे दीर्घः'' इति सवर्णदीर्घे, सस्य रुत्वे विसर्गे 'युष्मकाभि:' इति रूपं सिद्धम् । एवमेव 'अस्मकाभि:' इत्यपि ज्ञेयम् ।

**त्वयका** – अज्ञातेन त्वया इत्यर्थे त्वया इत्यस्मात् टेः प्राक् अकच्-प्रत्ययेऽनुबन्धलोपे त्वय् अक् आ = त्वयका इति रूपं सिद्धम् । एवमेव अज्ञातेन मया – मयका इत्यपि बोध्यम् ।

**अकच्-युक्त-युष्मद्-शब्दस्य रूपमाला**

| | | | |
|---|---|---|---|
| प्रथमा | त्वम् ( त्वकम् ) | युवाम् ( युवकाम् ) | यूयम् ( यूयकम् ) |
| द्वितीय | त्वाम् ( त्वकाम् ) | युवाम् ( युवकाम् ) | युष्मान् ( युष्मकान् ) |
| तृतीया | त्वया ( त्वयका ) | युवाभ्याम् ( युवकाभ्याम् ) | युष्माभिः ( युष्मकाभिः ) |
| चतुर्थी | तुभ्यम् ( तुभ्यकम् ) | युवाभ्याम् ( युवकाभ्याम् ) | युष्मभ्यम् ( युष्मकभ्यम् ) |
| पञ्चमी | त्वत् ( त्वकत् ) | युवाभ्याम् ( युवकाभ्याम् ) | युष्मत् ( युष्मकत् ) |
| षष्ठी | तव ( तवक ) | युवयोः ( युवकयोः ) | युष्माकम् ( युष्माककम् ) |
| सप्तमी | त्वयि ( त्वयकि ) | युवयोः ( युवकयोः ) | युष्मासु ( युष्मकासु ) |

एवमेव अस्मद् शब्दोऽपि बोध्यः ।

1235. **कुत्सिते इति** – कुत्सितो निन्दितः । **कुत्सिते प्रातिपदिकात् तिङन्तात् च स्वार्थे यथाविहितं काकचौ ( क, अकच् ) तद्धितौ स्याताम् ।** यथा कुत्सितोऽश्वः अश्वकः । कुत्सितमुच्चैः उच्चकैः । इत्यादयः ।

**रूपसिद्धिः**

**अश्वकः** – कुत्सितोऽश्वः इत्यर्थे ''अश्व सु'' इत्यस्मात् ''कुत्सिते'', इति कप्रत्यये, प्रातिपदिकत्वात्सुब्लुकि, पुनः विभक्तिकार्ये 'अश्वकः' इति रूपं सिद्धम् । एवमेव गर्दभकः । उष्ट्रकः । अव्ययसर्वनामतिङन्तेभ्यः ''अव्ययसर्वनाम्नेति'' अकचि उच्चकैः । नीचकैः । सर्वके । युष्मकाभिः । युवकयोः । कुत्सितेन त्वया त्वयका । कुत्सितं पचति पचतकि । कुत्सितं जल्पति जल्पतकि इत्यादयोऽपि कुत्सितार्थे बोद्धव्याः ।

1236. **किंयत्तद इति** – किंयत्तदः, निर्धारणे, द्वयोः, एकस्य, डतरच् इति इतिच्छेदः । किम् च यच्च तच्च किंयत्तत्, तस्मात् = किंयत्तदः, समाहारद्वन्द्वः । **द्वयोः एकस्य निर्धारणे गम्ये किंयत्तदः तद्धितः डतरच्-प्रत्ययः स्यादित्यर्थः ।** इह डचावितौ स्तः । अतर इति शिष्यते । डकारानुबन्धः टिलोपार्थः चकारनुबन्धश्च अन्तोदात्तस्वरार्थः । यदा कस्माच्चित् समुदायात् जातिगुणक्रियासञ्ज्ञाभिः कस्यचिद् एकदेशस्य पृथक् निर्देशः क्रियते तदा तन्निर्धारणम् उच्यते । यथा कतरः इत्यादयः ।

**रूपसिद्धिः**

**कतरः** – अनयो को वैष्णव इत्यर्थे 'किम् सु' इत्यस्मात् ''किंयत्तदो.'' इत्यादिना सूत्रेण डतरच् प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकात्सुब्लुकि, किम्+अतर इति जाते, डित्वात् ''टेः'' इति टि (इम्) लोपे, स्वादिकार्ये 'कतरः' इति रूपं सिद्धम् ।

**1237. वा बहूनां जातिपरिप्रश्ने डतमच्( 5-3-93 ) ॥विधिसूत्रम् ॥**

बहूनां मध्ये एकस्य निर्धारणे डतमच्-स्यात्।'जातिपरिप्रश्ने' इति प्रत्याख्यातम् आकरे। कतमो भवतां कठः। यतमः। ततमः। वाग्रहणम् अकजर्थम्। यकः। सकः।

---

**यतरः** - अनयोर्य इत्यर्थे 'यद् सु' इत्यस्मात् डतरच्-प्रत्यये, सुब्लुकि, डित्त्वात् टिलोपे, स्वादिकार्ये 'यतरः' इति रूपं सिद्धम्।

**ततरः** - अनयोः स इत्यर्थे 'तद् सु' इत्यस्मात् डतरच्-प्रत्यये, सुब्लुकि, डित्त्वात् टिलोपे, स्वादिकार्ये 'ततरः' इति रूपं सिद्धम्।

1237. **वा बहूनामिति** - वा, बहूनाम्, जातिपरिप्रश्ने, डतमच्, इतिच्छेदः। **बहूनाम् एकस्य निर्धारणे गम्ये किंयत्तदः स्वार्थे वा तद्धितः डतमच् प्रत्ययः स्यादित्यर्थः।** इह डकारानुबन्धः टिलोपार्थः चकारानुबन्धश्च अन्तोदात्तस्वरार्थः। व्याकरणशास्त्रस्य समस्तसिद्धान्ताः व्यक्ताव्यक्तरीत्या महाभाष्यादेव प्रसूताः, अतः पातञ्जलमहाभाष्यं व्याकरणशास्त्रस्य आकरग्रन्थः कथ्यते।

**रूपसिद्धिः**

**कतमो भवतां कठः** - (भवतां कः कठशाखाध्यायी?)। 'किम् सु' इत्यस्मात् ''वा बहूनां जातिपरिप्रश्ने डतमच्'' इति डतमच्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, डित्त्वाट्टिलोपे, स्वादिकार्ये 'कतमः' इति रूपं सिद्धम्।

**यतमः** - यो भवतां पटुरित्यर्थे 'यद् सु' इत्यस्मात् डतमच्प्रत्यये, अनुबन्धलोपे, प्रातिपदिकात्सुब्लुकि, डित्त्वाट्टिलोपे, स्वादिकार्ये 'यतमः' इति रूपं सिद्धम्।

**ततमः** - स भवतां पटु इत्याद्यर्थेषु 'तद् सु' इत्यस्मात् डतमच् प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि, डित्त्वात् ''टेः'' इति सूत्रेण टि (अद्) लोपे, स्वादिकार्ये 'ततमः' इति रूपं सिद्धम्।

**यकः** - एषां य इत्यर्थे यद् शब्दात् ''अव्ययसर्वनाम्नामकच्प्राक्टेः'' इति अकच्-प्रत्ययेऽनुबन्धलोपे यकद् इति जाते, सुप्रत्यये त्यदाद्यत्वे, पररूपे, सस्य रुत्व विसर्गे 'यकः' इति रूपं सिद्धम्।

**सकः** - तेषां स इत्यर्थे तद्शब्दात् अकच्प्रत्ययेऽनुबन्धलोपे तकद् इति जाते, सुविभक्तौ त्यदाद्यत्वे, पररूपे, ''तदोः स सावनन्त्ययोः'' इति तस्य सत्वे सस्य रुत्वे विसर्गे 'सकः' इति रूपं सिद्धम्।

## ॥ अभ्यासः ॥

**वस्तुनिष्ठात्मकप्रश्नाः –**

1. घसञ्ज्ञक-प्रत्ययोऽस्ति –

   (क) तरप् (ख) तमप्

   (ग) तरप्तमपौ (घ) कोऽपि न

2. द्विवचनविभज्योपपदे प्रत्ययो भवति –

   (क) तरप् (ख) तमप्

   (ग) तरबीयसुनौ (घ) सर्वे

3. प्रशस्यस्य 'ज्य' आदेशो भवति –

   (क) इष्ठन्-परे (ख) ईयसुन्-परे

   (ग) इष्ठेयसोः (घ) तरप्-परे

4. ईषदसमाप्तौ प्रत्ययो भवति –

   (क) कल्पप् (ख) देश्य

   (ग) देशीयर् (घ) कल्पब्देश्यदेशीयरः

**अतिलघूत्तरात्मकप्रश्नाः –**

5. ज्येष्ठ इत्यत्र प्रकृतिप्रत्ययौ कौ?
6. लघुतमः इत्यत्र कस्मिन्नर्थे कः प्रत्ययः?
7. श्रेयान् इत्यत्र कः प्रत्ययः केन भवति?
8. भूयिष्ठः इत्यत्र क आगमः केन सूत्रेण भवति?

**लघूत्तरात्मकप्रश्नाः –**

9. अतिशायने तमबिष्ठनौ इति सूत्रस्य सोदाहरणम् अर्थं लिखन्तु।
10. तरबीयसुनौ कयोरपवादौ?
11. ज्यायान् इत्यत्र प्रकृतिप्रत्ययौ लेखनीयौ।

**निबन्धात्मकप्रश्नाः –**

12. अधोलिखिताः प्रयोगाः ससूत्रं साधनीयाः

    लघिष्ठः, किन्तमाम्, पचतितमाम्, लघुतरः, लघीयान्, पटुतरः, श्रेष्ठः, श्रेयान्, ज्येष्ठः, ज्यायान्, भूयिष्ठः, विद्वत्कल्पः, बहुपटुः, अश्वकः, त्वयका, कतरः, यतमः, यकः।

13. प्रकरणस्थसूत्राणां व्याख्या कार्या।
14. प्रकरणस्थ-सूत्राणां वार्तिकानाञ्च-अर्थोदाहरणसहिता सारणी निर्मेया।

## अथ स्वार्थिकाः

**1238. इवे प्रतिकृतौ ( 5-3-96 ) ॥विधिसूत्रम् ॥**

कन् स्यात्। अश्व इव प्रतिकृतिरश्वकः।

(वा.) **सर्वप्रातिपदिकेभ्यः स्वार्थे कन्।**

अश्व एव अश्वकः।

**1239. तत्प्रकृतवचने मयट् ( 5-4-21 ) ॥विधिसूत्रम् ॥**

प्राचुर्येण प्रस्तुतं = प्रकृतम्, तस्य वचनम् = प्रतिपादनम्। भावे, अधिकरणे वा ल्युट्। आद्ये प्रकृतमन्नम् अन्नमयम्। अपूपमयम्। द्वितीये तु अन्नमयो यज्ञः। अपूपमयं पर्व।

**1240. प्रज्ञादिभ्यश्च ( 5-3-38 ) ॥विधिसूत्रम् ॥**

अण् स्यात्। प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। दैवतः। बान्धवः।

---

1238. **इव इति** – अवक्षेपणे कन् इत्यतः कन् इत्यनुवर्तते। इवार्थः सादृश्यम्। काष्ठादिनिर्मितं प्रतिमापर्यायं वस्तु प्रतिकृतिः भवति। **इवार्थे विद्यमानात् प्रातिपदिकात् कन्स्यात् प्रतिकृतौ इत्यर्थः।**

**रूपसिद्धिः**

**अश्वकः** – अश्व इव प्रतिकृतिरित्यर्थे अश्वशब्दात् ''इवे प्रतिकृतौ'' इति कन्प्रत्ययेऽनुबन्धलोपे, स्वादिकार्ये 'अश्वकः' इति रूपं सिद्धम्। उष्ट्र इव प्रतिकृतिः उष्ट्रकः। गर्दभ इव प्रतिकृतिः गर्दभकः। इत्यादयोऽपि बोधनीयाः।

(वा.) **सर्वप्रातिपदिकेभ्य इति** – सर्वप्रातिपदिकेभ्यः स्वार्थे तद्धितः कन् प्रत्ययः स्यादित्यर्थः।

**रूपसिद्धिः**

**अश्वकः** – अश्व एव इत्यर्थे वार्तिकेन स्वार्थे कन् प्रत्यये, अनुबन्धलोपे, स्वादिकार्ये 'अश्वकः' इति रूपं सिद्धम्।

1239. **तत्प्रकृतवचन इति** – तद् इति प्रथमान्तम्। **प्रथमान्तात् प्रकृतिवचने अभिधेयेऽर्थे स्वार्थे मयट् प्रत्ययो भवतीत्यर्थः।** यथा अन्नमयम्।

**रूपसिद्धिः**

**अन्नमयम्** – प्रकृतं = प्रचुरम् अन्नमित्यर्थे 'अन्न सु' ''तत्प्रकृतवचने मयट्'' इति मयट् प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, स्वादिकार्ये अन्नमयम् इति रूपम्।

**अपूपमयम्** – प्रकृतम् अपूपम् इत्यर्थे 'अपूप सु' इत्यस्मात् मयट्-प्रत्यये, सुब्लुकि, स्वादिकार्ये 'अपूपमयम्' इति रूपं सिद्धम्।

**अन्नमयो यज्ञः** – प्रकृतम् (प्राचुर्येण विद्यमानम्) अन्नं यस्मिन् इत्यर्थे 'अन्न सु' इत्यस्मात् मयट्प्रत्ययेऽनुबन्धलोपे, सुब्लुकि, विशेष्यानुसारं विभक्तिकार्ये 'अन्नमयो यज्ञः' इति रूपं सिद्धम्।

**अपूपमयं पर्व** – प्रकृता अपूपा यस्मिन् इत्यर्थे 'अपूप सु' मयट्-प्रत्यये, अनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि, स्वादिकार्ये अपूपमयम् इति रूपं सिद्धम्। मयटः टित्त्वात् स्त्रीत्वे ''टिड्ढाणञ्.'' इत्यादिना ङीपि अन्नमयी यात्रा, अपूपमयी रथ्या इत्यादयः प्रयोगा अपि बोधनीयाः।

1240. **प्रज्ञादिभ्य इति** – प्रज्ञादिभ्यः, च, इतिच्छेदः। प्रज्ञः आदिर्येषान्ते प्रज्ञादयः, तेभ्य = प्रज्ञादिभ्यः, तद्गुणसंविज्ञानबहुव्रीहिः। **प्रज्ञादिगण-पठित-प्रातिपदिकेभ्यः स्वार्थे तद्धित अण् स्यादित्यर्थः। प्रज्ञादिगणो यथा प्रज्ञ।** वणिज्। उशिज्। उष्णिह्। प्रत्यक्ष। विद्वस्। विदन्। षोडन्। षोडश। विद्या। मनस्। श्रोत्र शारीरे (ग.सू.)। जुह्वत्। कृष्ण मृगे (ग.सू.)। चिकीर्षत्। चोर। शत्रु। योध। वक्षस्। चक्षुस्। धूर्त्त। वसु एत्। मरुत्। क्रुञ्च्। राजा। सत्वन्तु। दशार्ह। वयस्। आतुर। असुर। रक्षस्। पिशाच। अशनि। कार्षापण। देवता। बन्धु। आकृतिगणोऽयम्।

**1241. बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्( 5-4-42 ) ॥विधिसूत्रम् ॥**

(बह्वर्थाद् अल्पार्थाच्च कारकाभिधायिनः प्रातिपदिकात् स्वार्थे तद्धितः शस् प्रत्ययः स्यादन्यतरस्याम्)। बहूनि ददाति – बहुशः। अल्पशः।

(वा.) **आद्यादिभ्यस्तसेरुपसंख्यानम्।**

आदौ – आदितः। मध्यतः। पार्श्वतः। आकृतिगणोऽयम्। स्वरेण स्वरतः। वर्णतः।

---

**रूपसिद्धिः**

**प्राज्ञः** – प्रज्ञ एव इत्यर्थे प्रज्ञशब्दात् ''प्रज्ञादिभ्यश्च'' इति अण्-प्रत्यये, अनुबन्धलोपे, ''तद्धितेष्वचामादेः'' इति आदिवृद्धौ, भत्वादकारलोपे, स्वादिकार्ये 'प्राज्ञः' इति रूपं सिद्धम्। स्त्रीत्वे टिड्ढाणञिति ङीपि, भत्वादलोपे प्राज्ञी इति रूपं सिध्यति।

**दैवतः** – देवता एव इत्यर्थे देवताशब्दात् अण्-प्रत्ययेऽनुबन्धलोपे, देवता अ इति जाते, आदिवृद्धौ, दैवता अ इति जाते, भत्वादाकारलोपे, स्वादिकार्ये 'दैवतः' इति रूपं सिद्धम्।

**बान्धवः** – बन्धु एव इत्यर्थे बन्धुशब्दात् अण्-प्रत्ययेऽनुबन्धलोपे, बन्धु अ इति जाते, आदिवृद्धौ बान्धु अ इति जाते, ''ओर्गुणः'' इति उकारस्य ओकारे गुणे, ओकारस्य अवादेशे, स्वादिकार्ये 'बान्धवः' इति रूपं सिद्धम्। एवमेव चोर एव चौरः, वणिग् एव वाणिजः, योधः एव यौधः, शत्रु एव शात्रवः, मन एव मानसम्, रक्ष एव राक्षसः, पिशाच एव पैशाचः, असुर एव आसुरः, मरुद् एव मारुतः, वय एव वायसः, क्रुङ् एव क्रौञ्चः, आकृतिगणत्वात् चर एव चारः, चरित्रमेव चारित्रम्, चण्डाल एव चाण्डालः, जेता एव जैत्रः इत्यादयोऽपि बोद्धव्याः।

**1241. बह्वल्पार्थादिति** – बह्वल्पार्थात्, शस्, कारकात्, अन्यतरस्याम्, इतिच्छेदः। बहुश्च अल्पश्च बह्वल्पौ, बह्वल्पौ अर्थौ यस्य तद् बह्वल्पार्थम्, तस्मात् = बह्वल्पार्थात्। द्वन्द्वगर्भबहुव्रीहिसमासः। **बह्वल्पार्थात् कारकात् प्रातिपदिकात् शस् वा स्यात् स्वार्थे।**

**रूपसिद्धिः**

**बहुशः** – बहुनि (धनानि) ददाति इत्यर्थे बहुशब्दात् बह्वल्पार्थादिति शस्प्रत्यये, बहुशस् इति जाते, ''तद्धितश्चासर्वविभक्तिः'' इति अव्ययसञ्ज्ञायाम् औत्सर्गिक-सोर्लुकि, पदान्तस्य सस्य रुत्वे विसर्गे 'बहुशः' इति रूपं सिद्धम्। एवमेव प्रभुतशः, भूरिशः इत्यादयोऽपि।

**अल्पशः** – अल्पानि ददाति इत्यर्थे अल्पशब्दात् शस् प्रत्यये, अवययसञ्ज्ञायाम् औत्सर्गिकस्य सोर्लुकि, सस्य रुत्वे विसर्गे 'अल्पशः' इति रूपं सिद्धम्। एवमेव स्तोकानि ददाति इति स्तोकशः इत्यपि सिद्यति।

(वा.) **आद्यादिभ्य इति – आद्यादिभ्यो विकल्पेन सार्वभिक्तिकस्तसिः स्यात्।**

**रूपसिद्धिः**

**आदितः** – आदौ इत्यर्थे 'आदि ङि' इत्यस्मात् ''आद्यादिभ्यस्तसेरुपसंख्यानम्'' इति वार्तिकेन तसिप्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात्सुब्लुकि आदितस् इति जाते, अव्ययसञ्ज्ञायां सोर्लुकि, सस्य रुत्वे विसर्गे 'आदितः' इति रूपं सिद्धम्। पक्षे आदौ इत्यपि सिद्यति। एवमेव मध्ये मध्यतः, अन्ते अन्ततः, पाश्वे पार्श्वतः, पृष्ठे पृष्ठतः, आद्यादेः आकृतिगणत्वात् स्वरेण स्वरतः, वर्णेन वर्णतः, प्रकृतेः, प्रकृतितः, प्रत्ययात् प्रत्ययतः, ज्ञाने ज्ञानतः वीर्येण वीर्यतः, धान्यधनैः धान्यधनतः जन्मना जन्मतः, तीर्थेन (गुरुणा) तीर्थतः, नाम्ना नामतः, वृत्तेन वृत्ततः, दूरतः, अर्थे अर्थतः इत्यादयोऽपि बोद्धव्याः।

**1242. कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ( 5-4-50 ) ॥विधिसूत्रम् ॥**

(वा.) **अभूततद्भावे इति वक्तव्यम्।**

विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद् विकारशब्दात् स्वार्थे च्विर्वा स्यात् करोत्यादिभिर्योगे।

**1243. अस्य च्वौ ( 7-4-32 ) ॥विधिसूत्रम् ॥**

अवर्णस्य ईत् स्यात् च्वौ। वेर्लोपः। च्व्यन्तन्त्वाद् अव्ययत्वम्। अकृष्णः कृष्णः सम्पद्यते, तं करोति कृष्णी करोति। ब्रह्मी भवति। गङ्गी स्यात्।

(वा.) **अव्ययस्य च्वावीत्वं नेति वाच्यम्।** दोषाभूतमहः। दिवाभूता रात्रिः।

---

**1242. कृभ्वस्तियोगे इति** – कृभ्वस्तियोगे, सम्पद्यकर्तरि, च्विः, इतिच्छेदः। कृ भू अस्ति इत्येतेषामितरेतरद्वन्द्वः कृभ्वस्तयः, तैर्योगे = कृभ्वसितयोग, तृतीयातत्पुरुषः। सम्पदनं समपद्यः, तस्य कर्त्ता सम्पद्यकर्त्ता, तस्मिन् = सम्पद्यकर्तरि, षष्ठीतत्पुरुषः। सम्पद्यश्च असौ कर्त्ता सम्पद्यकर्त्ता, तस्मिन = सम्पद्यकर्तरि, कर्मधारयसमासः। **सम्पद्यकर्तरि प्रातिपदिकात् तद्धितः च्विः वा कृभ्वस्तियोगे।**

(वा.) **अभूततद्भावे इति – कृभ्वस्ति इति सूत्रस्य प्रवृत्तिः अभूततद्भावे एव भवतीत्य र्थः।** अभूतस्य = कार्यरूपेण अपरिणतस्य तद्भावः = तेन कार्यरूपेण भावः अभूततद्भावः। तस्मिन् गम्ये इत्यर्थः।

**1243. अस्य च्वाविति** – अस्य, च्वौ, इतिच्छेदः। **च्विप्रत्यये परे अवर्णान्तस्य अङ्गस्य ईत् स्यादित्यर्थः।** अलोऽन्त्यपरिभाषया अन्त्यस्य अलः (अकारस्य) ईत् स्यात्।

**रूपसिद्धिः**

**कृष्णी करोति** – अकृष्णः कृष्णः सम्पद्यते, तं करोति इत्यर्थे 'कृष्ण अम्' इत्यस्मात् ''अभूततद्भावे इति वक्तव्यम्'' इति वार्तिकसहयोगेन ''कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः'' इति सूत्रेण च्विप्रत्यये, च्वेः सर्वापहारलोपे, प्रातिपदिकत्वात्सुब्लुकि, कृष्ण (करोति) इति जाते, ''प्रत्ययलोपे प्रत्ययलक्षणम्'' इति प्रत्ययलक्षणेन ''अस्य च्वौ'' इति अस्य ईत्वे, कृष्णी (करोति) इति जाते, ''ऊर्यादिच्विडाचश्च'' इति गतिसञ्ज्ञायां, ''प्राग्रीश्वरान्निपाताः'' इति निपातसञ्ज्ञायां, ''स्वरादिनिपातमव्ययम्'' इत्यव्ययसञ्ज्ञायाम् औत्सर्गिकस्य सोर्लुकि 'कृष्णी करोति' इति रूपं सिद्धम्। अत्र **अवधेयं** यत् गतिसमासो न भवति यतो हि लोके सुबन्तस्य तिङन्तेन सह समासः वर्जितः। किन्तु यदि कृधातुः क्त्वान्तः भवेत्तर्हि गतिसमासो भूत्वा, क्त्वः ल्यबादेशे कृष्णीकृत्य इति रूपम्। एवं कृदन्तकृधातोः समासो भूत्वा कृष्णीकृतः, कृष्णीकृतवान्, कृष्णीकर्तुम् इत्यादयः अपि ज्ञातव्याः।

**ब्रह्मी भवति** – अब्रह्म ब्रह्म सम्पद्यमानं भवतीत्यर्थे 'ब्रह्मन् सु' इत्यस्मात् अभूतद्भावे इति वार्तिकसहयोगेन ''कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः'' इति च्विप्रत्यये, च्विप्रत्ययस्य सर्वापहारलोपे, प्रातिपदिकत्वात् सुब्लुकि, अन्तवर्तिनीं विभक्तिमाश्रित्य ''नलोपः प्रातिपदिकान्तस्य'' इति नलोपे ''अस्य च्वौ'' इति अकारस्य ईकारे ब्रह्मी (भवति) इति जाते, अव्ययसञ्ज्ञायां सोर्लुकि 'ब्रह्मी भवति' इति रूपं सिद्धम्।

**गङ्गी स्यात्** – अगङ्गा गङ्गा सम्पद्यमाना स्यादित्यर्थे 'गङ्गा सु' इत्यस्मात् अभूततद्भावे च्विप्रत्यये, तस्य च्वेः सर्वापहारलोपे, प्रातिपदिकात् सुब्लुकि, ''अस्य च्वौ'' इति आकारस्य ईकारे, गङ्गी (स्यात्) इति जाते, अव्ययसञ्ज्ञायाम् औत्सर्गिकस्य (सामान्यतः प्राप्यस्य) सोर्लुकि 'गङ्गी स्यात्' इति रूपं सिद्धम्।

(वा.) **अव्ययस्येति** – च्वौ परे अव्ययस्य ईत्वं न स्यादित्यर्थः।

**रूपसिद्धिः**

**दोषाभूतमहः** – अदोषा दोषा (रात्रि) सम्पद्यमानं भूतम् (अहर्दिनम्) इत्यर्थे 'दोषा' इत्यव्ययात् अभूततद्भावे च्विप्रत्यये, तस्य सर्वापहारलोपे, ''अस्य च्वौ'' इति आकारस्य ईत्वे प्राप्ते, ''अव्ययस्य च्वौ ईत्वं नेति वाच्यम्'' इति वार्तिकेन निषेधे, च्व्यन्तत्वात् गतिसञ्ज्ञायां गतिसमासे दोषाभूतम् (अहः) रूपं सिद्यति।

**दिवाभूता रात्रिः** – अदिवा दिवा सम्पद्यमाना भूता इत्यर्थे 'दिवा' इत्यव्ययात् अभूततद्भावे च्विप्रत्यये, सर्वापहारिलोपे, ईत्वे प्राप्ते, निषेधे, गतिसञ्ज्ञायां गतिसमासे, 'दिवाभूता रात्रि' इति रूपं सिद्यति।

**1244. विभाषा साति कार्त्स्न्ये ( 5-4-52 ) ॥विधिसूत्रम् ॥**

च्विविषये सातिर्वा स्यात् साकल्ये।

**1245. सात्पदाद्योः ( 8-3-111 ) ॥विधिसूत्रम् ॥**

सस्य षत्वं न स्यात्। दधि सिञ्चति। कृत्स्नं शस्त्रम् अग्निः सम्पद्यते – अग्निसाद् भवति।

**1246. च्वौ च ( 7-4-26 ) ॥विधिसूत्रम् ॥**

च्वौ च परे पूर्वस्य दीर्घः स्यात्। अग्नी भवति।

**1247. अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् ( 5-4-57 ) ॥विधिसूत्रम् ॥**

द्व्यजेव अवरं न्यूनं न तु ततो न्यूनम् अनेकाजिति यावत्, तादृशम् अर्धं यस्य तस्माड् डाच् स्यात् कृभ्वस्तियोगे।

---

**1244. विभाषेति** – विभाषा, साति (लुप्तप्रथमैकवचनान्तम्), कार्त्स्न्ये, इतिच्छेदः। कृत्स्नस्य (सम्पूर्णस्य) भावः कार्त्स्न्यम्, भावे ष्यञ्। **अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि विभाषा तद्धितः सातिप्रत्ययः स्यात् कार्त्स्न्ये गम्ये।**

**1245. सात्पदाद्योरिति** – सात् च पदादिश्च सात्पदादी, तयोः = सात्पदाद्योः, इतरेतरद्वन्द्वः। **सात्पदाद्योः सस्य षत्वं न स्यात्।** आदेशप्रत्यययोः इत्यस्यापवादः। यथा अग्निसाद् भवति।

**रूपसिद्धिः**

**अग्निसाद् भवति** – कृत्स्नं शस्त्रम् अग्निः सम्पद्यते इत्यर्थे 'अग्नि सु' इत्यस्मात् ''विभाषा साति कार्त्स्न्ये'' इति विकल्पेन सातिप्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वात् सुब्लुकि अग्निसात् (भवति) इति जाते, ''तद्धितश्चाऽसर्वविभक्तिः'' इत्यव्ययसञ्ज्ञायां सोर्लुकि अग्निसात् (भवति) इति जाते, ''झलां जशोऽन्ते'' इति तकारस्य दकारे जश्त्वे सात्पदाद्योः इति षत्वनिषधे अग्निसाद् भवति इति रूपं सिद्धम्। एवमेव कृत्स्नं लवणमुदकं सम्पद्वते उदकसाद् भवति (वर्षाकाले कृत्स्नं लवणम् उदकं सम्पद्यते)। पक्षे 'उदकी भवति' इत्यपि च्विप्रत्यये भवति। कृत्स्नं गृहम् भस्म सम्पद्यते – भस्मसाद् भवति, पक्षे भस्मी भवति इत्यादयोऽपि ज्ञातव्याः।

**1246. च्वाविति** – च्वौ, च, इतिच्छेदः। च्वि-प्रत्यये परेऽपि अजन्ताङ्गस्य दीर्घः स्यात्।

**रूपसिद्धिः**

**अग्नी भवति** – कृत्स्नं शस्त्रम् अग्निः सम्पद्यते इत्यर्थे च्विप्रत्यये, तस्य सर्वापहारलोपे, प्रत्ययलक्षणेन ''च्वौ च'' इति इकारस्य दीर्घे ईकारे कृते अग्नी भवति इति जाते, गतिसञ्ज्ञायाम्, निपातसञ्ज्ञायाम्, अव्ययसञ्ज्ञायां सोर्लुकि 'अग्नी भवति' इति रूपं सिद्धम्। एवमेव शुची करोति, शुची भवति, शुची स्यात्। पटू करोति, पटू भवति, पटू स्यात् इत्यादयोऽपि ज्ञातव्याः।

**1247. अव्यक्तानुकरणादिति** – अव्यक्तानुकरणात्, द्व्यजवरार्धात्, अनितौ, डाच्, इतिच्छेदः। यत्र ध्वनौ अकारादयो वर्णविशेषाः न व्यज्यन्ते सोऽव्यक्तो ध्वनिः। तस्यानुकरणम् – अव्यक्तानुकरणम्, तस्मात् = अव्यक्तानुकरणात्। षष्ठीतत्पुरुषः। द्वयोरचोः समाहारो द्व्यच्, द्व्यच् एव अवरम् = न्यूनान्यूनं न ततो न्यूनं द्व्यजवरम्, कर्मधारयः। द्व्यजवरम् अर्धम् (अर्धभागः) यस्य तत् = द्व्यजवरार्धम्, तस्मात् = द्व्यजवरार्धात्, बहुव्रीहिसमासः। न इतिः अनितिः, तस्मिन् = अनितौ, नञ्तत्पुरुषः। **अव्यक्तानुकरणात् तद्धितः डाच् प्रत्ययः स्यात् कृभ्वस्तियोगे अनितौ।**

(वा.) **डाचि चेति** – डाच्-परे द्वित्वं स्यात्।

(वा.) **नित्यमाम्रेडिते इति – डाचि आम्रेडिते पूर्वपरयोः पररूपं स्यात्।** यथा **पटपटा करोति।**

**रूपसिद्धिः**

**पटपटा करोति** – पटत् एवं शब्दं करोति इत्यर्थे 'पटत् अम् इत्यस्मात्' ''डाचि च द्वे बहुलम्'' इति वार्तिकेन 'पटत् अम्' इत्यस्य द्वित्वे पटत् अम् पटत् अम् इति जाते, ''अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्'' इति डाच् – प्रत्ययेऽनुबन्धलोपे, पटत् अम् पटत् अम् आ इति जाते, ''कृत्तद्धितसमासाश्च'' इति प्रातिपदिकसञ्ज्ञायाम्, ''सुपो धातुप्रातिपदिकयोः'' इति सुब्लुकि पटत् पटत् आ (करोति) इति जाते, ''तस्य परमाम्रेडितम्'' इति परस्य आम्रेडितसञ्ज्ञायाम्, ''नित्यमाम्रेडिते डाचीति वक्तव्यम्'' इति वार्तिकेन (प्रथम–पटत् इत्यस्य तकारस्य परवर्तिनः पटत् इत्यस्य पकारस्य च) तकारपकारयोः स्थाने पकारे पररूपे एकादेशे कृते, पट पटत् आ (करोति) इति जाते, डित्वात् भस्य ''टेः'' इति सूत्रेण टि (अत्)–लोपे पटपट् आ (करोति) = पटपटा करोति इति जाते ''स्वरादिनिपात-मव्ययम्'' इत्यव्ययसञ्ज्ञायाम् औत्सर्गिकस्य सोर्लुकि 'पटपटा करोति' इति रूपं सिद्धम्। एवमेव 'दमत् एवं शब्दं करोति – दमदमा करोति। 'खटत्' एवं शब्दं करोति – खटखटा करोति। 'पटत्' इति शब्दो भवति – पटपटा भवति। पटपटा स्यात्। दमदमा भवति। दमदमा स्यात् इत्यादयोऽपि बोद्धव्याः।

**अव्यक्तानुकरणात् किम्?** ईषत्करोति।

अव्यक्तानुकरणादेव अत्र डाच् विधानं कृतमस्ति। यदि उक्तपदं न स्यात् तर्हि 'ईषत् करोति' इत्यत्रापि डाच् भूत्वा अनिष्टरूपापत्तिः स्यात्। इत्यत्र 'ईषत्' इति स्वल्पार्थे अव्ययम् अस्ति न तु कस्यापि ध्वनेरनुकरणम्, अतः अत्र डाच् न भवति।

**द्व्यजवरार्धादिति किम्** – श्रत् करोति।

अत्र द्व्यजवरार्धादेव डाज् विधानं भवति, अतः श्रत् इत्यत्र एकाच्त्वात् डाच् न भवति। यदि सूत्रे उक्तपदं न स्यात् तर्हि अत्रापि डाच् भूत्वा अनिष्टापत्तिः स्यात्। तन्न स्यादत उक्तपदमुक्तम्।

**अवरेति किम्?** खरटखरटा करोति।

अत्र अवरेति पदस्योच्चारणात् खरटत् इत्यत्र त्र्यच्त्वात् अपि डाच्करणेन न कापि बाधा।

**अनितौ किम्?** पटिति करोति।

सूत्रानुसारं परे यदि इतिशब्दः भवेत्तर्हि डाच् न भवति। पटिति करोति इत्यत्र इतिशब्दः परे अस्ति अतः डाच् न भवति, तन्मूलकद्वित्वमपि न स्यात्। पटत् इति इत्यवस्थायाम् ''अव्यक्तानुकरणस्यात इतौ'' इति सूत्रेण अत् इकारयोः स्थाने इकारे पररूपे कृते 'पटिति' करोति इति सिद्यति। एवमेव धमिति करोति इत्यादयोऽपि ज्ञातव्याः।

## ॥ अभ्यासः ॥

### वस्तुनिष्ठात्मकप्रश्नाः –

1. सर्वप्रातिपदिकेभ्यः स्वार्थे भवति –

   (क) कः (ख) कन्

   (ग) मयट् (घ) सर्वे

2. तत्प्रकृतवचने इत्यनेन मयड् भवति –

   (क) भावे (ख) अधिकरणे

   (ग) कर्तरि (घ) भावेऽधिकरणे वा

3. प्राज्ञः इत्यत्र कः प्रत्ययः?

   (क) घञ् (ख) अण्

   (ग) कञ् (घ) सर्वे

### अतिलघूत्तरात्मकप्रश्नाः –

4. प्रज्ञादिभ्यः प्रत्ययः कः?
5. आद्यादिभ्यः कः प्रत्ययः?
6. कृभ्वस्तियोगे अभूततद्भावे सम्पद्यकर्तरि प्रत्ययः कः?
7. अग्निसाद् भवति इत्यस्य विग्रहं लिखन्तु।

### लघूत्तरात्मकप्रश्नाः –

8. बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् इति सूत्रं सोदाहरणं व्याख्यायताम्।
9. कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः इति सूत्रार्थं सोदाहरणं लिखन्तु।
10. अव्यक्तानुकरणमिति सूत्रं प्रपूर्य व्याख्या कार्या।

### निबन्धात्मकप्रश्नाः –

11. अधोलिखिताः प्रयोगाः साधनीयाः।

    अश्वकः, अन्नमयम्, अपूपमयम्, प्राज्ञः, दैवतः, बान्धवः, बहुशः, आदितः, कृष्णी भवति, ब्रह्मी भवति, दिवाभूतम्, अग्निसाद् भवति, पटपटा करोति।

12. अधोलिखितसूत्राणि व्याख्यातव्यानि।

    प्रज्ञादिभ्यश्च, अस्य च्वौ, सात्पदाद्योः, विभाषा साति कात्स्न्र्ये।

13. प्रकरणस्थ-सूत्राणां वार्तिकानाञ्च अर्थोदाहरणसहिता सारणी निर्मेया।

## अथ भ्वादयः

### लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ। एषु पञ्चमो लकारश्छन्दोमात्रगोचरः।

अत्र दशलकाराः परिगणिताः सन्ति। एषु प्रथमतः आरभ्य षट्संख्यापर्यन्तं टित् लकाराः सन्ति, अन्ये चत्वारो ङित्लकाराः सन्ति। एषु लेट्लकारः केवलं छन्दसि (वेदे) एव दृश्यते। लडादिषु ल् एवावशिष्यते, अत एते लकाराः कथ्यन्ते।

**लकाराणामर्थाः**

1. **लट् लकारः** – लट् इत्यस्यार्थः वर्तमानकालः। अस्मिन् क्रिया आरभ्यते परन्तु समाप्ता न भवति। यथा गच्छति, पठति, इत्यादयः।
2. **लिट् लकारः** – परोक्षानद्यतनभूतकालः। यथा अयोध्यायां दशरथो नाम राजा **बभूव**।
3. **लुट्लकार** – श्वो भाविनि अर्थे लुट् लकारः। यथा – सः श्वः जयपुरं गन्तास्ति।
4. **लृट् लकारः** – सामान्यभविष्यत् – कालः। यथा शिष्यः पठिष्यति। गुरुः व्याकरणं पाठयिष्यति।
5. **लेट्लकारः** – अयं लकारः वेदेषु प्रयुज्यते। अयं वैदिकसंस्कृते विधेः आशङ्काया भावान् प्रकटयितुं प्रयुज्यते। यथा आदित्यः सुपथा करत्।
6. **लोट् लकार** – अयं प्रेरणार्थे, आज्ञार्थे, प्रार्थनायाम् आशिष्यर्थेषु, लोट चेति विध्यादिष्वर्थेषु प्रयुज्यते। यथा जलमानयः। काले वर्षतु पर्जन्यः। कल्याणमस्तु। चिरञ्जीवी भव।
7. **लङ् लकारः** – अयं भूतानद्यतने काले प्रयुज्यते। सः ह्यः विद्यालयं न अगच्छत्।
8. **लिङ् लकारः** – अयं द्विविधः। (1) विधिलिङ् (2) आशीर्लिङ्। विधिलिङ् विध्यादिषु प्रयुज्यते आशीर्लिङ् च आशिष्यर्थे। यथा – छात्रः प्रातः पितरौ नमेत्। भवतः कल्याणं भूयात्।
9. **लुङ्लकारः** – सामान्यभूतार्थेऽयं प्रयुज्यते। मन्दिरे पूजाऽभूत्। व्याकरणकालांशोऽभूत्।
10. **लृङ्लकारः** – हेतु हेतुमद्भावादिलिङ्लकारस्यार्थे क्रियाया असिद्धौ गम्यमानायां लकारोऽयं प्रयुज्यते। अयं क्रियायाः अनिष्पत्तौ भूते भाविनि च प्रयुक्तो भवति। एधश्चेत् अलप्स्यत् ओदनमपक्ष्यत्। छात्रः परिश्रमम् अकरिष्यत् चेत् उत्तीर्णोऽभविष्यत्।

**373. लः कर्मणि च भावे चाऽकर्मकेभ्यः ( 3-4-69 ) ॥ विधिसूत्रम् ॥**

लकाराः सकर्मकेभ्य कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च।

**374. वर्त्तमाने लट् ( 3-2-123 ) ॥ विधिसूत्रम् ॥**

वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात्। अटावितौ। उच्चारणसामर्थ्याल्लस्य नेत्त्वम्। भू सत्तायाम्। कर्तृविवक्षायां भू ल् इति स्थिते -

**375. तिप्-तस्-झि-सिप्-थस्-थ-मिब्-वस्-मस्-ताऽऽताञ्-झ-थासाथांध्वमिड्-वहि-महिङ् ( 3-4-78 ) ॥ विधिसूत्रम् ॥**

एतेऽष्टादश लादेशाः स्युः।

**376. लः परस्मैपदम् ( 1-4-98 ) ॥ सञ्ज्ञासूत्रम् ॥**

लादेशाः परस्मैपदसञ्ज्ञाः स्युः।

**377. तङानावात्मनेपदम् ( 1-4-99 ) ॥ सञ्ज्ञासूत्रम् ॥**

तङ् प्रत्याहारः शानच्कानचौ चैतत्सञ्ज्ञाः स्युः। पूर्वसञ्ज्ञापवादः।

**378. अनुदात्तङित आत्मनेपदम् ( 1-3-12 ) ॥ विधिसूत्रम् ॥**

अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात्।

---

373. **लःकर्मणीति** - अस्मिन् सूत्रे वाक्यद्वयमस्ति (1) लः कर्मणि च (2) भावे च अकर्मकेभ्यः। चकारग्रहणात् 'कर्तरि कृत्' इत्यतः 'कर्तरि' पदस्य एवं च अधिकृतत्वात् 'धातोः' इति पदस्य चानुवर्तनं क्रियते। **लकाराः सकर्मकधातुभ्यः कर्मणि कर्तरि च अकर्मकधातुभ्यश्च भावे कर्तरि च स्युरित्यर्थः।** फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम्। फलसमानाधिकरणव्यापारवाचकत्वम् अकर्मकत्वम्। अकर्मकधातूनां परिज्ञानाय श्लोकोऽयं कण्ठस्थीकरणीयः।

**लज्जा-सत्ता-स्थिति-जागरणं वृद्धि-क्षय-भय-जीवित-मरणम्।**
**शयन-क्रीडा-रुचि-दीप्त्यर्थं धातुगणं तमकर्मकमाहुः॥ ( शेखरे )।**

374. **वर्तमाने इति** - वर्तमाने, लट्, इतिच्छेदः। **वर्तमानकालिकक्रियावृत्तेर्धातोः लट्लकारः स्यादित्यर्थः।** उच्चारणसामर्थ्यात् ''लशक्वतद्धिते'' इत्यनेन लस्य नेत्सञ्ज्ञा।

375. **तिबिति** - एकपदात्मकमिदं सूत्रम्। **'ल्' इत्यस्य स्थाने तिबादय अष्टादश प्रत्ययादेशाः भवन्तीत्यर्थः।** तिबादयश्चेमे- तिप्, तस्, झि, सिप्, तस्, थ, मिप्, वस्, मस्, त, आताम्, झ, थास्, आथाम्, ध्वम्, इट्, वहि, महिङ्।

376. **लः परस्मैपदमिति** - लः, परस्मैपदम्, इतिच्छेदः। लः इति स्थानषष्ठी। **लकारस्य स्थाने जायमाना आदेशाः परस्मैसञ्ज्ञकाः भवेयुः।**

377. **तङानाविति** - तङानौ, आत्मनेपदम्, इतिच्छेदः। तङ् च आनश्च तङानौ, इतरेतरद्वन्द्वः। **तङ् प्रत्याहारस्थाः नवप्रत्ययाः शानच्-कानचौ च आत्मनेपदसञ्ज्ञकाः भवेयुः।** इदं पूर्वसञ्ज्ञापवादभूतम्।

| परस्मैपदम् | | | आत्मनेपदम् | | |
|---|---|---|---|---|---|
| तिप् | तस् | झि | त | आताम् | झ |
| सिप् | थस् | थ | थास् | आथाम् | ध्वम् |
| मिप् | वस् | मस् | इट् | वहि | महिङ् |

378. **अनुदात्त इति** - अनुदात्तङितः, आत्मनेपदम्, इतिच्छेदः। अनुदात्तश्च ङ् च अनुदात्तङौ, तौ इतौ यस्य तस्माद् अनुदात्तङितः, द्वन्द्वगर्भबहुव्रीहिः। **द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते** इति न्यायानुसारम् इत् पदस्य द्वाभ्यां सह (अनुदात्त, ङ्) सम्बन्धो भवति। उपदेशावस्थायाम् अनुदात्तेतो ङितश्च धातव आत्मनेपदसञ्ज्ञकाः प्रत्ययाः भवेयुरित्यर्थः। यथा एधु वृद्धौ, कमु कान्तौ, यती प्रयत्ने इत्यादयः। ङितश्च यथा शीङ् स्वप्ने।

**379. स्वरितञितः कर्त्रभिप्राये क्रियाफले ( 1-3-72 ) ॥ विधिसूत्रम् ॥**

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले।

**380. शेषात्कर्तरि परस्मैपदम् ( 1-3-78 ) ॥ विधिसूत्रम् ॥**

आत्मनेपदनिमित्तहीनाद् धातोः कर्तरि परस्मैपदं स्यात्।

**381. तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ( 1-4-100 ) ॥ सञ्ज्ञासूत्रम् ॥**

तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्सञ्ज्ञाः स्युः।

**382. तान्येकवचन-द्विवचन-बहुवचनान्येकशः ( 1-4-103 ) ॥ सञ्ज्ञासूत्रम् ॥**

लब्धप्रथमादिसञ्ज्ञानि तिङस्त्रीणि त्रीणि वचनानि प्रत्येकम् एकवचनादिसञ्ज्ञानि स्युः।

**383. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ( 1-4-104 ) ॥ विधिसूत्रम् ॥**

तिङ् वाच्यकारकवाचिनि युष्मदि ( उपपदे) प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः।

**384. अस्मद्युत्तमः ( 1-4-106 ) ॥ विधिसूत्रम् ॥**

तथाभूतेऽस्मद्युत्तमः स्यात्।

---

379. **स्वरितञित इति** – स्वरितञितः, कर्त्रभिप्राये, क्रियाफले, इतिच्छेदः। स्वरितश्च ञ् च स्वरितञौ, तौ इतौ यस्य, तस्मात् स्वरितञितः, द्वन्द्वगर्भबहुव्रीहिः। कर्तारम् अभिप्रैति (गच्छति) इति कर्त्रभिप्रायम् (फलम्), तस्मिन्, कर्त्रभिप्राये। कर्मण्यण्। क्रियायाः फलं क्रियाफलम्, तस्मिन् क्रियाफले, षष्ठीतत्पुरुषः। **स्वरितेतो ञितश्च धातोः लस्य आत्मनेपदसञ्ज्ञकाः प्रत्ययाः भवेयुः कर्तृगामिनि क्रियाफले इत्यर्थः।**

380. **शेषादिति** – आत्मनेपदनिमित्तहीनाद् धातोः कर्तरि वाच्ये परस्मैपद प्रत्ययाः भवेयुरित्यर्थः।

381. **तिङस्त्रीणि इति** – तिङः, त्रीणि, त्रीणि, प्रथममध्यमोत्तमाः, इतिच्छेदः। तिङ आत्मनेपद-परस्मैपदसम्बन्धिनः त्रयस्त्रिकाः क्रमशः प्रथम पुरुष-मध्यमपुरुष-उत्तमपुरुषसञ्ज्ञकाः भवेयुरित्यर्थः। एषां कोष्ठकं यथा –

| त्रिकसंख्या | परस्मैपदम् | | | आत्मनेपदम् | | | सञ्ज्ञा |
|---|---|---|---|---|---|---|---|
| प्रथमः त्रिकः | तिप् | तस् | झि | त, | आताम्, | झ | प्रथमपुरुषः |
| द्वितीयः त्रिकः | सिप् | थस् | थ | थास्, | आथाम्, | ध्वम् | मध्यमपुरुषः |
| तृतीयः त्रिकः | मिप् | वस् | मस् | इट्, | वहि, | महिङ् | उत्तमपुरुषः |

382. **तान्येकवचन इति** – तानि, एकवचनद्विवचन बहुवचनानि, एकशः इतिच्छेदः। **तिङः आत्मनेपद-परस्मैपद-सम्बन्धिनां त्रयाणां त्रिकाणां प्रत्येकम् एकवचन-द्विवचन-बहुवचन सञ्ज्ञाः भवेयुरित्यर्थः।** एषां कोष्ठकं यथा –

| | परस्मैपदम् | | | आत्मनेपदम् | | |
|---|---|---|---|---|---|---|
| | **एकवचनम्** | **द्विवचनम्** | **बहुवनम्** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
| प्रथमः त्रिकः | तिप् | तस् | झि | त | आताम् | झ |
| द्वितीयः त्रिकः | सिप् | थस् | थ | थास् | आथाम् | ध्वम् |
| तृतीयः त्रिकः | मिप् | वस् | मस् | इट् | वहि | महिङ् |

383. **युष्मदि इति** – युष्मदि, उपपदे, समानाधिकरणे, स्थानिनि, अपि, मध्यमः, इतिच्छेदः। उप = समीपे उच्चरितं पदम् उपपदम्, तस्मिन् उपपदे। युष्मदि समीपोच्चारिते सतीत्यर्थः। समानमधिकरणं यस्य तत् समानाधिकरणम्, तस्मिन्, समानाधिकरणे इति। **तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमपुरुषो भवतीत्यर्थः।**

384. **अस्मदि इति** – अस्मदि, उत्तम, इतिच्छेदः। **तिङ् वाच्यकारकवाचिनि अस्मदि प्रयुज्यमानेऽप्रयुज्यमाने च उत्तमपुरुषो भवतीत्यर्थः। अहं गच्छामि।**

**385. शेषे प्रथमः ( 1-4-107 ) ॥विधिसूत्रम् ॥**

मध्यमोत्तमयोरविषये प्रथमः स्यात्।

**386. तिङ्शित्सार्वधातुकम् ( 3-4-113 ) ॥सञ्ज्ञासूत्रम् ॥**

तिङः शितश्च धात्वधिकारोक्ता एतत्सञ्ज्ञाः स्युः।

**387. कर्तरि शप् ( 3-1-68 ) ॥विधिसूत्रम् ॥**

कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात्। शपावितौ।

**388. सार्वधातुकार्धधातुकयोः ( 7-3-84 ) ॥विधिसूत्रम् ॥**

अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात्। अवादेशः। भवति। भवतः।

**389. झोऽन्तः ( 7-1-3 ) ॥विधिसूत्रम् ॥**

प्रत्ययावयवस्य झस्य अन्तादेशः स्यात्। अतो गुणे - भवन्ति।

भवसि। भवथः। भवथ।

---

385. **शेषे इति - मध्यमोत्तमयोरविषये प्रयुज्यमानेऽप्रयुज्यमाने च प्रथमपुरुषः भवतीत्यर्थः।** यथा स गच्छति। भवान् पठति।

386. **तिङ्शिदिति** - तिङ्शित्, सार्वधातुकम्, इतिच्छेदः। तिङ् च शित् च, तिङ्शित्, समाहारद्वन्द्वः। श् इत् यस्य स शित्, बहुव्रीहिः। **धात्वधिकारे पठिताः तिङः शितश्च प्रत्ययाः सार्वधातुकसञ्ज्ञकाः भवेयुरित्यर्थः।**

387. **कर्तरि इति** - कर्तरि, शप्, इतिच्छेदः। **कर्त्रर्थके सार्वधातुके परे धातोः शबागमो भवतीत्यर्थः।** यथा भू शप् ति।

388. **सार्वधातुकार्धधातुकयोरिति - सार्वधातुक-आर्धधातुकयोः इगन्तस्य अङ्गस्य ( इ, उ, ऋ, लृ ) गुणः स्यादित्यर्थः।** भो अ ति।

**रूपसिद्धिः**

**भवति** - भू (सत्तायां) धातोः ''वर्तमाने लट्'' इति लट्लकारेऽनुबन्धलोपे, ''तिप्तस्झि.'' इत्यादिना सूत्रेण प्रथमपुरुषैकवचने तिप्-प्रत्ययेऽनुबन्धलोपे, भू ति इति जाते, ''तिङ्शित्सार्वधातुकम्'' इति सार्वधातुकसञ्ज्ञायाम्, ''कर्तरि शप्'' इति शबागमेऽनुबन्धलोपे, भू अ ति इति जाते, ''सार्वधातुकार्धधातुकयोः'' इति ऊकारस्य ओकारे गुणे, भो अ ति इति जाते, ''एचोऽयवायावः'' इति ओकारस्य अवादेशे 'भवति' इति रूपं सिद्धम्।

**भवतः** - भू (सत्तायां) धातोः लटि, तसि, सार्वधातुकसञ्ज्ञायां शबागमे, अनुबन्धलोपे, गुणेऽवादेशे भ् अव् तस् इति जाते, सस्य रुत्वे विसर्गे च कृते 'भवतः' इति रूपं सिद्धम्।

389. **झोऽन्तः इति** - झः, अन्तः, इतिच्छेदः। **झिप्रत्ययावयवस्य झकारस्य स्थाने अन्तादेशः स्यादित्यर्थः।** झस्य अन्त् इत्यर्थः। यथा भू अ झि = झ् - अन्त् + इ।

**रूपसिद्धिः**

**भवन्ति** - भूधातोर्लटि, झि, सार्वधातुकसञ्ज्ञायां शपि, अनुबन्धलोपे, गुणेऽवादेशे, भव् अ झि इति जाते, ''झोऽन्तः'' इति झ् इत्यस्य अन्तादेशे, भव अन्ति इति जाते, ''अतो गुणे'' इति अकार-अकारयोः स्थाने अकारे पररूपे 'भवन्ति' इति रूपं सिद्धम्।

**भवसि** - भूधातोर्लटि सिपि, शपि, गुणेऽवादेशे 'भवसि' इति निष्पन्नम्।

**भवथः** - भूधातोर्लटि, थसि, शपि, गुणेऽवादेशे, सस्य रुत्वे विसर्गे 'भवथः' इति रूपं सिद्धम्।

**भवथ** - भूधातोर्लटि, थप्रत्यये, शपि, गुणेऽवादेशे, 'भवथ' इति रूपं सिद्धम्।

**390. अतो दीर्घो यञि ( 7-3-101 ) ॥विधिसूत्रम् ॥**

अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके। भवामि। भवावः। भवामः। स भवति। तौ भवतः। ते भवन्ति। त्वं भवसि। युवां भवथः। यूयं भवथ। अहं भवामि। आवां भवावः। वयं भवामः।

**391. परोक्षे लिट् ( 3-2-115 ) ॥विधिसूत्रम् ॥**

भूताऽनद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात्। लस्य तिबादयः।

**392. परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ( 3-4-82 ) ॥विधिसूत्रम् ॥**

लिटस्तिबादीनां नवानां णलादयः स्युः। 'भू अ' इति स्थिते –

**393. भुवो वुग्लुङ्लिटोः ( 6-4-88 ) ॥विधिसूत्रम् ॥**

भुवो वुगागमः स्याल्लुङ्लिटोरचि।

**394. लिटि धातोरनभ्यासस्य ( 6-1-8 ) ॥ विधिसूत्रम् ॥** लिटि परेऽनभ्यासधात्वयवस्यैकाचः प्रथमस्य द्वे स्तः, आदिभूदादचः परस्य तु द्वितीयस्य। भूव् भूव् अ इति स्थिते।

**395. पूर्वोऽभ्यासः ( 6-1-4 ) ॥सञ्ज्ञासूत्रम् ॥**

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससञ्ज्ञः स्यात्।

**396. हलादिः शेषः ( 7-4-60 ) ॥विधिसूत्रम् ॥**

अभ्यासस्य आदिर्हल् शिष्यते, अन्ये हलो लुप्यन्ते। इति वलोपः।

**397. ह्रस्वः ( 7-4-59 ) ॥विधिसूत्रम् ॥**

अभ्यासस्याचो ह्रस्वः स्यात्।

---

390. **अतो दीर्घ इति** – अतः, दीर्घः, यञि, इतिच्छेदः। **यञादौ ( यञ् – य्, व्, र्, ल्, ञ्, म्, ङ्, ण्, न, झ्, भ् ) सार्वधातुके परे अदन्ताङ्गस्य दीर्घः स्यादित्यर्थः।** यथा – भवामि। भवावः भवामः।

**भवामि** – भूधातोर्लटि, मिपि, शपि, अनुबन्धलोपे, गुणेऽवादेशे भव मि इति जाते, ''अतो दीर्घो यञि'' इति दीर्घे 'भवामि' इति रूपं सिद्धम्।

**भवावः** – भूधातोर्लटि, वसि, शपि, गुणेऽवादेशे, दीर्घे, सस्य रुत्वे विसर्गे च 'भवावः' इति रूपं सिद्धम्।

**भवामः** – भूधातोर्लटि, मसि, शपि, गुणेऽवादेशे, दीर्घे सस्य रुत्वे विसर्गे च 'भवामः' इति रूपं सिद्धम्।

391. **परोक्षे इति** – परोक्षे, लिट्, इतिच्छेदः। **अनद्यतनभूतार्थे परोक्षार्थवृत्तेश्च धातोर्लिट् लकारः स्यादित्यर्थः।** भू + ल् इति स्थिते – तिबादयः।

392. **परस्मैपदानामिति** – परस्मैपदानाम्, णलतुसुस्थलथुसणल्वमाः, इतिच्छेदः। **लिटः परस्मैपदानां प्रत्ययानां स्थाने क्रमशः णल्, अतुस्, उस्, थल्, अथुस्, अ, णल्, व, म इत्यादेशाः भवन्ति इत्यर्थः।** भू + णल् (अ)।

393. **भुवो वुगिति** – भुवः, वुक्, लुङ्लिटोः, इतिच्छेदः। **लुङ् लकार-सम्बन्धिनो लिट्लकारसम्बन्धिनश्च अचि परे भूधातोः वुगागमः स्यादित्यर्थः।** यथा – भू + वुक् (व्) + अ (णल्)।

394. **लिटि इति** – लिटि, धातोः, अनभ्यासस्य, इतिच्छेदः। **अभ्यासरहितस्य धातोः प्रथमस्य एकाचोऽवयवस्य द्वित्वं स्यात् अजादेर्द्वितीयस्य च** (द्वित्वं स्यादित्यर्थः)। 'भूव् भूव् अ'।

395. **पूर्वोऽभ्यास इति** – पूर्वः, अभ्यासः, इतिच्छेदः। अत्र द्वित्वे कृते ये द्वे रूपे जाते, तयोः पूर्वस्य अभ्याससञ्ज्ञा भवतीत्याशयः। भूव् (अभ्यासः), भूव् अ इति।

396. **हलादिरिति** – हल्, आदिः, शेषः, इतिच्छेदः। शिष्यते इति शेषः, कर्मणि घञ्। **अभ्यासस्य आदौ स्थितः हल् वर्णः शिष्यते अन्ये हलो लुप्यन्ते इति सूत्रार्थः।** यथा – भू भूव् अ इति।

397. **ह्रस्व इति – अभ्यासस्य अचो ( स्वरस्य ) ह्रस्वो भवतीत्यर्थः।** यथा – भु भूव् अ इति।

**398. भवतेरः ( 7-4-73 ) ॥विधिसूत्रम् ॥**

भवतेरभ्यासस्य उकारस्य अः स्याल्लिटि।

**399. अभ्यासे चर्च ( 8-4-53 ) ॥विधिसूत्रम् ॥**

अभ्यासे झलां चरः स्युर्जशश्च। झशां जशः, खयां चर इति विवेकः। बभूव, बभूवतु, बभूवुः।

**400. लिट् च ( 3-4-115 ) ॥सञ्ज्ञासूत्रम् ॥**

लिडादेशस्तिङ् आर्धधातुकसञ्ज्ञः।

**401. आर्धधातुकस्येड् वलादेः ( 7-3-35 ) ॥विधिसूत्रम् ॥**

वलादेरार्धधातुकस्येडागमः स्यात्। बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम।

---

398. **भवतेर इति** – भवतेः, अः, इतिच्छेदः। **लिट् लकारे परे भूधातोः अभ्यास-उकारस्य अकारः स्यादित्यर्थः।** यथा – भ भूव् अ इति।

399. **अभ्यासे चर्चेति** – अभ्यासे, चर्, च इतिच्छेदः। **अभ्यासे झश्-प्रत्याहारस्थवर्णानां स्थाने जशादेशाः भवन्ति, तथा खय-प्रत्याहारस्थवर्णानां स्थाने चरादेशाः ( भवन्तीत्यर्थः )।** इति भस्य बत्वे बभूव इति।

**रूपसिद्धिः**

**बभूव** – भू धातोः ''परोक्षे लिट्'' इति लिट् लकारेऽनुबन्धलोपे, ''तिप्तस्झि.'' इति लिटः तिबादेशे, भू ति इति जाते, ''परस्मैपदानामिति तिपो णलादेशेऽनुबन्धलोपे, भू अ इति जाते, ''भुवो वुग् लुङ्लिटोः'' इति वुगागमेऽनुबन्धलोपे, भूव् अ इति जाते, ''लिटि धातोरनभ्यासस्य'' इति द्वित्वे भूव् भूव् अ इति जाते, ''पूर्वोऽभ्यासः'' इति पूर्वस्य भूवः अभ्याससञ्ज्ञायां ''हलादिशेषः'' इति हलादिशेषे ( वलोपे ), ''ह्रस्वः'' इति ऊकारस्य उकारे ह्रस्वे भु भूव् अ इति जाते, ''भवतेरः'' इति उकारस्य अत्वे, ''अभ्यासे चर्च'' इति भस्य बत्वे 'बभूव' इति रूपं सिद्धम्।

**बभूवतुः** – भूधातोर्लिटि तसि, तसोऽतुसि, वुगि, द्वित्वे, अभ्यासे, हलादिशेषे, ह्रस्वे, अत्वे, भस्य बत्वे, सस्य रुत्वे विसर्गे बभूवतुः इति रूपं सिद्धम्।

**बभूवुः** – भूधातोलिटि झि, झेरुसादेशे शेषं बभूवतुः इतिवत्।

400. **लिट् चेति** – लिट्, च, इतिच्छेदः। **लिडादेशस्य तिङ् इत्यस्य आर्धधातुकसञ्ज्ञा स्यादित्यर्थः।**

401. **आर्धधातुकस्येडिति** – आर्धधातुकस्य, इट्, वलादेः, इतिच्छेदः। **वलादेः आर्धधातुकस्य अवयव इडागमो भवतीत्यर्थः।** टित्त्वात् ''आद्यन्तौ टकितौ'' इति आद्यवयवः। भू इ थ इति।

**रूपसिद्धिः**

**बभूविथ** – भूधातोर्लिट्लकारेऽनुबन्धलोपे, सिप् प्रत्यये, सिपः थलादेशे अनुबन्धलोपे भू थ इति जाते, आर्धधातुकसञ्ज्ञायाम् ''आर्धधातुकस्येड्वलादेः'' इति इडागमेऽनुबन्धलोपे भू इथ इति जाते, वुगागमे, अनुबन्धलोपे, भूव् इथ इति जाते, द्वित्वे, भूव् भूव् इथ इति जाते, अभ्याससञ्ज्ञायां हलादिशेषे, भू भूव् इथ इति जाते, ह्रस्वे, अत्वे, जश्त्वे 'बभूविथ' इति रूपं सिद्धम्।

**बभूवथुः** – भूधातोर्लिटि, थसि, थसोऽथुसादेशे, वुगि, द्वित्वे, अभ्यासे, हलादिशेष, ह्रस्वे, अत्वे, भस्य बत्वे, सस्य रुत्वे विसर्गे च 'बभूवथुः' इति रूपं सिद्धम्।

**बभूव** – भूधातोर्लिटि थ प्रत्यये, थस्य 'अ' आदेशे पूर्ववत् वुगागमे द्वित्वादौ कृते 'बभूव' इति रूपं सिद्धम्।

**बभूव** – भूधातोर्लिटि, मिपि, मिपो णलादेशेऽनुबन्धलोपे शेषं पूर्ववत्।

**बभूविव** – भूधातोर्लिटि वसि, वसो 'व' आदेशे इडागमे, वुगि, द्वित्वे, अभ्यासकार्ये 'बभूविव' इति रूपं सिद्धम्।

**बभूविम** – भूधातोर्लिटि मसि, मसो 'म' आदेशे, इडागमे, वुगागमे, द्वित्वे, अभ्यासकार्ये 'बभूविम' इति रूपं सिद्धम्।

402. **अनद्यतने लुट् ( 3-3-15 ) ॥विधिसूत्रम् ॥**
भविष्यत्यनद्यतनेऽर्थे धातोर्लुट्।

403. **स्यतासी लृलुटोः ( 3-1-33 ) ॥विधिसूत्रम् ॥**
धातोः स्यतासी एतौ प्रत्ययौ स्तः, लृ-लुटोः परतः। शबाद्यपवादः। लृ इति लृङ्लृटोर्ग्रहणम्।

404. **आर्धधातुकं शेषः ( 3-4-114 ) ॥सञ्ज्ञासूत्रम् ॥**
तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्सञ्ज्ञः स्यात्। इट्।

405. **लुटः प्रथमस्य डारौरसः ( 2-4-85 ) ॥विधिसूत्रम् ॥**
डा, रौ, रस्-एते क्रमात् स्युः। डित्त्वसामर्थ्याद् अभस्यापि टेर्लोपः। भविता

406. **तासस्त्योर्लोपः ( 7-4-50 ) ॥विधिसूत्रम् ॥**
तासेरस्तेश्च सस्य लोपः स्यात् सादौ प्रत्यये परे।

407. **रि च ( 7-4-51 ) ॥विधिसूत्रम् ॥**
रादौ प्रत्यये तथा। भवितारौ। भवितारः। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः।

---

402. **अनद्यतने इति** - अनद्यतने, लुट्, इतिच्छेदः। **भविष्यति अनद्यतनेऽर्थे धातोः लुट्लकारो भवतीत्यर्थः।** अविद्यमानोऽद्यतन काल यस्मिन् असौ अनद्यतनः, तस्मिन् = अनद्यतने, बहुव्रीहिसमासः। यत्र अद्यतनानद्यतनयोः व्यामिश्रणं तत्र तु लृट् लकार एव स्यात् न लुट्। यथा - अद्य श्वो वा भविष्यति।

403. **स्यतासीति** - स्यतासी, लृलुटोः, इतिच्छेदः। **लृङ्लृटोर्लकारयोः परिवर्तिनो धातोः स्यप्रत्ययः तथा लुट्परिवर्तिनो धातोः तासि प्रत्ययः स्यादित्यर्थः।** तासि इत्यत्र इकार उच्चारणार्थः। इह तास् मात्रमवगन्तव्यम्। सूत्रमिदं शबादीनां (शप्, श्यन्, यक् आदि) अपवादभूतम्।

404. **आर्धधातुकमिति** - आर्धधातुकम्, शेषः, इतिच्छेदः। **तिङ्शिद्भ्यो भिन्नानां प्रत्ययानाम् आर्धधातुकसञ्ज्ञा भवतीत्यर्थः।**

405. **लुटः प्रथमस्येति** - लुटः, प्रथमस्य, डारौरसः, इतिसूत्रच्छेदः। **लुटः प्रथमपुरुषस्य तिप्-त-स्थाने डा, तस्-आताम्-स्थाने रौ, झि-झ-स्थाने रसादेशश्च भवन्तीत्यर्थः।** डाप्रत्ययस्य डित्त्वात् भसञ्ज्ञाभावेऽपि टिलोपः भविष्यति। यथा-भविता।

**रूपसिद्धिः**

**भविता** - भूधातोः "अनद्यतने लुट्" इति लुट्लकारे, तिप्-प्रत्ययेऽनुबन्धलोपे "स्यतासी लृलुटोः" इति तास् प्रत्यये, आर्धधातुकसञ्ज्ञायाम् इडागमे "सार्वधातुकार्धधातुकयोः" गुणे, "एचोऽयवायावः" इति ओकारस्य अवादेशे भवितास् ति इति जाते, "लुटः प्रथमस्य डारौरसः" इति तिपः डादेशेऽनुबन्धलोपे भवितास् आ इति जाते, 'डित्त्वसामर्थ्यादभस्यापि टेर्लोपः' इति आस् (टि) लोपे 'भविता' इति रूपं सिद्धम्।

406. **तासस्त्योरिति** - तासस्त्योः, लोपः, इतिच्छेदः। तास् च अस्तिश्च तासस्ती, तयोः = तासस्त्योः, इतरेतरद्वन्द्वः। **सादौ प्रत्यये परे तासेरस्तेश्च सकारस्य लोपो भवतीत्यर्थः।** यथा - भवितासि।

407. **रि चेति** - रि, च इतिच्छेदः। रि इत्यस्मात् तदादिविधिः। **रादौ प्रत्यये परे तास्-प्रत्ययस्य अस् धातोश्च सकारस्य लोपो भवतीत्यर्थः।** यथा - भवितारौ, भवितारः।

**रूपसिद्धिः**

**भवितारौ** - भूधातोर्लुट्लकारे, तस्-प्रत्यये, स्यतासी, इत्यादिना तास्-प्रत्यये, आर्धधातुकसञ्ज्ञायामिडागमेऽनुबन्धलोपे, गुणेऽवादेशे, भवितास् तस् इति जाते, "लुटः प्रथमस्य डारौरसः" इति तसः रौ आदेशे, "रि च" इति सलोपे 'भवितारौ' इति रूपं सिद्धम्।

408. **लृट् शेषे च ( 3-3-13 ) ॥विधिसूत्रम् ॥**
भविष्यदर्थाद् धातोर्लृट् स्यात् क्रियार्थायां क्रियायां सत्यामसत्यां च। स्य, इट्। भविष्यति, भविष्यतः, भविष्यन्ति। भविष्यसि, भविष्यथः, भविष्यथ। भविष्यामि, भविष्यावः भविष्यामः।

409. **लोट् च ( 3-3-162 ) ॥विधिसूत्रम् ॥** विध्यादिष्वर्थेषु धातोर्लोट् स्यात्।

410. **आशिषि लिङ्लोटौ ( 3-3-173 ) ॥विधिसूत्रम् ॥** आशिष्यर्थे धातोर्लिङ्लोटौ स्तः।

411. **एरुः ( 3-4-86 ) ॥विधिसूत्रम् ॥** लोट इकारस्य उः। भवतु।

---

**भवितासि** - भूधातोर्लुटि, सिपि, तासि, आर्धधातुकत्वादिडागमे, गुणेऽवादेशे भवितास् सि इति जाते, ''तासस्त्योर्लोपः'' इति तासः सलोपे 'भवितासि' इति रूपं सिद्धम्।

**भवितास्थः** - भूधातोर्लुटि थसि, तासि, आर्धधातुकत्वादिडागमे, गुणेऽवादेशे सस्य रुत्वे विसर्गे भवितास्थः इति रूपं सिद्धम्।

**भवितास्थ** - भूधातोर्लुटि थप्रत्यये, तासि, आर्धधातुकत्वादिडागमे, गुणे, अवादेशे 'भवितास्थ' इति रूपं सिद्धम्।

**भवितास्मि** - भूधातोर्लुटि, मिपि, तासि, आर्धधातुकत्वादिडागमे, गुणेऽवादेशे, भवितास्मि इति रूपं सिद्धम्।

**भवितास्वः** - भूधातोर्लुटि, वसि, तासि, आर्धधातुकत्वादिडागमे, गुणेऽवादेशे सस्य रुत्वे विसर्गे भवितास्वः इति रूपं सिद्धम्। एवमेव मस् प्रत्यये **भवितास्मः** इति रूपमपि सिध्यति।

408. **लृट् शेषे इति** - लृट्, शेषे, च इतिच्छेदः। **क्रियार्थायां क्रियायां सत्याम् असत्यां वा भविष्यदर्थाद् धातोर्लृट्लकारो भवतीत्यर्थः।** यथा - भविष्यति इत्यादयः।

**रूपसिद्धिः**

**भविष्यति** - भूधातोः ''लृट् शेषे च'' इति लृट् लकारे, तिप्प्रत्यये, ''स्यतासी.'' इत्यादिना स्य प्रत्यये भू स्य ति इति जाते, ''आर्धधातुकं शेषः'' इति आर्धधातुकसञ्ज्ञायामिडागमे, गुणेऽवादेशे, ''आदेश-प्रत्यययोः'' इति सस्य षत्वे 'भविष्यति' इति रूपं सिद्धम्। एवमेव तस् प्रत्यये **भविष्यतः** इति। झिप्रत्यये, झस्यान्तादेशे, पररूपे च कृते **भविष्यन्ति** इति। सिपि **भविष्यसि।** थसि **भविष्यथः**। थप्रत्यये **भविष्यथ** इति। मिप् प्रत्यये 'अतो दीर्घो यञि' इति दीर्घे **भविष्यामि** इति। वसि, दीर्घे **भविष्यावः** इति। मसि, दीर्घे, **भविष्यामः** इति सर्वाण्यपि रूपाणि सिध्यन्ति।

**लृटि रूपमाला**

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| प्र.पु. | भविष्यति (सः) | भविष्यतः (तौ) | भविष्यन्ति (ते) |
| म.पु. | भविष्यसि (त्वम्) | भविष्यथः (युवाम्) | भविष्यथ (यूयम्) |
| उ.पु. | भविष्यामि (अहम्) | भविष्यावः (आवाम्) | भविष्यामः (वयम्) |

409. **लोट् चेति** - **विधि-निमन्त्रण-आमन्त्रण-अधीष्ट-सम्प्रश्न-प्रार्थना-आशीर्वादाद्यर्थेषु धातोर्लोट्लकारो भवतीत्यर्थः।** यथा - भवतु, भवताम्, भवन्तु।

410. **आशिषि इति** - आशिषि, लिङ्लोटौ इतिच्छेदः। **आशीर्वादार्थे धातोर्लिङ्लोटौ इमौ प्रत्ययौ भवतः इति सूत्रार्थः।**

411. **एरु इति** - एः, उः, इतिच्छेदः। **लोट्लकारसम्बन्धिनः इकारस्य स्थाने उकारादेशो भवतीत्यर्थः।** यथा - भवतु, भवन्तु।

**रूपसिद्धिः**

**भवतु, भवतात्** - भूधातोः ''लोट् च'' इति लोट्लकारे, तिप्प्रत्यये, सार्वधातुकसञ्ज्ञायां शबागमेऽनुबन्धलोपे, गुणेऽवादेशे भवति इति जाते, ''एरुः'' इति इकारस्य उत्वे भवतु इति जाते, ''तुह्योस्तातङाशिष्यन्यतरस्याम्'' इति विकल्पेन 'तु' स्थाने तातङादेशेऽनुबन्धलोपे, 'भवतात्' इति रूपं सिद्धम्। पक्षे विकल्पाभावे 'भवतु' इति रूपं सिध्यति।

412. **तुह्योस्तातङाशिष्यन्यतरस्याम्( 7-1-35 ) ॥विधिसूत्रम् ॥**
आशिषि तुह्योस्तातङ् वा। परत्वात्सर्वादेशः। भवतात्।

413. **लोटो लङ्वत्( 3-4-85 ) ॥अतिदेशसूत्रम् ॥**
लोटस्तामादयः सलोपश्च।

414. **तस्थस्थमिपां तान्तन्तामः( 3-4-101 ) ॥विधिसूत्रम् ॥**
ङितश्चतुर्णां तामादय क्रमात् स्युः। भवताम्। भवन्तु।

415. **सेर्ह्यपिच्च( 3-4-87 ) ॥विधिसूत्रम् ॥**
लोटः सेर्हिः सोऽपिच्च।

416. **अतो हेः( 6-4-105 ) ॥विधिसूत्रम् ॥**
अतः परस्य हेर्लुक्। भव, भवतात्। भवतम्। भवत।

417. **मेर्निः( 3-4-89 ) ॥विधिसूत्रम् ॥** लोटो मेर्निः स्यात्।

---

412. **तुह्योस्तातङिति** - तुह्योः, तातङ्, आशिषि, अन्यतरस्याम् इतिच्छेदः। **आशीर्लिङि 'तु' 'हि' इत्यनयोः स्थाने विकल्पेन तातङादेशो भवतीत्यर्थः।** यथा - भवतु - भवतात्। भव - भवतात्।

413. **लोट इति** - लोटः, लङ्वत्, इतिच्छेदः। **लोट्लकारस्य स्थाने लङ्लकारवत् कार्याणि भवन्तीत्यर्थः।** यथा - तसः तामादेशः, वस्-मस् इत्यत्र सलोपश्च।

414. **तस्थस्थमिपामिति** - तस्थस्थमिपाम्, तान्तन्तामः, इतिच्छेदः। ताम् च तम् च तश्च अम् च, तान्तन्तामः, इतरेतरद्वन्द्वः। **ङित्लकाराणां तस्-थस्-थ-मिपां स्थाने क्रमशः ताम्-तम्-त-अम् एते आदेशाः भवन्तीत्यर्थः।**

**रूपसिद्धिः**

**भवताम्** - भूधातोर्लोट्लकारे, तस् प्रत्यये, शपि, अनुबन्धलोपे, गुणेऽवादेशे, ''लोटो लङ्वत्'' इति लङ्वद्भावात् ''तस्थस्थमिपां तान्तन्तामः'' इति तसः तामादेशे 'भवताम्' इति रूपं सिद्धम्।

**भवन्तु** - भूधातोर्लोटि, झिप्रत्यये, शपि, गुणेऽवादेशे, झस्यान्तादेशे, पररूपे ''एरुः'' इति इकारस्य उकारे 'भवन्तु' इति रूपं सिद्धम्।

415. **सेर्हीति** - सेः, हि, अपित्, च, इतिच्छेदः। **लोट्सम्बन्धिनः 'सि' इत्यस्य स्थाने 'हि' इत्यादेशो भवति, स आदेशोऽपित् भवतीत्यर्थः।**

416. **अतो हेरिति** - अतः हेः, इतिच्छेदः। **अदन्तादङ्गात् परस्य हेर्लुक् स्यादित्यर्थः।** यथा - भव, भवतात्।

**रूपसिद्धिः**

**भव, भवतात्** - भूधातोः लोट् लकारे, सिपि, शबागमे, गुणेऽवादेशे ''सेर्ह्यपिच्च'' इति सि-स्थाने हि-आदेश, तुह्योस्तातङिति विकल्पेन तात ङादेशे भवतात् इति रूपं सिद्धम्। पक्षे विकल्पाभावे ''अतो हेः'' इति हेर्लुकि 'भव' इत्यपि सिद्धम्।

**भवतम्** - भूधातोर्लोटि थस् प्रत्यये, शपि, गुणेऽवादेशे, थसः तमादेशे भवतम् इति रूपं सिद्धम्। एवमेव थ प्रत्यये, शपि, गुणेऽयादेशे थस्य तादेशे '**भवत**' इति रूपं सिध्यति।

417. **मेर्निं इति** - मेः, निः, इतिच्छेदः। **लोट्सम्बन्धिनो मिप्रत्ययस्य स्थाने 'नि' इत्यादेशो भवतीत्यर्थः।** यथा - भवानि।

418. **आडुत्तमस्य पिच्च ( 3-4-92 ) ॥विधिसूत्रम् ॥**
लोडुत्तमस्याट् स्यात् पिच्च। हिन्योरुत्वं न, इत्त्वोच्चारणसामर्थ्यात्।

419. **ते प्राग्धातोः ( 1-4-79 ) ॥विधिसूत्रम् ॥** ते गत्युपसर्गसञ्ज्ञका धातोः प्रागेव प्रयोक्तव्याः।

420. **आनि लोट् ( 8-4-16 ) ॥विधिसूत्रम् ॥**
उपसर्गस्थान्निमित्तात् परस्य लोडादेशस्य आनीत्यस्य नस्य णः स्यात्। प्रभवाणि।
(वा.) **दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः।** दुःस्थितिः। दुर्भवानि।
(वा.) **अन्तः शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्।** अन्तर्भवाणि।

421. **नित्यं ङितः ( 3-4-99 ) ॥विधिसूत्रम् ॥**
सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः। अलोऽन्त्यस्य इति सलोपः। भवाव। भवाम।

---

418. **आडिति** – आट्, उत्तमस्य, पित्, च, इतिच्छेदः। **लोट्सम्बन्धिनः 'नि' इत्यादेशो भवतीत्यर्थः।** यथा – भवानि।

**रूपसिद्धिः**

**भवानि** – भूधातोः लोट्लकारे, मिप् प्रत्यये ''मेर्निः'' इति मि-स्थाने नि-आदेशे, ''आडुत्तमस्य पिच्च'' इति आडागमेऽनुबन्धलोपे, सार्वधातुकसञ्ज्ञायां शबागमेऽनुबन्धलोपे, गुणेऽवादेशे ''भव आनि'' इति जाते, सवर्ण-दीर्घे 'भवानि' इति रूपं सिद्धम्।

419. **ते प्रागिति** – ते, प्राक्, धातोः, इतिच्छेदः। **गन्युपसर्गसञ्ज्ञकाः प्रत्ययाः धातोः प्रागेव प्रयोज्रूा इति सूत्रार्थः।** यथा प्र+ भवति। अनुभवति। इत्यादयः।

420. **आनि इति** – आनि, लोट्, इतिच्छेदः। **उपसर्गस्थात् निमित्तात् परस्य** लोट्सम्बन्धिनः 'आनि' इत्यस्य नस्य णत्वं स्यादित्यर्थः। यथा प्रभवाणि।

**रूपसिद्धिः**

**प्रभवाणि** – भूधातोर्लोट्-लकारे, मिपि, शपि, गुणेऽवादेशे, 'मेर्निः' इति मेः नि-इत्यादेशे, आडागमे, सवर्णदीर्घे भवानि इति जाते, ''ते प्राग्धातोः'' इति 'प्र' इत्युपसर्गस्य पूर्वप्रयोगे, प्रभवानि इति जाते, ''आनि लोट्'' इति नस्य णत्वे 'प्रभवाणि' इति रूपं सिद्धम्।

(वा.) **षत्वणत्वयोर्विषये दुर् इति उपसर्गसञ्ज्ञको न भवतीत्यर्थः।** सथा – दुःस्थिति। दुर्भवानि।

**दुःस्थितिः** – दुर् + स्थितिः इत्यत्र ''षत्वणत्वयोः.'' इत्यादिवार्तिकेन उपसर्गत्वनिषेधात् न षत्वमिति भावः।

**दुर्भवानि** – दुर् + भवानि इत्यत्र ''आनि लोट्'' इति नस्य णत्वे प्राप्ते किन्तु ''दुरः षत्वणत्वयोः'' इत्यादिना वार्तिकेन उपसर्गत्वनिषेधात् णत्वाभावे 'दुर्भवानि' इत्येव रूपं स्यात्।

(वा.) **अन्तरिति-** अङ्विधौ, किविधौ णत्वे च कर्त्तव्ये अन्तरितस्य उपसर्गत्वमित्यर्थः। तेन अन्तर्भवाणि इत्यत्र ''आनि लोट्'' इति णत्वं भवति।

**रूपसिद्धिः**

**अन्तर्भवाणि-** अन्तर् + भवानि इत्यत्र अन्तः शब्दस्येत्यादिना वार्तिकेन उपसर्गसञ्ज्ञायाम् ''आनि लोट्'' इति णत्वे ''अन्तर्भवाणि' इति रूपं सिद्धम्।

421. **नित्यं ङित इति – ङित् लकारसम्बन्धिनः सकारान्तस्य उत्तम-पुरुषस्य सस्य नित्यं लोपः स्यात् इत्यर्थः।** यथा – भवाव, भवाम।

**रूपसिद्धिः**

**भवाव** – भूधातोः लोट् लकारे, वस् प्रत्यये, शबागमे, गुणे, अवादेशे, आडागमे, सवर्णदीर्घे, ''लोटो लङ्वत्'' इति लङ्वद्भावे ''नित्यं ङित'' इति सलोपे 'भवाव' इति रूपं सिद्धम्।

**भवाम** – भूधातोः लोट्लकारे, मस्-प्रत्यये, शबागमे, गुणेऽवादेशे, आडागमे, सवर्णदीर्घे, लङ्वद्भावे, सलोपे च कृते 'भवाम' इति रूपं सिद्धम्।

**422. अनद्यतने लङ् ( 3-2-111 ) ॥ विधिसूत्रम् ॥**

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात्।

**423. लुङ्लङ्लृङ्क्ष्वडुदात्तः ( 6-4-71 ) ॥ विधिसूत्रम् ॥**

एष्वङ्गस्याऽट् स्यात्।

**424. इतश्च ( 3-4-99 ) ॥ विधिसूत्रम् ॥**

ङितो लस्य परस्मैपदम् इकारान्तं यत्तदन्तस्य लोपः। अभवत्, अभवताम्, अभवन्। अभवः, अभवतम्, अभवत। अभवम्, अभवाव, अभवाम।

**425. विधिनिमन्त्रणामन्त्रणाधीष्ट-सम्प्रश्नप्रार्थनेषु लिङ् ( 3-3-161 ) ॥ विधिसूत्रम् ॥**

एष्वर्थेषु धातोर्लिङ्।

---

422. **अनद्यतने इति** – अनद्यतने, लङ्, इतिच्छेदः। **अनद्यतनभूतकालस्यार्थे धातोः परः लङ्लकारो भवतीत्यर्थः।** यथा अभवत् इत्यादयः।

423. **लुङ्लङ्लृङ्क्ष्वडुदात्त इति** – लुङ्लङ्लृङ्क्षु, अट्, उदात्तः, इतिच्छेदः। **लुङ्लङ्लृङ्क्षु परेषु अङ्गस्य अडागमो भवति, स च उदात्तो भवतीत्यर्थः।**

424. **इतश्चेति** – इतः, च, इतिच्छेदः। **ङिल्लकारसम्बन्धिनः इकारान्तस्य परस्मैपदस्य इकारस्य लोपो भवतीत्यर्थः।** यथा – अभवत्।

**रूपसिद्धिः**

**अभवत्** – भूधातोः ''अनद्यतने लङ्'' इति लङ् लकारेऽनुबन्धलोपे भू ल् इति जाते, तिप् प्रत्यये, सार्वधातुकत्वात् शबागमे, गुणेऽवादेशे, ''लुङ्लङ्लृङ्क्ष्वडुदात्तः'' इति अडागमेऽनुबन्धलोपे, अभवति इति जाते, ''इतश्च'' इति इकारलोपे 'अभवत्' इति रूपं सिद्धम्।

**अभवताम्** – भूधातोः लङि, तसि, शपि, गुणेऽवादेशे, अडागमे, तसः तामादेशे 'अभवताम्' इति रूपं सिद्धम्।

**अभवन्** – भूधातोः लङि, झिप्रत्यये, झस्य अन्तादेशे, शपि गुणेऽवादेशे, पररूपे, अडागमे ''इतश्च'' इति इलोपे 'संयोगान्तस्य लोपः' इति त्लोपे 'अभवन्' इति रूपं सिद्धम्।

**अभवः** – भूधातोर्लङि सिपि शपि गुणेऽयादेशेऽडागमे, ''इतश्च'' इति इकारलोपे, सस्य रुत्वे विसर्गे च कृते 'अभवः' इति रूपं सिद्धम्।

**अभवतम्** – भूधातोर्लङि थस् प्रत्यये, थसः तमादेशे, शपि गुणेऽवादेशेऽडागमे 'अभवतम्' इति रूपं सिद्धम्।

**अभवत** – भूधातोर्लङि थप्रत्यये, थस्य त-आदेशे, शपि, गुणे, अवादेशे, अडागमे 'अभवत' इति रूपं सिद्धम्।

**अभवम्** – भूधातोर्लङि मिप् प्रत्यये, शपि, गुणे, अवादेशे, अडागमे ''तस्थस्थमिपां तान्तन्तामः'' इति मिपः अमादेशे ''अतोगुणे'' इति पररूपे 'अभवम्' इति रूपं सिद्धम्।

**अभवाव** – भूधातोर्लङ्लकारे, वस् प्रत्यये, शपि, गुणे, अवादेशे, अडागमे ''अतो दीर्घो यञि'' इति दीर्घे ''नित्यं ङितः'' इति सलोपे 'अभवाव' इति रूपं सिद्धम्।

**अभवाम** – भूधातोर्लङि, मस्-प्रत्यये, शबागमेऽनुबन्धलोपे, गुणे, अवादेशे, अडागमेऽनुबन्धलोपे, अभव मस् जाते, ''अतो दीर्घो यञि'' इति दीर्घे अभवा मस् इति जाते ''नित्यं ङितः'' इति सूत्रेण सलोपे 'अभवाम' इति रूपं सिद्धम्।

425. **विधिनिमन्त्रण. इति** – विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु, लिङ् इतिच्छेदः। **विधिः ( प्रेरणम् ), निमन्त्रणम् ( अवश्यकर्त्तव्य-प्रेरणम् ), आमन्त्रणम् ( कामचारानुज्ञा ), अधीष्टः ( सत्कारपूर्वको व्यापारः ), सम्प्रश्नः ( सम्प्रधारणम् = निश्चयकरणार्थ-पृच्छा ), प्रार्थनम् ( याच्ञा ) एषु अर्थेषु धातोलिङ् लकारो भवतीत्यर्थः।**

426. **यासुट् परस्मैपदेषूदात्तो ङिच्च ( 3-4-103 ) ॥विधिसूत्रम् ॥**
लिङः परस्मैपदानां यासुडागमो ङिच्च।

427. **लिङः सलोपोऽनन्त्यस्य ( 7-2-79 ) ॥विधिसूत्रम् ॥**
सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः। इति प्राप्ते –

428. **अतो येयः ( 7-2-80 ) ॥विधिसूत्रम् ॥** अत परस्य सार्वधातुकावयवस्य यास इय्। गुणः।

429. **लोपो व्योर्वलि ( 6-1-64 ) ॥विधिसूत्रम् ॥** भवेत्। भवेताम्।

430. **झेर्जुस् ( 3-4-108 ) ॥विधिसूत्रम् ॥**
लिङो झेर्जुस् स्यात्। भवेयुः। भवेः। भवेतम्। भवेत। भवेयम्। भवेव। भवेम।

---

426. **यासुडिति** – यासुट्, परस्मैपदेषु, उदात्तः, ङित्, च, इतिच्छेदः। **लिङः स्थाने जायमानानां परस्मैपदसञ्ज्ञकप्रत्ययानां यासुडागमो भवति, स च उदात्तो ङिद्वच्च भवतीत्याशयः।**

427. **लिङः इति** – लिङः, सलोपः, अनन्त्यस्य, इतिच्छेदः। **सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपो भवतीत्यर्थः।** इति प्राप्ते –

428. **अतो येय इति** – अतः, याः, इय्, इतिच्छेदः। येय इत्यत्र आर्षः सन्धिः। **अतः परस्य सार्वधातुकावयवस्य 'यास्' इत्यस्य स्थाने इय् आदेशो भवतीत्यर्थः।** यथा – भव इय् त्। गुणे भवेय् त् इति।

429. **लोप इति** – लोपः, व्योः, वलि, इतिच्छेदः। **वल्प्रत्याहारस्थ-वर्ण-परे यकारवकारयोः लोपो भवतीत्यर्थः।** यथा – भवेत्। भवेताम्।

**रूपसिद्धिः**

**भवेत्** – भूधातोः ''विधिनिमन्त्रणा.'' इत्यादिना सूत्रेण विधिलिङ्लकारे, लिङः तिबादेशे, सार्वधातुकसञ्ज्ञायां शबागमेऽनुबन्धलोपे, गुणेऽवादेशे, ''इतश्च'' इति इलोपे, ''यासुट् परस्मैपदेषूदात्तो ङिच्च'' इति यासुडागमे, अनुबन्धलोपे ''लिङः सलोपोऽनन्त्यस्य'' इति सलोपे प्राप्ते, तं प्रबाध्य ''अतो येयः'' इति यासः इयादेशे भव इय् त् इति जाते, ''आद्गुणः'' इति अकार-इकारयोः गुणे भवेय् त् इति जाते, ''लोपो व्योर्वलि'' इति यलोपे 'भवेत्' इति रूपं सिद्धम्।

**भवेताम्** – भूधातोर्लिङि, तसि, शपि, गुणेऽवादेशे, तसः तामादेशे, यासुटि यासः इयादेशे, ''आद्गुणः'' इति गुणे, यलोपे च कृते 'भवेताम्' इति रूपं सिद्धम्।

430. **झेर्जुसिति** – झेः, जुस्, इतिच्छेदः। **लिङ्-लकार-सम्बन्धिनः झेः जुस् आदेशो भवतीत्यर्थः।** यथा – भवेयुः।

**रूपसिद्धिः**

**भवेयुः** – भूधातोर्लिङि, झि, शपि, गुणेऽवादेशे, यासुडागमेऽनुबन्धलोपे, ''झेर्जुस्'' इति जुसादेशेऽनुबन्धलोपे, यासः इयादेशे, आद्गुणे, सस्य रुत्वे विसर्गे च ''भवेयुः'' इति रूपं सिद्धम्।

**भवेः** – भूधातोः लिङि, सिपि, ''इतश्च'' इति इकारलोपे, यासुडागमे, अनुबन्धलोपे, शपि, गुणे, अवादेशे, यासः इयादेशे, ''आद्गुणः'' इति गुणे ''लोपो व्योर्वलि'' इति यलोपे, सस्य रुत्वे विसर्गे च 'भवेः' इति रूपं सिद्धम्।

**भवेतम्** – भूधातोर्विधिलिङि, थस्-प्रत्यये, थसः तमादेशे, यासुड् आगमेऽनुबन्धलोपे, शबागमेऽनुबन्धलोपे, गुणे, अवादेशे, ''अतो येयः'' इति यास इयादेशे, भव इय् तम् इति जाते, ''आद्गुणः'' इति गुणे भवेय् तम् इति जाते, ''लोपो व्योर्वलि'' इति यलोपे 'भवेतम्' इति रूपं सिद्धम्।

**भवेत** – भूधातोर्लिङि, थप्रत्यये, थस्य तादेशे, यासुडागमेऽनुबन्धलोपे, शबागमेऽनुबन्धलोपे, गुणे, अवादेशे, यास इयादेशे, भव इय् त इति जाते, गुणे, यलोपे 'भवेत' इति रूपं सिद्धम्।

**भवेयम्** – भूधातोर्लिङि, मिपि, तस्थस्थमिपामिति मिपः अमादेशे, यासुडागमेऽनुबन्धलोपे, शबागमेऽनुबन्धलोपे गुणे, अवादेशे, यास इयादेशे, भव इय् अम् इति जाते, गुणे 'भवेयम्' इति रूपं सिद्धम्।

431. **लिङाशिषि ( 3-4-116 ) ॥सञ्ज्ञासूत्रम् ॥**
आशिषि लिङ् आर्धधातुकसञ्ज्ञः स्यात्।

432. **किदाशिषि ( 3-4-104 ) ॥सञ्ज्ञासूत्रम् ॥**
आशिषि लिङो यासुट् कित्। स्कोः संयोगाद्योरन्त्ये चेति सलोपः।

433. **क्क्ङिति च ( 1-1-5 ) ॥ निषेधसूत्रम् ॥** गित्-किद्-ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः। भूयात्, भूयास्ताम्, भयासुः। भूयाः, भूयास्तम्, भूयास्त। भूयासम्, भूयास्व, भूयास्म।

**भवेव** - भूधातोर्लिङि, वस्-प्रत्यये, यासुडागमेऽनुबन्धलोपे, शबागमे, अनुबन्धलोपे, गुणे, अवादेशे, यास इयादेशे, भव इय् वस् इति जाते, गुणे, भवेय् वस् इति जाते, यलोपे, भवे वस् इति जाते, ''नित्यं ङितः'' इति सलोपे भवेव इति रूपं सिद्धम्।

**भवेम** - भूधातोः लिङि, मस्-प्रत्यये, यासुडागमेऽनुबन्धलोपे, शबागमेऽनुबन्धलोपे, गुणे, अवादेशे, यास इयादेशे, गुणे, यलोपे ''नित्यं ङितः'' इति सलोपे 'भवेम' इति रूपं सिद्धम्।

434. **लुङ् ( 3-2-110 ) ॥विधिसूत्रम् ॥** भूतार्थे धातोर्लुङ् स्यात्।

---

431. **लिङाशिषि इति** - लिङ्, आशिषि, इतिच्छेदः। **आशिष्यर्थे लिङस्तिङ् आर्धधातुकसञ्ज्ञो भवतीत्यर्थः।**

432. **किदाशिषि इति** - कित्, आशिषि, इतिच्छेदः। **आशीर्वादार्थे लिङः यासुट् किद्भवतीत्यर्थः।** ''स्कोः संयोगाद्योरन्त्ये च'' इति सलोपः।

433. **क्क्ङिति चेति** - क्क्ङिति, च इतिच्छेदः। **गित्-कित्-ङित्-निमित्तके इक् ( इ, उ, ऋ, लृ ) लक्षणे गुणवृद्धी न भवत इति सूत्रार्थः।** सथा - भूयात् इत्यादयः।

**रूपसिद्धिः**

**भूयात्** - भूधातोः ''आशिषि लिङ्लोटौ'' इति आशीर्लिङ्लकारे, तिप्-प्रत्यये, ''लिङाशिषि'' इति आर्धधातुकसञ्ज्ञायां, यासुडागमे, अनुबन्धलोपे, ''इतश्च'' इति इलोपे, भू यास् त् इति जाते, ''हलोऽनन्तराः संयोगः'' इति 'स् त्' इत्यस्य संयोगसञ्ज्ञायां संयोगान्तलोपस्य अपवादत्वेन ''स्कोः संयोगाद्योरन्त्ये च'' इति संयोगादि-सलोपे 'भूयात्' इति जाते। गुणे प्राप्ते ''किदाशिषि'' इति कित्वात् ''क्क्ङिति च'' इति गुणनिषेधे भूयात् इति रूपं सिद्धम्।

**भूयास्ताम्** - भूधातोः, लिङि, तसि, तसः तामादेशे, आर्धधातुकसंज्ञायां शबभावे, यासुडागमे, कित्वाद् इग्लक्षणगुणनिषेधे 'भूयास्ताम्' इति रूपं सिद्धम्।

**भूयासुः** - भूधातोः, आशीर्लिङि, लिङः झि-आदेशे, आर्धधातुकसञ्ज्ञायां शबभावे, यासुडागमेऽनुबन्धलोपे, ''झेर्जुस्'' इति झेः जुसादेशे, अनुबन्धलोपे, यासुटः कित्त्वात् गुणनिषेधे, सस्य रुत्वे विसर्गे च 'भूयासुः' इति रूपं सिद्धम्।

**भूयाः** - भूधातोर्लिङि, सिपि, ''इतश्च'' इति इलोपे, भू स् इति जाते, आर्धधातुकसञ्ज्ञायां शबभावे, यासुडागमे, अनुबन्धलोपे, यासुटः कित्वाद् गुणनिषेधे, भू यास् स् इति जाते, ''स्को संयोगाद्योरन्त्ये च'' इति पूर्वसकारस्य लोपे, सस्य रुत्वे विसर्गे च 'भूयाः' इति रूपं सिद्धम्।

**भूयास्तम्** - भूधातोर्लिङि, थसि, थसः, तमादेशे, आर्धधातुकसंज्ञायां शबभावे, यासुडागमेऽनुबन्धलोपे, यासुटः कित्त्वाद् गुणनिषेधे 'भूयास्तम्' इति रूपं सिद्धम्।

**भूयास्त** - भूधातोर्लिङि थप्रत्यये, थस्य तादेशे शेषं पूर्ववत्।

**भूयासम्** - भूधातोर्लिङि, मिपि, मिपः अमादेशे शेषं पूर्ववत्।

**भूयास्व** - भूधातोर्लिङि, वस्प्रत्यये, आर्धधातुकसञ्ज्ञायां शबभावे, यासुडागमे, कित्त्वाद् गुणनिषेधे ''नित्यं ङितः'' इति सलोपे 'भूयास्व' इति रूपं सिद्धम्। एवमेव मस्-प्रत्यये 'भूयास्म' इति रूपमपि सिध्यति।

434. **लुङिति** - भूतार्थे धातोः लुङ् लकारो भवतीत्यर्थः। यथा - भू ल् ( लुङ् )।

435. **माङि लुङ् ( 3-3-175 ) ॥विधिसूत्रम् ॥** सर्वलकारापवादः।

436. **स्मोत्तरे लङ् च ( 3-3-176 ) ॥विधिसूत्रम् ॥** स्मोत्तरे माङि लङ् स्याच्चाल्लुङ्।

437. **च्लि लुङि ( 3-1-43 ) ॥विधिसूत्रम् ॥** शबाद्यपवादः।

438. **च्लेः सिच् ( 3-1-44 ) ॥विधिसूत्रम् ॥** इचावितौ।

439. **गातिस्था-घुपा-भूभ्यः सिचः परस्मैपदेषु ( 2-4-77 ) ॥विधिसूत्रम् ॥**
एभ्यः सिचो लुक् स्यात्। गापाविहेणादेशपिबती गृह्येते।

440. **भूसुवोस्तिङि ( 7-3-88 ) ॥विधिसूत्रम् ॥**
भू सू एतयोः सार्वधातुके तिङि परे गुणो न। अभूत्। अभूताम्। अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम।

---

435. **माङि लुङिति** – माङि, लुङ्, इतिच्छेदः। माङि उपपदे धातोः लुङ् स्यात् इत्यर्थः।

436. **स्मोत्तरे इति** – स्मोत्तरे, लङ्, च, इतिच्छेदः। **'स्म' पदस्य उत्तरवर्तिनि माङ् इत्यस्य योगे धातोः लङ् लुङ् च भवत इत्यर्थः।**

437. **च्लि लुङीति** – च्लि, लुङि, इतिच्छेदः। **लुङि परे धातोः च्लिप्रत्ययो भवति।** एषः प्रत्ययः शबादिविकरणानाम् अपवादोऽस्ति।

438. **च्लेरिति** – च्लेः, सिच्, इतिच्छेदः। **च्लेः स्थाने सिजादेशो भवतीत्यर्थः।** इह इचौ इत्सञ्ज्ञकौ स्तः। 'स्' शिष्यते।

439. **गातिस्थाघुपाभूभ्य इति** – गातिस्थाघुपाभूभ्यः, सिचः, परस्मैपदेषु, इतिच्छेदः। **गा-स्था-घु ( डुदाञ्, डुधाञ् )- पा-भू इत्येतेभ्यः धातुभ्यः परे सिचो लुक् भवतीत्यर्थः।** अत्र 'गा' इत्यनेन इण् धातोः जायमानो (इणो गा लुङि) गृह्यते, 'पा' अत्र 'पाने' पिबादेशात्मकधातुः गृह्यते।

440. **भूसुवोरिति** – भूसुवोः, तिङि, इतिच्छेदः। **भू सू एतयोः धात्वोः सार्वधातुके तिङि परे गुणो न भवतीत्यर्थः।** यथा – अभूत्।

**रूपसिद्धिः**

**अभूत्** – भू (सत्तायां) धातोः ''लुङ्'' इति सूत्रेण लुङ् लकारेऽनुबन्धलोपे, ''तिप्तसझि.'' इत्यादिना लस्य तिबादेशे, भू ति इति जाते, ''इतश्च'' इति इलोपे, सार्वधातुकत्वात् शप्-प्राप्ते, तं प्रबाध्य ''च्लि लुङि'' इति च्लिप्रत्यये, ''च्लेः सिच्'' इति च्लेः सिजादेशेऽनुबन्धलोपे, भू स् त् इति जाते, ''लुङ लङ्लृङ्क्ष्वडुदात्तः'' इति अडागमेऽनुबन्धलोपे, अ भू स् त् इति जाते ''गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु'' इति सिज्लुकि, सार्वधातु कगुणे प्राप्ते ''भूसुवोस्तिङि'' इति गुणनिषेधे 'अभूत्' इति रूपं सिद्धम्।

**अभूताम्** – भूधातोः लुङि, तसि, तसः तामादेशे, च्लिप्रत्यये, च्लेः सिजादेशे अडागमे, सिज्लुकि, गुणे प्राप्ते ''सार्वधातुकमपित्'' इति ङिद्वत्कारणात् ''क्ङिति च'' इति गुणनिषेधे, 'अभूताम्' इति रूपं सिद्धम्।

**अभूवन्** – भूधातोर्लुङि, झि-आदेशे, च्लिप्रत्यये, च्लेः सिजादेशे, सिज्लुकि, ''झोऽन्त'' इति अन्तादेशे, ''इतश्च'' इति इलोपे, ''भुवो वुग्लुङ्लिटोः'' इति वुगागमेऽनुबन्धलोपे, अडागमेऽनुबन्धलोपे, 'अभूव् अन्त् इति जाते,' ''संयोगान्तस्य लोपः'' इति संयोगान्त-तलोपे, 'अभूवन्' इति रूपं सिद्धम्।

**अभूः** – भूधातोर्लुङि, सिपि, इलोपे, च्लिप्रत्यये, सिजादेशे, अडागमे, सिज्लुकि, गुणे प्राप्ते, ''भूसुवो.'' इत्यादिना गुणनिषेधे, सस्य रुत्वे विसर्गे 'अभूः' इति रूपम्।

**अभूतम्** – भूधातोर्लुङि, थसि, थसः तमादेशे, च्लिप्रत्यये, च्लेः सिजादेशे, अडागमे, सिज्लुकि, ङिद्वत्कारणात् गुणनिषेधे, 'अभूतम्' इति रूपं सिद्धम्।

**अभूत** – भूधातोर्लुङि, थप्रत्यये, थस्य तादेशे, च्लिप्रत्यये, सिजादेशे, अडागमे, सिज्लुकि, गुणे प्राप्ते, गुणनिषेधे, 'अभूत' इति रूपं सिद्धम्।

**441.** **न माङ्योगे ( 6-4-74 ) ॥ निषेधसूत्रम् ॥**

अडाटौ न स्तः। मा भवान् भूत्। मा स्म भवत्। मा स्म भूत्।

**442.** **लिङ्निमित्ते लृङ् क्रियातिपत्तौ ( 3-3-139 ) ॥ विधिसूत्रम् ॥**

हेतुहेतुमद्भावादि लिङ्निमित्तम्, तत्र भविष्यर्त्ये लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्। अभविष्यत्, अभविष्यताम्, अभविष्यन्। अभविष्यः, अभविष्यतम्, अभविष्यत। अभविष्यम्, अभिविष्याव, अभविष्याम। सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यत् इत्यादि ज्ञेयम्।

---

**अभूवम्** - भूधातोर्लुङि, मिप्-प्रत्यये, मिप अमादेशे, च्लिप्रत्यये, च्लेः सिजादेशे, गातिस्थेति सिज्लुकि, वुगागमेऽनुबन्धलोपे, भूव् अम् इति जाते, अडागमे, 'अभूवम्' इति रूपं सिद्धम्।

**अभूव** - भूधातोर्लुङि, वस्-प्रत्यये, च्लिप्रत्यये, च्लेः सिजादेशे, सिज्लुकि, अडागमे, ''नित्यं ङितः'' इति सलोपे 'अभूव' इति रूपं सिद्धम्।

**अभूम** - भूधातोर्लुङि, मस्-प्रत्यये, च्लिप्रत्यये, च्लेः सिजादेशे, सिज्लुकि, अडागमे, ''नित्यं ङितः'' इति सलोपे अभूम इति रूपं सिद्धम्।

**441.** **न माङ्योगे इति** - न, माङ्योगे, इतिच्छेदः। **निषेधार्थके माङ्योगे धातुभ्यः अडाटौ न भवतः इति सूत्रार्थः।** यथा - मा भवान् भूत्। मा स्म भवत्।

**रूपसिद्धिः**

**मा भवान् भूत्** - माङि उपपदे भू धातोर्लुङि, तिपि, अडागमे प्राप्ते, ''न माङ्योगे'' इति निषेधे, इलोपे, च्लिप्रत्यये, सिजादेशे, सिज्लुकि, सार्वधातुकेति गुणे प्राप्ते, ''न भूसुवोस्तिङि'' इति निषेधे 'मा भवान् भूत्' इति रूपं सिद्धम्।

**मा स्म भवत्, मा स्म भूत्** - अत्र ''स्मोत्तरे लङ् च'' इति लङ् लकारे लुङ्कारे च। लङ् लकारे अभवत् वत् प्रक्रिया स्यात् परन्तु प्राप्तस्य अटः ''न माङ्योगे'' इति निषेधो भवति, अतः मा स्म **भवत्** इति रूपं सिद्यति। लुङि पूर्ववत् (अभूत्) प्रक्रियायाम् अडागमस्य निषेधे 'मा स्म **भूत्**' इति रूपं सिध्यति।

**442.** **लिङ्निमित्ते इति** - लिङ्निमित्ते, लृङ्, क्रियातिपत्तौ, इतिच्छेदः। लिङो निमित्तं लिङ्निमित्तम्, तस्मिन्। क्रियाया अतिपत्तिः (असिद्धिः अभावो वा), क्रियातिपत्तिः तस्याम्। **लिङ्निमित्ते धातोः परे लृङ्लकारः ( प्रत्ययः ) स्यात् भविष्यति क्रियातिपत्तौ इत्यर्थः।**

**रूपसिद्धिः**

**अभविष्यत्** - भूधातोः ''लिङ्निमित्ते.'' इत्यादिना लृङ्लकारे, तिप्प्रत्यये, ''इतश्च'' इति इलोपे, ''स्यतासी लृलुटोः'' इति स्य विकरणे, आर्धधातुकत्वात् इडागमे ''सार्वधातुकार्धधातुकयोः'' इति गुणे, अवादेशे, भविस्य त् इति जाते, ''लुङ्लङ्लृङ्क्ष्वडुदात्तः'' इति अडागमे, ''आदेशप्रत्यययोः'' इति सस्य षत्वे 'अभविष्यत्' इति रूपं सिद्धम्।

**अभविष्यताम्** - भूधातोः लृङ्लकारे तस्-प्रत्यये, तसः तामादेशे शेषं पूर्ववत् 'अभविष्यताम्' इति रूपं सिद्धम्।

**अभविष्यन्** - भूधातोः लृङ् लकारे झिप्रत्यये, अन्तादेशे, इतश्चेति इलोपे पररूपे संयोगान्तलोपे 'अभविष्यन्' इति पूर्ववत्।

**अभविष्यः** - मध्यमपुरुषैकवचने सिप्-प्रत्यये, इलोपे, सस्य रुत्वे विसर्गे शेषं पूर्ववत्।

**अभविष्यतम्** - मध्यमपुरुषस्य द्विवचने थस् प्रत्यये, थसः तमादेशे, शेषं पूर्ववत्।

**अभविष्यत** - मध्यमपुरुषस्य बहुवचने थप्रत्यये ''तस्थस्थमिपां तान्तन्तामः'' इति थस्य तादेशे शेषं पूर्ववत्।

**अभविष्यम्** - उत्तमपुरुषैकवचने मिप्-प्रत्यये, मिपः अमादेशे शेषं पूर्ववत्।

**अभविष्याव** - उत्तमपुरुषस्य द्विवचने वस् प्रत्यये, पूर्ववत् प्रक्रियायां ''नित्यं ङितः'' इति सलोपे, ''अतो दीर्घो यञि'' इति दीर्घे 'अभविष्याव' इति रूपं सिद्धम्।

**अभविष्याम** - उत्तमपुरुषस्य बहुवचने मस्-प्रत्यये, पूर्ववत् प्रक्रियायां ''नित्यं ङितः'' इति सलोपे, ''अतो दीर्घो यञि'' इति अकारस्य आकारे दीर्घे 'अभविष्याम' इति रूपं सिद्धम्।

## ॥ अभ्यासः ॥

**वस्तुनिष्ठात्मकप्रश्नाः –**

1. लकाराः कति –
   (क) नव (ख) षड्
   (ग) दश (घ) एकः
2. लेट् लकारः प्रयुज्यते –
   (क) छन्दसि (वेदे) (ख) लोके
   (ग) उभयत्र (घ) कुत्रापि न
3. वर्तमानार्थक–धातोः भवति –
   (क) लट्लकारः (ख) लङ्लकारः
   (ग) लृङ् लकारः (घ) लिट् लकार

**अतिलघूत्तरात्मकप्रश्नाः –**

4. तिङ्–प्रत्ययाः कति भवन्ति?
5. सकर्मकधातुभ्यः लकाराः कस्मिन्नर्थे?
6. भूधातोः कः अर्थः?
7. तङानौ किं सञ्ज्ञकौ?
8. तिङः त्रीणि त्रीणि किं सञ्ज्ञकाः?
9. अस्मदि कः पुरुष?
10. युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने कः पुरुष?
11. तिङ शितश्च किं सञ्ज्ञकाः?

**लघूत्तरात्मकप्रश्नाः –**

12. झस्य अन्तादेशः केन भवति? सोदाहरणं लिखन्तु।
13. भवामि इत्यत्र दीर्घः केन भवति? लिखन्तु।
14. लिटस्तिबादीनां नवानां के आदेशाः भवन्ति? लिखन्तु।
15. लुङ्लिटोरचि भुवः कः आगमः केन भवति?
16. अभ्याससञ्ज्ञासूत्रं लिखन्तु।
17. लिट् लकारे आर्धधातुकसञ्ज्ञा केन भवति?
18. वलादिरार्धधातुकस्य क आगमः केन भवति?
19. लुटः प्रथमपुरुषस्य के आदेशाः? लिखन्तु।
20. आशिष्यर्थे धातो कौ लकारौ?
21. तुह्योः स्थाने कः आदेशः केन भवति?
22. लोटः मेः क आदेशः?
23. अडागमः केषु लकारेषु भवति?
24. विधिनिमन्त्रणादिष्वर्थेषु कः लकारः केन भवति?
25. भवेदित्यत्र यलोपः केन भवति।
26. आशिषिलिङः तिङ् किं सञ्ज्ञकः?

**निबन्धात्मकप्रश्नाः –**

27. भूधातोः सर्वेषु लकारेषु सर्वाणि रूपाणि ससूत्रं साधनीयानि।
28. भूधातोः दशलकारेषु रूपाणि लेखनीयानि।
29. दशलकाराणां विधायकसूत्राणाम् अर्थं लिखन्तु।

## महाकविश्रीमदम्बिकादत्तव्यासस्य व्यक्तित्वं कृतित्वञ्च

''अभिनवबाणः'' इति उपाधिना विभूषितः स्वनामधन्यः पण्डित-अम्बिकादत्तव्यासस्य नाम संस्कृतगद्यपरम्परायां को वा न जानाति? पण्डित-अम्बिकादत्तव्यासस्य स्थितिकालः १८५८ ईसवीयाब्दात् १९०० ईसवीयाब्दपर्यन्तं विविधप्रमाणैः सिद्धः भवति। एते मूलतः जयपुरराज्यनिवासिनः आसन्। अस्य पितामहः राजारामः काशीनगरं गत्वा तत्रैव निवासं कृतवान्। राजारामस्य द्वौ पुत्रौ आस्तां – दुर्गादत्तः देवीदत्तश्च। दुर्गादत्तस्य एव द्वितीयपुत्रः अम्बिकादत्तव्यासः आसीत्। व्यासमहोदयः बाल्यकालादेव प्रतिभासम्पन्नः आसीत्। विद्यालयीयजीवनादेव अनेन काव्यरचना प्रारब्धा। कवित्वप्रतिभाकारणादेव ''सुकविः'' इति उपाधिना अलङ्कृतः जातः।

व्यासमहोदयस्य पारिवारिकं जीवनम् अधिकं सुखकरं नासीत्। त्रयोदशवर्षस्यावस्थायां विवाहः सम्पन्नः। अस्य पितृचरणाः पौरोहित्यकर्मणा स्वीयजीविकोपार्जनं करोति स्म। अतः आर्थिकदृष्ट्या सम्पन्नता नासीत्। एकादशवर्षस्य अवस्थायामेव अम्बिकादत्तव्यासस्य माता दिवङ्गता। पुनश्च सप्तदशवर्षस्यावस्थायामस्य जनकोऽपि स्वर्गवासी जातः। एवं प्रकारेण सत्सु अपि अनेककष्टेषु अनेन १९३७ तमे वर्षे काशीनगरस्थराजकीयमहाविद्यालयात् ''साहित्याचार्यः'' परीक्षा उत्तीर्णा। प्रतिभासम्पन्नेनानेन एकघटिकायां शतं श्लोकरचनाकारणादेव ''घटिकाशतक'' इति उपाधिना विभूषितोऽयं १९३८ तमे वर्षे 'काशीब्रह्मामृतवर्षिणी' सभायाम्। १९४० तमे वर्षे विहारराज्यस्थायां मधुबनीसंस्कृतपाठशालायां प्रधानाध्यापकरूपेण अध्यापनं प्रारब्धवान्। १९४४ तमे वर्षे भागलपुरमण्डलविद्यालये प्रधानपण्डितः सञ्जातः। मीमांसाशब्दैः श्रीव्यासस्य कर्मभूमिस्तु बिहारराज्यमेवासीत्। एवमपि श्रूयते यत् १९५० तमे वर्षे अयं व्यासमहोदयः अवकाशं स्वीकृत्य भारतभ्रमणाय अगच्छत्। एतस्मिन् अवसरे समस्तदेशेऽस्य महान् आदरो जातः। एतदपि कथ्यते यत् अनेन शतं प्रश्नान् श्रुत्वा तेषामुत्तरं तेनैव क्रमेण दीयते स्म। अत एव ''शतावधानी'' इत्युपाधिनापि समादृतः आसीत् अयं जनः। विचित्रविलक्षणविद्वत्तासम्पन्नोऽयं व्यासमहोदयः १९५७ तमे वर्षे अल्पायुषि एव दिवङ्गतः सञ्जातः।

### श्रीमदम्बिकादत्तव्यासस्य काव्यानि –

संस्कृतगद्यकाव्यलेखनपरम्परायां सुबन्धु-बाणभट्ट-दण्डिप्रमुखकवीनां नामानि सादरं स्मर्यन्ते। अस्यामेव शृङ्खलायां स्वनामधन्यपण्डिताम्बिकादत्तव्यासस्य नामापि सुप्रसिद्धमस्ति। अनेन विरचितानां ग्रन्थानां संख्या प्रायशः अशीतिः (८०) इति मन्यते। तेषु मुख्यरूपेण एते सन्ति – गणेशशतकं, कथाकुसुमं, साङ्ख्यसागरसुधा, पातञ्जलप्रतिबिम्बं, दुःखद्रुमकुठारः, अवतारमीमांसाकारिका, प्राकृतगूढशब्दकोषः, संस्कृताभ्यासपुस्तकं, शिवराजविजयः, उपन्यासः, सामवतं (नाटकं) च।

उल्लिखितेषु ग्रन्थेषु ''सामवतं'' नाटकमिदं भाष्य-भाव-वर्ण्य-दृष्ट्या अत्यन्तमुत्कृष्टं प्रतीयते। पुनरपि अम्बिकादत्तव्यासस्य सर्वश्रेष्ठा कृतिस्तु ''शिवराजविजयः'' एवास्ति। 'शिवराजविजयः' संस्कृतगद्यसाहित्ये अन्यतमं स्थानं धत्ते। बाण-दण्डि-सुबन्धु-पश्चात् व्यासमहोदयस्यैव नाम स्वीक्रियते। यद्यपि अन्येऽपि अनेके गद्यकाराः सन्ति, परन्तु साहित्यिकोत्कृष्टता-बौद्धिकप्रतिभासामाजिकाकलनादिवैशिष्ट्यकारणाद् व्यासमहोदयः प्रमुखगद्यकारेषु परिगण्यते। अत्र च कारणभूतो विद्यते 'शिवराजविजयः'।

# शिवराजविजयस्य संक्षिप्तकथावस्तु

श्रीमदम्बिकादत्तव्यासविरचितोऽयमेतिहासिकोपन्यासः त्रिषु विरामेषु विभक्तो विद्यते। प्रत्येकमपि विरामः चतुर्षु निःश्वासेषु विभक्तोऽस्ति। अस्य कथावस्तु संक्षिप्तरूपेण एवम् अस्ति –

दक्षिणभारते यवनानामाधिपत्येन अत्याचारैश्च खिन्नः शिववीरः स्वतन्त्रतायै संघर्षं प्रारब्धवान्। तदा तेन प्रतिगव्यूति आश्रमान् स्थापयित्वा यवनानां गतिविधीनां ज्ञानं प्राप्यते स्म। शिववीरस्य निरन्तरविजयाभियानेन उद्विग्नो भूत्वा बीजापुरनरेशः तेन सह योद्धुं ससेनम् अपजलखानं प्रेषितवान्। तदानीं शिववीरः प्रतापदुर्गे निवासं कुर्वन् आसीत्। अपजलखानोऽपि भीमानद्यास्तटे स्वीयशिविरं स्थापितवान् आसीत्। बीजापुरनरेशः सन्धिव्याजेन शिववीरं जीवन्तं ग्रहीतुम् इच्छति स्म। किन्तु तस्य सम्पूर्णयोजनां शिववीरः ज्ञातवान्। एकः यवनगुप्तचरः बीजापुरतः पत्रं नयन् आसीत्। मार्गे तेन एका ब्राह्मणकन्या अपहृता। परञ्च सा कन्या एकस्य आश्रमाध्यक्षस्य शिष्याभ्यां श्यामसिंहगौरसिंहाभ्यां रक्षिता यवनगुप्तचरश्च मारितः। तस्मादेव पत्रमधिगत्य गौरसिंहमाध्यमेन अनन्तरकाले शिववीरेण सम्पूर्णयोजना अवगता। पत्रेण इदमपि अवगतं यत् बीजापुरनरेशः सन्धिव्याजेन शिववीरं छलयितुमिच्छति एतदर्थञ्च शिवस्य सकाशं गोपीनाथपण्डितः प्रेषितः अस्ति। तदनुसारं गोपीनाथः शिवराजं प्राप्नोति। बहुप्रकारेण शिववीरेण सह संलप्य प्रतापदुर्गात् समीपे एव अपजलखानशिववीरयोः मेलनस्य व्यवस्थामपि करोति। अपरपक्षे गौरसिंहोऽपि 'तानसेनः' इति गायकवेषेण अपजलखानस्य शिविरं प्राप्य तदीयां सर्वां योजनां ज्ञात्वा शिववीरस्य समीपे आगच्छति। रात्रिकाले एव शिववीरः स्वीयसेनाम् अपजलखानशिविरस्य पृष्ठभागे लतागुल्मेषु दुर्गप्राचीरव्यवधानेषु च योजयति। प्रातःकाले अपजलखानः शिववीरेण सह मेलितुमागच्छत्। शिववीरस्तु स्ववस्त्राणामन्तः कवचं हस्तयोश्च व्याघ्रनखनामकं शस्त्रं परिधाय आगतवान्। परस्परम् आलिङ्गनावसरे प्रगाढालिङ्गनव्याजेन शिववीरः अपजलखानस्य स्कन्धौ ग्रीवां च प्रछिद्य भुवि पातयति। पूर्वयोजनानुसारं शिवसैनिकाः अपजलखानस्य सामग्रीः शिविराणि च दग्ध्वा अकस्मादेव आक्रमणं कुर्वन्ति। एतेन बहवः यवनसैनिकाः हन्यन्ते अन्ये च पलायन्ते।

अपतरः गौरसिंहः यां विप्रकन्यामरक्षत्। तस्याः संरक्षकः कोऽपि वृद्धब्राह्मणः आसीत्। तस्यागमनेन रहस्यमिदम् उद्घाटितं यत् इयं कन्या गौरसिंहश्यामसिंहयोः भगिनी सौवर्णी अस्ति। वृद्धः ब्राह्मणश्च तयोः पुरोहितः देवशर्मा चास्ति। तत्पश्चात् ब्रह्मचारिगुरोः अनुरोधेन गौरसिंहः स्वीयसमाचारं श्रावयन् कथयति यत् एते गौरसिंहश्यामसिंहौ सौवर्णी च उदयपुरराज्यस्य कस्यश्चित् लघुक्षेत्रस्य प्रशासकस्य खड्गसिंहस्य तनुजाः सन्ति। दुर्भाग्यवशात् परलोकं गतवतोः पित्रोः ते त्रयोऽपि पुरोहितस्य देवशर्मणः संरक्षणे उषितवन्तः। एकदा आखेटं क्रीडन्तौ उभौ अपि भ्रातरौ लुण्ठाकैः अपहतौ। परञ्च तत्र कञ्चित् पान्थसार्थं लुण्ठनाय गतेषु तौ लुण्ठकेषु बन्धनानि छित्वा शस्त्रैः सुसज्जीभूय रक्षणार्थं स्थितं प्रहरिणं भाययित्वा च अश्वौ आरुह्य पलायनं कृतवन्तौ। सायं यावच्च सुदीर्घमार्गमतीत्य तौ एकस्य लघुग्रामस्य समीपे विद्यमानं हनुमन्मन्दिरं प्राप्तवन्तौ। मन्दिरपूजकः अतीव स्नेहेन तयोः भोजनविश्रामादिव्यवस्थां विदधाति। तस्य साहाय्येन च तौ महाराष्ट्रदेशं प्राप्तवन्तौ। अत्र च भीमानद्यास्तटे तयोः साक्षात्कारः शिववीरेण सह सञ्जातः। ततः परं तौ अस्मिन् आश्रमे निवासम् आरब्धवन्तौ।

अपरत्र शाइस्तखानः पूनानगरमधिकृत्य तत्रैव शिवराजस्य भवनेषु निवासम् आरब्धवान्। अतः शिवराजेन सह तस्य युद्धं निश्चितमासीत्। शिववीरः सिंहदुर्गात् स्वकीयमेकं सन्देशं रघुवीरसिंहमाध्यमेन तोरणदुर्गाध्यक्षं प्रति प्रेषितवान्। सः सन्देशवाहकः वातवर्षादिबाधामुपेक्ष्य तोरणदुर्गं गत्वा दुर्गाध्यक्षाय सन्देशं प्रदाय तस्य दुर्गाध्यक्षस्याज्ञया रात्रौ हनुमत्मन्दिरे तिष्ठति। मन्दिरस्य वाटिकायां गीतं गायन्तीं सौवर्णीं दृष्ट्वा रघुवीरसिंहस्य हृदये अनुरागः उत्पन्नो भवति। शिवराजाज्ञया रघुवीरसिंहः शाइस्तखानेन सह भावियुद्धस्य फलं प्रष्टुं मन्दिरस्य अर्चकस्य देवशर्मणः सकाशं गतवान्।

देवशर्मा सौवर्ण्या तस्मै एकं मोदकं ददाति। मोदकं खादयित्वा सा तस्य ग्रीवायामेकां मालां परिधापयति कथयति च प्रात:काले रात्रौ दृष्टस्वप्नं श्रावयतु। प्रात:काले दुर्गाध्यक्षात् सन्देशस्य उत्तरम् आदाय स: रघुवीरसिंह: देवशर्माणं प्रतिगच्छति। ततश्च यवनै: सह युद्धे जय: आर्यै: सह युद्धे च पराजय: इति भविष्यफलं विज्ञाय वाटिकामागच्छति। तत्र पुन: सौवर्णीं दृष्ट्वा तदनुज्ञया च रत्नमालां तत्कण्ठे परिधापयति। ततश्च स: भगवत: मारुते: प्रसादं स्वीकृत्य सिंहदुर्गं प्रत्यागच्छति।

द्वितीये पक्षे शिवराजोऽपि पण्डितवेषेण माल्यश्रीकेण सह शाइस्तखाननिवासं पूनानगरमुपेत्य गुप्तरूपेण तत्रत्यं निरीक्षणं कृत्वा प्रत्यागतवान्। संशयवशानुकरणकर्त्ता चांदखानश्च तेन हत:। तदनन्तरं शाइस्तखानेन कृतपूनानगरजननिषेधं ज्ञात्वा शिव: यशवन्तसिंहं पूनानगराद् दूरे स्थापयितुं प्रार्थयति स्वयं च वरयात्राव्याजेन प्रमुखै: वीरसैनिकै: सह पूनानगरं प्रविष्टवान् शाइस्तखानस्य निवासमपि गतवान् च। तत्र चांदखानस्य शाइस्तखानस्य च पुत्रा: रघुवीरसिंहेन हता:। एतया घटनया आहतो भूत्वा शाइस्ताखान: वातायनात् कूर्दनं कृत्वा पलायित:। रघुवीरसिंहेन अवरंगजीवस्य पुत्री रोशनआरा बन्दीकृता।

पुनश्चापरत्र एकदा ब्रह्मचारिगुरु: गौरसिंहाय स्वस्य स्वपुत्रस्य वीरेन्द्रसिंहस्य च पूर्ववृत्तान्तं श्रावितवान्। अपरत: रघुवीरसिंहस्य प्रेयसी सौवर्णी क्रूरसिंहकृतापमानवार्तां तमुक्तवती। तदा संयोगवशात् क्रूरसिंहस्य नियुक्ति: अन्यत्र भवति कष्टञ्चापगतम्। अपरत: बन्दिनी रोशनआरा शिवं प्रति निजानुरागं प्रकटयति। परं स: ''भवत्या: पिता ददाति चेत् स्वीकुर्याम्'' इति अकथयत्। तदैव जयसिंह: ससेन: आक्रमणं करोति। शिववीर: तस्य हृदये हिन्दुत्वभावनामुत्पादयितुं प्रयत्नं कृतवान्। परञ्च विफलो भूत्वा कारणवशात् यवनै: सह सन्धिं कर्तुं विवशोऽभवत्। तदनुसारं रोशनआरां मुअज्जमं च समर्पितवान्।

तत्पश्चात् विजयपुरमाक्रम्य रघुवीरसिंहसाहाय्येन शिववीर: विजयं प्राप्तवान् रहमतखानञ्च जीवन्तं गृहीतवान्। परं रहमतखानक्रूरसिंहयो: ''रघुवीरसिंह: राजद्रोही अस्ति'' इति कथने विश्वासं कृत्वा शिववीर: रघुवीरसिंहं निष्कासितवान्। कालान्तरे च ज्ञातं यद् राजद्रोही क्रूरसिंह: आसीत्।

रघुवीरसिंह: अपमानितो भूत्वा राधास्वामिवेषं धृत्वा शिववीरस्य साहाय्यं करोति स्म। स: सौवर्ण्या: अपहरणेच्छुकं क्रूरसिंहञ्च हतवान्। जयसिंहसन्धिरनुसारं शिववीर: १९६६ तमे ईशाब्दे अवरंगजीवसभायां दिल्लीनगरे उपस्थित: अभवत्। मार्गे राधास्वामिवेषधारी रघुवीरसिंह: तं तत्र गमनात् अवरोद्धं कृतवान्। परञ्च शिवराज: नैव अमन्यत। सभायामुपस्थितेरनन्तरम् अवरंगजीव: तं शिवं कारागारे स्थापयित्वा बहिश्च रक्षिण: योजितवान्। परन्तु स्वस्य योजनया रघुवीरसिंहस्य च सहयोगेन शिव: स्वमित्रै: सह तत: पालयने सफल: जात:। तदनन्तरं राधास्वामी एव रघुवीरसिंहोऽस्ति इति विज्ञाय शिव: तं क्षमां याचते।

पुनश्च रघुवीरसिंह: अपि शिवेन सह आगच्छत्। शिवराज: तस्मै मण्डलेश्वरपदं प्रदाय सौवर्ण्या सह तस्य विवाहं कारितवान्। शिव: विवाहे सम्मिल्य तमाशीर्भि: सभाजत। अपरत: दूतै: सूचना दत्ता यत् सन्धौ यवनेभ्य: प्रदत्ता: सर्वेऽपि दुर्गा: विजिता:।

तदनन्तरं शिववीर: सतारानगरीं राजधानीं विधाय तत्र निवासं कर्तुं प्रारब्धवान्। शनै: शनै: सम्पूर्णमहाराष्ट्रे तदधिकार: सञ्जात:। अवरंगजीवेन प्रेषित: सेनापति: मोहब्बतखानश्च पलायनं कर्तुं विवशोऽभूत्। एवं प्रकारेण शिवराजविजय: समाप्तिं याति।

# शिवराजविजयस्य द्वितीयनिःश्वासस्य संक्षिप्त कथासारः

महाकविना श्रीमदम्बिकादत्तव्यासेन विरचितस्य ''शिवराजविजयः'' इत्यस्य ऐतिहासिकोपन्यासस्य प्रसिद्धिः न केवलं संस्कृतसाहित्येऽपितु सम्पूर्णसंस्कृतवाङ्मये एव विद्यते। अस्य शिवराजविजयस्य कथावस्तु त्रिषु विरामेषु विभक्तमस्ति। प्रत्येकमपि विरामः चतुर्षु निःश्वासेषु विभक्तो विद्यते। अत्र प्रथमविरामस्य द्वितीयनिःश्वासस्य कथावस्तु संक्षेपेण प्रस्तूयते –

शिववीरस्य विजयाभियानेन खिन्नः बीजापुरनरेशः स्वकीयम् अन्यतमं सेनानिनम् अपजलखानं शिववीरेण सह योद्धुं प्रेषितवान्। तदानीं शिववीरः प्रतापदुर्गे निवसन् आसीत्। अपजलखानः प्रतापदुर्गस्य समीपे एव ससेनः तिष्ठति स्म। एकस्मिन् दिवसे अस्तगते भगवति सूर्ये किञ्चिदन्धकारे संवृत्ते प्रतापदुर्गद्वारपालः कस्यापि पादध्वनिमिव शृणोति। तच्छ्रुत्वा आगन्तारञ्च जनमपश्यन् गम्भीरस्वरेण पृच्छति – ''कोऽयम्'' इति। किञ्चित्कालानन्तरं पुनः तमेव ध्वनिं श्रुत्वा द्वारपालः सक्रोधं पृष्टवान् यत् कोऽयमासन्नमरणबधिरः मामनुत्तरयन् अत्र आगच्छति? ततः परं सः ''क्षम्यताम्, आगच्छामि, आगत्य च सर्वं निवेदयामि'' इति भाषमाणं कमपि संन्यासिनं पश्यति, येन सह कश्चन द्वादशवर्षीयः भिक्षुबटुकोऽपि आसीत्। सश्च संन्यासिवेषधारी समागतः गौरसिंहः एवासीत्। गौरसिंहः सम्प्रति कन्यापहारकं यवनयुवानं हत्वा तस्माच्चाधिगतं पत्रं शिववीराय दातुम् आगतवान् आसीत्। स एव गमनागमनकाले द्वारपालं बहुधा परीक्षते स्म। तं सर्वथा दौवारिकतायोग्यः इति निश्चित्य आत्मपरिचयानन्तरं प्रशंसति। तदनन्तरं तस्य निर्देशानुसारं शिववीरम् उपगच्छति। शिववीरोऽपि तदानीं सन्ध्यादिकं कृत्वा स्वीयप्रासादे मित्रैः सह मन्त्रणातत्परः आसीत्। तस्मिन् एव समये द्वारपालस्यानुमत्या गौरसिंहोऽपि तत्र आगच्छति। कुशलवार्तापश्चात् गौरसिंहः आश्रमव्यवस्थां सूचयित्वा यवनहतकात् प्राप्तं पत्रं दर्शयति। तस्य पत्रस्य भाषा फारसी इत्यासीत्। तेनैव पत्रेण इदमवगतं यत् विजयपुराधीशः जीवन्तं शिववीरं बन्दीकर्त्तुमिच्छति। एतदर्थमेव तेन अपजलखानस्य सविधे गोपीनाथपण्डितः प्रेषितः आसीत् सश्च गोपीनाथपण्डितः शिववीरमपि साक्षात्करिष्यति इति। यदा पत्रविषये मन्त्रणा विधीयते स्म, तदैव द्वारपालः तत्र आगत्य सूचयति – ''कश्चन गोपीनाथपण्डितः समागतः'' इति। ततः परं शिववीरः माल्यश्रीकं तस्य व्यवस्थायै निर्दिशति। पुनश्च गौरसिंहः शिववीरेण सह मन्त्रयित्वा गौरसिंह गायकवेषेण अपजलखानशिविरं गच्छति। ततः अपजलखानस्य सम्पूर्णयोजनां विज्ञाय आगच्छति। अत्र शिववीरः गोपीनाथेन सह मन्त्रयति। अन्ते च भवान् श्वः अस्मिन् उद्यानप्रान्तस्थे पटकुटीरे अपजलखानमानयतु, येन अहं तेन सह मन्त्रयितुं शक्नुयाम्'' इति शिववीरः वदति। एतत्तु सम्भवमिति उक्त्वा गोपीनाथपण्डितः अनेकानि आशीर्वचांसि शिववीराय प्रदाय ततः गच्छति।

तदानीमेव गौरसिंहः अपजलखानस्य योजनां ज्ञात्वा तत्र समागच्छति। तदनन्तरं परस्परं मन्त्रणां विधाय शिववीरः सेनापतीन् समुचितं निर्दिश्य कञ्चित् कालं शयनं कृत्वा अल्पशेषायाञ्च रात्रौ उत्तिष्ठति। शिववीरस्य सेनास्तु पूर्वकालादेव गुप्तरूपेण निर्धारितस्थलेषु आक्रमणाय सुसज्जिताः आसन्। तदनन्तरं गोपीनाथपण्डितः उभयोः सेनयोः मध्ये एकस्मिन् पटकुटीरे अपजलखानस्य शिववीरेण सह मेलयितुं योजनां रचयति। अपजलखानः छलेन वार्ताव्याजेन च शिववीरं हन्तुमिच्छति। अपजलखानशिववीरौ द्वौ अपि पटकुटीरम् उपयातः, परस्परमालिङ्गतश्च। शिववीरस्तु आलिङ्गनव्याजेन तस्य स्कन्धौ दृढं गृहीत्वा व्याघ्रनखैः तं विदीर्णं कृतवान्। सङ्केतानुसारञ्च शिविराणां पृष्ठतः स्थिताः शिवसैनिकाः शिविरेषु अग्निं ज्वालितवन्तः। पुरतः स्थिताः शिवसैनिकाः हर हर महादेव इति गर्जनापुरस्सरं यवनसैनिकानामुपरि आक्रमणं कृतवन्तः। तदनन्तरं सर्वत्र कोलाहलः यदा प्रारब्धस्तदैव गौरसिंहः रक्तरञ्जितम् अपजलखानशरीरं प्रलम्बवेणुदण्डाग्रे बद्ध्वा समुत्तोल्य सर्वान् संदर्श्य सभेरीनादं घोषितवान् – दृश्यतां, दृश्यताम् इतः हतोऽयं यवनसेनापतिः, युष्माकं शिविराणि ज्वालितानि, अनेके यवनसैनिकाः मारिताः सन्ति, किं यूयमपि मर्त्तुम् इच्छथ? तत्पश्चात् भयभीताः यवनसैनिकाः पलायनं कृतवन्तः। शिववीरश्च युद्धस्थलस्य रक्तच्छतादिकं कार्यं

माल्यश्रीकाय प्रदाय ततः विजयशङ्खनादपुरस्सरं प्रत्यागत्य प्रतापदुर्गं प्रविश्य मातुः चरणौ प्रणमति। एवं प्रकारेण प्रथमविरामस्य द्वितीयनिःश्वासोऽयं समाप्तो भवति।

## शिवराजविजयस्य काव्यगतं वैशिष्ट्यम्

'शिवराजविजयः' भाषादृष्ट्या भावदृष्ट्या च 'उत्तमकोटिकाव्यम्' इति वक्तुं शक्यते। अस्मिन् प्रतिभायाः प्रौढता, कल्पनायाः सूक्ष्मता, अनुभवस्य गहनता, अभिव्यक्तेः स्पष्टता, भावानां यथार्थता रमणीयता च, पदावलीनां मधुरता, कथानकस्य प्रवाहमयता, आदर्शस्य स्थापना, शिवस्य भावना सुन्दरस्य सुन्दरता च निहिता विद्यते। उपन्यासदृष्ट्यापि कथानकपात्रघटनासंवादान्तर्द्वन्द्वाऽऽकांक्षादितत्त्वैः शिवराजविजयोऽयं समाहितोऽस्ति। पुनश्च ''गद्यं कविनां निकषं वदन्ति'' इत्यस्यां निकषतुलायामपि उपन्यासोऽयं स्वश्रेष्ठतां प्रमाणयति।

अस्मिन् उपन्यासे शिवराजविजये कथावस्तु-घटनोपन्यास-वर्णनवैविध्य-प्रकृतिचित्रण-संवादयोजना-रसालंकार-भाषासौष्ठवादिदृष्ट्या सर्वेषां विषयाणां सम्यक्तया समायोजनं कृतमस्ति। एतेषां सर्वेषामपि विषयाणां संक्षिप्तविवेचनं क्रियतेऽत्र -

**१. कथावस्तुयोजना** - ''शिवराजविजयः'' एकः ऐतिहासिकः उपन्यासोऽस्ति। एतस्य कथावस्तु शिववीरमाधारीकृत्यास्ति। काव्येऽस्मिन् त्रयः विरामाः सन्ति। प्रत्येकस्मिन् विरामे चत्वारः निःश्वासाः सन्ति। एतस्य नायकः शिवराजः नानासंघर्षान् सोढ्वाऽपि विजयं प्राप्नोति। रघुवीरसिंहः उपनायको वर्तते। एतस्य कथापि समानान्तररूपेण प्रचलति। गौरसिंह-श्यामसिंह-ब्रह्मचारिगुरु-देवशर्माद्यः नायकस्य सहायकाः सन्ति। कविना व्यासेन प्राचीनगद्यकाव्यपरम्परातः पृथक् स्वीयकथायोजना कृताऽस्ति। शिवराजविजयस्य कथानकः शिववीरम् ऐतिहासिकरूपेण उपस्थापयितुं समर्थोऽस्ति।

**२. नामकरणम्** - शिवराजस्य विजयः शिवराजविजयः। एतदधिकृत्य कृतं काव्यं शिवराजविजयम् इति नामकरणं युक्तियुक्तमेव प्रतीयते। पुनरपि समीक्षकैः उपन्यासः इत्याधारेण ''शिवराजविजयः'' इति नाम्ना सम्बोधयन्ति।

**३. घटनासंयोजनम्** - शिवराजविजयस्य प्रारम्भे शिवराजस्य यवनैः सह संघर्षस्य औचित्यमुपस्थाप्य योगिराजस्य प्रसङ्गः उपस्थापितः। तदनुसारं भूमिकामावतारयता कविना उक्तं यत् यत्र भारते पुरा याज्ञिकाः राजसूयादीन् यज्ञान् अकुर्वन्, वर्षवातातपहिमसहानि तपांसि च अतपन्, तत्रैव भारते अद्यत्वे म्लेच्छैः गावो हन्यन्ते, वेदाः विदीर्यन्ते, स्मृतयः संमृद्यन्ते, मन्दिराणि मन्दुरीक्रियन्ते, सत्यः पात्यन्ते सन्तश्च सन्ताप्यन्ते। एवम्भूतां भारतवर्षीयां दुर्दशां दर्शं दर्शं खिन्नचेतः शिववीरः एतां दुर्दशामपाकर्त्तुं ''कार्यं वा साधयेम, देहं वा पातयेम'' इति सिद्धान्तमनुसृत्य स्वीयविजययात्रां प्रारभते अन्ते च विजयं प्राप्नोति। अत्र सर्वा अपि घटनाः तथा संयोजिताः, याभिः पाठकानामुत्कण्ठा प्रतिक्षणं वर्धते।

**४. वर्णानां सौविध्यम्** - शिवराजविजयेऽपि पं० अम्बिकादत्तव्यासः कुत्रचित् सूर्योदय-रजनी-चन्द्रोदय-सूर्यास्तादीनां, क्वचिद् यवनाक्रान्तभारतभुवः, कुत्रचित् ब्रह्मचारि-तद्गुरुयोगिराजादीनां, क्वचित् राजपुत्रदेशस्य, क्वचित् च दुर्गस्थकुलाङ्गनावर्गस्य वर्णनं कृतवान् अस्ति। एवमेव अन्यत्र बङ्गदेशस्य, भीमानद्याः अमृतोदाख्यमहासरसः, शिवशौर्यसूचकस्य कोङ्कणदेशस्य, पर्वतश्रेणीनां, झञ्झावातस्य, तेजस्विनः क्षत्रियकुमारस्य, कुलीनायाः सौवर्ण्याः यजमानसन्ततिपालकस्य पुरोहितस्य, वेशपरिवर्तनपटोः गौरसिंहस्य, वातवर्षादिकमतिक्रम्य स्वामिकार्यं साधयितुं तत्परस्य रघुवीरस्य, यवनशिविराणां तत्सेनानायकस्य च वर्णानानि कृतानि सन्ति। सर्वाणि अपि सजीवतया चित्रितानि सन्ति।

**५. प्रकृतिचित्रणम्** - संस्कृतकविषु प्रकृतिवर्णनस्य परम्परा पूर्वकालादेव वर्तते। प्रकृतिचित्रणं येन कविना साफल्येन कृतं, सः कविरपि तावान् एव सफलः दृष्टः। महाकविः अम्बिकादत्तव्यासः प्रकृत्याः सुकुमारवर्णनेऽतितरां

सफलो विद्यते। शिवराजविजये सूर्योदय-सूर्यास्त-चन्द्रोदय-चन्द्रास्त-रात्रिरादिचित्रणमतीव रुचिरतया कृतमस्ति। यथा - **सूर्यास्तवर्णनं** - जगतः प्रभाजालमाकृष्य .......।

**आश्रमशोभावर्णनं** - कदलीदलकुञ्जायितस्य एतत्कुटीरस्य।

**नीरवनीशावर्णनं** - धीरसमीरस्पर्शेन मनदमन्दमान्दोल्यमानासु .....।

**झञ्झावातवर्णनं** - तावदकस्मादुत्थितो महान् झञ्झावातः ......।

**६. पात्राणां चरित्रचित्रणम्** - शिवराजविजये महाकविना अम्बिकादत्तव्यासेन पात्राणां चरित्रचित्रणं सर्वत्र यथार्थतायाः अवलम्बनं कृतमस्ति। एतस्य काव्यस्य प्रथमविरामे नायकः शिवराजः तत्सहयोगिनः गौरसिंह-श्यामसिंह-ब्रह्मचारिगुरु- देवशर्माद्यश्च यवनसेनानायकः अपजलखानश्चेति प्रमुखानि पात्राणि सन्ति।

अस्य नायकः शिववीरः धीरादात्तः विद्यते। अयं स्वधर्मरक्षणतत्परः राजनीतौ निष्णातः भारतीयादर्शानां पालकः संरक्षकश्चास्ति। पुनश्चायं स्वीयशौर्येण, पराक्रमेण सदाचारेण च सनातनधर्मं रक्षितुं तत्परोऽस्ति। "कार्यं वा साधयेम देहं वा पातयेम" इति सिद्धान्तमनुसरति शिववीरः।

शिवराजस्य सहायकपात्रेषु गौरसिंहः मुख्यः अस्ति। अयम् आकृत्या सुन्दरः, वर्णेन गौरः, जटाभिर्ब्रह्मचारी वयसा षोडशवर्षदेशीयः कम्बुकण्ठः आयतललाटः सुबाहुः विशाललोचनश्चास्ति।

शिवराजविजये प्रथमे विरामे अन्यत् प्रमुखपात्रमस्ति - रघुवीरसिंहः। अयं शिवस्य दौत्यकर्म करोति। शिववीरस्य विश्वसनीयोऽयं विनम्रः, कर्त्तव्यपरायणः सुभटश्चास्ति।

अस्य काव्यस्य एकमेव स्त्रीपात्रमस्ति - सौवर्णी। अस्याः चरित्रचित्रणं कविना एकस्याः कुलीनायाः भारतीयकन्यायाः प्रतिनिधिरूपेण कृतमस्ति।

**७. संवादयोजना** - व्यासमहोदयेन शिवराजविजये नाटकीय-प्रभावशालिसंवादानां योजनां विधाय संस्कृत-गद्यकाव्याय एका नूतनदिशा प्रदत्ता। संन्यासिगौरसिंहद्वारपालयोः संवादः तथा तानरंगापजलखानयोः संवादः अत्यन्तं नाटकीयरोचकौ स्तः। अस्य शिवराजविजयकाव्यस्य संवादाः अत्यन्तं स्वाभाविकाः चरित्रानुकूलाश्च सन्ति।

**८. रसयोजना** - 'वाक्यं रसात्मकं काव्यम्' इत्यनुसारम् आनन्दप्राप्तिस्तावत् काव्यस्य परमं प्रयोजनम्। काव्यात् उत्पन्नोऽयमानन्द एव रस इत्युच्यते। श्रीरम्बिकादत्तव्यासेन रसयोजना शिवराजविजये सफलतया कृताऽस्ति। अस्य शिवराजविजयस्य वीरः प्रधानरसः अन्ये च शृङ्गारादयः अत्र अङ्गभूताः सन्ति। रसानुसृत्य एतस्य भाषा क्वचित् ओजस्विनी समासयुक्ता च विद्यते। अपरत्र च माधुर्यगुणोपेता अल्पसमासयुक्ता असमासा वा अस्ति।

**९. अलंकारयोजना** - रसः अलङ्कारश्चेति द्वयमपि काव्ये चमत्कृतिम् उत्पादयति। शिवराजविजये सर्वत्रैव अलंकाराणां स्वाभाविकः प्रयोगः दृश्यते। अत्र विशेषतः उपमारूपकोत्प्रेक्षादीनामर्थालंकाराणां प्रयोगो दृश्यते। शब्दालंकारेषु विशेषरूपेण अनुप्रासस्य छविरेव दृष्टिगता भवति। यथा - **अनुप्रासः** - वीरता - सीमन्तिनी - सीमन्त.....।

**यमकः** - विलक्षणोऽयं भगवान् सकलकला-कलापकलनः....।

**रूपकः** - एष भगवान् मणिराकारामण्डलस्य ......।

**उत्प्रेक्षा** - समुदिते यामिनी कामिनी चन्दनविन्दौ.....।

**१०. भाषासौष्ठवम्** - मनोगतानां भावानामभिव्यञ्जनायै भाषा प्रमुखं साधनमस्ति। अत एव भावानुकूला भाषा प्रशस्ता मन्यते। शिवराजविजयस्य भाषा सरला सहजा भावानुरूपिणी प्रभावकारिणी चास्ति। प्रसङ्गानुसारं कविना व्यासेनात्र वाक्ययोजना तदनुकूलालंकारादीनाञ्च विन्यासो विहितोऽस्ति। यदि क्वचिद् सुदीर्घसमासा ओजस्विनी रचना अस्ति - चेदपरत्र असमासा मध्यमसमासा मधुरा च रचना अस्ति। सर्वत्र एव भाषाभावयोः सुन्दरः समन्वयः दृश्यते।

मीमांसाशब्दैः 'शिवराजविजयः' एकमुत्कृष्टं गद्यकाव्यमस्ति।

# अथ द्वितीयो निःश्वासः

**रात्रिर्गमिष्यति भविष्यति सुप्रभातं,**
**भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः।**
**इत्थं विचिन्तयति कोशगते द्विरेफे,**
**हा हन्त! हन्त! नलिनीं गज उज्जहार॥( स्फुटकम्)**

**प्रसङ्गः** – अयं श्लोकः श्रीमदम्बिकादत्तव्यासविरचितस्य शिवराजविजयमहाकाव्यस्य प्रथमविरामस्य द्वितीयनिःश्वासात् उद्धृतः अस्ति। अनेन स्फुटकश्लोकेन महाकविना द्वितीयनिःश्वासस्य कथा प्रतिबिम्बिता कृता अस्ति। 'ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयम्' इति सिद्धान्तेन अयं श्लोकः वस्तुनिर्देशात्मकः मङ्गलपरकोऽपि मन्यते।

**अन्वयः** – रात्रिः गमिष्यति, सुप्रभातं भविष्यति, भास्वान् उदेष्यति पङ्कजश्रीः च हसिष्यति। इत्थं विचिन्त्यति कोशगते द्विरेफे हा हन्त! हन्त! नलिनीं गज उज्जहार।

**पर्यायशब्दाः** – रात्रिः = निशा, गमिष्यति = यास्यति, सुप्रभातं = प्रातःकालः, भविष्यति, भास्वान् = सूर्यः, उदेष्यति = उदयं प्राप्स्यति, (तदा) पङ्कजश्रीः = कमलपुष्पं, हसिष्यति = विकसिष्यति, इत्थं = एवं, विचिन्तयति = चिन्तयति, कोशगते = कमलपुष्पपत्रे, द्विरेफे = भ्रमरे, हा हन्त! = कष्टं, नलिनीं = कमलम्, उज्जहार = उत्पाटयामास।

**गद्यांशव्याख्या** – एकस्मिन् कमलपुष्पे उपविष्टः कश्चित् भ्रमरः सायंकाले कमलपत्रेषु निबद्धः सञ्जातः। तदा तेन भ्रमरेण चिन्तितं यत् यदा रात्रिः यास्यति, प्रातःकालः सूर्योदयश्च भविष्यति तदा पुनः कमलपुष्पं विकसिष्यति। अहं बहिः गमिष्यामि। परञ्च तदा एव कश्चित् गजः तत्र आगत्य कमलपादपमेव उत्पाट्य क्षिप्तवान्।

**विशेषः** – द्विरेफः – द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः। उज्जहार = उत्+हृ+लिट् (तिप्)।

**मूलम् –** **इतस्तु स्वतन्त्र-यवनकुल-भुज्यमान-विजयपुराधीश-प्रेषितः पुण्यनगरस्य समीपे एव प्रक्षालित-गण्डशैल-मण्डलायाः, निर्झरवारिधारा-पूरपूरित-प्रबल-प्रवाहायाः, पश्चिम-पारावार-प्रान्तप्रसूत-गिरि-ग्राम-गुहा-गर्भ-निर्गताया अपि प्राच्यपयोनिधि चुम्बन-चञ्चुरायाः, रिङ्गत-तरङ्ग-भङ्गोद्धूतावर्त्त-शत-भीमायाः, भीमायाः नद्याः, अनवरत-निपतद्-बकुल-कुल-कुसुमकदम्ब-सुरभीकृतमपि नीरं वगाहमान-मत्त-मतङ्ग्ज-मद-धाराभिः कटूकुर्वन्; हय-हेषा-ध्वनि-प्रतिध्वनि-बधिरीकृत-गव्यूति-मध्यगाध्वनीनवर्गः, पटकुटीरकूट-विहित-शारदाम्भोधर-विडम्बनः, निरपराध-भारताऽभिजनजनपीडन-पातक-पटलैरिव समुद्धूयमान-नीलध्वजैरुपलक्षितः, विजयपुरेश्वर-स्यान्यतमः सेनानीः अपजलखानः प्रतापदुर्गादविदूर एव शिववीरेण सहाऽऽहवद्यूतेन चिक्रीडिषुः ससेनस्तिष्ठति स्म।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन विजयपुरनरेशेन प्रेषितस्य शिववीरेण सह युयुत्सोः अपजलखानस्य चित्रणं कृतमस्ति।

**पर्यायशब्दाः** – इतस्तु = द्वितीयस्तु, स्वतन्त्रं = स्वच्छन्दं, यद् यवनकुलं = म्लेच्छकुलं, तेन, भुज्यमानस्य = शास्यमानस्य, विजयपुरस्य = यन्नामकनगरस्य, अधीश्वरेण = स्वामिना, प्रेषितः = प्रहितः, पुण्यनगरस्य = पूनानगरस्य, समीपे एव = निकटे एव, प्रक्षालितगण्डशैलमण्डलायाः = धौतगिरिच्युतस्थूलशिलामण्डलायाः, निर्झराणां = स्रोतसां, वारिधारापूरैः = जलधारासमूहैः, पूरितः = भरितः, प्रबलः = वेगवान्, प्रवाहः = प्रवहणं, यस्यास्तस्याः, पश्चिमपारावारः

= पश्चिमसमुद्रः, तस्य, प्रान्ते = निकटे, यः गिरीणां = पर्वतानां, ग्रामः = समूहः, तस्य, गुहानां = गह्वराणां, गर्भतः = मध्यतः, निर्गतायाः = समुत्पन्नायाः, अपि, प्राच्य पयोनिधेः = प्राच्यसमुद्रस्य, चुम्बने = संश्लेषणे, चञ्चुरायाः = चञ्चलायाः, रिङ्गतां = चलतां, तरङ्गाणाम् = ऊर्मीणां, भङ्गैः = छेदैः, उद्भूताः = सञ्जाताः, ये आवर्तशतां = विभ्रमशताः, तैः भीमायाः = भीषणायाः, भीमायाः – 'भीमा' इति नाम्न्याः, नद्याः = सरितः, अनवरतं = निरन्तरं, निपततां = प्रच्यवतां, बकुलकुलकुसुमानां = वञ्जुलकुलपुष्पाणां, कदम्बेन = समूहेन, सुरभीकृतं = सुगन्धायितम्, अपि, नीरं = जलं, वगाहमानमत्तमङ्गजमदधाराभिः = निमज्जन्मत्तकरिदानवारिधाराभिः, कटूकुर्वन् = तिक्तीकुर्वन्, हयनाम् = अश्वानां, हेषाध्वनिः = हिन-हिने'ति रवस्तस्य, प्रतिध्वनिः = प्रतिनिःस्वनस्तेन, बधिरीकृतः = श्रुतिशक्तिविकलीकृतः, गव्यूतिमध्यगः = गव्यूत्यन्तवर्ती, अध्वनानवर्गः = पथिकसमूहः, येन सः, पटकुटीरकूटैः = उपकारिकासमूहैः, विहिता = सम्पादिता, शारदाम्भोधराणां = शरन्मेघानां, विडम्बना = अनुकृतिः, येन सः निरपराधभारताऽभिजनजनपीडनपातकपटलैः = निर्दोषभारतीयजनोत्पीडनपापराशिभिः इव, समुद्धूयमाननीलध्वजैः = प्रकम्पमाननीलपताकभिः, विजयपुरेश्वरस्य = बीजापुरनरेशस्य, अन्यतमः = अनेकेष्वेकः, सेनानीः = चमूपतिः, अपजलखानः = अफजलखाँ नामकः, प्रतापदुर्गात् = सिंहदुर्गात्, अविदूरे एव = निकटे एव, शिववीरेण सह, आहवद्यूतेन = युद्धद्दरोदरेण, चिक्रीडिषुः = क्रीडितुमिच्छुः, ससेनः = सेनायुक्तः, तिष्ठति स्म = अतिष्ठत्।

**गद्यांशव्याख्या** – अपरतः तु स्वच्छन्दं म्लेच्छकुलं शास्यमानस्य विजयपुरनामकनगरस्य स्वामिना प्रेषितः पुनानगरस्य निकटे एव श्वेतगिरि-पतितस्थूलशिलामण्डलायाः निर्झराणां जलधारासमूहैः पूरितः प्रबलप्रवाहयुक्तः, यस्याः तस्याः पश्चिमसमुद्रः, तस्य सन्निकटेः, यः पर्वतसमूहः, तस्य गुहागर्भतः समुत्पन्नायाः अपि प्राच्यसमुद्रस्य चुम्बने चञ्चलायाः चलततरङ्गाणां भङ्गैः उत्पन्नाः ये आवर्तशताः, तैः भीषणायाः भीमा' इति नाम्ना विख्याताः नद्यः निरन्तरं निपततबकुलकुलपुष्पाणां समूहेन सुरभीकृतम् अपि जलं निमज्जन्मत्तकरिदानवारिधाराभिः तिक्तीकुर्वन् अश्वानां हेषाध्वनिना बधिरीकृतः गव्यूतिमध्यगः पथिकसमूहः (येन सः) पटकुटीरकूटैः इव प्रकम्पमाननीलपताकाभिः बीजापुरनरेशस्य अन्यतमः चमूपतिः अपजलखाननामकः प्रतापदुर्गात् निकटे एव शिववीरेण सह युद्धं कर्त्तुमिच्छुकः सन् सेनासहितः स्थितो विद्यते।

**विशेषः** – भुज्यमानः – भुज्+यक्+शानच्।
प्रक्षालित – प्र+क्षाल्+णिच्+क्त।
निर्गता – निर्+गम्+क्त+टाप्।
निपतद् – नि+पत्+शतृ।
सुरभीकृत – सुरभि+च्वि+कृ+क्त।
कटूकुर्वन् – कटु+च्वि+कृ+शतृ+सु।
बधिरीकृत् – बधिर+च्वि+कृ+क्त।
वगाहमान – अव+गाह्+शानच ('अव' इत्यस्य विकल्पेन 'अ'कार लोपः।)
चिक्रीडिषुः – क्रीडितुमिच्छः – कीड्+सन्+उ+सु।

**मूलम्** – **अथ जगतः प्रभातजालमाकृष्य, कमलानि सम्मुद्र्य, कोकान् सशोकी कृत्य, सकल-चराचर-चक्षुः सञ्चार-शक्तिं शिथिलीकृत्य, कुण्डलेनेव निजमण्डलेन पश्चिमामाशां भूषयन्, वारुणी-सेवनेनेव माञ्जिष्ठ मञ्जिमरञ्जितः, अनवरत-भ्रमण-परिश्रम-श्रान्त इव सुषुप्सुः, म्लेच्छगणदुराचारदुःखाऽऽक्रान्त-वसुमतीवेदनामिव समुद्रशायिनि निविवेदयिषुः, वैदिक-धर्म-ध्वंस-दर्शन-सञ्जातनिर्वेद इव गिरिगहनेषु प्रविश्य तपश्चिकीर्षुः, घर्म-ताप-तप्त इव समुद्रजले**

**सिस्नासुः, सायं समयमवगत्य सन्ध्योपासनमिव विधित्सुः, ''नास्ति कोऽपि मत्कुले; यः सकण्ठग्रहं धर्म-ध्वंसिनो यवनहतकान् यज्ञियादस्माद् भारतगर्भान्निस्सारयेत्'' इति चिन्ताऽऽक्रान्त इव कन्दरि-कन्दरेषु प्रविविक्षुर्भगवान्, भास्वान्, क्रमशः क्रूरकरानपहाय, दृश्य-परिपूर्ण-मण्डलः संवृत्य, श्वेतीभूय, पीतीभूय, रक्तीभूय च गगनधरातलाभ्यामुभयत आक्रम्यमाण इवाऽण्डाकृतिमङ्गीकृत्य, कलि-कौतुक-कवलीकृत-सदाचार-प्रचारस्य पातक-पुञ्ज-पिञ्जरितधर्मस्य च यवन-गण-ग्रस्तस्य भारतवर्षस्य च स्मारयन्, अन्धतमसे च जगत् पातयन्, चक्षुषामगोचर एव संजातः।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन प्रकृतिवर्णनक्रमेऽलङ्कृतवाचा अस्तं गच्छन् भगवान् सूर्यः वर्णितोऽस्ति।

**पर्यायशब्दाः** – अथ = तदनन्तरं, जगतः = संसारस्य, प्रभातजालं = दीप्तिसमूहम्, आकृष्य = आकुञ्च्य, कमलानि = सरसिजानि, सम्मुद्र्य, कोकान् = चक्रवाकान्, सशोकीकृत्य = दुःखिनो विधाय, सकलचराचरचक्षुसञ्चारशक्तिं = समस्तस्थावरजङ्गमनेत्रक्रियाशक्तिं, शिथिलीकृत्य = अवरुद्ध्य, कुण्डलेन = कर्णाभरणेन, इव, निजमण्डलेन = स्वबिम्बेन, पश्चिमां = वारुणीं, दिशाम् = आशां, भूषयन् = अलङ्कुर्वन्, वारुणीसेवनेन = पश्चिमदिग्गमनेन मदिरा सेवनेन वा, इव, माञ्जिष्ठमञ्जिमरञ्जितः = माञ्जिष्ठरक्तिमारक्तः, अनवरतभ्रमणपरिश्रमश्रान्तः = सततसञ्चलनखेदखिन्नः, इव सुषुप्तुः = स्वप्तुमिच्छुः, म्लेच्छगुणस्य = यवनसमूहस्य, दुराचारैः = अनाचारैः, दुःखाऽऽक्रान्तायाः = व्यथाव्यथितायाः, वसुमतेः = वसुन्धरायाः, वेदनां = पीडाम् इव, समुद्रशायिनि = भगवति विष्णौ, निविवेदयिषुः = निवेदनं कर्तुमिच्छुः, वैदिकधर्मध्वंसदर्शनसञ्जातनिर्वेदः = सनातनधर्मविनाशोत्पन्ननिर्वेदः, इव, गिरिगहनेषु = पर्वतदुर्गमेषु, प्रविश्य = प्रवेशं कृत्वा, तपश्चिकीर्षुः = तपष्कर्त्तुमिच्छुः, घर्मतापतप्तः = तपनतापपीडितः, इव समुद्रजले = पयोधिपयसि, सिस्नासुः = स्नानं कर्तुमिच्छुः, सायं समयं = सूर्यास्तवेलायाम्, अवगत्य = ज्ञात्वा, सन्ध्योपासनमिव = सायन्तनं पूजन कर्म इव, विधित्सु = चिकीर्षुः, नास्ति = न विद्यते, कोऽपि = कश्चिदपि, मत्कुले = अस्मत्कुटुम्बे, यः सकण्ठग्रहं = कण्ठं गृहीत्वा, धर्मध्वंसिनः = धर्मविनाशकान्, यवनहतकान् = दुष्टम्लेच्छान्, यज्ञियात् = यज्ञसम्पादनयोग्यात्, अस्मात् = भारतगर्भात् = भारतभूमेः, निःसारयेत्, = बहिःकुर्यात्, इति = एतत्, चिन्ताक्रान्तः = चिन्ताग्रस्तः, इव, कन्दरिकन्दरेषु = पर्वतगुहासुः, प्रविविक्षुः = प्रवेष्टुमिच्छुः, भगवान् भस्वान् = ऐश्वर्यशाली सूर्यः, क्रमशः = शनैः शनैः, क्रुरकरान् = तीव्रकिरणान्, अपहाय = परित्यज्य, दृश्यपरिपूर्णमण्डलः = दृश्य सकलबिम्बः, संवृत्य = संच्छाद्य, श्वेतीभूय = धवलीभूय, पीतीभूय = पीतवर्णोभूत्वा, रक्तीभूय = रुधिरवर्णोभूत्वा, च, गगनधरातलाभ्यां = द्यावापृथिवीभ्याम्, उभयतः = आक्रम्यमाण इव = आक्रान्त इव, अण्डाकृतिम् = अण्डाकारम्, अङ्गीकृत्य = समेत्य, कलिकौतुककवलीकृतसदाचारप्रचारस्य = कलिकौतूहलविनष्टसदाचारस्य, पातकपुञ्जपिञ्जरितधर्मस्य = अघौघपीतधर्मस्य, यवनगणग्रस्तस्य = म्लेच्छवृन्दाक्रान्तस्य, अन्धतमसे = गाढान्धकारे, च जगत् = संसारं, पातयन् = समानयन्, चक्षुषां= नेत्राणाम्, अगोचरः = अदृश्यः, एव, संजातः = अभत्।

**गद्यांशव्याख्या** – तदनन्तरं संसारस्य प्रकाशसमूहम् आकुञ्च्य, कमलानि सम्पुट्य, चक्रवाकान् दुःखिनो विधाय, सम्पूर्णचराचरनेत्रक्रियाशक्तिम् अवरुद्ध्य कुण्डलेन इव स्वबिम्बेन पश्चिमीं दिशां भूषयन् पश्चिमदिग्गमनेन मदिरासेवनेन वा माञ्जिष्ठरक्तिमारक्तः, सततभ्रमणपरिश्रान्तः सन् शयनमिच्छुः यवनगणस्य अनाचारैः व्यथाव्यथितायाः वसुन्धरायाः पीडाम् इव भगवति विष्णौ निवेदनकर्त्तुमिच्छुः वैदिकधर्मविनाशोत्पन्ननिर्वेद इव पर्वतदुर्गमेषु प्रवेशं कृत्वा तपः कर्त्तुमिच्छुः तपनतापपीडित इव समुद्रजले स्नानकर्त्तुमिच्छुः सायं समयम् अवगत्य सायंकालीनपूजनकर्मकर्त्तुमिच्छुः 'न विद्यते कश्चिदपि मत्कुले, यः कण्ठं गृहीत्वा एतान् धर्मविनाशकान् दुष्टम्लेच्छान् यज्ञसम्पादनयोग्यात् अस्मात् भारतवर्षात् बहिः कुर्यादिति चिन्ताग्रस्त इव पर्वतगुहासु प्रवेष्टुमिच्छुः भगवान् भास्करः

शनैः शनैः तीक्ष्णकिरणान् परित्यज्य दृश्यपरिपूर्णबिम्बान् संवृत्य धवलीभूय पीतवर्णो भूत्वा रक्तीभूय च गगनधरातलौ उभयतः आक्रम्यमाण इव अण्डाकारम् अङ्गीकृत्य कलिकौतूहलविनष्टसदाचारस्य पातकपुञ्जपिञ्जरितधर्मस्य म्लेच्छवृन्दाक्रान्तस्य गाढान्धकारे च संसारं स्थापयन् नेत्रेभ्योऽदृश्यः एव सञ्जातः।

**विशेषः** – सम्मुद्र्य – सम्+मुद्+क्त्वा (ल्यप्)।

सशोकीकृत्य – सह+शोक+च्वि+कृ+ल्यप्।

शिथिलिकृत्य – शिथिल+च्वि+कृ+ल्यप्।

निविवेदयिषुः – नि+विद्+सन्+उ+सु।

चिकीर्षुः – कृ+सन्+उ+सु।

सिस्नासुः – स्ना+सन्+उ+सु।

विधित्सुः – वि+धा+सन्+उ+सु।

प्रविविक्षुः – प्र+विश्+सन्+उ+सु।

आक्रम्यमाणः – आ+क्रम+यक्+शानच्+सु।

स्मरयन् – स्मृ+णिच्+शतृ+सु।

पातयन् – पत्+णिच्+शतृ+सु।

अगोचरः – नञ्+गो+चर्+अच्+सु।

सञ्जातः – सम्+जनि+क्त+सु।

**मूलम्** – **ततः संवृत्ते किञ्चिदन्धकारे धूप-धूमेनेव व्याप्तासु हरित्सु भुशुण्डीं स्कन्धे निधाय निपुणं निरीक्षमाणः, आगत-प्रत्यागतञ्च विदधानः, प्रतापदुर्ग- दौवारिकः, कस्यापि पादक्षेपध्वनिमिवाऽश्रौषीत्। ततः स्थिरीभूय पुरतः पश्यन् सत्यपि दीप-प्रकाशेऽवतमसवशादागन्तारं कमप्यनवलोकयन्, गम्भीरस्वरेणैवमवादीत् – ''कः कोऽत्र भोः?'' इति।**

**अथ क्षणानन्तरं पुनः स एव पादध्वनिरश्रावीति भूयः साक्षेपमवोचत् – ''क एष मामनुत्तरयन् मुमूर्षुः समायाति बधिरः?''**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन द्वाररक्षणसंलग्नकस्य द्वारपालस्य वर्णनं कृतमस्ति।

**पर्यायशब्दाः** – ततः = तदनन्तरं, किञ्चित् = ईषत्, अन्धकारे = तमसि, संवृत्ते = जाते, धूपधूमेनेव = ग्रीष्मधूमेनेव, हरित्सु = दिशासु, व्याप्ता = आच्छादितासु, भुशुण्डी = आग्नेयास्त्रं, स्कन्धे = अंसदेशे, निधाय = स्थापयित्वा, निपुणं = सम्यक्, निरीक्षमाणः = समवलोकयन्, आगतप्रत्यागतञ्च = गमनगमञ्च, विदधानः = कुर्वाणः, प्रतापदुर्गदौवारिकः = प्रतापनाम्नः दुर्गस्य द्वारपालः, कस्यापि = कस्यचिदपि, पादक्षेपध्वनिं = पादसङ्क्रमणशब्दम्, अश्रौषीत् = श्रुतवान्। ततः = तदनन्तरं, स्थिरीभूय = स्थित्वा, पुरतः = अग्रे, पश्यन् = अवलोकयन्, दीपप्रकाशे = प्रदीपालोके, अवतमसवशात् = ईषदन्धकारवशात्, आगन्तारम् = आगन्तुकं, कमपि = कञ्चिदपि, अनवलोकयन् = अपश्यन्, गम्भीरस्वरेण = उच्चस्वरेण, अवादीत् = अवदत्, कः = कोऽत्र, भोः = कोऽस्त्यत्र भोः, इति = एवम्। अथ = अनन्तरं, क्षणानन्तरं = किञ्चिद्-बिलम्ब्य, पुनः = भूयः, स एव = पूर्वविध एव, पादध्वनिः = चरणनिक्षेपशब्दः, अश्रावि = श्रुति इति, भूयः = पुनः, साक्षेप = सक्रोधम्, अवोचत् = अवादीत् – क एषः, मां = द्वारपालम्, अनुत्तरयत् = उत्तरमददन्, मुमूर्षुः = मर्तुमिच्छुः, बधिरः = श्रोतुमशक्तः, समायाति = समागच्छति?

**गद्यांशव्याख्या** – तदनन्तरं किञ्चित् अन्धकारे भूते सति तथा आतपधूमेन आच्छादितासु दिशासु भुशुण्डीं

स्कन्धे स्थापयित्वा सम्यक् समवलोकयन् इतस्ततः अटनं कुर्वन् च प्रतापदुर्गस्य द्वारपालः कस्यापि पादसञ्चालनध्वनिं श्रुतवान्। तत्पश्चात् किञ्चित् स्थित्वा अग्रे अवलोकयन् प्रदीपालोकेऽपि किञ्चिदन्धकारकारणात् कमपि आगन्तुकम् अदृष्ट्वा उच्चस्वरेण उक्तवान् – भोः कोऽस्ति? अत्र अरे कोऽस्ति अत्र?

किञ्चित् क्षणादनन्तरमपि पुनः तदेव पादध्वनिः श्रुतः। तदा क्रोधेन द्वारपालः उक्तवान् – कोऽपि बधिरो विद्यते, यः मम प्रत्युत्तरं विनैव मर्त्तुम् इच्छुकः समागच्छति।

**विशेषः** – संवृत्ते – सम्+वृत्+क्त+ङि।

निरीक्षणमाणः – निर्+ईक्ष्+शानच्+सु।

विदधानः – वि+धा+शानच्+सु।

आगन्तारम् – आङ्+गम्+तृच्+अम्।

अश्रौषीत् – श्रु+लुङ्+तिप्।

मुमुर्षुः – मृ+सन्+उ+सु।

**मूलम्** – **ततो ''दौवारिक! शान्तो भव, किमिति व्यर्थं मुमूर्षुरिति बधिर इति च वदसि?'' इति वक्तारमपश्यतैवाऽऽकर्णि मन्द्रस्वरमेदुरा वाणी। अथ ''तत्किं नाज्ञायि अद्यापि भवता प्रभुवर्य्याणामादेशो यद् दौवारिकेण प्रहरिणा वा त्रिः पृष्टोऽपि प्रत्युत्तरमददद् हन्तव्य इति'' इत्येवं भाषमाणेन द्वाः स्थेन ''क्षम्यतामेष आगच्छामि, आगत्य च निखिलं निवेदयामि'' इति कथयन् द्वादशवर्षेण केनापि भिक्षुबटुनाऽनुगम्यमानः, कोऽपि काषायवासाः, धृत-तुम्बी-पात्रः, भस्मच्छुरित-ललाटः, रुद्राक्ष-मालिका-सनाथित-कण्ठः, भव्यमूर्तिः संन्यासी दृष्टः। ततस्तयोरेवमभूदालापः –**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन प्रतापदुर्गस्थस्य द्वारपालस्य आगन्तुकजनस्य च संवादः वर्णितोऽस्ति।

**पर्यायशब्दाः** – ततः = तदनन्तरं, दौवारिक = द्वारपाल, शान्तो भव = तूष्णीं भव, किमिति = कथं, व्यर्थं = निष्प्रयोजनं, मुमूर्षः = मर्तुमिच्छुः, इति, बधिर इति = श्रवणसमर्थ इति, च वदसि = कथयसि?, इति, वक्तारं = कथयितारम्, अपश्यता एव = अनवलोकयता एव, मन्द्रस्वरमेदुरा गंभीरस्वरस्निग्धगिरा, आकर्णि = अश्रावि। अथ = ततः, तत्किम् = इति प्रश्ने, किं नाज्ञायि = किं न ज्ञात, भवता = त्वया, प्रभुवर्य्याणां = स्वामिमहाभागानाम्, आदेशः = शासनं, यत्, दौवारिकेण = द्वारपालेन, प्रहरिणा वा = यामिकेन वा, त्रिः = वारत्रयं, पृष्ठोऽपि = जिज्ञासितोऽपि, प्रत्युत्तरं = प्रतिवचनम्, अददद् = अप्रयच्छन्, हन्तव्यः = हननीयः इति, इत्येवं = इत्थं, भाषमाणेन = उच्यमानेन, द्वाःस्थेन = द्वारस्थितेन, क्षम्यतां = क्षमा कर्त्तव्या, एषः = अयम्, आगच्छामि = आयामि, आगत्य च = समेत्य च, निखिलं = सकलं वृत्तं, निवेदयामि = कथयामि, इति = एवं, कथयन् = भाषमाणः, द्वादशवर्षेण = द्वादशहायनेन, केनापि, भिक्षुबटुना = भिक्षुबालकेन, अनुगम्यमानः = अनुसृतः, कोऽपि = कश्चित्, कषायवासाः = कषायवस्त्रधारी, धृततुम्बीपात्रः = गृहीततुम्बीकः, भस्मछुरितललाटः = भस्मशोभितमस्तकः, रुद्राक्षमालिका = सनाथितकण्ठः = रुद्राक्षस्रग्विभूषितकण्ठः, भव्यमूर्तिः = भव्याकृतिः, संन्यासी = विरक्तः साधुः, दृष्टः = अवलोकितः। ततः = तदनन्तरं, तयोः = द्वारपालसंन्यासिनो, एवम् = इत्थम्, आलापः = वार्ता, अभूत् = अभवत्।

**गद्यांशव्याख्या** – तदा, 'द्वारपाल! सतूष्णीं भव, किमर्थं व्यर्थमेव मर्तुमिच्छुकः बधिरश्चेति वदति' इति द्वारपालेन वक्तुः विना दर्शनमेव गम्भीरस्वरेण स्निग्धवाणी श्रुता। एतदनन्तरं, किं भवान् एतावत्पर्यन्तं महाराजस्य एतम् आदेशं न जानाति यत् द्वारपालेन प्रहरिणा च वारत्रयं पृष्टोऽपि यदि कश्चित् उत्तरं न ददाति तर्हि सः हन्तव्य इति' इत्थं भाषमाणेन द्वारस्थितेन क्षम्यताम्। अहम् आगच्छामि आगत्य च सर्वं कथयामि इति कथयन् द्वादशवर्षीयेण केनापि

भिक्षुबालकेन अनुगम्यमानः कश्चित् कषायवस्त्रधारी गृहीततुम्बीकः भस्मशोभितमस्तकः रुद्राक्षमालाविभूषितकण्ठः भव्याकृतिः संन्यासी अवलोकितः। तदनन्तरं तयोः द्वारपालसंन्यासिनोः इत्थं वार्त्ता सञ्जाता।

**विशेषः** – वक्तारम् – वच्+तृच्+अम्।
अपश्यता – नञ्+दृश्+शतृ+टा।
आकर्णि – आ+कर्ण+लुङ्+तिप्।
अज्ञायि – ज्ञा+लुङ्+तिप्।
आदेशः – आङ्+दिश्+घञ्+सु।
अददद् – नञ्+दा+शतृ+सु।
हन्तव्य – हन्+तव्यत्+सु।
भाषमाणेन – भाष्+शानच्+टा।
आगत्य – आ+गम्+क्त्वा (ल्यप्)।
अनुगम्यमानः – अनु+गम्+यक्+शानच्+सु।
दृष्टः – दृश्+क्त+सु।

**मूलम् – संन्यासी – कथमस्मान् संन्यासिनोऽपि कठोरभाषणैस्तिरस्करोषि?**

**दौवारिकः – भगवन्! भवान् संन्यासी तुरीयाश्रमसेवीति प्रणम्यते, परन्तु प्रभूणामाज्ञामुल्लङ्घ्य निजपरिचयमददेवाऽऽयातीत्याक्रुश्यते।**

**संन्यासी – सत्यं क्षान्तोऽयमपराधः, परमद्यावधि, संन्यासिनः, ब्रह्मचारिणः, पण्डिताः, स्त्रियः, बालाश्च न किमपि प्रष्टव्याः, आत्मानमपरिचाययन्तोऽपि प्रवेष्टव्याः।**

**दौवारिकः – संन्यासिन्! संन्यासिन्! बहूक्तम्, विरम, न वयं दौवारिका ब्रह्मणोऽप्याज्ञां प्रतीक्षामहे। किन्तु यो वैदिकधर्मरक्षाव्रती, यश्च संन्यासिनां ब्रह्मचारिणां तपस्विनाञ्च संन्यासस्य ब्रह्मचर्यस्य तपश्चान्तरायाणां हन्ता, येन च वीरप्रसविनीयमुच्यते कोङ्कणदेशभूमिः, तस्यैव महाराज-शिववीरस्याऽऽज्ञां वयं शिरसा वहामः।**

**प्रसङ्गः** – गद्यांशेऽस्मिन् महाकविना श्रीमदम्बिकादत्तव्यासेन प्रतापदुर्गद्वारपालसंन्यासिनोः संवादः वर्णितोऽस्ति।

**पर्यायशब्दाः – संन्यासी** – कथम् = किम्, अस्मान् संन्यासिनोऽपि = मादृशान् विरक्तान्नपि, कठोरभाषणैः = परुषवचनैः, तिरस्करोषि = अपमन्यसे?

**दौवारिकः** – भगवन् = महायश!, भवान् = त्वं, संन्यासी = विरक्तः, तुरीयाश्रमसेवी = चतुर्थाश्रमसेवी, इति अस्माद्धेतोः, प्रणम्यते = अभिवाद्यते, परन्तु प्रभूणां = स्वामिनाम्, आज्ञाम् = आदेशम्, उल्लङ्घ्य = उल्लघनं कृत्वा, निजपरिचयं = स्वाभिज्ञानम्, अददत् = अप्रयच्छन्, एव, आयाति = आगच्छति, इति अस्मात्, आक्रुश्यते = आकुप्यते।

**संन्यासी** – सत्यं = यथार्थं, क्षान्तः = मर्षितः, अयम्, अपराधः = दोषः, परं = किन्तु, अद्यावधि = अद्यत आरभ्य, संन्यासिनः = तुरीयाश्रमस्था, ब्रह्मचारिणः = ब्रह्मचर्यवर्तिनः, पण्डिताः = विद्वांसः, स्त्रियः = नार्यः, बालाश्च = बालकाश्च, न किमपि = न किञ्चिदपि, प्रष्टव्याः = प्रश्नं कर्त्तव्याः, आत्मानं = स्वम्, अपरिचाययन्तः = परिचयमददतः अपि, प्रवेष्टव्याः = प्रवेशं कर्त्तव्याः।

**दौवारिकः** – संन्यासिन्! संन्यासिन्! बहूक्तं = बहुभाषितं, विरम = विश्रम, वयं, दौवारिकाः = द्वारपालाः, ब्रह्मणः = विधातुः, अपि, आज्ञाम् = आदेशं, न प्रतीक्षामहे = न मन्ये। किन्तुः य शिवः, वैदिकधर्मरक्षाव्रती =

वेदविहितधर्मरक्षकः, यश्च, संन्यासिनां = तुरीयाश्रमसेविनां, संन्यासिन् ब्रह्मचारिणां = बटूनां, तपस्विनाञ्च = तपस्तप्तानां च, संन्यासस्य = वैराग्यस्य, ब्रह्मचर्यस्य, तपसः = तपस्यायाः, च अन्तरायाणां = विघ्नानां, हन्ता = निवारिता, येन = शिवेन, च, वीरप्रसविनि = वीरप्रसूता, इयम् = एषा, उच्यते = कथ्यते, कोङ्कणदेशभूमिः = कोङ्कणदेशनाम्नः वसुन्धरा, तस्यैव = एतद्विधस्यैव, महाराजशिवस्य = तत्रभवतः शिववीरस्य, आज्ञाम् = आदेशं, वयं = दौवारिकाः, शिरसा = मस्तकेन, वहामः = धारयामः।

**गद्यांशव्याख्या** – संन्यासी – कथं मादृशाः संन्यासिनोऽपि कठोरभाषणैः तिरस्क्रियन्ते?

द्वारपालः – भगवन्! भवान् संन्यासी चतुर्थाश्रमसेवी अस्ति। अतः भवन्तं प्रणमामि। परन्तु भवान् स्वामिनः आदेशस्य उल्लंघनं कृत्वा स्वपरिचयम् अप्रयच्छन् एव आगच्छन् अस्ति। अत एव क्रुद्धः सञ्जातः।

संन्यासी – सत्यमुक्तम्। भवतः अयम् अपराधः क्षान्तः। परन्तु अद्य आरभ्य संन्यासिनः ब्रह्मचारिणः, विद्वांसः नार्यः बालकाश्च न किमपि प्रष्टव्याः। विना परिचयप्रदानमपि एतेषां प्रवेशः कार्यः।

दौवारिकः – संन्यासिन्! संन्यासिन्! बहुभाषितम्। तूर्ष्णीं तिष्ठ। वयं द्वारपालाः ब्रह्मणोऽपि आदेशं न मन्यामहे। किन्तु यः वैदिकधर्मस्य रक्षणतत्परः यः संन्यासिनां, ब्रह्मचारिणां तपस्विनां च संन्यासस्य, ब्रह्मचर्यस्य तपसश्च विघ्नानां नाशको विद्यते तथा येन कोङ्कणदेशस्य भूमिः वीरप्रसविनी उच्यते, तस्यैव महाराजशिववीरस्य आज्ञां शिरसा धारयामः।

**विशेषः** – प्रणम्यते – प्र+नम्+य+लट्+त।

उल्लङ्घ्य – उत्+लङ्घ्+क्त्वा (ल्यप्)।

आक्रुश्यते – आङ्+क्रुश्+यक्+त।

प्रवेष्टव्याः – प्र+विश्+तव्यत्+जस्।

उच्यते – वच्+यक्+लट्+त।

**मूलम् – संन्यासी – अथ किमप्यस्तु, पन्थानं निर्दिश, आवां शिववीरनिकटे जिगमिषावः।**

**दौवारिकः – अलमालप्यापि तत्; प्राह्ले महाराजस्य सन्ध्योपासनसमये भवादृशानां प्रवेशसमयो भवति; न तु रात्रौ?**

**संन्यासी – तत्किं कोऽपि न प्रविशति रात्रौ?**

**दौवारिकः – (साक्षेपम्) कोऽपि कथं न प्रविशति? परिचिता वा प्राप्त–परिचयपत्रा वा आहूता वा प्रविशन्ति, न तु भवादृशाः; ये तुम्बीं गृहीत्वा द्वाराद् द्वारम् – इति कथयन्नेव तत्तेजसेव घर्षितो मध्य एव विरराम।**

**संन्यासी – (स्वगतम्) राजनीति–निष्णातः शिववीरः। सर्वथा दौवारिकता–योग्य एवायं द्वारपालः स्थापितोऽस्ति। परीक्षितमप्येनमेकस्मिन् विषये पुनः परीक्षिष्ये तावत्। (प्रकटम्) दौवारिक! इत आयाहि, किमपि कर्णे कथयिष्यामि।**

**दौवारिकः – (तथा कृत्वा) कथ्यताम्।**

**प्रसङ्गः** – गद्यांशेऽस्मिन् महाकविना श्रीमदम्बिकादत्तव्यासेन प्रतापदुर्गस्थद्वारपालसंन्यासिनोः संवादः वर्णितोऽस्ति।

**पर्यायशब्दाः – संन्यासी** – अथ, किमप्यस्तु = किमपि भवतु, पन्थानं = मार्गं, निर्दिश = ज्ञापय, आवां = बटु–संन्यासिनौ, शिववीरनिकटे = शिववीरपार्श्वे, जिगमिषावः = गन्तुमिच्छावः।

**दौवारिकः** – तत् अलमालप्यापि = एतदालपनीयमपि नास्ति, प्राह्ले = पूर्वाह्ने, महाराजस्य = शिववीरस्य,

सन्ध्योपासनसमये = सान्ध्यपूजनावसरे, भवादृशानां = साधुसंन्यासिनां, प्रवेशसमयः = प्रवेशकालः, भवति न तु रात्रौ = निशायां प्रवेशसमयो न भवति।

**संन्यासी** – तत्किम् = तर्हिकिम्, कोऽपि = कश्चिदपि, रात्रौ = नक्तं, न प्रविशति = न प्रविष्टो भवति?

**दौवारिकः** – (सक्रोधम्) कोऽपि कश्चिदपि, कथं कस्मात्, न प्रविशति = न प्रविष्टो भवति? परिचिताः = परिज्ञातजनाः, प्राप्तपरिचपत्राः = प्राप्ताभिज्ञापत्राः, वा = अथवा, आहूताः = आमन्त्रिताः, प्रविशन्ति = प्रवेशं कुर्वन्ति, न तु, भवादृशाः = त्वत्सदृशाः, ये, तुम्बीं = तुम्बीपात्रं, गृहीत्वा = संगृह्य, द्वाराद्द्वारं = गृहाद्गृहम्, इति = एवं, कथयन्नेव = भाषमाण एव, तत्तेजसा = संन्यासिदीप्त्या, घर्षितः = भीतः, मध्ये एव = अन्तरा एव, विरराम = तूष्णीमभूत्। संन्यासी (मनस्वी) राजनीतिनिष्णातः = राजनीतिनिपुणः, शिववीरः = एतन्नामकः नृपतिः सर्वथा = सर्वप्रकारेण, दौवारिकतायोग्यः = द्वारपालकर्मोचितः, एव अयं, द्वारपालं = दौवारिक, स्थापितोऽस्ति = नियुक्तोऽस्ति। परीक्षितं = परीक्षाकृताऽस्य, अपि, एनम् = इमम्, एकस्मिन् = अन्यस्मिन्, विषये, पुनः = भूयः, परीक्षिष्ये = परीक्षां करिष्ये, तावत्। (प्रकटं = प्रकाशं) दौवारिकः = द्वारपालः, इत् आयाहि = अत्र आगच्छ, किमपि = किञ्चिद्, कर्णे = श्रोत्रे, कथयिष्यामि = वदिष्यामि।

**दौवारिकः** – (तथा कृत्वा समेत्य तं) कथ्यताम् = उच्यताम्।

**गद्यांशव्याख्या – संन्यासी** – अस्तु, यत्किमपि स्यात्, मार्गं दर्शय। आवां शिववीरस्य सविधं गन्तुमिच्छावः।

**दौवारिकः** – (सक्रोधं) कश्चिदपि किमर्थं न प्रविशति? परिचितः, परिचयपत्र प्राप्तकर्त्ता अथवा आमन्त्रितास्तु प्रविशन्ति, न तु भवादृशाः – ये तुम्बीं गृहीत्वा द्वारात् द्वारम् – इति कथयन् एव संन्यासिनः तेजसा भीतः सन् मध्ये एव तूष्णीमभूत्।

**संन्यासी** – (स्वमनसि) शिववीरः राजनीतौ पारङ्गतः अस्ति। सर्वथा द्वारपालकर्मोचित एव दौवारिकः नियुक्तः अस्ति। यद्यपि अस्य परीक्षा तु स्वीकृता। पुनरपि परीक्षां करोमि। (प्रकाशं) द्वारपाल! अत्र आगच्छतु, किमपि कर्णे वदिष्यामि।

**दौवारिकः** – (तस्य कथनानुसृत्य) उच्यताम्।

**विशेषः** – राजनीतौ निष्णातः – राजनीतिनिष्णातः (सप्तमी तत्पुरुषः)।

निर्दिश – निर्+दिश्+लोट्+सिप्।

जिगमिषावः – गम्+सन्+लट्+वस्।

निष्णातः – नि+स्ना+क्त+सु।

**मूलम् – संन्यासी – निरीक्षस्व त्वमधुना दौवारिकोऽसि, प्राणानगणयन् जीविकां निर्वहसि, त्वं सहस्त्रं वाऽयुतं वा मुद्रा राशीकृताः कदापि प्राप्स्यसीति न कथमपि संभाव्यते।**

**दौवारिकः – आम्, अग्रे कथ्यताम्।**

**संन्यासी – वयञ्च संन्यासिनो वनेषु गिरिकन्दरेषु च विचरामः, सर्वं रसायन् तत्त्वं विद्मः।**

**दौवारिकः – स्यादेवम्, अग्रे अग्रे?**

**संन्यासी – तद् यदि त्वं मां प्रविशन्तं न प्रतिरुन्धेः तदधुनैव परिष्कृतं पारद-भस्म तुभ्यं दद्याम्, यथा त्वं गुञ्जामात्रेणापि द्वापञ्चाशत्सङ्ख्यातु लापरिमितं ताम्रं जाम्बूनदं विधातुं शक्नुयाः।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन संन्यासिना प्रदत्तोत्कोचलोभेन द्वारपालस्य परीक्षणं वर्णितमस्ति।

**पर्यायशब्दाः – संन्यासी** – निरीक्षस्व = अवलोकय, त्वं = द्वारपालम्, अधुना = इदानीं, दौवारिकोऽसि =

द्वारपालोऽसि, प्राणान् = असून्, अगणयन् = अचिन्तयन्, जीविकां = जीवनवृत्तिं, निर्वहसि = धारयसि, त्वं, सहस्रवाऽयुतं वा = अत्यधिकं, मुद्राः = रूप्यकाणि, राशीकृताः = सञ्चिताः, कदापि, प्रापयसि = प्राप्तं करिष्यसि, इति = एतत्, कथमपि = केनापि प्रकारेण, न सम्भाव्यते = न सम्भवति।

**दौवारिकः** – आं = बाढम्, अग्रे कथ्यताम् = अग्रे वदतु।

**संन्यासी** – वयञ्च संन्यासिनः = वयं, विरक्ताः, वनेषु = अरण्येषु, गिरिकन्दरेषु, पर्वतगुहासु च, विचरामः = भ्रमामः, सर्वं = निखिलं, रसायनतत्वम् = औषधिविशेषसामर्थ्यं, विद्मः = जानीमः।

**दौवारिकः** – स्यादेवं – भवेदेवम्, अग्रे–अग्रे कथ्यतां = कथयतु।

**संन्यासी** – तत् = तर्हि, यदि = चेत्, त्वं मां = संन्यासिनं, प्रविशन्तं = प्रवेशं कुर्वन्तं, न प्रतिरुन्धेः = न प्रतिवारयेः, तत् = तर्हि, अधुनैव = इदानीमेव, परिष्कृतं = शोधितं, पारदभस्मं = रसविशेषं, तुभ्यं = द्वारपालाय, दद्याम = प्रयच्छेयं, यथा = येन, त्वं = द्वारपालः, गुञ्जामात्रेण = गुञ्जापरिभिः तेन, अपि, द्वापञ्चाशतसङ्ख्यातुलापरिमितं, ताम्रं = धातुविशेषं, जाम्बूनदं = सुवर्णं, विधातुं = निर्मातुं, शक्नुयाः = समर्थो भवेः।

**गद्यांशव्याख्या** – संन्यासी – पश्यतु, भवान् इदानीं द्वारपालोऽस्ति। प्राणानां चिन्तनं विनैव जीविकां करोति। भवान् सहस्रं दशसहस्रञ्च रुप्यकाणि कदापि प्राप्तुं शक्ष्यति एत्तु केनापि प्रकारेण सम्भवं नास्ति।

दौवारिकः – अस्तु, पुनरुच्यताम्।

संन्यासी – वयन्तु संन्यासिनः स्मः। अरण्येषु पर्वतगुहासु च भ्रमामः। सर्वं रसायनतत्त्वं जानीमः।

दौवारिकः – स्यात् एतत्। अग्रे किम्?

संन्यासी – यदि भवान् अन्तः प्रवेशकाले न अवरोधयिष्यति तर्हि इदानीमेव भवते परिष्कृतपारदभस्म ददामि। येन गुञ्जामात्रेणापि द्वापञ्चाशत्सङ्ख्याकतुलापरिमितं ताम्रधातुकं सुवर्णं कर्तुं शक्यते।

**विशेषः** – अगणयन् – नञ्+गण्+णिच्+शतृ+सु।

प्रतिरुन्धेः – प्रति+रुधि+विधिलिङ्+सिप्।

प्रविशन्तम् – प्र+विश्+शतृ+अम्।

गिरिकन्दरेषु – गिरीणां कन्दराः, तेषु। (ष० तत्पुरुषसमासः)।

**मूलम् – दौवारिकः – हंहो! कपटसंन्यासिन्!। कथं विश्वासघातं स्वाामिवञ्चनञ्च शिक्षयसि? ते केचनान्ये भवन्ति जार–जाताः, ये उत्कोचलोभेन स्वामिनं वञ्चयित्वा आत्मानमन्धतमसे पातयन्ति, न वयं शिवगणास्तादृशाः। ( संन्यासिनो हस्तं धृत्वा ) इतस्तु सत्यं कथय कस्त्वं? कुतः आयातः? केन वा प्रेषितः?**

**संन्यासी – ( स्मित्वेव ) अथ त्वं मां कं मन्यसे?**

**दौवारिकः – अहं तु त्वामस्यैव ससेनस्याऽऽयातस्य अपजलखानस्य –**

**संन्यासी – ( विनिवार्य मध्य एव ) धिग् धिग्!**

**दौवारिकः – कस्याप्यन्यस्य वा गूढचरं मन्ये। तदादेशं पालयिष्यामि प्रभुवर्यस्य ( हस्तमाकृष्य ) आगच्छ दुर्गाध्यक्षसमीपे, स एवाभिज्ञाय त्वया यथोचितं व्यवहरिष्यति।**

**ततः संन्यासी तु – ''त्यज, नाहं पुनरायास्यामि, नाहं पुनरेवं कथयिष्यामि, महाशयोऽसि दयस्व दयस्व'' – इति सहस्रधा समचकथत्, तथापि दौवारिकस्तु तमाकृष्य नयन्नेव प्रचलितः।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन परीक्षणतत्परसंन्यासिद्वारपालयोः संवादः

वर्णितोऽस्ति।

**पर्यायशब्दाः** – हंहो = इति आश्चर्ये, कपटसंन्यासिन् = प्रवञ्चकयोगिन्, कथं, विश्वासघातं = विश्वासविनाशं, स्वामिवञ्चनञ्च = प्रभुप्रतारणं च, शिक्षयसि = उपदिशसि? ते केचन, अन्ये = अपरे, भवन्ति = जायन्ते, जारजाताः = स्वैरजाताः, ये, उत्कोचलोभेन = कर्त्तव्यच्युतविधिनोपग्राह्यधनलोभेन, स्वामिनं = प्रभुं, वञ्चयित्वा = प्रतार्य, आत्मानं = स्वम्, अन्धतमसे = घोरे नरके, पातयन्ति = प्रक्षिपन्ति, न वयं, शिवगणाः = शिववीरस्य चाराः, तादृशाः = तथाविधाः। (संन्यासिनः करमुपगृह्य) इतस्तु = इतः आगच्छ, सत्यम् = अलीकं, कथय = वद, कस्त्वं = त्वं कोऽसि? कुत आयातः = कुत्रस्य आगतः? वा = आहोस्वित्, केन प्रेषितः = कस्य प्रेरणयागतोऽत्र?

**संन्यासी** – (स्मित्वेव) अथ = तावत, त्वं = द्वारपालः, मां = संन्यासिनं, कं, मन्यसे = जानासि।

**दौवारिकः** – अहं तु, त्वां = संन्यासिनम्, अस्यैव = निकटस्थस्यैव, आयातस्य = आगतस्य, अपजलखानस्य = एतन्नामकस्य ........।

**संन्यासी** – (अवरुध्य मध्ये एव) धिक् तम्।

**दौवारिकः** – कस्यापि = कस्यचिदपि, अन्यस्य = अपरस्य, वा = अथवा, गूढचरं = गुप्तचरं, मन्ये = जानामि, तदादेशं = तर्हि आदेशं, पालयिष्यति = पालनं करिष्यामि, प्रभूवर्यस्य = श्रीमतः स्वामिनः। करमाकृष्य, आगच्छ = आयाहि, दुर्गाध्यक्षसमीपे = दुर्गपतिपार्श्वे, स एव = दुर्गाध्यक्ष एव, अभिज्ञाय = अवगम्य, त्वया = संन्यासिना, यथोचितं = शासनादेशपूर्वकं, व्यवहरिष्यति = व्यवहारं करिष्यति।

ततः = तत्पश्चात्, संन्यासी = परिवाट्, तु त्यज = मुञ्च, नाहं पुनरेवं कथयिष्यामि = भूयरेवं भणिष्यामि, महाशयोऽसि = उदारहृदयोऽसि, दयस्व दयस्व = दयां कुरु, दयां कुर्विति। सहस्रधा = बहुधा, समचकथत् = समवोचत्, तथापि, दौवारिकः = द्वारपालः, तु तमाकृष्य = संन्यासिनमाकृष्य, नयन्नेव = संकर्षन्नेव, प्रचलितः = संचलितः।

**गद्यांशव्याख्या** – दौवारिकः – अरे कपटसंन्यासिन्! कथं भवान् विश्वासघातं स्वामिनः वञ्चनोपदेशञ्च शिक्षयति? ते केचित् अपरे एव तादृशाः स्वैरजाताः भवन्ति, ये उत्कोचलोभेन स्वामिनं वञ्चयित्वा स्वं घोरनरके प्रक्षिपन्ति। वयं शिववीरस्य अनुचराः न तादृशाः स्मः। संन्यासिनः हस्तं गृहीत्वा, अत्र आगच्छतु, सत्यं वदतु, भवान् कुतः आगतः? केन प्रेषितश्च?

**संन्यासी** – (स्मयमानः) अस्तु भवान् मां कं जानासि?

**दौवारिकः** – अहन्तु भवन्तं सेनासहितागतस्य अपजलखानस्य ........।

**संन्यासी** – मध्ये एव अवरुध्य धिक्करोमि।

**दौवारिकः** – अथवा कस्यापि अन्यस्य गुप्तचरः इति चिन्तयामि। पुनरपि अहन्तु स्वीयप्रभोः आदेशस्य पालनं करिष्यामि। हस्तमाकृष्य। दुर्गाध्यक्षस्य समीपम् आगच्छतु। स एव भवन्तं ज्ञात्वा यथायोग्यं व्यवहारं करिष्यति।

**तदनन्तरं संन्यासी तु** – मां त्यजतु। पुनः अत्र नागमिष्यामि इति सहस्रवारम् उक्तवान्। महाशय! दयां करोतु, दयां करोतु। पुनरपि द्वारपालः तमाकृष्य नयन् एव प्राचलत्।

**विशेषः** – विनिवार्य – वि+नि+वृ+णिच्+क्त्वा (ल्यप्)।

समचकथत् – सम्+कथ्+लुङ्+तिप्।

नयन् – नी+शतृ+सु।

विश्वासघातम् – विश्वासस्य घातम् (षष्ठी तत्पुरुषसमासः)।

स्वामिवञ्चनम् – स्वामिनो वञ्चनम् (षष्ठी तत्पुरुषसमासः)।

**मूलम् – अथ यावद् द्वारस्थ-स्तम्भोपरि संस्थापितायां काच-मञ्जुषायां जाज्वल्यमानस्य**

**प्रबलप्रकाशस्य दीपस्य समीपे समायातः, तावत्संन्यासिनोक्तम् - दौवारिक! अपि मां पूर्वमपि कदाऽप्यद्राक्षीः? ततो दौवारिकः पुनस्तं निपुणं निरीक्षमाणो मन्द्रेण स्वरेण, अरुणापाङ्गाभ्यां लोचनाभ्यां, गौरतरेण वर्णेन, चुम्बितयौवनेन वयसा, निर्भीकेण हारिणा च मुखमण्डलेन पर्यचिनोत्। भुशुण्डी-समुत्तोलन-किण-कर्कश-करग्रहमपहाय, सलज्ज इव च नम्रीभूय, प्रणमन्नुवाच - ''आः! कथं श्रीमान् गौरसिंह आर्यः? क्षम्यतामनुचितव्यवहार एतस्य ग्राम्य-वराकस्य''। तदवधार्य तस्य पृष्ठे हस्तं विन्यस्यन् संन्यासिरूपो गौरसिंहः समवोचत् - ''दौवारिक! मया बहुशः परीक्षितोऽसि, ज्ञातोऽसि यथायोग्य एव पदे नियुक्तोऽसि चेति। त्वादृशा एव प्रभूणां पुरस्कारभाजनानि भवन्ति लोकद्वयञ्च विजयन्ते। तव प्रामाणिकता जानीत एवाऽत्रभवान् प्रभुवर्यः, परमहमपि विशिष्य कीर्तयिष्यामि। निर्दिश तावत् कुत्र श्रीमान्? किञ्चानुतिष्ठति?**

**प्रसङ्गः -** अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन निजपरिचयादनन्तरं गौरसिंहेन द्वारपालस्य कृतप्रशंसायाः वर्णनं कृतमस्ति।

**पर्यायशब्दाः -** अथ = तदनन्तरं, यावद् = यदा, द्वारस्थस्तम्भोपरि = द्वारे स्थितस्तम्भस्य उपरिभागे, संस्थापितायां = विक्षिप्तायां, काचमञ्जुषायां = काचपेटिकायां, जाज्वल्यमानस्य = प्रज्वल्यमानस्य, प्रबलप्रकाशस्य = तीव्रप्रकाशस्य, दीपस्य = प्रदीपस्य, समीपे = पार्श्वे, समायातः = समागतः, तावत् = तदा, संन्यासिना = संन्यासिवेषधारिणा, उक्तम् = अभिहितं, ''दौवारिक = द्वारपाल, अपि किं, मां = संन्यासिनं, पूर्वमपि = प्रागपि, कदापि = कदाचित्, अद्राक्षीः = अपश्यः?'' ततः = तदा, दौवारिकः = द्वारपालः, पुनः = भूयः, तं = संन्यासिनं, निपुणं = सम्यक्, निरीक्षमाणः = पश्यन्, मन्द्रेण = गम्भीरेण, स्वरेण = गिरा, अरुणपाङ्गाभ्यां = रक्तनेत्रप्रान्तभागाभ्यां, लोचनाभ्यां = नेत्राभ्यां, गौरतरेण = अतिगौरेण, वर्णेन = रागेण, चुम्बितयौवनेन = स्पृष्ट यौवनेन, वयसा = अवस्थया, निर्भीकेण = भयरहितेन, हारिणा = मनोहारिणा, च, मुखमण्डलेन = वदनमण्डलेन, पर्यचिनोत् = परिचितवान्। भुशुण्ड्याः = आग्नेयास्त्रस्य, समुत्तोलनेन = उत्थापनेन, यः, किणः = अङ्कः, तेन, कर्कशस्य = कठोरस्य, करस्य = हस्तस्य, ग्रहं = ग्रहणम्, अपहाय = त्यक्त्वा, सलज्ज इव = संकुचित इव, च, नम्रीभूय = नतं भूत्वा, प्रणमन् = अभिवदन्, उवाच = जगाद - 'आः कथं = किं, श्रीमान् = श्री सम्पन्नः, गौरसिंह आर्य = पूर्ववर्णितगौरब्रह्मचारिबटो असि? तदवधार्य = तच्छ्रुत्वा, तस्य = द्वारपालस्य, पृष्ठे = पृष्ठभागे, हस्तं = करं, विन्यस्यन् = संप्रसारयन्, संन्यासिरूपः = संन्यासिवेषधारी, गौरसिंहः, एतन्नामकबटुः, समवोचत् = उवाच - दौवारिकः = द्वारपालः। मया = गौरसिंहेन, बहुशः = अनेकशः, परीक्षितोऽसि सम्यग्वीक्षितोऽसि, ज्ञातोऽसि, अवबुद्धोऽसि, यथायोग्ये = यथोचिते, एव, पदे = स्थाने, नियुक्तोऽसि = स्थापितोऽसि च इति। त्वादृशा एव = त्वात्सदृशा एव, प्रभूणां = स्वामिनां, पुरस्कारभाजनानि = उपहारपात्राणि, भवन्ति = जायन्ते, लोकद्वयञ्च = ऐहिकं पारलौकिकञ्च, विजयन्ते = विजयं प्राप्नुवन्ति। तव = भवतः, प्रामाणिकतां = वास्तविकतां, जानीते = जानाति, एव, अत्रभवान् = श्रीमान्, प्रभुवर्य्यः = स्वामिपदः, परं = किन्तु, अहमपि = बटुरपि, विशेष्य = विशेषरूपेण, कीर्तयिष्यामि = प्रशंसां करिष्यामि। निर्दिश = ज्ञापय, तावत्, कुत्र, श्रीमान् = लक्ष्मीवान् शिववीरः? किञ्च = अपरञ्च किम्, अनुतिष्ठति = करोति।

**गद्यांशव्याख्या -** इतः परं यदा द्वारे स्थितस्तम्भस्य उपरिभागे संस्थापितकाचपेटिकायां प्रज्वलनशीलस्य तीव्रप्रकाशस्य दीपकस्य समीपे समागतः तदा संन्याासिवेषधारिणा उक्तं - द्वारपाल! किम् इतः पूर्वमपि भवता अहं दृष्टः? तदा द्वारपालः पुनः सम्यक्तया तं संन्याासिनं दृष्ट्वा गम्भीरस्वरेण, रक्तप्रान्तनेत्राभ्याम् अधिकगौरवर्णेन, युवावस्थया निर्भीकतया सुन्दरमुखमण्डलेन चावगतवान्। भुशुण्डीमुत्थापनेन चिह्नयुक्तकठोरहस्तं संन्यासिहस्तात् पृथक् कृत्वा लज्जितः सन् सः विनम्रः सन् अवदत् ''भोः! भवान् तु गौरसिंहवर्यः विद्यते खलु? अस्य ग्राम्यजनस्य

अनुचितव्यवहारः क्षम्यताम्।' इदं श्रुत्वा द्वारपालस्य पृष्ठभागे हस्तं संप्रसारयन् संन्यासिवेषधारी गौरसिंहः उक्तवान् – 'द्वारपाल! मया भवतः अनेकशः परीक्षा स्वीकृता अवगतञ्च यत् भवान् यथायोग्यपदे एव नियुक्तोऽस्ति। भवादृशः जन एव स्वामिना पुरस्कृतः भवति लोकद्वयञ्चापि जयते। भवतः प्रामाणिकता महाराजेन शिववीरेण अवगता एवास्ति। पुनरपि अहं विशेषरूपेण भवतः प्रशंसां करिष्यामि। अस्तु तावत्, वदतु कुत्रास्ति श्रीमान्? कस्मिन् कार्ये संलग्नः?

**विशेषः** – अद्राक्षीः = दृश्+लुङ्।

निरीक्षमाणः = निर्+ईक्ष्+शानच्।

पर्यचिनोत् = परि+चिञ्+लङ्।

अवधार्य = अव+धृ+ल्यप्।

प्रणमन् = प्र+नम्+शतृ।

**मूलम् – ततः पुनर्बद्धाञ्जलेदौवारिकस्य किमपि कर्णे कथितमाकर्ण्य प्रधानद्वारमुल्लङ्घ्य, नेदीयस्यामेकस्यां निम्बतरु-तल-वेदिकायां सहचरं समुपवेश्य, तुम्बीमेकतः संस्थाप्य, स्वाङ्गरक्षिका-वरणकाषायवसनं चैकतो निम्बशाखायामवलम्बय्य, पट-खण्डेन पक्ष्मणोः कपोलयोः कर्णयो-भ्रुवोश्चिबुके नासायां केशप्रान्तेषु च छुरितामिव विभूतिं प्रोञ्छ्य स्कन्धयोः पृष्ठे च लम्बमानान् मेचकान् कुञ्चितान् कचानाबध्य, सहचरपोटलिकात उष्णीषमादाय, शिरसि चाऽऽधाय, सुन्दरमुत्तरीयं चैकं स्कन्धयोर्निक्षिप्य, दौवारिक-निर्देशानुसारं श्रीशिववीरालंकृतामट्टालिकां प्रति प्रातिष्ठत।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन साधुवेषं विहाय सज्जीभूय च गौरसिंहस्य द्वारपालनिर्देशानुसारं शिववीरं प्रति गमनस्य वर्णनं कृतमस्ति।

**पर्यायशब्दाः** – ततः = तदनन्तरं, पुनः = भूयः, बद्धाञ्जले = करबद्धस्य, दौवारिकस्य = द्वारपालस्य, किमपि = किञ्चित्, कर्णे = श्रोत्रे, कथितम् = अभिहितम्, आकर्ण्य = श्रुत्वा, प्रधानद्वारं = मुख्यद्वारम्, उल्लंघ्य = लङ्घयित्वा, नेदीयस्यां = समीपवर्तिन्यां, निम्बतरुतलवेदिकायां = निम्बवृक्षाधश्चत्वरे, सहचरं = सहयात्रिणं, समुपवेश्य = समुपस्थाप्य, तुम्बीं = तुम्बीपात्रम्, एकतः = भागैके, संस्थाप्य = निक्षिप्य, स्वाङ्गरक्षिकावरणकाषायवसनं = स्वकञ्चुकाच्छादनकाषायवस्त्रं, च एकतः = एकस्मिन्, निम्बशाखायां = निम्बविटपे, अवलम्ब्य = अवलम्बितं कृत्वा, पटखण्डेन = लघुवस्त्रेण, पक्ष्मणोः = अक्षिलोम्नोः, कपोलयोः = गण्डयोः, कर्णयोः = श्रोत्रयोः, भ्रुवोः = भ्रुकुट्योः, चिबुके = चिबुकप्रान्ते, नासायां = नालिकायां, केशप्रान्तेषु च = कुन्तलेषु च, छुरितामिव = संलग्नामिव, विभूतिं = भस्म, प्रोञ्छ्य = परामृज्य, स्कन्धयोः = असंदेशयोः, पृष्ठे = पृष्ठभागे, लम्बमानान् = अवलम्बितान्, मेचकान् = कृष्णवर्णान्, कुञ्चितान् = कुटिलान्, कचान् = केशान्, अबध्य = संप्रसाध्य, सहचरपोटलिकात् = सहयात्रिपुटकात्, उष्णीषं = शिरोवेष्टनम्, आदाय = गृहीत्वा, शिरसि = मूर्ध्नि, च, आदाय = संस्थाप्य, एकं, सुन्दरम् = अच्छम्, उत्तरीयम् = आच्छादनपटं, स्कन्धयोः = अंसयोः, निक्षिप्य = स्थापयित्वा, दौवारिकनिर्देशानुसारं = द्वारपालकथनानुसारेण, श्रीशिववीररालंकृतं = श्रीशिववीरयुक्ताम्, अट्टालिकां = प्रासादं, प्रति, प्रातिष्ठत = प्राचलत्।

**गद्यांशव्याख्या** – तत्पश्चात् करबद्धेन द्वारपालेन कर्णे किञ्चित् कथितं श्रुत्वा (गौरसिंहः) मुख्यद्वारम् उल्लङ्घ्य समीपस्थैकनिम्बवृक्षस्य अधः वेदिकायां स्वीयसहचरं बटुमुपवेश्य तुम्बीपात्रम् एकस्मिन् भागे स्थापयित्वा स्वीयाङ्गरक्षिकावरणकाषायवस्त्रञ्च एकस्मिन् निम्बवृक्षे अवलम्बितं कृत्वा, करवस्त्रेण पक्ष्मणोः, कपोलयोः, कर्णयोः, भ्रुकुट्योश्च चिबुके, नासिकायां, केशप्रान्तेषु च संलग्नां विभूतिं परामृज्य स्कन्धयोः पृष्ठभागे अवलम्बितान् कृष्णवर्णान् कुटिलान् केशान् संप्रसाध्य सहचरपुटकात् उष्णीषम् आदाय शिरसि संस्थाप्य एवं सुन्दरम् उत्तरीयं स्कन्धयोः स्थापयित्वा द्वारपालकथनानुसारेण श्रीशिववीरालङ्कृतं प्रासादं प्रति प्रस्थानं कृतवान्।

**विशेषः –** बद्धाञ्जलेः = बद्धा अञ्जलिः येन सः तस्य, (बहुव्रीहि समासः)।
उल्लंघ्य = उत्+लंघि+ल्यप्।
समुपवेश्य = सम्+उप्+विश्+ल्यप्।
संस्थाप्य = सम्+स्थापि+ल्यप्।
प्रोञ्छ्य = प्र+ऊक्षि+ल्यप्।
निक्षिप्य = नि+क्षिप्+ल्यप्।

**मूलम् – शिववीरस्तु कस्याञ्चिच्चन्द्रचुम्बिन्यां सान्द्र-सुधासार-संलिप्तभित्तिकायां धूपधूपितायां गजदन्तिकावलम्बित-विविध-च्छुरिकाखड्गरिष्टिकायां स्वर्ण-पिञ्जर-परिलम्बमान-शुक-पिक-चकोर-सारिका-कलकुजितायामट्टालिकायां सन्ध्यामुपास्योपविष्ट आसीत्। परितश्च तस्यैव खर्वामप्यखर्व पराक्रमां श्यामामपि यशः समूह श्वेतीकृत-त्रिभुवनांकुशासनाश्रयामपि सुशासनाश्रयां पठन-पाठनादिपरिश्रमानभिज्ञामपि नीति-निष्णातां स्थूलदर्शनामपि सूक्ष्मदर्शनां ध्वंसकाण्ड-व्यसनिनीमपि धर्मधौरेयीं कठिनामपि कोमलाम् उग्रामपि शान्तां शोभित-विग्रहामपि दृढ़-सन्धि-बन्धां कलितगौरवामपि कलितलाघवां विशाल-ललाटां प्रचण्ड-बाहुदण्डां शोणापाङ्गां कम्बुग्रीवां सुनद्धस्नायुं वर्तुल-श्यामश्मश्रुं धारिताकृतिमिव वीरतां विग्रहिणीमिव धीरतां समासादित-समर-स्फूर्तिं मूर्तिं दर्शं दर्शं परं प्रसादमासादयन्तस्तस्य वयस्याः कटानध्यवसन्।**

**प्रसङ्गः –** प्रस्तुतेऽस्मिन् गद्यांशे स्वीयभवने उपविष्टस्य महाराजशिववीरस्य तस्य देहाकृतेश्च वर्णनं कृतमस्ति महाकविना श्रीमदम्बिकादत्तव्यासेन।

**पर्यायशब्दाः –** शिववीरस्तु = शिववीरः, राजा तु, कस्याञ्चित् चन्द्रचुम्बिन्याम् = अत्युच्छ्रायां, सान्द्रसुधासारसंलिप्तभित्तिकायां = सघनश्वेतचूर्णद्रव्यरूषितभित्यां, धूपधूपितायां = सुगन्धसुवासितायाः, गजदन्तिकां = भित्तिशङ्काम्, अवलम्बिताः = प्रलम्बिताः, विविधाः = अनेकप्रकाराः, छुरिकाखड्गरिष्टिकाः = विविधशस्त्राणि, यस्यां सा, तस्यां, सुवर्णपिञ्जरेषु = हैमनिर्मितपिञ्जरेषु, परिलम्बमानां = निवसतां, शुकपिकचकोरसारिकाणां = विविधपक्षिणां, कलकूजितैः = मधुरशब्दैः, पूजिता = भूषिता या अट्टालिका = प्रसादः तस्यां, सन्ध्यां = सन्ध्यावन्दनादिकृत्यम्, उपास्य = सम्पाद्य, उपविष्टः = स्थितः आसीत्। परितश्च = समन्तात्, तस्यैव = शिववीरस्यैव, खर्वां = ह्रस्वाम्, अपि, अखर्वपराक्रमाम् = अतिशयपराक्रमां, श्यामामपि = कृष्णामपि, यशः समूह = श्वेतीकृत्य, त्रिभुवनां = कीर्तिकूटधवलितलोकत्रयां, कुशासनाश्रयामपि = दर्भविष्टरस्थितामपि, सुशासनाश्रयां = सुराज्याश्रयां, पठनपाठनादिपरिश्रमानभिज्ञामपि = अध्ययनाध्यापनश्रमापरिचितामपि, नीतिनिष्णातां = नीतिमतीं, स्थूलदर्शनामपि = विशालदर्शनवतीमपि, सूक्ष्मदर्शनां = कुशाग्रबुद्धियुक्तां, ध्वंसकाण्डव्यसनिनमपि = विधर्मिहिंसा, व्यसनिनीमपि, धर्मधौरेयीं = धर्मभारधारिणीं, कठिनामपि = कठोरमपि, कोमलां = आक्लिष्टाम्, उग्रामपि = दुर्धर्षामपि, शान्तां = शान्तिमतीं, दयादिगुणयुक्तां, शोभितविग्रहामपि = सुशरीरामाहोस्वित् सुसमरवतीं, अपि, दृढसन्धिबन्धां = दृढशरीरावयवसन्धानयुक्तामाहोस्वित् शत्रुभिः सह स्थिरसन्धियुक्तां, कलितगौरवान्वितामपि, कलितलाघवं = चातुर्यसम्पन्नां, विशाललाटम् = आयतमस्तकं, प्रचण्डबाहुदण्डां = प्रबलभुजदण्डां, शोणपाङ्गां = रक्तकटाक्षां, कम्बूग्रीवां = शंखतुल्यकण्ठां, सुनद्धस्नायुं = प्रश्लिष्टस्नायुतन्तुं, वर्तुलश्यामश्मश्रुं = वर्तुलाकारकृष्णश्मश्रुं, धारितकृतिं = गृहीताकृतिम्, इव, वीरतां = शूरतां, विग्रहिणीं = शरीरवतीं, धीरतां, समासादितसमरस्फूर्तिं = लब्धाध्वरस्फूर्तिं, मूर्तिम् = आकृतिं, दर्शं दर्शं = दृष्ट्वा दृष्ट्वा, परम् = उत्कृष्टं प्रसादं, प्रसन्नताम्, आसादयन्तः = प्राप्नुवन्तः, तस्य = शिववीरस्य, वयस्याः = मित्राणि, कटान् = तृणनिर्मितोपवेशनानि, अध्यवसन् = अवसन्।

**गद्यांशव्याख्या** – शिववीरमहाराजस्तु चन्द्रचुम्बिन्यां सघनश्वेतचूर्णवर्णोपेतभित्तिकायां, सुगन्धसुवासितायां, भित्तिकीलेषु अवलम्बितविविधप्रकारकधूरिकाखड्गशस्त्राणि यस्यां तस्यां, सुवर्णनिर्मितपिञ्जरेषु निवसतां शुकपिकचकोरसारिकादिपक्षिणां मधुरशब्दैः भूषितायाम् अट्टालिकायां सन्ध्यापूजनादिकं सम्पाद्य उपविष्टः आसीत्। शिववीरं परितः तस्यैव मित्राणि सहचराः उपविष्टाः आसन्। ते ह्रस्वामपि अतिशयपराक्रमां, श्यामामपि कीर्त्तिकूटधवलितलोकत्रयां, कुशासनाश्रयामपि सुराज्याश्रयाम् अध्ययनाध्यापनश्रमापरिचितामपि नीतिनिष्णातां, विशालदर्शनामपि कुशाग्रबुद्धियुक्तां ध्वंसकाण्डव्यसनिनमपि, धर्मभारधारिणीं कठोरामपि कोमलाम् उग्रामपि शान्तां (दयादिगुणयुक्तां), शोभितविग्रहामपि दृढशरीरावयवसन्धानयुक्तामाहोस्वित् शत्रुभिः सह स्थिरसन्धियुक्तां, गौरवान्वितामपि चातुर्यसम्पन्नां विशालमस्तकां, प्रबलभुजदण्डां, रक्तकटाक्षां, शंखतुल्यकण्ठां सुनद्धस्नायुतन्तुं, वर्तुलाकारकृष्णश्मश्रुं गृहीताकृतिम् इव शूरतां शरीरवतीं समासादितसमरस्फूर्तिम् आकृतिं दृष्ट्वा-दृष्ट्वा अत्यधिकप्रसन्नतां प्राप्नुवन्तः तस्य शिववीरस्य मित्राणि वृणनिर्मितकटेषु उपविष्टाः आसन्।

**विशेषः** – उपास्य = उप+आस्+ल्यप्।

उपविष्टः = उप+विश्+क्त।

शासनम् = शास्यते अनेनेति शासनम् – शास्+घञ्।

निष्णात = नि+स्ना+क्त। (टाप् – स्त्रीलिङ्गम्)।

धौरेयीम् – धुर+दयञ्+ङीप्। ( स्त्रियाम्)

धारिता – धृ+णिच्+क्त। (स्त्रीलिङ्ग टाप्)।

समासादित – सम्+आ+षद्+क्त।

आसादयन्तः – आ+षद्+शतृ, (प्रथमा विभक्तिः बहुवचनम्)।

अध्यसवसन् = अधि+वस्+लङ् (झि)।

**मूलम्** – **तेषु च अपजलखान-दमन-विषयकवार्तामारिप्सुष्वेव कश्चिद् वेत्रहस्तः प्रतीहारः प्रविश्य, वेत्रं कक्षे संस्थाप्य, शिरो नमयित्वा, अञ्जलिं बद्ध्वा न्यवीविदत् – ''प्रभो! श्रीमान् गौरसिंहो दिदृक्षतेऽत्र भवन्तम्'' – तदाकर्ण्य ''आम् प्रवेशय प्रवेशय'' इति सानन्दं सोत्साहं च कथितवति महाराष्ट्रमण्डलाऽऽखण्डले, प्रतिहारो निवृत्य, सपद्येव तं प्रावीविशत्।**

**प्रसङ्गः** – अस्य गद्यांशस्य माध्यमेन महाकविना श्रीमदम्बिकादत्तव्यासेन महाराजशिववीरस्य मित्रैः सह वार्त्तालापक्रमे गौरसिंहस्य प्रवेशस्य वर्णनं कृतमस्ति।

**पर्यायशब्दाः** – तेषु = शिववयस्येषु, अपजलखानदमनविषकवार्ताम् = अफजलखानविनाशसम्बद्धवृत्तान्तम्, आरिप्सिुषु = प्रारम्भं, चिकीर्षुषु एव, कश्चिद् = एकः, वेत्रहस्तः = वेत्रधारी, प्रतीहारः = समाचारसंवाहकः, प्रविश्य = शिवस्य समीपे गत्वा, वेत्रं = वेत्रलतां, कक्षे = पार्श्वे, संस्थाप्य = संरोप्य, शिरः = मूर्धानं, नमयित्वा = नमनं कृत्वा, अञ्जलिं = हस्तसम्पुटं, बद्ध्वा = निर्मात्य, न्यवीविदत् = निवेदितवान्, ''प्रभोः स्वामिन्, गौरसिंहः = तन्नामकः बटुः, विदृश्यते = द्रष्टुमिच्छति, अत्र भवन्तं = श्रीमन्तं, तदाकर्ण्य = तच्छ्रुत्वा, आं = स्वीकृतं, प्रवेश्य = प्रवेशं कारय, इति = एवं, सानन्दम् = आनन्दपूर्वकं, सोत्साहम् = उत्साहपूर्वकं, च कथितवति = उक्तवति, महाराष्ट्रमण्डलाखण्डले = महाराष्ट्रमण्डलेन्द्रे, प्रतीहारः = सन्देशहरः, सपद्येव = त्वरितमेव, तं = गौरसिंहं, प्राविविशत् = अन्तर्नीतवान्।

**गद्यांशव्याख्या** – तेषु शिववीरमित्रेषु अपजलखानदमनसम्बन्धिवार्तारम्भे सति एव कश्चन वेत्रधारी समाचारसंवाहकः तत्र समाविश्य वेत्रलतां पार्श्वे संस्थाप्य शिरसः नमनं कृत्वा बद्धाञ्जलिः निवेदितवान् – स्वामिन्!

गौरसिंहवर्य: भवन्तं द्रष्टुमिच्छति अर्थात् भवता सह मेलितुम् इच्छति। तस्य वचनं श्रुत्वा – ''अस्तु तावत्। प्रवेशं कारय'' इति आनन्दपूर्वकम् उत्साहपूर्वकञ्च महाराष्ट्रमण्डलेन्द्रशिववीरस्य कथनादनन्तरं संवाहकेन शीघ्रमेव गौरसिंहस्य प्रवेश: कारित:।

**विशेष: –**

अरिप्सुषु = आ+रभ्+सन्+उ (सप्तमी विभक्ति:, बहुवचनम्)।
संस्थाप्य = सम्+स्था+णिच्+पुक्+ल्यप्।
नमयित्वा = नम्+णिच्+क्त्वा।
न्यवीविदत् = नि+विद्+लुङ् (तिप्)।
दिदृक्षते = दृश्+सन्+लट् (आत्मनेपदम्)।
कथितवति = कथ्+क्तवतु, (सप्तमी विभक्ति:, एकवचनम्)।
निवृत्य = नि+वृत्य+ल्यप्।
प्रावीविशत् = प्र+विश्+लुङ्।

**मूलम् – तमवलोक्यैव ''इत इतो गौरसिंह! उपविश, उपविश। चिराय दृष्टोऽसि अपि कुशलं कलयसि? अपि कुशलिनस्तव सहवासिन:? अप्यङ्गीकृतमहाव्रतं निर्वहथ यूयम्? अपि कश्चिन्नूतनो वृत्तान्त:?'' इति कुसुमानीव वर्षता पीयूष-प्रवाहेणेव सिञ्चता मृदुना वचनजातेन तत्रभवता शिववीरेणाऽऽद्रियमाण:, आपृच्छ्यमानश्च, त्रि: प्रणम्य, अन्तरङ्गमण्डली-जुष्टकटे समुपविश्य, करौ सम्पुटीकृत्य ''भगवन्! अखिलं कुशलं प्रभूणामनुग्रहेणास्माकमखिलानाम्, अङ्गीकृत-महाव्रते च मा स्म पदं धात् कञ्चनान्तराय इत्येव सदा प्रार्थ्यते भगवान् भूतनाथ:। नूतन: प्रत्नश्च को नामाद्यतनसमये वक्तव्य: श्रोतव्यश्च वृत्तान्त: – ऋते दुराचारात् स्वच्छन्दानामुच्छृङ्खलानामुच्छिन्नसच्छीलानां म्लेच्छ-हतकानाम्''इति कथयामास। ततश्च तेषामेवमभूदालाप:।**

**प्रसङ्ग:** – गद्यांशेऽस्मिन् महाकविना श्रीमदम्बिकादत्तव्यासेन इदं वर्णितमस्ति यत् गौरसिंहं दृष्ट्वा शिववीरेण तस्य समाचार: पृष्ट: तथा च गौरसिंहेन तस्य प्रत्युत्तरं दत्तम्।

**पर्यायशब्दा: –** तं = गौरसिंहम्, अवलोक्य = दृष्ट्वा, एव, इत इते, गौरसिंह: = अत्रागच्छ गौरसिंह:, उपविश-उपविश = तिष्ठ-तिष्ठ, चिराय = चिरकालात्, दृष्टोऽसि = अवलोकितोऽसि, अपि कुशलं कलयति? = किमसि कुशली? अपि कुशलिनस्तव सहवासिन: = किं ते सहचरा: कुशलिन: सन्ति, अपि = इति प्रश्ने, अङ्गीकृतमहाव्रतं = स्वीकृतमहाव्रतं, निर्वहथ = निर्वाहं, कुरुथ, यूयं भवन्त:? अपि कश्चिन्नूतनोवृत्तान्त: = किमस्ति कश्चिदभिनवप्रवृत्ति:? इति = एतत्, कुसुमानीव = पुष्पाणीव, वर्षता = वृष्टिं कुर्वता, पीयूषप्रवाहेण = अमृतप्रवाहेणेव, सिञ्चता = सरसी कुर्वता, मृदुना = कोमलेन, वचनजातेन = गिरोद्भवेन, तत्रभवता = माननी येन, शिववीरेण = राज्ञा, आद्रियमाण: = समादृतवन्त:, आपृच्छ्यमानश्च = पृष्ट: सन्, त्रि: = वारत्रयं, प्रणम्य = प्रणामं कृत्वा, अन्तरङ्गमण्डलीजुष्टकष्टे = स्वजनवृन्दमध्युषितकटे, समुपविश्य = स्थितोभूत्वा, करौ = हस्तौ, सम्पुटीकृत्य = एकीकृत्य, भगवन् = श्रीमन्, अखिलं = सर्वं, कुशलम् = अनामयं, प्रभूणां = स्वामिनाम्, अनुग्रहेण = कृपया, अस्माकम् आश्रमवासिनाम्, अखिलानां = सर्वेषां, अङ्गीकृतमहाव्रते = स्वीकृतमहाव्रते, च पदं = स्थानं, मास्म धात = मास्मभूत, कश्चन् = कोऽपि, अन्तराय: = विघ्न:, इत्येव = एतदेव, सदा = सर्वदा, प्रार्थ्यते = अभिलष्यते, भगवान् भूतनाथ:, भगवान् शङ्कर:। नूतन: = अभिनव:, प्रत्नश्च = पुरातनश्च, को नाम, अद्यतनसमये = सम्प्रति, वक्तव्य: = वक्तुं योग्य:, श्रोतव्यश्च = श्रोतुं योग्यश्च, वृत्तान्त:, वार्ता,

ऋते = विना, दुराचारात् = अत्याचारात्, स्वच्छन्दानां = स्वतन्त्राणाम्, उच्छृङ्खलानाम् = उद्दण्डानाम्, उच्छिन्नसच्छीलानां = सदाचारविरहितानां, म्लेच्छहतकानां, दुष्टयवनानाम्, इति = एवं, कथयामास = अकथयत्। ततश्च = तदनन्तरं, तेषां = गौरसिंहशिववीरादीनाम्, एवम् = इत्थम्, आलापः = वार्त्तालापः, अभूत् = अभवत्।

**गद्यांशव्याख्या –** महाराजेन शिववीरेण (गौरसिंहं दृष्ट्वा) चिरकालादनन्तरं दर्शनं सञ्जातम्। अत्र आगच्छतु उपविशतु च। सर्वं कुशलं अस्ति वा? भवतः सहवासिनः कुशलिनस्तु सन्ति? भवद्भिः स्वीकृत-महाव्रतस्य निर्वहणं तु क्रियते? कश्चित् नूतनसमाचारस्तु न विद्यते? एवं प्रकारेण पुष्पाणि इव वृष्टिं कुर्वता अमृतप्रवाहेणेव सरससिञ्चता मृदुवचनसमूहेन समादृतः पृष्टश्च गौरसिंहः वारत्रयं प्रणामं कृत्वा मित्रजनाध्युषितकटे समुविश्य हस्तौ सम्पुटीकृत्य उक्तवान् – ''भगवन्! भवतां कृपया वयं पूर्णरूपेण कुशलिनः स्मः। अस्माभिः स्वीकृतमहाव्रतेऽस्मिन् किमपि विघ्नं न भवेदिति भगवान् भूतनाथः प्रार्थ्यते। सम्प्रति नूतनः पुरातनः को वा वृत्तान्तः कथनीयः श्रावणीयश्च भवेत् – केवलं स्वच्छन्दानाम् उद्दण्डानाम् सदाचारविरहितानां म्लेच्छहतकानां दुष्टयवनानाम् अत्याचारं विना'' इति गौरसिंहेनोक्तम्। तदनन्तरं तेषां गौरसिंहशिववीरादीनाम् इत्थम् आलापः सञ्जातः।

**विशेषः –** निर्वहथ = निर्+वह्+लट् (थ)।

वर्षता = वृषु+शतृ, (तृ०वि०, एकवचनम्)।

आद्रियमाणः = आ+दृङ्+शानच्।

आपृच्छ्यमानः = आ+पृच्छ्+शानच्।

समुपविश्य = सम्+उप+विश्+ल्यप्।

प्रत्नः = पुरातनपुराणेप्रतनप्रत्नपुरातनचिरन्तनाः' इत्यमरः।

वक्तव्यः – वच्+तव्यत्।

**मूलम् – शिववीरः – अथ कथ्यतां को वृत्तान्तः? का च व्यवस्था अस्मन्महाव्रताश्रम-परम्परायाः?**

**गौरसिंहः – भगवन्! सर्वं सुसिद्धम्, प्रतिगव्यूत्यन्तरालमङ्गीकृतसनातन-धर्म-रक्षा-महाव्रतानां धारित-मुनि-वेषाणां वीरवराणामाश्रमाः सन्ति। प्रत्याश्रमञ्च वलीकेषु गोपयित्वा स्थापिताः परश्शताः खड्गाः, पटलेषु तिरोभाविताः शक्तयः, कुशपुञ्जान्तः स्थापिता भुशुण्ड्यश्च समुल्लसन्ति। उञ्छस्य, शिलस्य, समिदाहरणस्य, इङ्गुदीपर्य्यन्वेषणस्य, भूर्जपत्रपरिमार्गणस्य, कुसुमावचयनस्य, तीर्थाटनस्य, सत्सङ्गस्य च व्याजेन, केचन जटिला, परे मुण्डिनः, इतरे काषायिणः, अन्ये मौनिनः, अपरे ब्रह्मचारिणश्च बहवः पटवो बटवश्चराः सञ्चरन्ति। विजयपुरादुड्डीयाऽत्राऽऽगच्छन्त्या मक्षिकाया अप्यन्तः स्थितं वयं विद्मः, किं नाम एषा यवनहतकानाम्?**

**प्रसङ्गः –** अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन आश्रमवासिनाम् आश्रमव्यवस्थायाश्च विषये कृतप्रश्नानाम् उत्तराणाञ्च वर्णनं कृतम् अस्ति।

**पर्यायशब्दाः – शिववीरः –** अथ = अनन्तरं, कथ्यतां = कथयतु, को वृत्तान्तः = का वार्ता अस्ति? अस्मन्महाश्रमपरम्परायाः = अस्मन्महान् तयो वनसञ्चालनस्य, का व्यवस्था = किं स्वरूपम्?

**गौरसिंहः –** भगवन् = महाशय, सर्वं = निखिलं, सुसिद्धं = सुव्यवस्थितं, प्रतिगव्यूतिं = प्रतिक्रोशद्वयम्, अन्तराले = मध्ये, अङ्गीकृतः = स्वीकृतः, सनातनधर्मस्य = हिन्दुधर्मस्य, रक्षायाः = रक्षणस्य, महाव्रतः = महान् नियमः यैस्तेषां, धारितमुनिवेषाणां = मुनिवेषधारिणां, वीरवराणां = सुभटानाम्, आश्रमाः = स्थानानि, सन्ति। प्रत्याश्रमं = प्रत्येकं

तपोवनं, वलीकेषु, गोपयित्वा = संगोप्य, स्थापिता: = निक्षिप्ता:, परश्शत: = शताधिका:, खड्‌गा: = कृपाणा:, पटलेषु = छादनेषु, तिरोभाविता: = अन्तर्हिता:, शक्तय: = शस्त्रविशेषा:, कुशपुञ्जान्त: स्थापिता: = दर्भपटलेषु निहिता:, भुशुण्ड्यश्च = अग्न्यास्त्रविशेष:, समुल्लसन्ति = विराजन्ते। उञ्छस्य = पतितकणग्रहणस्य, शिलस्य = कणिशानां ग्रहणस्य, समिदाहरणस्य = समिदानयनस्य, इङ्गुदीपर्य्यन्वेषणस्य = णिण्याक मार्गणस्य, भूर्जपत्रमार्गणस्य = भुर्जपत्रान्वेषणस्य, कुसुमावचयनस्य = पुष्पग्रहणस्य, तीर्थाटनस्य = तीर्थभ्रमणस्य, सत्सङ्गस्य = सज्जनसमागमस्य, च व्याजेन = छलेन, केचन = केचित्, बटव:, जटिला: = जटाधारिण:, परे = अन्ये, मुण्डिन: = मुण्डितशिरा:, इतरे = अन्ये, काषायिण: = कषायवस्त्रधारिण:, अन्ये = केचन, मौनिन: = मौनव्रतधारिसाधुवेषा:, अपरे = अन्ये, ब्रह्मचारिण: = ब्रह्मचारिवेषधारिण:, च, पटव: = दक्षा:, बटव: = ब्रह्मचारिबालका:, सञ्चरन्ति = भ्रमन्ति। विजयपुरात् = तन्नगरात्, उड्डीय = उत्पत्य, अत्र, आगच्छन्त्या: = आयान्त्या:, मक्षिकाया: अपि = क्षुद्रजीवानामपि, अन्त:स्थिरम् = आन्तरिकं, विषयं, वयं = महाव्रतधारिण:, विद्म: = जानीम:, किं नाम = का कथा, एषाम् = एतेषां, यवनहतकानां = दुष्टम्लेच्छानाम्?

**गद्यांशव्याख्या –** शिववीर: – (गौरसिंहस्योपवेशनादनन्तरम्) इदानीं भवान् कथयतु। आश्रमवासिनां का वार्ता अस्ति? अस्माभि: स्वीकृतमहाव्रताश्रमपरम्परायाश्च स्थिति: कीदृशी अस्ति?

गौरसिंह: – श्रीमन्! सर्वं सुव्यवस्थितम्। प्रतिक्रोशद्वयस्य अन्तराले सनातनधर्मस्य रक्षाया: महाव्रतधारिणां मुनिवेषधारिणां शूरवीराणाम् आश्रमा: सन्ति। प्रत्येकमपि आश्रमवलीकेषु संगोप्य स्थापिता: शताधिका: कृपाणा:, छादनेषु अन्तर्हिता: शक्तय:, दर्भसमूहेषु निहिता: अग्न्यादिशस्त्रविशेषा: भुशुण्ड्यश्च विराजन्ते। पतितकणग्रहणस्य कणिशानां ग्रहणस्य, समिदानयनस्य, इङ्गुदी–अन्वेषणस्य, भोजपत्रान्वेषणस्य तीर्थाटनस्य, पुष्पावचयनस्य सत्सङ्गस्य च व्याजेन केचन बटव: जटाधारिण: सन्त: अन्ये च मुण्डितशिरा:, अन्ये कषायवस्त्रधारिण:, केचन मौनव्रतधारिसाधुवेषा: अपरे च ब्रह्मचारिवेषधारिण: निपुणा: ब्रह्मचारिबालका: भ्रमन्ति सञ्चरन्ति वा। विजयपुरनगरात् उड्डीय अत्र आगच्छन्त्या: मक्षिकाया: अपि आन्तरिकीं स्थितिं वयं महाव्रतधारिण: जानीम:, का कथा एतेषां दुष्टयवनानाम्?

**विशेष: –** गोपयित्वा = गुप्+णिच्+क्त्वा।

समुल्लसन्ति = सम्+उत्+लस्+लट् (झि)।

भुर्जपत्रपरिमार्गणस्य – भूर्जपत्राणां परिमार्गणं, तस्य (तत्पुरुषसमास:)।

जटिला: – जटा+इलच्।

**मूलम् – शिववीर: – साधु, साधु कथं न स्यादेवम्? भारतवर्षीया यूयं, तत्रापि महोच्चकुलजाता:, अस्ति चेदं भारतवर्षं भवति च स्वाभाविक एवानुराग: सर्वस्यापि स्वदेशे, पवित्रतमश्च यौष्माकीण: सनातनो धर्म: तमेते जाल्मा: समूलमुच्छिन्दन्ति अस्ति च ''प्राणा यान्तु, न च धर्म:'' इत्यार्याणां दृढ: सिद्धान्त:। महान्तो हि धर्मस्य कृते लुण्ठ्यन्ते, पात्यन्ते, हन्यन्ते, न धर्मं त्यजन्ति, किन्तु धर्मस्य रक्षायै सर्वसुखान्यपि त्यक्त्वा, निशीथेष्वपि, वर्षास्वपि, ग्रीष्म–घर्मेष्वपि, महारण्येष्वपि, कन्दरिकन्दरेष्वपि, व्यालवृन्देष्वपि, सिंह–सङ्घेष्वपि, वारण–वारेष्वपि, चन्द्रहास–चमत्कारेष्वपि च निर्भया विचरन्ति। तद् धन्या: स्थ यूयं वस्तुत आर्यवंशीया: वस्तुतश्च भारतवर्षीया:।**

**प्रसङ्ग: –** अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन शिववीरस्य मुखेन कृतभारतवर्षस्य सनातनधर्मस्य च वैशिष्ट्यस्य वर्णनं कृतमस्ति।

**पर्यायशब्दा: – शिववीर: –** साधु साधु = अतिशोभनं, कथं न स्यादेवम्? = एवं कथं न भवेत्? भारतवर्षीया: = भारतीया:, यूयं = भवन्त:, तत्रापि = तस्मिन्नपि, महोच्चकुलजाता: = कुलीना:, इदम् = एतत्, च भारतवर्षं = देशविशेष: अस्ति, सर्वस्यापि = नि:शेषस्य जनस्य, स्वदेशे = स्वदेशं प्रति, स्वाभाविक: = प्राकृतिक:, एव अनुराग: =

स्नेहः, भवतिः, पवित्रतमश्च = अतिशयपूतश्च, यौष्माकीणः = यौष्माकः, सनातनो धर्मः = हिन्दुधर्मः, तं = हिन्दुधर्मम्, एते = इमे, जाल्माः = मूर्खाः, समूलं = मूलेन सहितम्, उच्छिन्दन्ति = उत्पाट्यन्ति, प्राणाः = असवः, यान्तु = गच्छन्तु, न च धर्मः = स्वकीयः सनातनोधर्मः, इति = एतत्, आर्याणाम् = आर्याभिधायिनां, दृढः = स्थिरः, सिद्धान्तः = संकल्पः अस्ति। महान्तः = महापुरुषाः, धर्मस्य कृते = धर्मार्थं, लुण्ठ्यन्ते = चौर्यन्ते, पात्यन्ते = निक्षिप्यन्ते, हन्यन्ते = मार्यन्ते, धर्मं = स्वधर्मं, न त्यजन्ति = न मुञ्चन्ति, किन्तु धर्मस्य रक्षायै = स्वधर्मपालनाय, सर्वसुखानि = निखिलसुखानि अपि, त्यक्त्वा = परित्यज्य, निशीथेषु = अर्द्धरात्रेषु, वर्षास्वपि = जलवर्षणेऽपि, ग्रीष्मघर्मेष्वपि = उष्णसंतापेष्वपि, वारणवारेष्वपि = हस्तिसमूहेष्वपि, महारण्येष्वपि = सघनवनेष्वपि, कन्दरिकन्दरेष्वपि = पर्वतगुहास्वपि, चन्द्रहासचमत्कारेष्वपि = खड्गचमत्कृतिष्वपि, च, निर्भयाः = भयरहिताः, विचरन्ति = सञ्चरन्ति। तद् = तस्मात्, धन्याः = साधुभाजाः, स्थ = भवथ, यूयं, वस्तुतः = परमार्थतः, आर्यवंशीयाः = आर्यवंशोद्भवाः, वस्तुतश्च, भारतवर्षीयाः = भारतवर्षोद्भवाः सन्ति।

**गद्यांशव्याख्या** – शिववीरः – समीचीनं, समीचीनम्। एवं कथं न भवेत्? भवन्तः भारतीयाः, तत्रापि कुलीनाः, इदं भारतवर्षमस्ति। स्वदेशं प्रति सर्वेषामनुरागः स्वाभाविकरूपेण भवति। भवतां सनातनधर्मः सर्वाधिकः पवित्रः अस्ति। एते यवनदुष्टाः समूलमेतम् उत्पाटयितुम् इच्छन्ति। ''प्राणाः गच्छन्तु नाम, परञ्च धर्मो नष्टो न भवेत्'' अयम् आर्याणां दृढसिद्धान्तः विद्यते। महापुरुषाः धर्माय लुण्ठ्यन्ते, निक्षिप्यन्ते, हन्यन्ते, धर्मं न त्यजन्ति, परञ्च धर्मरक्षार्थं सर्वविधसुखानि परित्यज्य अर्द्धरात्रौ अपि वृष्टौ अपि ग्रीष्मातपेष्वपि विशालवनेष्वपि, पर्वतगुहाष्वपि खड्गचमत्कृतिष्वपि च निर्भीकाः भूत्वा सञ्चरन्ति। अत एव भवन्तः धन्याः सन्ति। वस्तुतः भवन्तः आर्यवंशीयाः भारतवर्षीयाश्च सन्ति।

**विशेषः** – उच्छिन्दन्ति = उत्+छिदिरे+लट् (झि)।

त्यक्त्वा = त्यज्+क्त्वा।

कन्दरिकन्दरेष्वपि = कन्दरीणां कन्दरास्तेषु (तत्पुरुषसमासः)।

वार = समूहः – 'समूहे निवहव्यूहसंदोहविसरव्रजाः। स्तोमौघनिकरव्रातवारसंघात सञ्चयाः॥ अमरकोषः॥

चन्द्रहासचमत्कारेष्वपि – चन्द्रहासानां चमत्कारास्तेषु।

आर्यवंशीयाः – आर्यवंश+छ (ईय) (प्रथमा विभक्तिः, बहुवचनम्)।

**मूलम् – अथ कथ्यतां कोऽपि विशेषोऽवगतो वा अपजलखानस्य विषये?**

**गौरसिंहः – ''अवगतः तत्पत्रमेव दर्शयामि'' इति व्याहृत्य, उष्णीष सन्धौ स्थापितं कन्यापहारक-यवन-मृत-शरीरवस्त्राान्तः प्राप्तं पत्रं बहिश्चकार।**

**सर्वे च विजयपुराधीशमुद्रामवलोक्य ''किमेतत्? एतत्? कथमेतत्? कस्मादेतत्? इति जिज्ञासमानाः सोत्कण्ठा वितस्थिरे। गौरसिंहस्तु शिववीरस्यापि तत्प्राप्ति-चरित-शुश्रूषामवगत्य संक्षिप्य सर्वं वृत्तान्तमवोचत्। ततस्तु दर्शयतां, प्रसार्यतां, पठ्यतां, कथ्यतां किमिदम्? इति पृच्छति शिववीरे गौरसिंहो व्याजहार –**

**प्रसङ्गः** – अस्मिन् गद्यांशे श्रीमदम्बिकादत्तव्यासेन शिववीरेण पृष्टः गौरसिंहः अफजलखानवृत्तान्तं श्रावयति इति वर्णनं कृतमस्ति।

**पर्यायशब्दाः** – अथ = तदनन्तरं, कथ्यतां = कथयतु, कोऽपि = कश्चित्, विशेषः = नूतनः, अवगतः = विषयः ज्ञातः, वा = अथवा, अपजलखानस्य विषये = विजयपुराधीशसेनापतेः विषये?

गौरसिंहः – ''अवगतः = ज्ञातः, तत्पत्रम् = अफजलखानस्य पत्रम्, एव, दर्शयामि = अवलोकयामि'', – इति

= एवं, व्याहृत्य = उक्त्वा, उष्णीषसन्धौ = शिरोवेष्टनमध्ये, स्थापितं = निक्षिप्तं, कन्यापहारकयवनमृतशरीरवस्त्रान्तः = कन्यापहारकः = बालिकाचोरस्य, यवनयुवकस्य = म्लेच्छयुवकस्य, मृतस्य = गतासोः, शरीरस्य = देहस्य, वस्त्रान्तः = वसनान्तराले, प्राप्तं = लब्धं पत्रं, बहिश्चकार = बहिष्कृतवान्।

सर्वे च = सर्वे च जनाः, विजयपुराधीशमुद्रां = विजयपुरनरेशराजचिह्नम्, अवलोक्य = दृष्ट्वा, ''किमेतत् = किमिदं, कुतः एतत् = कस्मात् स्थानात् इदं, कथमेतत् = एतत् कथं प्राप्तं, कस्मादेतत् = एतत् पत्रम् कस्मात् प्राप्तम्?'' इति = एवं, जिज्ञासमानाः = ज्ञातुमिच्छन्तः, सोत्कण्ठाः = उत्कण्ठिताः, वितस्थिरे: = स्थिताः। गौरसिंहस्तु = एतन्नामकः बटुः, शिववीरस्य = महाराष्ट्रेश्वरस्य अपि, तत्प्राप्तिचरितशुश्रूषां = पत्रप्राप्तिवृत्तान्तश्रवणेच्छाम्, अवगत्य = ज्ञात्वा, संक्षिप्य = संक्षेपं कृत्वा, सर्वं = निखिलं, वृत्तान्तं = वार्ताम्, अवोचत् = कथयामास। ततस्तु = तदनन्तरम्, ''दर्श्यताम् = अवलोकय, प्रसार्यतां = प्रसारय, पठ्यतां = पठतु, कथ्यताम् = उच्यतां, किमिदं = किमेतत्?'' इति = एवं, पृच्छति = उक्तवति, शिववीरे = तन्नाम्नि राज्ञे, गौरसिंहः = वटुः, व्याजहारः = उक्तवान्।

**गद्यांशव्याख्या** – शिववीरमहाराजेन पृष्टम् – अस्तु तावत्, उच्यताम्। अफजलखानस्य विषये काऽपि विशेषवार्ता अवगता वा?

**गौरसिंहः** – 'विशेषवार्ता अवगता। अफजलखानस्य पत्रमेव दर्शयामि।' इति उक्त्वा गौरसिंहेन उष्णीषमध्ये स्थापितं कन्यायाः अपहरणकर्तुः यवनयुवकस्य मृतशरीरात् वस्त्रेभ्यः प्राप्तपत्रं बहिः निष्कासितम्। सर्वेः जनाः पत्रे विजयनरेशराजचिह्नं दृष्ट्वा ''किमिदम्? कुतः इदं प्राप्तम्? कथमिदं प्राप्तम्? कस्माच्च इदं प्राप्तम्? इति ज्ञातुम् इच्छन्तः उत्कण्ठिताः सञ्जाताः। गौरसिंहस्तु तस्य पत्रस्य प्राप्तेः वृत्तान्तश्रवणस्य शिववीरस्यापि इच्छां ज्ञात्वा संक्षेपेण सर्वोऽपि वृत्तान्तः श्रावितः। तदनन्तरं दर्शयतु, प्रसारयतु, पठतु, कथयतु, इदं किमस्ति? एतावति पृष्टे सति शिववीरे गौरसिंहेन उक्तम् –

**विशेषः** – व्याहृत्य – वि+आ+हृ+ल्यप्।

अपहारकः – अप+हृ+ण्वुल् (अक)।

बहिश्चकारः – बहिः+कृ+लिट् (तिप्)।

जिज्ञासमानाः – ज्ञा+सन्+शानच् (प्र०वि०, बहुवचनम्)।

विस्थिरे – वि+स्था+लिट् (झ आत्मनेपदम्)।

तत्प्राप्तिचरितशुश्रूषाम् – तस्य प्राप्तेः चरितस्य शुश्रूषाम् (तत्पुरुषसमासः)।

प्रसार्यताम् – प्र+सृ+लोट्।

पृच्छति – प्रच्छ्+शतृ (सप्तमी विभक्तिः, एकवचनम्)।

व्याजहार – वि+आ+हृ+लिट् (तिप्)।

**मूलम् – भगवन्! सर्पाकारैरक्षरः पारस्य-भाषायां लिखितं पत्रमेतदस्ति। एतस्य सारांशोऽय-मस्ति – विजयपुराधीशः स्वप्रेषितमपजलखानं सेनापतिं सम्बोध्य लिखति यत् – ''वीरवर! महाराष्ट्र-राजेन सह योद्धुं प्रस्थितोऽसीति मा स्म भूत्कश्चनान्तरायस्तव विजये। शिवं युद्धे जेष्यसि चेत्, पद्भयां सिंहं जितवानसीति मंस्ये, किन्तु सिंहहननापेक्षया जीवतः सिंहस्य वशीकार एवाधिकं प्रशस्यः। तद् यदि छलेन जीवन्तं शिवमानयेः तद् वीरपुङ्गवोपाधि-दानसहकारेण तव महतीं पदवृद्धिं कुर्य्याम्। गोपीनाथपण्डितोऽपि मया तव निकटे प्रस्थापितोऽस्ति, स मम तात्पर्यं विशदीकृत्य तव निकटे कथयिष्यति। प्रयोजनवशेन शिवमपि साक्षात्करिष्यति''इति।**

**प्रसङ्गः** – अस्मिन् गद्यांशे श्रीमदम्बिकादत्तव्यासेन गौरसिंहेन आनीतगोपनीयपत्रे लिखितसन्देशस्य वर्णनं

कृतमस्ति।

**पर्यायशब्दाः** – भगवन् = श्रीमन्, सर्पाकारैः = वक्रैः, अक्षरैः = वर्णैः, पारस्यभाषायां = यवनलिप्यां, लिखितम् = अक्षरायितम्, एतत् = इदं, पत्रम् अस्ति। एतस्य = अस्य, सारांशः = भावः, अयमस्ति, विजयपुराधीशः = विजयपुरनरेशः, स्वप्रेषितं = विजयपुराधीशप्रेषितम्, अपजलखानम् = एतन्नामकं, सेनापतिं = च भूपतिं, सम्बोध्य = अभिमुखीकृत्य, लिखति = सन्दिशति, यत्, – वीरवर = सुभट्, महाराष्ट्रराजेन = शिववीरेण, सह = समं, योद्धुं = युद्धं कर्त्तुं, प्रस्थितोऽसि = प्रस्थानं कृतोऽसि, इति मा स्म भूत् = न भवेत्, युद्धे = संग्रामे, शिवं = महाराष्ट्राधीश्वरं, जेष्यसि = विजयिष्यसे, चेत् = यदि, कश्चन = कोऽपि, अन्तरायः = विघ्नः, तव = भवतः, विजये = विजयप्राप्तौ। पदभ्यां = चरणाभ्यां, पदात्या वा, सिंहं = केसरिणं, जितवान् = विजयं कृतवान्, असि, इति, मंस्ये = ज्ञास्ते, किन्तु सिंहहननापेक्षया = केसरिमारणापेक्षया, जीवतः = श्वसतः, सिंहस्य = केसरिणः, वशीकारः = वशीकरणं, एव, अधिकं = विशेषतः, प्रशस्यः = प्रशंसनीयः। तद् = तस्मात्, यदि = चेत्, छलेन = छद्मना, जीवन्तं = प्राणवन्तं, शिवं = शिववीरम्, आनये = समानयेः, तद् = तर्हि, वीरपुङ्गवोपाधिदानसहकारेण = वीरपुङ्गव नामकोपाधि प्रदानेन सह, तव = भवतः, महतीम् = अतिशयां, पदवृद्धिं = पदोन्नतिं, कुर्य्यां = करिष्यामि। गोपीनाथपण्डितेः = एतन्नामके पण्डितः अपि, मया = विजयपुराधीशेन, तव = अपजलखानस्य, निकटे = पार्श्वे, प्रस्थापितः = प्रेषित, अस्ति, स = गोपीनाथः, मम = विजयपुराधीशस्य, तात्पर्यम् = अभिप्रायं, विशदीकृत्य = स्पष्टीकृत्य, तव = भवतः, निकटे = समीपे, कथयिष्यति = वदयिष्यति। प्रयोजनवशेन = सोद्देश्यं, शिवं = शिववीरम्, अपि, साक्षात्करिष्यति = मेलिष्यति, इति = एवम्।

**गद्यांशव्याख्या** – शिववीरेण पृष्टः गौरसिंहः उक्तवान् – हे श्रीमन्! इदं पत्रं सर्पाकारैः अर्थात् वक्राक्षरैः यवनलिप्यां लिखितमस्ति। एतस्य आशयोऽयमस्ति यत् विजयपुरनरेशः आत्मना प्रेषितं सेनापतिम् अफजलखानं प्रति सम्बोध्य लिखति यत् वीरवर! महाराष्ट्रराजेन शिववीरेण सह युद्धं कर्त्तुं प्रस्थानं कृतोऽसि। अतः निश्चयेन महाराष्ट्राधीश्वरं जेष्यसि। तव जये न काऽपि बाधा भवेत्। यदि शिववीरं युद्धे जितवान् तर्हि पदभ्यामेव केसरिणं जितवान् इति मंस्ये। किन्तु सिंहस्य हननापेक्षया जीवितरूपेण ग्रहणमेव अधिकं प्रशंसनीयम्। यदि छलपूर्वकं जीवितः शिववीरः आनीतः तर्हि वीरपुङ्गवस्य उपाधिप्रदानेन सह तव महती पदवृद्धिरपि भविष्यति। मया गोपीनाथपण्डितोऽपि तव सविधे प्रेषितोऽस्ति। सः ममाभिप्रायं सविस्तरेण त्वां कथयिष्यति। प्रयोजनपुरस्सरं पण्डितगोपीनाथः शिववीरेण सहापि मेलिष्यति। इति पत्रेऽस्मिन् लिखितमस्ति।

**विशेषः** – सम्बोध्य – सम्+बुध्+ल्यप्।

योद्धुम् – युध्+तुमुन्।

मंस्ये – मन्+लृट् (उ०पु०, एकवचनम्)।

जीवतः – जीव+शतृ (ष०वि०, एकवचनम्)।

प्रशंस्य – प्र+शस्+यत्।

आनयेः – आ+नी+लिङ् (सिप्)।

विशदीकृत्य – विशद+च्वि+ल्यप्।

**मूलम् – इत्याकर्णयत एव शिववीरस्य अरुणकौशेय-जाल-निबद्धौ मीनाविव नयने संजाते, मुखं च बाल-भास्कर-बिम्ब-विडम्बना-माललम्बे, अधरं च धीरताधुरामधरीकृतवान्।**

**अथ स दक्षिण-कर-पल्लवेन श्मश्रु परामृशन्नाकाशे दृष्टिं बद्ध्वा अरे रे विजयपुर-कलङ्क! स्वयमेव जीवन् शिवः तव राजधानीमाक्रम्य, वीरपुङ्गवोपाधिसहकारेण तव महतीं पदवृद्धिमङ्गीकरिष्यति, तत्किं प्रेषयसि मृत्योः क्रीडनकानेतान् कदर्य्य-हतकान्? इति साम्रेडमवोचत्।**

**अपृच्छच्च ''ज्ञायते वा कश्चिद् वृत्तान्तो गोपीनाथपण्डितस्य?''**

**प्रसङ्गः** – अस्मिन् गद्यांशे गौरसिंहस्य मुखात् प्राप्तगोपनीयपत्रस्य विषयं श्रुत्वा शिववीरस्य प्रतिक्रिया महाकविना श्रीमदम्बिकादत्तव्यासेन वर्णिता अस्ति।

**पर्यायशब्दाः** – इति = एतद्, आकर्णयतः = शृण्वतः, एव शिववीर अरुणकौशेयजाल निबद्धौ = लौहितकौशेयानायगृहीतौ, मीनौ = मत्स्यौ, इव नयने = नेत्रे, संजाते = बभूवतुः, मुखञ्च = आस्यं च, बालभास्करबिम्बविडम्बनां = नवोदितसूर्यमण्डलाकृतिम्, आललम्बे = धृतवत्, अधरं च = ओष्ठं च, धीरताधुरां = धैर्यभारम्, अधरीकृतवान् = त्यक्तवान्।

अथ = ततः, सः = शिववीरः, दक्षिणकरपल्लवेन = वामहस्तपल्लवेन, श्मश्रु, परामृशन् = स्पृशन्, आकाशे = अन्तरिक्षे, दृष्टिं = नेत्रं, बद्धवा = प्रक्षिप्य, अरे रे, विजयपुरकलङ्कः = विजयपुरकर्दमः, स्वमेव = त्वमेव, जीवन् = प्राणं धारयन्, शिवः = शिववीरः, तव = भवतः, राजधानीं = विजयपुरम्, आक्रम्य = आक्रमणं कृत्वा, वीरपुङ्गवोपाधिसहकारेण = वीरपुङ्गवेति नाम्नोपाधिना सहैव, तव = भवतः, महतीम् = अत्यधिकां, पदवृद्धिं = स्थानोन्नतिम्, अङ्गीकरिष्यति = स्वीकरिष्यति, तत्किं = तत् कथं, प्रेषयसि = प्रस्थापयसि, मृत्योः = कालस्य, क्रीडनकान् = कन्दुकान्, एतान् = इमान्, कदर्य्यहतकान् = दुष्टकदर्य्यान्, इति = एवं, साम्रेडम् = अनेकशः, अवोचत् = अकथयत्, अपृच्छच्च = प्रपच्छच्च, ज्ञायते = अवगम्यते वा, कश्चिद्, वृत्तान्तः = वार्त्ता, गोपीनाथपण्डितस्य = एतन्नामकस्य पण्डितस्य।

**गद्यांशव्याख्या** – गौरसिंहस्य मुखात् पत्रस्य विषयं श्रुत्वैव शिववीरमहाराजस्य नेत्रे लोहितकौशेयजालगृहीतौ मीनौ इव सञ्जाते तस्य मुखञ्च नवोदितसूर्यमण्डलाकृतियुक्तं सञ्जातम्। पुनश्च तस्य अधरं धीरतां त्यक्तवान्।

तत्पश्चात् शिववीरः दक्षिणकरपल्लवेन श्मश्रु स्पृशन् आकाशे च दृष्टिं प्रक्षिप्य – 'अरे रे! विजयपुरकलङ्कः! स्वयमेव जीवन् शिववीरः तव विजयपुरराजधानीम् आक्रम्य वीरपुङ्गवेति नाम्ना उपाधिना सहैव तव महतीं पदोन्नतिं स्वीकरिष्यति। एवं चेत् कालस्य क्रीडनकान् एतान् दुष्टनिम्नजनान् किमर्थं प्रेषयसि?

इति अनेकवारम् अकथयत् पृष्टवान् च – ''पण्डितगोपीनाथस्य कश्चित् समाचारः प्राप्तः किम्?''

**विशेषः** – अरुणकौशेयजालनिबद्धौ – अरुणं कौशेयस्य जालं, तेन निबद्धौ (तत्पुरुषसमासः)।

अधरीकृतवान् – अधर+च्वि+कृ+क्तवतु।

परामृशन् – पर+आ+मृश्+शतृ।

दृष्टिबद्धवा – दृश्+क्तिन्+बध्+क्त्वा।

आक्रम्य – आ+क्रम्+ल्यप्।

**मूलम् – यावद् गौरसिंहः किमपि विवक्षिति तावत्प्रतीहारः प्रविश्य 'विजयतां महाराजः' इति त्रिर्व्याहृत्य, करौ संपुटीकृत्य, शिरो नमयित्वा कथितवान् ''भगवन्! दुर्गद्वारि कश्चन गोपीनाथनामा पण्डितः श्रीमन्तं दिदृक्षुरुपतिष्ठते। नायं समयः प्रभूणां दर्शनस्य, पुनरागम्यताम्'' इति बहुशः कथ्यमानोऽपि ''किञ्चन्नत्यावश्यककार्यम्'' इति प्रतिजानाति। तदत्र प्रभुचरणा एव प्रमाणम् – इति।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन शिववीरमहाराजस्य सविधे पण्डितगोपीनाथस्य आगमनस्य वर्णनं करोति।

**पर्यायशब्दाः** – यावत् = यदैव, गौरसिंहः = एतन्नामकः बटुः, किमपि = किञ्चित्, विवक्षति = वक्तुमिच्छति, तावत् = तदैव, प्रतीहारः = सन्देशहरः, प्रविश्य = समागत्य, विजयतां = जयतु, महाराजः = प्रभुः, इति = एवं, त्रिः = वारत्रयं, व्याहृत्य = उक्त्वा, करौ = हस्तौ, संपुटीकृत्य = एकीकृत्य, शिरः = मूर्धानं, नमयित्वा = नमनं कृत्वा, कथितवान्

= उक्तवान्, ''भगवन् = श्रीमन्, दुर्गद्वारि = सिंहदुर्गद्वारि, कश्चन् = कोऽपि, गोपीनाथनामा = एतन्नामकः, पण्डितः, श्रीमन्तं = भगवन्तं, दिदृक्षुः = दर्शनमिच्छुः, उपतिष्ठते = प्रतीक्षते। नायं, समयः = अवसरः, प्रभूणां = स्वामिनां, दर्शनस्य = मिलनस्य, पुनः = भूयः, अपि, किञ्चन = किमपि, अत्यावश्यककार्यम् = अनतिक्रमणीयं, कार्यम् इति, प्रतिजानाति = दृढतया कथयति। तदत्र = तदस्मिन्, प्रभुचरणाः = स्वामिपादाः, एव, प्रमाणं = प्रमाणत्वेन तिष्ठन्ति इति।

**गद्यांशव्याख्या –** महाराजशिववीरस्य गोपीनाथविषयकप्रश्नं श्रुत्वा यदैव गौरसिंहः किञ्चित् वक्तुम् इच्छति स्म तदैव सन्देशवाहकः तत्र समागत्य – ''जयतु महाराजः'' एवं त्रिवारम् उक्त्वा हस्तौ संपुटीकृत्य शिरः नमयित्वा उक्तवान् – भगवन् सिंहदुर्गद्वारि कश्चित् गोपीनाथनामकः पण्डितः भवन्तं दर्शनमिच्छुः प्रतीक्षितो विद्यते। एषः कालः स्वामिनः दर्शनस्य नास्ति, पुनः आगच्छतु इति अनेकवारं कथनादनन्तरमपि ''अत्यावश्यकं कार्यमस्ति'' इति दृढतया कथयति। तु इदानीमत्र प्रभुचरणस्य यथादेशः – इति उक्त्वा सन्देशवाहकः विरमति।

**विशेषः** – विवक्षति – वच्+सन्+लट् (तिप्)।

प्रविश्य – प्र+विश्+ल्यप्।

व्याहृत्य – वि+आ+हृ+ल्यप्।

कथितवान् – कथ्+क्तवतु।

उपतिष्ठते – उप+स्था+लट्।

कथ्यमानः – कथ्+शानच्।

**मूलम् – तदवगत्य ''सोऽयं गोपीनाथः, सोऽयं, गोपीनाथः'' इति साम्रेडं सतर्कं सोत्साहञ्च व्याहृतवत्सु, शिववीरेण निजबाल्यप्रियो माल्यश्रीकनामा संबोध्य कथितो यद् ''गम्यतां दुर्गान्तर एव महावीरमन्दिरे तस्मै वासस्थानं दीयतां, भोज्य-पर्यङ्कादि-सुखद-सामग्रीजातेन सत्क्रियतां, ततोऽहमपि साक्षात्करिष्यामि''इति।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन शिववीरेण गोपीनाथपण्डिताय कृतस्वागतस्य वर्णनं कृतमस्ति।

**पर्यायशब्दाः** – तदवगत्य = एतज्ज्ञात्वा, सोऽयं = पूर्वचर्चितोऽयं, गोपीनाथः = एतन्नामकः पण्डितः, पुनरपि तदेव, इति = एवं, साम्रेडं = बहुशः, सतर्कं = सानुमानं, सोत्साहम् = उत्साहपूर्वकं, च, निखिलेषु = सर्वेषु, व्याहृतवत्सु = उच्चरत्सु, शिववीरेण = महाराष्ट्राधीश्वरेण, निजबाल्यप्रियः = स्वबाल्यमित्रं, माल्यश्रीकनामा = एतन्नामकः, संबोध्य = अभिमुखीकृत्य, कथितः = उक्तः, यत्, ''गम्यतां = गच्छतु, दुर्गान्तरे = दुर्गमध्ये एव, महावीरमन्दिरे = हनुमन्मन्दिरे, तस्मै = गोपीनाथाय, वासस्थानं =निवासः, दीयतां = प्रयच्छतां, भोज्यपर्यङ्कादिसुखसामग्रीजातेन = भोजनशयनादिसुखदवस्तुप्रदानेन, च सत्क्रियां = समाद्रियतां, ततः = तदनन्तरम्, अहमपि = शिववीरोऽपि, साक्षात्करिष्यामि = द्रक्ष्यामि इति।

**गद्यांशव्याख्या –** सन्देशवाहकात् पण्डितगोपीनाथस्य आगमनस्य वार्त्तां श्रुत्वा ''अयं स एव गोपीनाथः अस्ति, अयं स एव गोपीनाथः अस्ति'' इति सर्वैः अनेकवारं सतर्कमुत्साहपूर्वकमुक्तम्। तदा शिववीरेण स्वबाल्यप्रियः मित्रं माल्यश्रीकः उक्तः – ''भवान् गत्वा दुर्गमध्ये हनुमत्मन्दिरे पण्डितगोपीनाथस्य कृते निवासव्यवस्थां भोजनशयनादिसुखदवस्तुप्रदानेन सत्कारव्यवस्थाञ्च करोतु'' इति। तदनन्तरम् अहमपि शीघ्रमेव तेन गोपीनाथपण्डितेन सह मेलिष्यामि।

**विशेषः** – अवगत्य – अव+गम्+ल्यप्।

व्याहृतवत्सु – वि+आ+हृ+क्तवतु। (सप्तमी, बहुवचनम्)।

भोज्यम् – भुज्+यत्।

भोज्यपर्यङ्कादिसुखदसामग्रीजातेन – भोज्य पर्यङ्कादयश्च याः सुखदसामग्र्यस्ताभ्यः जातः तेन।

**मूलम् – ततो बाढमित्युक्त्वा प्रयाते माल्यश्रीके; ''महाराज! आज्ञा चेदहमद्यैव अपजलखानं कथमपि साक्षात्कृत्य, तस्याऽखिलं व्यवसितं विज्ञाय प्रभुचरणेषु विनिवेदयामि; नाधुना मम क्षान्तिः शान्तिश्च, यतः संन्यासिवेषोऽहं समागच्छन् द्वयोर्यवनभटयोर्वार्तयऽवागमं, यत् श्व एवैते युयुत्सन्ते'' इति गौरसिंहो मन्दं कर्णान्तिकं व्याहार्षीत्।**

**ततो ''वीर! कुशलोऽसि, सर्वं करिष्यसि, जाने तव चातुरीं, तद् यथेच्छं गच्छ, नाहं व्याहन्मि तवोत्साहम्, नीतिमार्गान् वेत्सि, किन्तु परिपन्थिन एते अत्यन्तनिर्दयाः, अतिकदर्य्याः, अतिकूटनीतयश्च सन्ति। एतैः सह परमसावधानतया व्यवहरणीयम्'' – इति कथयित्वा शिववीरस्तं विससर्ज।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन शिववीरगौरसिंहयोर्मध्ये कृतवार्तालापस्य वर्णनं कृतमस्ति।

**पर्यायशब्दाः** – ततः = तदनन्तरं, बाढं = युक्तम्, इति = एवम्, उक्त्वा = कथयित्वा, माल्यश्रीके = शिववीरमित्रे, प्रयाते = गते, ''महाराज = भगवन्, आज्ञा = आदेशः, चेत् = यदि, अहं = गौरसिंहः, अद्यैव, अफजलखानं = विजयपुराधीश्वरसेनापतिं, कथमपि = केनापि प्रकारेण, साक्षात्कृत्य = मिलित्वा, तस्य = अफजलखानस्य, अखिलं = सर्वं, व्यवसितं = चेष्टितं, विज्ञाय = ज्ञात्वा, प्रभुचरणेषु = स्वामिपादेषु, विनिवेदयामि = कथयामि, न, अधुना = सम्प्रति, मम = गौरसिंहस्य, क्षान्तिः = सहनशक्तिः, शान्तिश्च = साम च, यतः = यस्मात्, संन्यासिवेषः = परिव्राजकवेषः, अहं = गौरसिंहः, समागच्छन् = आगच्छन्, द्वयोः, यवनभटयोः = म्लेच्छसैनिकयोः, वार्तया = आलापेन, अवागमम् = अवेदिषं, यत्, श्व एव = आगामिनि दिवस एव, ऐते = यवनाः, युयुत्सन्ते = युद्धं कर्त्तुमिच्छन्ति, इति = एवं, गौरसिंहः = पूर्वोक्तः, गौरबटुः, मन्दम् = अतिमन्दस्वरेण, कर्णान्तिकं = कर्णयोः समीपे, व्याहार्षीत् = अवदत्। ततः = तत्पश्चात्, वीर = सुभट, कुशलोऽसि = अतिदक्षोऽसि, सर्वं करिष्यसि = सर्वं कर्त्तुं शक्योऽसि, जाने = वेद्मि, तव गौरसिंहस्य, चातुरीं = चतुरतां, तद् = तस्मात्, यथेच्छम् = इच्छानुसारं, गच्छ = याहि, न अहं = शिववीरः, तव = भवतः, उत्साहं = मनोभावं, व्याहन्मि = नाशयामि, नीतिमार्गान् = नीतितत्वान्, वेत्सि = जानासि, किन्तु, परिपन्थिनः = शत्रवः, एते = इमे, अत्यन्तं निर्दयाः = क्रूराः, अविकदर्य्याः = परमनीचाः, अतिकूटनीतयः = कपटा चारचतुराः च सन्ति। एतैः सह = भवनैः सह, परमसावधानतया = अतिसूक्ष्मतया, व्यवहरणीयं = व्यवहारः करणीयः, इति = एतद्, कथयित्वा = उक्त्वा, शिववीरः, तं = गौरसिंहं, विससर्ज = प्रेषयामास।

**गद्यांशव्याख्या** – तदनन्तरम् ''भवतु नाम'' इत्युक्त्वा माल्यश्रीकः ततः प्रस्थितवान्। पुनश्च ''महाराज! यदि आज्ञा स्यात् तर्हि अद्यैव केनापि प्रकारेण अफजलखानेन सह मिलित्वा तस्य सम्पूर्णकार्यक्रमस्य विषये ज्ञात्वा भवन्तं निवेदयामि। इदानीं मयि शान्तिः सहिष्णुता च नास्ति। यतोहि संन्यासिवेषेण आगमनकाले मया द्वयोः यवनसैनिकयोः वार्तालापेन अवगतं यत् श्व एव एते यवनसैनिकाः युद्धं कर्त्तुम् इच्छन्ति'' इति गौरसिंहेन कर्णस्थाने शिववीरं प्रति शनैः उक्तम्। तदा वीर! त्वं निपुणोऽसि, सर्वं साधयिष्यति, तव चातुर्यञ्चाहं जानामि। अतः त्वं स्वेच्छानुसारं गच्छ। अहं तवोत्साहं न नाशयितुम् इच्छामि। त्वं नीतिमार्गान् जानासि। पुनरपि एते शत्रवः अत्यन्तं निर्दयाः, परमनीचाः अतिकूतनीतिज्ञाश्च सन्ति। एतैः सह अतिसावधानतया व्यवहारः करणीयः – इत्युक्त्वा शिववीरः तं गौरसिंहं प्रेषितवान्।

**विशेषः** – प्रयाते – प्र+या+क्त (सप्तमी विभक्तिः, एकवचनम्)।

व्यवसितम् – वि+अव+षिञ्+क्त।

विज्ञाय – वि+ज्ञा+ल्यप्।

समागच्छत् – सम्+आ+गम्+शतृ।
व्याहार्षीत् – वि+आ+हृ+लुङ्।
व्यवहरणीयम् – वि+अव+हृ+अनीयर्।
विससर्ज – वि+सृज्+लिट् (तिप्)।

**मूलम् – गौरसिंहस्तु त्रिःप्रणम्य, उत्थाय, निवृत्य, निर्गत्य, अवतीर्य, सपदि तस्याः एव निम्ब-तरु-तल-वेदिकायाः समीप आगत्य, स्वसहचरं कुमारमिङ्गितेनाऽऽहूय कस्मिंश्चित् स्वसंकेतित-भवने प्रविश्य, आत्मनः कुमारस्यापि च केशान् प्रसाधनिकया प्रसाध्य मुखमार्द्रपटेन प्रोच्छ्य, ललाटे सिन्दूरबिन्दु-तिलकं विरचय्य, उष्णीषमपहाय, शिरसि सूचिस्यूतां सौवर्ण-कुसुम-लतादि-चित्र-विचित्रतामुष्णीषिकां संधार्य, शरीरे हरितकौशेय-कञ्चुकिकामायोज्य, पादयोः शोणपट्ट-निर्मितमधोवसनमाकलय्य, दिल्लीनिर्मित्ते महार्हे उपानहौ धारयित्वा; लघीयसीं तानपूरिकामेकां सह नेतुं सहचर-हस्ते समर्प्य, गुप्तच्छुरिकां दन्तावलदन्त-मुष्टिकां यष्टिकां मुष्टौ गृहीत्वा, पटवासैर्दिगन्तं दन्तुरयन्, करस्थपटखण्डेन मुहुर्मुहुराननं प्रोच्छन् गायकवेषेण अपजलखान-शिविराभिमुखं प्रतस्थे।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन गौरसिंहस्य अफजलखानशिविरं प्रति गमनात् पूर्वं कृतसिद्धाताया: वर्णनं कृतमस्ति।

**पर्यायशब्दाः** – गौरसिंहः = तत्वटुः, त्रिः = वारत्रयं, प्रणम्य = नमस्कृत्य, उत्थाय = आसनं परित्यज्य, निवृत्य = परावृत्य, निर्गत्य = निःसृत्य, अवतीर्य = प्रसादाधः आगत्य, सपदि = तत्क्षणमेव, तस्या एव = पूर्वोक्ताया एव, निम्बतरुतलवेदिकायाः = निम्बवृक्षाधोः निर्मितचत्वरस्य, एव, समीपे पार्श्वे, आगत्य = समेत्य, स्वसहचरम् = एव सतीर्थ्यं, कुमारं = बालकम्, इङ्गितेन = सङ्केतेन, आहूय = आमन्त्र्य, कस्मिंश्चित्, स्वसंकेतित भवने = पूर्वनिश्चितभवने, प्रविश्य = प्रवेशं कृत्वा, आत्मनः = स्वस्य, कुमारस्यापि = बालकस्यापि, च, केशान् = कुन्तलान्, प्रसाधनिकया = कङ्कतिकया, प्रसाध्य = प्रसाधनं कृत्वा, मुखम् = आस्यम्, आर्द्रपटेन = जलसिक्तवस्त्रेण, प्रोञ्छ्य = परिमृज्य, ललाटे = मस्तके, सिन्दूरबिन्दुतिलकं = सिन्दूरबिन्दुचिह्नं, विरचय्य = रचयित्वा, उष्णीषं = शिरोवेष्टनम्, अपहाय = परित्यज्य, शिरसि = मूर्धिन, सूचिस्यूतां = सूचिग्रथितां, सौवर्णकुसुमलतादिचित्रविचित्रतां = सुवर्णविरचितपुष्पलतादिचित्रसंवलिताम्, उष्णीषिकां = लघूष्णीषं, टोपिकामित्यर्थः, संधार्य = धारयित्वा, शरीरे = देहे, हरितकौशेयकञ्चुकिकां = हरिद्वर्णक्षौमवासोनिर्मितामूर्ध्वपरिधानम्, आयोज्य = समायोज्य, पादयोः = चरणयोः, शोणपट्टनिर्मितं = रक्तकौशेयरचितम्, अधोवसनम् = अधोवस्त्रम्, आकलय्य = दिल्लीनिर्मिते = दिल्लीप्रदेशविरचिते, महार्हे = बहुमूल्ये, उपानहौ = चरचसेविके, धारयित्वा = संधार्य्य, लघीयसीम् = अतिह्रस्वान्, तानपूरिकां = वाद्यविशेषम्, एकाम् = केवलां, सह = सार्धं, नेतु = ग्रहीतुं, सहचरहस्ते = बालकपाणौ, समर्प्य = अर्पयित्वा, गुप्तछुरिकाम् = अन्तर्हितछुरिकां, दन्तावलदन्तमुष्टिकां = गजदन्तमुष्टिकां, यष्टिकां = लघुदण्डिकां, मुष्टौ = करतले, गृहीत्वा = नीत्वा, पटवासैः = वस्त्रसुगन्धितद्रव्यैः, दन्तुरयन् = उन्नतयन्, करस्थपटखण्डेन = हस्तस्थवस्त्रखण्डेन च, मुहुर्मुहुः = भूयोभूयः, आननं = मुखं, प्रोञ्छन् = परिमार्जनं, कुर्वन्, गायकवेषेण, अपजलखानशिविराभिमुखम् = अफजलखानवासस्थानं, प्रतस्थे = प्रस्थितवान्।

**गद्यांशव्याख्या** – गौरसिंहः त्रिवारं शिववीरं नमस्कृत्य आसनं परित्यज्य परावृत्य ततः निर्गत्य च प्रसादस्य अधः आगत्य तत्क्षणमेव तस्याः एव निम्बवृक्षस्य वेदिकायाः समीपे आगत्य स्वकीयसहचरबालकं सङ्केतेन आहूय कस्मिंश्चित् पूर्वनिश्चितभवनं प्रवेशं कृत्वा आत्मनः सहचरस्यापि केशान् कङ्कतेन प्रसाध्य मुखम् आर्द्रवस्त्रेण प्रोञ्छ्य मस्तके सिन्दूरबिन्दुचिह्नं विरचय्य उष्णीषं परित्यज्य शिरसि सूचिग्रथितां सुवर्णविरचितपुष्पलतादिचित्र संवलितां

टोपिकां धारयित्वा देहे हरितवर्णीयक्षौमवासनिर्मितामूर्ध्वपरिधानं समायोज्य चरणयोः रक्तकौशेयरचितम् अधोवस्त्रं धृत्वा दिल्लीप्रदेशविरचिते बहुमूल्ये उपानहौ धारयित्वा लघीयसीं तानपूरिकेतिवाद्ययन्त्रं बालकस्य सहचरस्य च हस्ते अर्पयित्वा गुप्तछुरिकां गजदन्तमुष्टिकां लघुयष्टिकां करतलेन गृहीत्वा वस्त्रसुगन्धितद्रव्यैः उन्नतयन् करवस्त्रेण च वारं वारं मुखप्रोच्छनं कुर्वन् गायकवेषेण अफजलखानस्य शिविरं प्रति प्रस्थितवान्।

**विशेषः** – निर्गत्य – निर्+गम्+ल्यप्।
प्रसाध्य – प्र+साधि+ल्यप्।
विरचय्य – वि+रच्+ल्यप्।
संधार्य – सम्+धृञ्+ल्यप्।
आयोज्य – आ+युज्+ल्यप्।
आकलप्य – आ+कल्+ल्यप्।
लघीयसी – लघु+ईयसुन्।
प्रोञ्छन् – प्र+उछि+शतृ।
प्रतस्थे – प्र+स्था+लिट्।

**मूलम् – अथ तौ त्वरितं गच्छन्तौ, सपद्येव परश्शत-श्वेतपट-कुटीरैः शारदमेघ-मण्डलायितं दीपमाला-विहित-बहुल-चाकचक्यम् अपजलखान-शिविरं दूरत एव पश्यन्तौ, यावत्समीपमागच्छतस्तावत् कश्चन कोकनदच्छविवस्त्रखण्डवेष्टितमूर्द्धा, कटिपर्यन्तसुनद्ध-काकश्यामाङ्गरक्षिकः, कर्बुराधोवसनः, शोणश्मश्रु, विजयपुराधीश-नामाङ्कित-वर्तुल-पित्तलपट्टिका-परिकलित-वामवक्षस्थलः स्कन्धे भुशुण्डीं निधाय, इतस्ततो गतागतं कुर्वन् सावष्टम्भमुर्दूभाषया उवाच– 'कोऽयं कोऽयम्? इति; ततो गौरसिंहेनापि गायकोऽहं श्रीमन्तं दिदृशे' इति समार्दवं व्याख्यायि। ततो गम्यतामन्येऽपि गायका वादकाश्च सम्प्रत्येव गताः सन्ति' इति कथयति प्रहरिणि, 'घृतेन स्नातु भवद्रसना' इति व्याहरन् शिविरमण्डलं प्रविवेश।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अफजलखानस्य शिविरव्यवस्थायाः वर्णनं कृतमस्ति।

**पर्यायशब्दाः** – अथ = ततः, तौ = कुमारः गौरसिंहश्च, त्वरितं = शीघ्रं, गच्छन्तौ = व्रजन्तौ, सपद्येव = तत्क्षणमेव, परश्शतश्वेतपटकुटीरैः = शताधिकोपकारिकाभिः, शारदमेघमण्डलायितं = शरत्कालीनमेघमण्डलमिवाचरितं, दीपमालाविहितबहुलचाकचक्यं = प्रदीपावलिकृताधिकचाकचक्यम्, अपजलखानशिविरं = विजयपुराधीशसेनापति-निवासस्थानं, दूरतः = दूरेणैव, पश्यन्तौ = अवलोकयन्तौ, यावत् = यदैव, समीपं = निकटे, आगच्छतः = आयातः, तावत् = तदैव, कश्चन् = कोऽपि, कोकनदच्छविवस्त्रखण्डवेष्टितमूर्धा = कोकनदस्य = रक्तकमलस्य, छविः इव = कान्ति इव, छविर्यस्य तेन, वस्त्रखण्डेन = पटशकलेन, वेष्टितः = आच्छादितः, मूर्धा = शिरः, यस्य सः, कटिपर्यन्तसुनद्धकाकश्यामाङ्गरक्षिकः = कटिपर्यन्ता मध्यभागपर्यन्ता, सुनद्धा = लम्बिता, काकश्यामा = अतिश्यामला, अङ्गरक्षिका = कञ्चुकिका, यस्य सः, कर्बुराधोवसनः = विविधवर्णकाधोवस्त्रः, शोणश्मश्रुः = रक्तवर्णश्मश्रुः, विजयपुराधीशस्य = शाइस्ताखानस्य, नामाङ्कितया = नामधेयेन चिह्नितया, वर्तुलया = गोलाकारया, पित्तलपट्टिकया = धातुफलकिकया, परिकलितं = भूपितं, वामं = दक्षिणेतरं, वक्षस्थलं = वक्षः, यस्य सः, स्कन्धे = अंसे, भुशुण्डीं = अग्नेयास्त्रं, निधाय = निक्षिप्य, इतस्ततः, गतागतं, कुर्वन् = सम्पादयन्, सावष्टम्भं = सप्रतिरोधं, उर्दूभाषया = पारसीकभाषया, उवाच =अवदत्, कोऽयं = कोऽयमायाति? इति = एवं, ततः = तदनन्तरं, गौरसिंहेन = पूर्वचर्चितबटुना,

अपि, गायकः, अहं = गौरसिंहः, श्रीमन्तम् = अफजलखानं, दिदृक्षे = द्रष्टुमिच्छामि इत समार्दवं = सनम्रं, व्याख्यायि = अवोचि। ततः = तदनन्तरं, गम्यतां = गच्छ, अन्येऽपि = अपरेऽपि, गायकाः = गानकारकाः, वादकाः = वादयितारः, सम्प्रति = इदानीम्, एव, गताः = याताः, सन्ति, इति, कथयति = वदति, प्रहरिणि = द्वाररक्षके, घृतेन स्नातु भवद्रसना = सर्पिषां सिञ्चिता स्यात्,भवद्रसना, इति एवम्, व्याहरन् = कथयन्, शिविरमण्डलं = पटकुटीरं, प्रविवेश = प्रविष्टवान्।

**गद्यांशव्याख्या** – तदनन्तरं सहचरबालकः गौरसिंहश्च द्वौ अपि शीघ्रं गच्छन्तौ तत्क्षणमेव शताधिकश्वेतपटकुटीरैः शरत्कालीनमेघमण्डलमिव दीपावलिकृताधिकचाकचिक्यम् अफजलखानस्य शिविरं दूरादेव अवलोकयन्तौ यदा समीपमागतवन्तौ, तदा एव कोऽपि रक्तकमलकान्तिरिव वस्त्रखण्डेन आच्छादितशिरः, कटिपर्यन्तलम्बितातिश्यामकञ्चुकिकायुक्तः, विविधवर्णीयाधोवस्त्रः, रक्तवर्णश्मश्रुः, विजयपुराधीशस्य शाइस्ताखानस्य नामयुक्तगोलाकारपित्तलपट्टिकां वामवक्षस्थले निधाय भुशुण्डीञ्च स्कन्धे स्थापयित्वा इतस्ततः गमनागमनं कुर्वन् कश्चित् जनः गौरसिंहम् अवरुद्ध्य उर्दूभाषया पृष्ट्वान् – कोऽयं कोऽयं? इति। तत्पश्चात् – गौरसिंहवर्येणापि अहं गायकोऽस्मि। श्रीमन्तम् अफजलखानं द्रष्टुम् इच्छामि। तदा गच्छतु, इदानीम् एव अन्येऽपि गायकाः वादकाश्च गताः सन्ति। प्रहरिणः एतत्कथनादनन्तरं तव रसना धृतस्नाता भवेत् इत्युक्त्वा गौरसिंहः शिविरमण्डलं प्रविष्टवान्।

**विशेषः** – गच्छन्तौ – गम्+शतृ (प्रथमाविभक्तिः, द्विवचनम्)।

पश्यन्तौ – दृश् (पश्य)+शतृ (द्विवचनम्)।

दिदृक्षे – दृश्+सन्+लट्।

व्याख्यायि – वि+आ+ख्या+लुङ्।

कथयति – कथ्+शतृ (सप्तमी विभक्तिः, एकवचनम्।)

प्रविवेश – प्र+विश्+लट् (तिप्)।

**मूलम् – तत्र च क्वचित् खट्वासु पर्यङ्केषु चोपविष्टान् सगडगडाशब्दं ताम्रकधूममाकृष्य, मुखात् कालसर्पानिव श्यामल-निःश्वासानुद्गिरतः, स्वहृदयकालिमानमिव प्रकटयतः, स्वपूर्वपुरुषोपार्जित-पुण्यलोकानिव फूत्कारैरग्निसात् कुर्वतः, मरणोत्तरमतिदुर्लभं मुखाग्निसंयोगं जीवनदशायामेवाऽऽकलयतः, प्राप्ताधिकारकलिताखर्वगर्वान्; क्वचिद् ''हरिद्रा, हरिद्रा, लशुनं लशुनं, मरिचं मरिचं, चुक्रं चुक्रं, वितुन्नकं वितुन्नकं शृङ्गवेरं शृङ्गवेरं, रामठं रामठं, मत्स्यण्डी मत्स्यण्डी, मत्स्या मत्स्याः, कुक्कुटाण्डं कुक्कुटाण्डं, पललं पललं'' इति कलकलैर्बालानां निद्रां विद्रावयतः, समीप-संस्थापित-कुतू-कुतुप-कर्करी-कण्डोल-कट-कटाह-कम्बिकडम्बान् उग्रगन्धीनि मांसानि शूलाकुर्वतः न खम्पचाः यवागूः स्थालिकासु प्रसारयतः, हिंगुगन्धीनि तेमनानि तितिण्डीरसैर्मिश्रयतः, परिपिष्टेषु कलम्बेषु जम्बीर-नीरं निश्चयोतयतः, मध्ये मध्ये समागच्छतस्ताम्रचूडान् व्यजन-ताडनैः पराकुर्वतः, त्रपुलिप्तेषुताम्रभाजनेषु आरनालं परिवेषयतः सूदान्; क्वचिद्वक्र-प्रसाधितकाकपक्षान्, मद-व्याघूर्णित-शोण-नयनान्-सपारस्परिक-कण्ठग्रहं पर्य्यटतः यौवन-चुम्बित-शरीरान्, स्वसौन्दर्य-गर्व-भारेणेव मन्दगतीन्, अनवरताक्षिप्त-कुसुमबाणैरिव कुसुमैर्भूषितान्, वसनातिरोहिताङ्गच्छटान्, विविध-पटवास-वासितानपि चिरस्नानमहामलिन-महोत्कट-स्वेद-पूतिगन्ध-प्रकटीकृतास्पृश्यतान् यवनयुवकान्।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अफजलखानस्य शिविरव्यवस्थायाः वर्णनं कृतमस्ति।**पर्यायशब्दाः** – तत्र = शिविरे, च क्वचित् = कुत्रापि, खट्वासु = पर्यङ्केषु, शयनेषु च, उपविष्टान् = स्थितान्,

सगडगडाशब्दम् = गडगडेतिशब्देन सह, ताम्रकधूममाकृष्य = तमालधूम-अन्तर्निगृह्य, मुखात् = आननात्, कालसर्पान् = कृष्णभुजङ्गान् इव, श्यामलनिःश्वासान् = कृष्णोच्छ्वासान्, उद्गिरतः = वमतः, स्वहृदयकालिमान् = निजान्तनिहितकालुष्यानि, इव, प्रकटयतः = प्रकटीकुर्वतः, स्वपूर्वपुरुषोपार्जितपुण्यलोकान् = निजपूर्वजसञ्चितस्वर्गादिकान्, इव, फूत्कारैः = मुखनिःसारितवायुभिः, अग्निसात् = वह्नयधीनीभूतान्, कुवर्तः, मरणोत्तरं = मृत्योरनन्तरम्, अतिदुर्लभं = दुष्प्राप्यं, मुखाग्निसंयोगं = वह्नयनेन संश्लेषणं, जीवनदशायां = जीवितावस्थायाम्, एव, आकलयतः = प्राप्नुवतः, प्राप्ताधिकारकलिताखर्वगर्वान् = लब्धस्वाम्यबहुलीभूताभिमानान्, क्वचित् = कुत्रापि, हरिद्रा-हरिद्रा = महारजनं-महारजनं, लशुनं-लशुनं, मरिचं-मरिचं, चुक्रं-चुक्रं = वृक्षाम्लं-वृक्षाम्लं, रामठं-रामठं = हिङ्गु-हिङ्गुः, वितुकन्नं-वितुकन्नं = छत्रा-छत्रा; शृङ्गवेरं-शृङ्गवेरम् = आर्द्रकम्-आर्द्रकं, मत्स्यण्डी-मत्स्यण्डी = फाणितं-फाणितं, मत्स्याः-मत्स्याः = मीनाः-मीनाः, कुक्कुटाण्डं-कुक्कुटाण्डं = ताम्रचूडाण्डं, पललं-पललं = मांसं-मांसम्, इति = एतत्, कलकलैः = कोलाहलैः, बालानां = शिशूनां, निद्रां = स्वापं, विद्रावयतः = दूरीकुर्वतः, समीपे = निकटे, संस्थापिताः = निक्षिप्ताः, कुतूः = चर्मनिर्मितं तैलाद्यधारपात्रं, कुतुपाः = लघुकुतूः, कर्करी = हस्तप्रक्षालनादियोग्यपात्रं, कण्डोलः = पिटः, कटः = पिटः, कटाहः = शुष्कुल्यादिपाकयोग्यपात्रं, कम्बि = दर्विः, कडम्बः = चेतान्, उग्रगन्धीनि = उत्कटगन्धयुक्तानि, मांसानि = पललानि, शूलाकुर्वतः = लोहशलाकया, संस्कुर्वतः, नखम्पचाः = उष्णाः, यवागूः = तरलाः, स्थालिकासु = भक्षणपात्रेषु, प्रसारयतः = प्रसारणं कुर्वतः, हिंगुगन्धीनि = रामठगन्धीनि, तेमनानि = व्यञ्जनानि, तितिण्डीरसैः = चुक्ररसैः, मिश्रयतः = संयोजयतः, परिपिष्टेषु = घर्षितेषु, कलम्बेषु = वास्तुकादिशाकदण्डेषु, जम्बीरनीरं = निम्बुरसं, निश्च्योतयतः = क्षारयतः, मध्ये-मध्ये = अन्तरान्तरा, समागच्छतः = समेष्यतः, ताम्रचूडान् = कुक्कुटान्, व्यजनताडनैः = तालपत्रप्रताडनैः, पराकुर्वतः = दूरीकुर्वतः, वपुलिप्तेषु = रागयुक्तेषु, ताम्रभाजनेषु = ताम्रपात्रेषु, आरनालं = काञ्जिकं, परिवेषयतः = स्थापयतः, सूदान् = पाचकान्; क्वचिद् वक्रप्रसाधितकाकपक्षान् = वक्रस्फालित-कुञ्चितकचान्, मदव्याघूर्णितशोणनयनान् = आसवोद्वेजितरक्तनेत्रान्, सपारस्परिककण्ठग्रहम् = अन्योन्यकण्ठग्रहसहितं, पर्य्यटतः = परिभ्रमतः, यौवनचुम्बितशरीरान् = अभिनववयः सम्बद्धदेहान्, स्वसौन्दर्यगर्भभारेणेव = निजलावण्यगर्वधुरेव, मन्दगतीन् = मन्दगमनान्, अनवरताक्षिप्तकुसुमबाणैः = निरन्तरपतितकामशरैः, इव कुसुमैः = पुष्पैः, भूषितान् = अलंकृतान्,वसनातिरोहिताङ्गच्छटान् = वस्त्रानाच्छादिताङ्गशोभान्, विविधपटवासितानपि = अनेकविधेव, सुगन्धितानपि, चिरस्नानेन = अत्यधिककालतोदहानिर्णेजनेन, महामलिनस्य = अत्यन्तमलीमसस्य, महोत्कटस्य = अत्युग्रस्य, स्वेदस्य = धर्मोदकस्य, पूतिगन्धे। प्रकटीकृता =व्यक्तीकृता, अस्पृश्यता = स्पर्शयोग्यता, यैस्तान्, यवनयुवकान् = म्लेच्छयुवकान्, ददर्श इति शेषः।

**गद्यांशव्याख्या** – गौरसिंहः सहचरेण बालकेन सह यदा अफजलखानस्य शिविरं गतवान् तदा तत्र दृष्टवान् - तस्मिन् शिविरे कुत्रापि पर्यङ्केषु उपविष्टान् गडगडेतिशब्देन सह तमालधूम अन्तर्निगृह्य मुखात् कृष्णसर्पान् इव कृष्णनिःश्वासान् उद्गिरतः, स्वकीयहृदयस्थकालुष्यानि इव प्रकटीकुर्वतः, निजपूर्वजसञ्चितस्र्वगादिकान् इव फुत्कारैः अर्थात् मुखनिःसरितवायुभिः, अग्निसात् कुर्वतः मृत्योरनन्तरं दुष्प्राप्यं मुखाग्निसंयोगं जीवितावस्थायाम् एव प्राप्नुवतः लब्धाधिकारबहुलीभूताहंकारान् कुत्रापि हरिद्रा-हरिद्रा, लशुनं-लशुनं, मरिचं-मचिरम्, अवलेहः-अवलेहः, मधुरा-मधुरा, आर्द्रकम्-आर्द्रकं, हिङ्गु-हिङ्गुः, फाणितं-फाणितं, मीना-मीनाः, कुक्कुटाण्डं-कुक्कुटाण्डं, मांसं-मांसम् इति कोलाहलैः शिशूनां निद्रां दूरीकुर्वतः निकटे संस्थापिताः चर्मनिर्मिततैलाद्यधारपात्रं, लघुकुतूः, हस्तप्रक्षालनादियोग्यपात्रं, कण्डोलः, कटः, कटाहः, दर्विः, कडम्बः, उत्कटगन्धयुक्तानि मांसानि लौहशलाकया संस्कुर्वतः उष्ण-यवागूः स्थालिकासु प्रसारयतः हिंगुगन्धतेमनानि तितिण्डीरसैः संयोजयतः घर्षितेषु वास्तुकादिशाकदण्डेषु निम्बुरसं क्षारयतः मध्ये मध्ये समागच्छतः कुक्कुटान् व्यजनताडनैः दूरीकुर्वतः रागयुक्तेषु ताम्रपात्रेषु काञ्जिकं स्थापयतः पाचकान् क्वचिद्

वक्रस्फालितकुञ्चितकचान् आसवोद्वेजितरक्तनेत्रान् अन्योन्यकण्ठग्रहसहितं परिभ्रमतः यौवनचुम्बितशरीरान् स्वसौन्दर्यगर्भभारेणैव मन्दगतीन् निरन्तरपातितकामशरैः इव पुष्पैः भूषितान् वस्त्रानाच्छादितांगशोभान् विविधपटवासितानपि अत्यधिकसमयात् कृतस्नानेन अत्यन्तमलिनस्य उत्युग्रस्य स्वदेकस्य व्यक्तीकृता स्पर्शयोग्यता यैः, एवं विधान् यवनयुवकान् (दृष्टवान् इति शेषः)।

**विशेषः** – उपविष्टान् – उप+विश्+क्त (द्वि०वि०, बहुवचनम्।)

उद्गिरतः – उद्+गिर्+शतृ (द्वि०वि०, बहुवचनम्)।

आकलयतः – आ+कल्+शतृ (द्वि०वि०, बहुवचनम्)।

विद्रावयतः – वि+द्रु+णिच्+शतृ।

शूलाकुर्वतः – शूल+डाच्+कृ+शतृ।

परिपिष्टेषु – परि+पिष्+क्त (सप्तमी विभक्तिः, बहुवचनम्)।

निश्च्योततः – निस्+च्युतिर्+शतृ।

पर्यटतः – परि+अट्+शतृ।

अनवरताक्षिप्तकुसुमबाणैः – अनवरतम् आक्षिप्ताः कुसुमेषु बाणाः येषु तान् (बहुव्रीहि–समासः)।

**मूलम् – क्वचिद् – ''अहो! दुर्गमता महाराष्ट्रदेशस्य! अहो, दुराधर्षता महाराष्ट्राणाम्, अहो, वीरता शिववीरस्य, अहो! निर्भयता एतत्सेनानीनाम्, अहो त्वरितगतिरेतद्घोटकानाम् आः! किं कथयामः? दृष्ट्वैव चमत्कारं शिववीर–चन्द्रहासस्य न वयं पारयामो धैर्यं धर्त्तुं, न च शक्नुमो युद्धस्थाने स्थातुं, को नाम द्विशिरा यः शिवेन योद्धुं गच्छेत्? कश्च नाम द्विपृष्ठो यस्तद्भटैरपि छलालापं विदध्यात्? वयं बलिनं आस्माकीना महती सेना, तथाऽपि न जानीमः, किमिति कम्पत इव क्षुभ्यतीव च हृदयम्? 'यवनानां पराजयो भविष्यति, अपजलखानो विनङ्क्ष्यति' इति न विद्मः को जपतीव कर्णे, लिखतीव सम्मुखे, क्षिपतीव चान्तःकरणे। मा स्म भोः! मैवं स्यात्, रक्ष भो! रक्ष जगदीश्वर! अथवा सम्बोभवीतितमामेवमपि, योऽयमपजलखानः सेनापति–पद–विडम्बनोऽपि 'शिवेन योत्स्ये हनिष्यामि ग्रहीष्यामि वा' इति सप्रौढि विजयपुराधीशमहासभायां प्रतिज्ञाय समायातोऽपि, शिवप्रतापञ्च विदन्नपि 'अद्य नृत्यम्, अद्य गानम्, अद्य लास्यम्, अद्य मद्यम्, अद्य वाराङ्गना, अद्य भ्रुकुंसकः, अद्य वीणा–वादनम्'' इति स्वच्छन्दैरुच्छृङ्खलाऽऽचरणैर्दिनानि गमयति।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अफजलखानस्य शिविरस्य आन्तरिकी स्थितिः वर्णिता अस्ति।

**पर्यायशब्दाः** – क्वचिद् = कुत्रचिद्, ''अहो दुर्गमता = अगमनीयता, महाराष्ट्रदेशस्य = एतद्देशस्य, अहो दुराधर्षता = दुरभिभवनीयता, महाराष्ट्राणां = महाराष्ट्रवासिनाम्, अहो = वीरता, बलशालिता, शिववीरस्य = शिवस्य, अहो निर्भयता = अभयता, एतत् सेनानीनां =शिववीरसैनिकानाम्, अहो त्वरितगतिः = क्षिप्रगतिः, एतद्घोटकानां = शिववीराश्वानाम्, आ किं कथयामः = किं वदामः? शिववीरचन्द्रहासस्य = शिवकृपाणस्य, चमत्कारं = चाकचिक्यं, दृष्ट्वा = अवलोक्य, एव, न, वयं = यवनसैनिकाः, पारयामः = शक्नुमः, धैर्यं = धीरतां, धर्त्तुं = धारणं कर्तुं, न च शक्नुमः = पारयामः, युद्धस्थाने = रणक्षेत्रे, स्थातुं = युद्धं कर्तुं, को नाम, द्विशिरा = द्विमूर्धाः, यः, शिवेन = शिववीरेण सह, योद्धुं = युद्धं कर्तुं, गच्छेत् = यायात्? कश्च नाम, द्विपृष्ठः = युग्मपृष्ठः, यः = सैनिकः, तद्भटैः = शिवसैनिकैः, अपि छलालापं = कपटवार्तां, विदध्यात् = कुर्यात्? वयं = यवनसैनिकाः, बलिनः = बलशालिनः, अस्माकीना = मदीया, महती = दृहती, सेना = पताकिनी, तथापि, न जानीमः = न विद्मः, किमिति = कथमिति, कम्पत इव = वेजत इव, क्षुभ्यतीव = शोभते इव,

च हृदयं = चित्तं, यवनानां = म्लेच्छानां, पराजयः = पराभवः, भविष्यति, अपजलखानः = तत्सेनापतिः, विनङ्क्ष्यति = नश्यति इति, एवं, न विद्मः = न जानीमः, कः कर्णे = श्रोत्रे, जपतीव = मन्दं कथयतीव, सम्मुखे = अभिमुखे, लिखतीव = लेखनं करोति इव, अन्तःकरणे = हृदये, क्षिपतीव = प्रसरतीव, मा स्म भोः = मैवं स्यात् = एवं न भवेत्, रक्ष भो रक्ष जगदीश्वर = पाहि परमेश्वर, अथवा = उद्वा, सम्बोभवतीतितमाम् = अतिशयने सम्भाव्यते, एवमपि = ईदृशमपि, योऽयम्, अपजलखानः = तत्सेनापतिः, सेनापतिपदविडम्बनः = चमूपतिपदविडम्बनः, अपि, शिवेन = महाराष्ट्राधीश्वरेण, योत्स्ये = युद्धं करिष्यामि, हनिष्यामि = मारयिष्यामि, ग्रहीष्यामि वा = बन्दीकरिष्यामि वा, इति = एवं, सप्रौढ़ि = दृढं, विजयपुराधीशमहासभायां = शाइस्ताखानमहासभायां, प्रतिज्ञाय = प्रतिज्ञां कृत्वा, समायातो = आगतोऽपि, शिवप्रतापं = शिववीरप्रभावं, विदन्नपि = जानन्नपि, अद्य नृत्यम्, अद्य गानं = गीतम्, अद्य लास्यं = दैशिकनृत्यम्, अद्य मद्यं = सुरापानम्, अद्य वाराङ्गना = वेश्या, अद्य भ्रकुंसकः = स्त्रीवेषधारीनर्तकः, अद्य वीणावादनं = सितारवादनम्, इति, स्वच्छन्दैः = उन्मुक्तैः, उच्छृङ्खलाचरणैः = असदाचरणैः, दिनानि = दिवसान्, गमयति = यापयति।

**गद्यांशव्याख्या** – अफजलखानशिविरस्य वर्णनप्रसङ्गे – कुत्रचित् अहो! महाराष्ट्रदेशस्थ दुर्गमता, महाराष्ट्रवासिनां दुरभिभवनीयता, अहो! शिववीरस्य बलशालिता, अहो! शिववीरसैनिकानां निर्भीकता, अहो! शिववीरस्य अश्वानां क्षिप्रगतिः, अहो ! किं वदामः? शिववीरस्य कृपाणस्य चाकचिक्यम् अवलोक्यैव वयं यवनसैनिकाः धैर्यं धर्त्तुं न शक्नुमः। युद्धस्थाने चापि स्थातुम् असमर्थाः भवामः। कः एतादृशः द्विशिरः, यः शिववीरेण सह युद्धं कर्तुं शक्नुयात्? कश्च द्विपृष्ठः सैनिकः, यः शिवसैनिकैः सह कपटवार्त्तां कुर्यात्? वयं यवनसैनिकाः यद्यपि बलशालिनः तथापि न जानीमः यत् किमर्थं हृदयं कम्पते क्षुब्धञ्च भवति।''यवनानां पराजयो भविष्यति, अफजलखानश्च घातितो भविष्यति'' न ज्ञायते एवं प्रकारेण कर्णयोः कः शनैः शनैः वदति? समक्षञ्च लिखतीव तथा हृदये प्रसारयतीव न एतत् कदापि भविष्यति। हे परमेश्वर! रक्ष। अथवा एवमपि भवितुं शक्नोति यतोहि सेनापतिपदमलङ्कुर्वता अनेन अफजलखानेन विजयपुराधीश्वरस्य सभायां – ''शिववीरेण सह युद्धं करिष्यामि, मारयिष्यामि बन्दीकरिष्यामि वा'' एवं दृढप्रतिज्ञां कृत्वा आगतोऽपि शिववीरस्य प्रभावं जानन्नपि ''अद्य नृत्यम्, अद्य गीतम्, अद्य दैशिकनृत्यम्, अद्य सुरापानम्, अद्य वेश्या, अद्य स्त्रीवेषधारी नर्तकः, अद्य वीणावादनम्'' इति उन्मुक्तैः असदाचरणैः दिवसान् यापयति।

**विशेषः** – दुराधर्षता – दुर्+आ+धृष्+त।

धर्त्तुम् – धृ+तुमुन्।

योद्धुम् – युध्+तुमुन्।

अस्माकीना – अस्माकं+ख+टाप् (ईन)।

योत्स्ये – युध्+लृट्।

हनिष्यामि – हन्+लृट्।

ग्रहीष्यामि – ग्रह्+लृट्।

प्रतिज्ञाय – प्रति+ज्ञा+ल्यप्।

समायातः – सम्+आ+या+क्त (पुं०)

विदन् – विद्+शतृ।

**मूलम्** – **न च यः कदापि विचारयति, यत् कदाचित् परिपन्थिभिः प्रेषिता काचन वारवधूरेव मामासवेन सह विषं पाययेत्, कोऽपि नट एव ताम्बूलेन सह गरलं ग्रासयेत्, कोऽपि गायक एव वा वीणया सह खड्गमानीय खण्डयेदित्यादि; ध्रुव एव तस्य विनाशः, ध्रुवमेव पतनं ध्रुवमेव च पशुमारं मरणम्। तन्न वयं तेन सह जीवन-रत्नं हारयिष्यामः'' – इति व्याहरतः; इतरांश्च –**

**''मैवं भोः! श्व एव आहव-क्रीडाऽस्माकं भविष्यति, तत् श्रूयते सन्धिवार्त्ता-व्याजेन शिव एकत आकारयिष्यते, यावच्च स स्वसेनामपहाय एकाकी अस्मत्स्वामिना सहाऽऽलपितुमेकान्तस्थाने यास्यति; तावद्वयं श्येना इव शकुनिमण्डले महाराष्ट्रसेनायां, छिन्ध भिन्धि इति कृत्वा युगपदेव पतिष्यामः, वसन्त-वाताहत-नीरसच्छदानिव च क्षणेन विद्रावयिष्यामः।**

**प्रसङ्गः** - अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अफजलखानस्य असावधानतायाः वर्णनं कृतमस्ति।

**पर्यायशब्दाः** - न च, यः = अफजलखानः, विचारयति = चिन्तयति, कदापि = यत्, कदाचित् = क्वचित्, परिपन्थिभिः = शत्रुभिः, प्रेषिता = प्रेरिता, काचन = कापि, वारवधूः = वाराङ्गना, एव, माम् = अफजलखानम्, आसवेन = मद्येन, सह, विषं = गरलं, पाययेत् = पानं कारयेत्, कोऽपि = कश्चन, नट एव = नर्त्तक एव, ताम्बूलेन सह, गरलं = विषं, ग्रासयेत् = भक्षयेत्, कोऽपि = कश्चन, गायकः = गीतकारः, एव, वा = अथवा, वीणया = वाद्यविशेषेण, सह, खड्गं = कृपाणम्, आनय = नीत्वा, खण्डयेत् = खण्डखण्डं कुर्यात्, इत्यपि, ध्रुव एव = निश्चितमेव, तस्य = अफजलखानस्य, विनाशः = मरणं, पशुवत् मरणं, ध्रुवमेव = निश्चितमेव, पतनं = पराजयः, ध्रुवमेव च, पशुमारं = पशुवत्, मरणं = वधः। तत् = तस्मात्, न, वयं = सैनिकाः, तेन = अफजलखानेन, सह, जीवनरत्नं = बहुमूल्यजीवितं, हारयिष्यामः, इति = एवं, व्यवहारतः = व्यवहारं कुर्वतः, इतरांश्च = अन्यांश्च - 'मैव', भोः = एवं, मा दद, श्व एव = आगामिदिने एव, अस्माकं = यवनानां, आहवक्रीडा = युद्धक्रीडा, भविष्यति = भविता, तत्, श्रूयते = निशम्यते, सन्धिवार्ताव्याजेन = मेलालापछलेन, शिवः = शिववीरः, एकतः = एकस्मिन्, आकारयिष्यते = आमन्त्रयिष्यते, यावत् = यदा च, सः = शिवः, स्वसेनां = निजपातिकिनीम्, अपहाय = त्यक्त्वा, एकाकी = केवलः, अस्मत्स्वामिना = मत्प्रभुणा, सह, आलपितुं = वार्तां कर्तुम्, एकान्तस्थाने = रहसि, यास्यति = गमिष्यति, तावद् = तदा, वयं = यवनसैनिकाः, श्येना इव = वाजपक्षिण इव, शकुनिमण्डले = पक्षिमण्डले, महाराष्ट्रसेनायां = शिवसैनिकेषु, छिन्धि = कर्त्तय, भिन्धि = भेदय, इति = एवं, कृत्वा, युगपदेव = सहैव, पतिष्यामः = आक्रमिष्यामः, वसन्तवाताहतनीरसच्छदानिव = वसन्तवाताभिधातशुष्कपत्राणीव, च, क्षणेन = अत्यल्पकालेन, विद्रावयिष्यामः।

**गद्यांशव्याख्या** - अफजलखानः एतत् कदापि न चिन्तयति स्म यत् कदाचित् शत्रुभिः प्रेषिता कापि वाराङ्गना मां मद्येन सह विषपानं कारयेत्। कश्चन नर्त्तक एव ताम्बुलेन सह विषं भक्षयेत्। कश्चन गायकः एव वीणावाद्ययन्त्रस्य व्याजेन कृपाणमानीय खण्डं खण्डं कुर्यात्। अस्य अफजलखानस्य मरणं निश्चितमेव, अस्य पराजयः ध्रुवमेव पशुवत् मरणञ्च निश्चितमेव। अतः वयम् अनेन सह स्वबहुमूल्यजीवनं न नाशयिष्यामः केचित् एवं विधवार्तालापं कुर्वन्तः अन्ये च ''एवं न वक्तव्यम्। भोः श्व एवास्माकं युद्धक्रीडा भविष्यति। श्रूयते यत् एतस्मात् पक्षात् शिववीरः सन्धिवार्तार्थम् आमन्त्रयिष्यते। पुनश्च यदैव शिववीरः स्वसेनां विहाय अफजलखानेन सह वार्तां कर्त्तुम् एकान्ते आगमिष्यति, तदैव वयं यवनसैनिकः श्येन इव पक्षिमण्डलवत् शिवसैनिकेषु युगपदेव आक्रमिष्यामः तथा च वसन्तवार्ताभिघातशुष्कपत्राणीव अल्पकालेनैव हनिष्यामः। कर्त्तय भेदय चेति उक्त्वा।

**विशेषः** - पाययेत् = पा+णिच्+लिङ्।

आनीय = आ+णीञ्+ल्यप्।

हारयिष्यामः - हृ+विच्+लृट्।

आलपितुम् - आ+लप्+तुमुन्।

छिन्धि = छिदिर्+लोट्।

भिन्धि = भिदिर्+लोट्।

विद्रावयिष्यामः = वि+द्राव्+लृट्

**मूलम् - इतस्तु छलेनाऽस्मत्वस्वामिसहचराः शिवं पाशैर्बद्ध्वा पिञ्जरे स्थापयित्वा तं जीवन्तमेव वंशवदं करिष्यन्ति। परन्तु गोप्यतमोऽयं विषयो मा स्म भूत् कस्यापि कर्णगतः - इति कर्णान्तिकं मुखमानीयोत्तरयतः सांग्रामिक-भटानवलोकयन्; ''धन्या भवन्तो येषां गोप्यतमा अपि विषया एव वीथिषु विकीर्यन्ते। महाराष्ट्रा धूर्ताचार्याः, नैतेषु भवतां धूर्तता सफला भवति'' इत्यात्मन्येवाऽऽत्मना कथयन्, स्वप्रभाधर्षित-सकल-रक्षकगणः स्वसौन्दर्येणाऽऽकर्षयन्निव विश्वेषां मनांसि, सपद्येव प्रधान-पट-कुटीर-द्वारमाससाद। तत्र च प्रहरिणमालोकयदुक्तवांश्च यत् पुण्यनगर-निवासी गायकोऽहमत्र भवन्तं गान-रसायनैरमन्दमानन्दयितुमिच्छामीति। तदवगत्य स भ्रूसंचारेण कञ्चित् निवेदकं सूचितवान्। स चान्तः प्रविश्य, क्षणानन्तरं पुनर्बहिर्निर्गत्य गायकमपृच्छत् - किं नाम भवतः? पूर्वञ्च कदाऽपि समायातो न वा? अथ स आह - ''तानरङ्गनामाऽहं कदाचन युष्मत्कर्णमस्पृशम्। न पूर्वं कदाऽपि ममात्रोपस्थातुं संयोगोऽभूत्, अद्य भाग्यान्यनुकूलानि चेत्, श्रीमन्तमवलोकयिष्यामि इति। स च 'आम्' इत्युदीर्य पुनः प्रविश्य क्षणानन्तरं निर्गत्य च, विचित्र-गायकममुं सह निनाय।**

**प्रसङ्गः** - अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अफजलखानस्य शिविरे क्रियमाणायाः शिववीरस्य ग्रहणयोजनायाः वर्णनं कृतमस्ति।

**पर्यायशब्दाः** - इतस्तु = मत्पक्षे, तु, छलेन = कपटेन, अस्मत् स्वामिसहचराः = मत्, प्रभुसैनिकाः, शिवं = शिववीरं, पाशैः = जालैः, बद्ध्वा = आबद्ध्य, पिञ्जरे = पञ्जरे, स्थापयित्वा = निक्षिप्य, तं = शिववीरं, जीवन्तमेव = अमृतमेव, वंशवदं = स्ववंशं, करिष्यन्ति = विधास्यन्ति। परन्तु = किन्तु, गोप्यतमः = अतिगोप्यः, अयम् = एषः, विषयः = वृत्तान्तः, मास्म भूत् = न स्यात्, कस्यापि = अन्यस्य कस्यचिदपि, कर्णगतः = श्रोत्रलभ्यः, इति = एवं, कर्णान्तिकं = श्रोत्रसमीपं, मुखम् = आननम्, आनीय = नीत्वा, उत्तरयतः = प्रतिवदतः, सांग्रामिकभटान् = सैनिकान्, अवलोकयन् = पश्यन्, धन्याः = साधूवादार्हाः, भवन्तः = यवनाः, येषां, गोप्यतमाः = अतिशयेन गोप्याः, अपि, विषयाः = वार्ताः, एवं, वीथिषु = मार्गेषु, विकीर्यन्ते = प्रसार्यन्ते। महाराष्ट्राः = शिवसैनिकाः, धूर्ताचार्यः = अतिमायाविनः, एतेषु = महाराष्ट्रेषु, भवतां = यवनानां, धूर्तता = कपटाचारिता, सफला = सिद्धा, न, भवति। इति = एवम्, आत्मनि = स्वस्मिनि, एव, स्वेन, कथयन् = उच्चरन्, स्वप्रभाघर्षितसकलरक्षकगणः = निजतेजस्तर्षित-समस्तरक्षकमण्डलः, स्वसौन्दर्येण = निजकान्त्या, आकर्षयन्निव = वशीकुर्वन्निव, विश्वेषां = समेषां, मनांसि = चेतांसि, सपद्येव = तत्क्षणमेव, प्रधानपटकुटीरद्वारं = मुख्यपटकुटीरद्वारम्, आससाद = प्राप्तवान्, च, यत् पुण्यनगरनिवासी = पूनापत्तनवास्तव्यः, गायकोऽहं = गीतकारोऽहम्, अत्रभवन्तं = श्रीमन्तम्, अफजलखानं, गानरससरसायनैः = गीतनिष्यन्दरसायनैः, अमन्दम् = अतिशयम्, आनन्दयितुं = सुखयितुम्, इच्छामि = अभिलषामि, इति। तदवगत्य = तज्ज्ञात्वा, सः प्रहरी, भ्रूसञ्चारेण = भ्रूसंकेतेन, किञ्चित्, निवेदकं = सन्देशहरं, सूचितवान् = कथितवान्। सः = सन्देशहरः, च अन्तः प्रविश्य = संप्रविश्य, क्षणानन्तरं = किञ्चित्कालानन्तरं, पुनः = भूयः, बहिर्निगत्य = बहिरागत्य, गायकं = तानरंगम्, अपृच्छत् = पप्रच्छ, किं नाम भवतः = तव किं नामेति? पूर्वञ्च = एतत् पूर्वमपि, कदापि = कदाचन, समायातः = समागतः न वा? अथ = तदा, सः = तानरंगः, आह = उवाच, - तानरङ्गनामाहं - मम नाम तानरंगोऽस्ति, कदाचन, युष्मत् कर्णः = भवत् श्रोत्रम्, अस्पृशं = स्पर्शः जातः। पूर्वं = प्रथमं, कदापि, मम = तानरंगस्य, अत्र = शिविरे, उपस्थातुम् = आगन्तुं, संयोगः = अवसरः, न, अभूत् = अभवत्। अद्य, भाग्यानुकूलानि = अनुकूलप्रारब्धानि, चेत् = यदि, श्रीमन्तम् = अफजलखानम्, अवलोकयिष्यामि = द्रक्ष्यामि इति। सः निवेदकः, आम् = युक्तम्, इति = एवम्, उदीर्य = उक्त्वा, पुनः = भूयः, प्रविश्य = प्रवेशं कृत्वा, क्षणानन्तरं = किञ्चित्कालानन्तरं, निर्गत्य = बहिरागत्य, च, विचित्रगायकं = तानरंगम्, अमुम् = इमं, सह = साकं, निनाय = प्रवेशयामास।

**गद्यांशव्याख्या** – शिववीरस्य ग्रहणयोजनाया: उद्घाटनं कुर्वद्भि: अफजलखानसैनिकै: उक्तम् – अत्र तु कपटेन अस्माकं स्वामिन: अफजलखानस्य सैनिका: शिववीरं जालै: आबद्ध्य पिञ्जरे निक्षिप्य जीवन्तमेव स्ववशं करिष्यन्ति। परन्तु अतिगोपनीयोऽयं वृत्तान्त: कस्यापि अन्यस्य कर्णगत: न भवेत् इति श्रोत्रसमीपं मुखं कृत्वा प्रतिवदत: सैनिकान् पश्यन् – ''धन्या: भवन्त: यवना:, येषां गोप्या: अपि विषया: एवं प्रकारेण मार्गेषु प्रसार्यन्ते। महाराष्ट्रा: शिवसैनिका: अतिधूर्ता:, तेषु भवतां कपटाचारणं सफलं न भविष्यति, इति आत्मनि एव उच्चरन् निजतेजस्तर्षितसमस्तरक्षकमण्डल: निजकान्त्या सर्वेषां चेतांसि वशीकुर्वन्निव शीघ्रमेव, मुख्यपटकुटीरद्वारं प्राप्तवान्। तस्मिन् स्थाने स्थितं रक्षकं दृष्ट्वा उक्तवान् च – पुण्यनगरनिवासी गीतकार: अहम्। अत्र श्रीमन्तम् अफजलखानं गीतरसरसायनै: अत्यन्तं सुखयितुम् इच्छामि इति। एतच्छ्रुत्वा स: रक्षक: भ्रूसंकेतेन किञ्चित् सन्देशवाहकं सूचितवान्। स: सन्देशवाहक: अन्त: गत्वा किञ्चित्कालानन्तरं पुन: बहिरागत्य तं तानरङ्गं पृष्टवान् – भवत: नाम किम्? इत: पूर्वमपि कदापि समागत: न वा? तदा स: तानरङ्ग: उक्तवान् – तानरङ्ग: मम नाम अस्ति। पूर्वं कदाचित् एव इदं नाम भवत: कर्णयोर्मध्ये गतं स्यात्। इत: पूर्वं मम अत्र आगन्तुं संयोग: न अभूत्। अद्य भाग्यानुकूलकारणात् प्रतीयते यत् श्रीमन्तम् अफजलखानं द्रक्ष्यामि। स: च रक्षक: ''आम्'' इत्युक्त्वा पुनरन्त: प्रविश्य क्षणानन्तरं बहिरागत्य च विचित्रगायकं तं तानरङ्गम् आत्मना सह अन्त: प्रवेशं कारितवान्।

**विशेष:** – वंशवदम् – वश+खच्-मुम्+वद्+अच् (द्वि०वि०, एकवचनम्)।
उत्तरयत: – उद्+तर्+शतृ, (द्वि०वि०, बहुवचनम्)।
अवलोकयन् – अव+लोक+शतृ।
आकर्षयन् – आ+कृष्+शतृ।
आससाद – आ+षद्+लिट्।
उक्तवान् – वच्+क्तवतु – पुल्लिङ्गे।
उपस्थातुम् – उप+स्था+तुमुन्।
निर्गत्य – निर्+गम्+ल्यप्।
निनाय – णी+लिट्।

**मूलम् – तानरङ्गस्तु तेनैव तानपुरिका-हस्तेन बालकेनाऽनुगम्यमान:, शनै: शनै: प्रविश्य, प्रथमं द्वितीयं तृतीयञ्च द्वारमतिक्रम्य, कांश्चित् मृदङ्गस्वरान् सन्दधत:, कांश्चिद् वीणावरणमुन्मुच्य, प्रवालं प्रोञ्छ्य, कोणं कलयत: कांश्चिदविचलोऽयमेतेनैव सह योज्यन्तामपरवाद्यानीति वंशीरवं साक्षीकुर्वत:, कांश्चित् कलित-नेपथ्यान्, पादयोर्नूपुरं बध्नत:, कांश्चित् स्कन्धावलम्बिगुटिकात: करतालिकामुत्तोलयत:; कांश्चिच्च कर्णे दक्षकरं निधाय, चक्षुषी सम्मील्य, नासामाकुञ्चय, पातितोभयजानु उपविश्य, वामहस्तं प्रसार्य, तन्त्रीस्वरेण स्व-काकलीं मेलयत:; सम्मुखे च पृष्ठत: पार्श्वतश्चोपविष्टै: कैश्चित् ताम्बूलवाहकै:, अपरैर्निष्ठ्यूतादान-भाजन-हस्तै:, अन्यैरनवरत-चालितचामरै:, इतरैर्बद्धाञ्जलिभिर्लालाटिकै: परिवृत्तं, रत्नजटितोष्णीषिकामस्तकं, सुवर्ण-सूत्र-रचित-विविध-कुसुम-कुड्मल-लताप्रतानाङ्कितकञ्चुकं महोपबर्हमेकं क्रोडे संस्थाप्य, तदुपरिसन्धारित-भुजद्वयं, रजतपर्य्यङ्के विविधफेन-फेनिल-क्षीरधि-जलतलच्छविमङ्गीकुर्वत्यां तूलिकायामुपविष्ट-मपजलखानं च ददर्श।**

**प्रसङ्ग:** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अफजलखानस्य सभायां स्थिति: वर्णिता

विद्यते।

**पर्यायशब्दाः** – तानरंगः = गौरसिंहः, तु, तानपूरिकाहस्तेन = गृहीततानपूरिकेण, तेनैव = पूर्वोक्तेनेव, बालकेन = कुमारेण, अनुगम्यमानः = अनुसृतः, शनै-शनैः = क्रमशः, प्रविश्य = प्रवेशं कृत्वा, प्रथमं द्वितीयं तृतीयञ्च = प्रथमतः आरभ्य तृतीययावत्, द्वारं = कुटीरास्यम्, अतिक्रम्य = पारेगत्वा, कांश्चित्, मृदङ्गस्वरान् = मृदङ्गरवान्, सन्दधतः = सन्धानं कुर्वतः, कांश्चिद्, वीणावरणं = वीणाच्छादनम्, उन्मुच्य = अपहातय, प्रवालं = वीणादण्डं, प्रोञ्छय = अमलीकृत्य, कोणं = वादनोपयोगिनमुपकरणविशेषं, कलयतः = धारयतः, कांश्चिद्, अविचलोऽयं = स्थिरोऽयम्, एतेनैव = अनेनैव, सह = समं, योज्यन्तां = सम्मेलय, अपरवाद्यान् = अन्यवाद्यान्, इति, वंशीरवं = वेणुदण्डिकास्वरं, साक्षीकुर्वतः = साक्षाद्दर्शिता नयतः, कांश्चित्, कलितनेपथ्यान् = धृतवेषान्, पादयोः = चरणयोः, नूपुरं = ध्वनिकारक चरणाभरणं, बध्नतः = धारयतः, कांश्चित्, स्कन्धावलम्बिगुटिकातः = अंसावलम्बितझोलिकातः, करतालिकां = वाद्यविशेषम्, उत्तोलयः = निष्काषयतः, कांश्चिद्, कर्णे = श्रोत्रे, दक्षकरं = सव्यहस्तं, निधाय = निक्षिप्य, चक्षुषी = नयने, सम्मील्य = मीलयित्वा, नसं = घ्राणम्, आकुञ्च्य = संकोचितं, कृत्वा, पतितोभयजानुः = भूमौस्थापितजानुद्वयम्, उपविश्य = स्थित्वा, वामहस्तं = सव्येतरकरं, प्रसार्य = उत्फाल्य, तन्त्रीस्वरेण = वीणारवेण, स्वकाकलीं = निजसूक्ष्मकलं, मेलयतः = संयोजयतः, सम्मुखे = अभिमुखे, च, पृष्ठतः = विपरीततः, पार्श्र्वतश्च = समीपतश्च, उपविष्टैः = आसनस्थैः, कैश्चित् = ताम्बूलवाहकैः = ताम्बूलधारकैः, अपरैः = अन्यैः, निष्ठ्यूतादानभाजनहस्तैः = पतदग्रहपात्रहस्तैः, अन्यैः = अपरैः, अनवरतचालितचामरैः = सततसंचालितचामरैः, इतरैः = अन्यैः, बद्धाञ्जलिभिः = सम्पुटितकरैः, लालाटिकैः = प्रभोर्भालदर्शिभिः, परिवृत्तं = परितः, व्याप्तं, रत्नजटितोष्णीषिकामस्तकं = रत्नसम्पूरितटोपिकाधारिणं, सुवर्णसूत्रेण = सुवर्णतन्तुना, रचिता या विविधाः = अनेकप्रकाराः, कुसुमकुड्मललताः = पुष्पकलिकावल्लयः, तासां प्रतानैः = विताननैः, अङ्कितः = अञ्चितः, कञ्चुकः = निचोलः, यस्य सः तं; महोपबर्हमं = महोपधानम्, एकं, क्रोडे = अङ्के, निधाय = संस्थाप्य, तदुपरि = उपधानोपरि, सन्धारितभुजद्वयं = स्थापितकरद्वयं, रजतपर्यङ्के = रजतनिर्मिते पर्यङ्के, विविधफेनेन = प्रचुरडिण्डीरेण, फेनिलस्य = फेनयुक्तस्य, क्षीरधिजलतलस्य = समुद्रसलिलतलस्य, छविं = शोभाम्, अङ्गीकुर्वत्यां = धारयन्त्यां, तूलिकायां = तुलमये विष्टरे, उपविष्टं = स्थितम्, अपजलखानं = यवनसेनापतिं, च, ददर्श = दृष्टवान्।

**गद्यांशव्याख्या** – गौरसिंहः तु तानरङ्गगायकरूपेण अफजलखानसभां कथं प्रविष्टवान् इति वर्णयति यत् तानरङ्गः गृहीततानपूरिकेण तेनैव बालकेन अनुकुर्वन् शनैः शनैः प्रवेशं कृत्वा क्रमशः प्रथमं, द्वितीयं तृतीयं च द्वारम् अतिक्रम्य कांश्चित् मृदङ्गरवस्य सन्धानं कुर्वतः, कांश्चित् वीणाच्छादनम्, उन्मुच्य वीणादण्डम् अमलीकृत्य कोणं धारयतः, कांश्चित् स्थिरोऽयम् अनेनैव सह सम्मेलय अन्यवाद्यान् इति वेणुदण्डिकास्वरं साक्षीकुर्वतः, कांश्चित् धृतवेषान् चरणयोः नूपुरं धारयतः, कांश्चित् स्कन्धावलम्बितस्यूततः करतालिकां निष्कासयतः, कांश्चित् कर्णे दक्षिणहस्तं निधाय नयनद्वयं सम्मील्य नासिकाम् आकुञ्च्य, भूमौ स्थापितजानुद्वयेन उपविश्य वामहस्तं प्रसार्य वीणास्वरेण निजकण्ठस्वरं संयोजयतः, अभिमुखे च पृष्ठतः पार्श्वतश्च उपविष्टैः कैश्चित् ताम्बुलधारकैः अन्यैश्च निष्ठ्यूतादानभाजनहस्तैः, अन्यैः सततसंचालितचामरैः, अन्यैश्च सम्पुटितहस्तैः लालाटिकैः परिवृतं रत्नयुक्तटोपिकाधारिणं सुवर्णतन्तुना रचिताः अनेकप्रकारकाः पुष्पकुड्मलवल्लिवितानाङ्कितकञ्चुकः एकं महोपधानं क्रोडे संस्थाप्य उपधानोपरि स्थापितकरद्वयं रजतनिर्मितपर्यङ्के विविधफेनेन फेनयुक्तस्य समुद्रसलिलतलस्य शोभां धारयन्त्यां तूलिकायाम् उपविष्टम् अफजलखानं दृष्टवान्।

**विशेषः** – अतिक्रम्य – अति+क्रमु+ल्यप्।

अनुगम्यमानः – अनु+गम्+यक्+शानच्।

उत्तोलयतः = उद्+तुल्+शतृ।

प्रसार्य = प्र+सृ+णिच्+ल्यप्।

उपविष्टः = उप+विश्+क्त।

संस्थाप्य = सम्+स्था+ल्यप्।

अङ्गीकुर्वत्याम् = अङ्ग+च्वि+कृ+शतृ+ङीष् (स०वि०एकवचन)।

ददर्श- दृश्+लिट् (तिप्)।

**मूलम् - ततस्तु तानरङ्गप्रभा-वशीभूतेन सर्वेषु 'आगम्यतामागम्यतामास्यतामास्यताम्' इति कथयत्सु, तानरङ्गोऽपि सादरं दक्षिणहस्तेनाऽऽदरसूचकसङ्केत-सहकारेण यथानिर्दिष्टस्थानमलञ्चकार।**

**ततस्तु इतरगायकेषु सगर्वं सासूयं सक्षोभं साक्षेपं सचक्षुर्विस्फारणं सशिरः परिवर्तनं च तमालोकयत्सु अपजलखानेन सह तस्यैवमभूदालापः।**

**अपजलखानः - किन्देशवास्तव्यो भवान्?**

**तानरङ्गः - श्रीमन्! राजपुत्रदेशीयोऽहमस्मि।**

**अपजलखानः - ओः! राजपुत्रदेशीयः?**

**तानरङ्गः - आम्! श्रीमन्!**

**अपजलखानः - तत् कथमत्र महाराष्ट्रदेशे?**

**तानरङ्गः - सेनापते! मम देशाटन-व्यसनं मां देशाद्देशं पर्याटयति।**

**अपजलखानः - आः! एवम्! तत्किं प्रायः पर्य्यटति भवान्?**

**तानरङ्गः - एवं चमूपते! नव्यान् देशानवलोकयितुं, नवा नवा भाषा भाषा अवगन्तुं नूतना नूतना गान-परिपाटीश्च कलयितुम् एधमानमहाभिलाष एष जनः।**

**अपजलखानः - अहो! ततस्तु बहुदर्शी बहुज्ञश्च भवान्। अथ बङ्गदेशे गतो भवान्? श्रूयतेऽतिवैलक्षण्यं तद्देशस्य।**

**प्रसङ्गः** - अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन तानरङ्गरूपेण विद्यमान-गौरसिंहाफजलखानयोर्मध्ये सञ्जातवार्तालापस्य वर्णनं कृतमस्ति।

**पर्यायशब्दाः** - ततः = तदनन्तरं, तु, तानरङ्गप्रभाववशीभूतेषु = गायकदीप्तिस्तब्धीभूतेषु, सर्वेषु = निखिलेषु, आगम्यताम् = आगच्छतु आस्यताम् = उपविशतु, इति = एवं, कथयत्सु = वदत्सु, तानरङ्गोऽपि - गायकोऽपि, सादरम् = आदरपूर्वकं, दक्षिणहस्तेन = सव्यकरेण, आदरसूचकसंकेतसहकारेण = सम्मानसूचकसंकेतेन सह, यथानिर्दिष्टं = संकेतानुसारं, स्थानम्, अलञ्चकार = शोभितवान्। ततस्तु = तदातु, इतरगायकेषु = अन्यगायकेषु, सगर्वं = साभिमानं, सासूयं = सेर्ष्यं, सशोभं = क्षोभयुक्तं, साक्षेपम् = आक्षेपेण सह, स चक्षुर्विस्फारणं = स नेत्रस्फालनं, सशिरः परिवर्तनं = सशिरः कम्पनं, च, तं = तानरङ्गम्, आलोकयत्सु = पश्यत्सु, अफजलखानेन = सेनापतिना, सह, तस्य = तानरङ्गस्य, एवम् = इत्थम्, आलापः = वार्तालापः, अभूत् = अभवत्।

**अपजलखानः** - किन्देशो वास्तव्यो भवान् = कस्मिन् देशे निवसति?

**तानरंगः** - श्रीमन् = भगवन्, राजपुत्रदेशीयोऽहमस्मि = राजपुत्रदेशवास्तव्योऽहम्।

**अपजलखानः** - ओः, राजपुत्रदेशीयः = राजपुत्रदेशे वससि त्वम्।

**तानरंगः** - आम्, श्रीमन्! बाढं, भगवन्!

**अपजलखानः** – तत्कथमत्र महाराष्ट्रदेशे = तर्हि कस्मादस्मिन् देशे आगतः?

**तानरंगः** – सेनापते = चमूपते! मम = तानरंगस्य, देशाटनव्यसनं = देशभ्रमणस्वभावः, मां देशाद्देशं = देशदेशान्तरं, पर्यटयति = भ्रमयति।

**अपजलखानः** – आ! एवं! तत्किं प्रायः पर्य्यटति भवान् = तत्केन कारणेन परिभ्रमति भवान्?

**तानरंगः** – एवं चमूपते! नव्यान् देशान् = नवानि स्थानानि, नवा नवा, भाषाः = नूतनाः वाणीः, अवगन्तुं = ज्ञातुं, नूतना नूतना गानपरिपाटीः = अभिनवज्ञानविधिः, कलयितुं = साधयितुम्, एधमानमहाभिलाषः = एधमान = वृद्धिगच्छन्, महान् अभिलाषः = इच्छा यस्य सः, एषः = अयं, जनः = नरः।

**अपजलखानः** – अहो ततस्तु = तदा तु, बहुदर्शी = बह्वालोकयिता, बहुशः = बहूनां विषयस्य ज्ञाता, भवान् = तानरङ्गः। अथ = किं, बङ्गदेशे = बंगालनाम्निदेशे, गतः = भ्रमितः, भवान्? श्रूयते = आकर्ण्यते, अतिवैलक्षण्यं = अतिवैचित्र्यं, तद्देशस्य = बंगदेशस्य।

**गद्यांशव्याख्या** – तदनन्तरं तु तानरङ्गस्य प्रभावेण स्तब्धीभूतेषु सर्वेषु "आगच्छतु, उपविशतु" इति वदत्सु सभात्सु सदस्येषु तानरङ्गनामकगायकः अपि आदरपूर्वकं दक्षिणहस्तेन सम्मानसूचकसंकेतेन सह यथानिर्दिष्टं संकेतानुसारं स्थानमलङ्कृतवान्। तदा तु अन्यगायकेषु साभिमानं सासूयं, सक्षोभं, साक्षेपञ्च चक्षुर्विस्फारणं सशिरःकम्पनञ्च तं तानरङ्गं पश्यत्सु सेनापतिना अफजलखानेन सह तानरङ्गस्य इत्थं वार्तालापः सञ्जातः।

**अपजलखानः** – भवान् कस्मिन् देशे निवसति?

**तानरङ्गः** – भगवन्! राजपुत्रदेशवास्तव्योऽहम्।

**अपजलखानः** – ओः! भवान् राजपुत्रदेशे वसति।

**तारनङ्गः** – आं। श्रीमन्!

**अपजलखानः** – एवं चेत् महाराष्ट्रदेशे आगमनं कथम्?

**तानरङ्गः** – सेनापते! मम देशभ्रमणस्वभाव एव देशदेशान्तरं भ्रामयति।

**अपजलखानः** – आः! एवं! केन प्रयोजनेन परिभ्रमति भवान्?

**तानरङ्गः** – चमूपते! नूतनानि स्थानानि नूतनाः भाषाः चावगन्तुं नूतनगायनविधिं कलयितुञ्च अयं जनः अधिकः रुचिवान् अस्ति।

**अफजलखानः** – अरे! तदा तु भवान् बहुज्ञाता बहुद्रष्टा चास्ति। किं बङ्गप्रदेशमपि गतवान् भवान्? श्रूयते यत् सः देशः अतीव विलक्षणः अस्ति।

**विशेषः** – कथयत्सु = कथ्+शतृ – (सप्तमी विभक्तिः, बहुवचनम्)।

आलोकयत्सु = आ+लोक+शतृ – (सप्तमी विभक्तिः, बहुवचनम्)।

पर्याटयति = परि+आ+अट्+णिच्+लट्।

अवगन्तुम् = अव+गम्+तुमुन्।

एधमान महाभिलाषः = एधमानः महान् अभिलाषः यस्य सः – (बहुव्रीहिः समासः)।

**मूलम् – तानरङ्गः – सेनापते! वर्षत्रयात् पूर्वमहं काश्यां गङ्गायां संस्नाय, उज्जयिनीदेशीय-क्षत्रियकुलालंकृतं भोजपुरदेशमालोक्य गङ्गागण्डकतटोपविष्टं हरिहरनाथं प्रणम्य, विलासि-कुल-विलसितं पाटलिपुत्रपुरमुल्लंघ्य सीताकुण्डविक्रमचण्डिकादिपीठपटलपूजितं विक्रमयशःसूचकदुर्गा-वशेषशोभितं देवधुनीतरङ्गक्षालितप्रान्तं मुद्गलपुरं निरीक्ष्य, कर्णदुर्गस्थानेन तद्यशोमहामुद्रयेवा-**

**ङ्कितमङ्गदेशं दिनत्रयमध्युष्य, अतिवर्द्धमानवैभवं वर्द्धमान-नगरं च सम्यक् समालोक्य, यथोचित-सम्भारैस्तारकेश्वरमुपस्थाय, ततोऽपि पूर्वं बङ्गदेशे, पूर्वबङ्गेऽपि च चिरमहमटाट्यामकार्षम्।**

**प्रसङ्गः –** अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अफजलखानेन कृतप्रश्नस्य उत्तरदानप्रसङ्गे गौरसिंहेन पर्यटितस्थानानां वर्णनं कृतमस्ति।

**पर्यायशब्दाः – तानरङ्गः** – सेनापते = चमूपते !, वर्षत्रयात् पूर्वं = त्रिवर्षपूर्वम्, अहं = तानरंगः, काश्यां = काशी इत्यत्र, गंगायां = मन्दाकिन्यां, संस्नाय = स्नानं कृत्वा, उज्जयिनीदेशीयक्षत्रियकुलालङ्कृतम् = उज्जैननिवासिक्षत्रियवंशविभूषितं, भोजपुरदेशम् = एतत्प्रदेशम्, आलोक्य = दृष्ट्वा, गंगागण्डक तटोपविष्टं = गंगागण्डकयोः नद्योः पुलिने विराजमानं, हरिहरनाथं = शङ्करं, प्रणम्य = नमस्कृत्य, विलासिकुलविलासितं = विलासिकुलसेवितं, पाटलिपुत्रपुरं = पटनानगरं, उल्लङ्घ्य = लङ्घयित्वा, सीताकुण्डविक्रमचण्डिकादिपीठपटलपूजितं = सीताकुण्डविक्रम-चण्डिकादिदेवस्थानसमूहशोभितं, विक्रमयशः सूचकदुर्गावशेषशोभितं = विक्रमादित्यकीर्तिपरिचायकदुर्गावशेषयुक्तं, देवधुनीतरङ्गक्षालितप्रान्तं = सुसरित्तरङ्गधौत्तप्रदेशं, मुद्गलपुरम् = एतन्नगरं, निरीक्ष्य = समवलोक्य, कर्णदुर्गस्थानेन = कर्णस्य राज्ञः दुर्गस्थानेन, तद्यशोमहामुद्रया = तत्कीर्तिमहामुद्राङ्कनेन, इव, अङ्कितं मुद्रितम्, अङ्गदेशम् = एतद्देशं, दिनत्रयं = त्रीणि दिनानि, अध्युष्य = वासं कृत्वा, अतिवर्द्धमानवैभवम् = अतिशय प्रवर्द्धमानसम्पदं, वर्द्धमाननगरम्, एतन्नामकं नगरं, च सम्यक्, यथाविधि, समालोक्य = दृष्ट्वा, यथोचितसम्भारैः = समुचितसामग्रीभिः, तारकेश्वरम् = एतद्देवम्, उपस्थाय = संपूज्य, ततोऽपि = तस्मादपि, पूर्वं = प्राच्यं, बङ्गदेशे = बङ्गालेति, प्रान्ते, पूर्वबङ्गेऽपि = ततः पूर्वं-पूर्वबङ्गालेऽपि, च चिरं = चिरकालं, यावत्, अहम्, अटाट्यां, पर्यटनम्, अकार्षम् = अकरोम्।

**गद्यांशव्याख्या** – तानरङ्गः – सेनापते! त्रिवर्षात् पूर्वम् अहं काशीनगर्याः गङ्गानद्यां स्नानं कृत्वा, उज्जयिनीदेशवासिक्षत्रियकुलविभूषितं भोजपुरप्रदेशं दृष्ट्वा गंगागण्डकयोः नद्योः पुलिने विद्यमानं भगवन्तं शङ्करं प्रणम्य विलासिकुलसेवितपाटलिपुत्रनगरं लङ्घयित्वा सीताकुण्डविक्रमचण्डिकादिदेवस्थानसमूहशोभितं विक्रमादित्यकीर्तिपरिचायक दुर्गावशेषयुक्तं सुरसरित्तंरगधौतप्रदेशं मुद्गलनगरं निरीक्ष्य राज्ञः कर्णस्य दुर्गस्थानेन तत्कीर्तिमहामुद्राङ्कनेन इव अङ्कितं अङ्गदेशे त्रीणि दिनानि वासं कृत्वा प्रवर्द्धमानसम्पदमिति वर्द्धमाननगरं सम्यक् अवलोक्य समुचितसामग्रीभिः तारकेश्वरदेवं सम्पूज्य तस्मादपि प्राक् बङ्गाल इति प्रान्ते ततः पूर्वं पूर्वबङ्गालेऽपि चिरकालं यावत् अहं पर्यटनं कृतवान्।

**विशेषः** – संस्नाय = सन्+ष्ना+ल्यप्।

उज्जयिनीदेशीयक्षत्रिकुलालङ्कृतम् – उज्जयिनी देशीयानां क्षत्रियाणां कुलैः अलङ्कृतम् (तत्पुरुषसमासः)।

विलसितम् – वि+लस्+क्त।

उल्लङ्घ्य – उत्+लङ्घि+ल्यप्।

निरीक्ष्य – निर्+ईक्ष्+ल्यप्।

अध्युष्य – अधि+वस्+ल्यप्।

उपस्थाय – उप+स्था+ल्यप्।

**मूलम् – अपजलखानः – किं किं पूर्वबङ्गेऽपि?**

**तानरङ्गः – आम् श्रीमन्! पूर्वबङ्गमपि सम्यगवालुलोकदेष जनः, यत्र प्रान्तप्ररुढां पद्मावलीं परिमर्दयन्ती पद्मेव द्रवीभूता पयःपूरप्रवाहपरम्पराभिः पद्मा प्रवहति, यत्र ब्रह्मपुत्र इव शत्रुसेनानाशन-कुशलः ब्रह्मदेशं विभजन् ब्रह्मपुत्रो नाम नदी भूभागं क्षालयति, यत्र साम्ल-सुमधुर-रस-पूरितानि**

**फूत्कारोद्धूतभूति-ज्वलदङ्गार-विजित्वर-वर्णानिजगत्प्रसिद्धानि नारङ्गाण्युद्भवन्ति यद्देशीयानां जम्बीराणां रसालानां तालानां नारिकेलानां खर्जूराणां च महिमा सर्वदेश-रसज्ञानां साम्रेडं कर्णं स्पृशति, यत्र च भयङ्कराऽऽवर्त-सहस्राऽऽकुलासु स्रोतस्वतीषु सहोहोकारं क्षेपणीः क्षिपन्तः, अरित्रं चालयन्तः, बडिशं योजयन्तः, कुवेणीस्थ म्रियमाणमत्स्य-परीवर्त्तानालोकमालोकमानन्दतः, अदृष्टतटेष्वपि महाप्रवाहेषु स्वल्पया कूष्माण्ड-फक्किकाकारया नौकया भिन्नाञ्जनलिप्ता इव मसी-स्नाता इव साकारा अन्धकारा इव काला धीवरबालाः निर्भयाः क्रीडन्ति।**

**प्रसङ्गः** - अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन गौरसिंहस्य मुखात् पूर्वबङ्गप्रदेशस्य चित्रणं कृतमस्ति।

**पर्यायशब्दाः - अफजलखानः** - किम् = किं कथितं, पूर्वबङ्गेऽपि = पूर्वबङ्गाले गतोऽसि।

**तानरंगः** - आम् = एवं, श्रीमन् = भगवन्! पूर्वबङ्गमपि = तद्देशमपि, सम्यक् = यथाविधि, अवालुलोकत् = अवलोकयाञ्चकार, जनः = नरः, यत्र = पूर्ववङ्गे, प्रान्तप्ररूढां = तटोपान्तसमुद्भूतां, पद्मावलीं = कमलश्रेणिं, परिमर्दयन्ती = कूर्चन्ती, पद्मेव = श्रीरिव, द्रवीभूता = उपस्नुता, पयःपूरप्रवाहपरम्पराभिः = जलप्रवाहपटलयुक्ताभिः, पद्मा = एष नदी, प्रवहति = वहति, यत्र = बङ्गे, ब्रह्मपुत्र इव = गरलविशेष इव, शत्रुसेनानाशनकुशलः = वैरिपताकिनी विनाशदक्षः, ब्रह्मदेशम् = एतद्देशं, विभजनं = विभागं कुर्वन्, ब्रह्मपुत्रो नाम = एतन्नामः, नदः = विशालानदी, भूभागं = भूमिस्थलं, क्षालयति = सिञ्चति। यत्र = वङ्गे, साम्लसुमधुररसपूरितानि = सुमधुराम्लरसयुक्तानि, फूत्कारेण = मुखवायुना, उद्धूता = उड्डायिता, भूतिः = भस्म, येषां तादृशा ये ज्वलन्तः = प्रकाशमानाः, अङ्गाराः, तेषां, विजित्वराः = जयशीलाः वर्णा येषां तानि, जगत्प्रसिद्धानि = विश्वविख्यातानि, नारङ्गाणि = नानारंगापि, उद्भवन्ति = प्रादुर्भवन्ति, यद्देशीयानां = यद्देशोद्भवानां, जम्बीराणां, रसालानाम् = आम्राणां, तालानां = तालवृक्षाणां, खर्जूराणां = खर्जूरवृक्षाणां, नारिकेलानां = फलविशेषाणां, च, महिमा = गौरवं, सर्वदेशरसज्ञानां = निखिलदेशरसिकानां, साम्रेडं = पुनः-पुनः, कर्णं = श्रोत्रं, स्पृशति = अभिपतति, यत्र वङ्गे, च, भयंकरावर्तसहस्राऽऽकुलासु = भीतिजनकभ्रमिससस्रैस्रोतस्वतीषु = नदीषु, सहोहोकारं = हो हविति शब्दयुक्तं, क्षेपणीः = नौकादण्डान्, क्षिपन्तः = निक्षिपन्तः, अरित्रं = केनिपातकं, चालयन्तः = चालनं कुर्वन्तः, बडिशं = मत्स्यवेधनं, योजयन्तः = संयोजनं कुर्वन्तः, कुवेणीस्थम्रियमाणमत्स्यपरीवर्त्ताना लोकं कुवेण्यां = मत्स्याधान्यां तिष्ठन्ति, ये ते कुवेणीस्थाः म्रियमाणाः = आसन्नमरणाः ये मत्स्यास्तेषां परीवर्त्तान् = पार्श्वपरिवर्तितानि, आलोकं = दर्शम्, आनन्दतः = आनन्दं प्राप्नुवत्तः, अदृष्टतटेष्वपि = अदृष्टपुलिनेष्वपि, महाप्रवाहेष्वपि = घोरप्रवाहेष्वपि, स्वल्पया = अतिह्स्वया, नौकया = तरणिका, भिन्नाञ्जनलिप्ता इव = पिष्टकज्जल, संलिप्ता इव, मसीस्नाता इव = श्यामलिकासिक्ता इव, साकारा = सशरीरा, अन्धकारा इव, तमांसीव, कालाः = कृष्णाः, धीवरबालाः = धीवरपुत्राः, निर्भयाः = भयरहिताः, क्रीडन्ति = खेलन्ति।

**गद्यांशव्याख्या - अफजलखानः** - किं, पूर्वबङ्गप्रदेशमपि गतवान् अस्ति?

**तानरङ्गः** - आम्, श्रीमन्! पूर्वबङ्गप्रदेशोऽपि अनेन जनेन सम्यक्तया दृष्टोऽस्ति। तत्र च तटे समुद्भूतां कमलश्रेणिं कूर्चन्ती श्रीरिव द्रवीभूता जलप्रवाहपटलयुक्ता पद्मा नाम्नी नदी प्रवहति। यत्र ब्रह्मपुत्रः अर्थात् गरलविशेष इव शत्रुसेनाविनाशदक्षः ब्रह्मदेशं विभाजिका ब्रह्मपुत्रनाम्नी विशाला नदी ब्रह्मपुत्रभूभागं सिञ्चति। यस्मिन् बङ्गप्रदेशे सुमधुराम्लरसयुक्तानि फूत्कारपवनेन उद्धूता भूतिः, यस्याः दीप्ताङ्गारादपि दीप्तवर्णानि, नारङ्गफलानि उद्भवन्ति। यस्मिन् स्थाने उत्पन्नजम्बीर-आम्र-ताल-खर्जूर-नारिकेलवृक्षाणां महिमा सम्पूर्णदेशरसिकानां वार वारं श्रुतिपथि आयाति। यस्मिन् बङ्गे च भयङ्करजलावर्तसहस्राऽऽकुलासु नदीषु ''हो हो'' इति शब्दयुक्तनौकादण्डान् निक्षिपन्तः अरित्रं चालयन्तः मत्स्यवेधनं सज्जीकुर्वन्तः, जालग्रस्तमरणासन्नमीनानां व्याकुलतां दृष्ट्वा आनन्दिताः, अदृष्टतटेषु अपि

घोरप्रवाहेषु अतिह्रस्वया नौकया पिष्टकज्जलसंलिप्ता इव मसीस्नाता इव सशरीरा, अन्धकारा इव कृष्णवर्णा: धीवरपुत्रा: निर्भीका: सन्त: क्रीडां कुर्वन्ति।

**विशेष:** – अवालुलोकत् = अव+लोक्+लुङ् (तिप्)।

परिमर्दयन्ती = परि+मृद्+णिच्+शतृ+ङीप्।

उद्धूत = उद्+धूञ्+क्त।

स्रोतस्वतीषु = स्रोतस्+मतुप्+ङीप्+सुप्।

क्षिपन्त: = क्षिप्+शतृ+जस्।

**मूलम् – अपजलखान:– ( स्वयं हसन्, सर्वांश्च हसत: पश्यन् ) सत्यं सत्यम्!! धन्यो भवान्, योऽल्पेनैव वयसैवं विदेशं-भ्रमणै: चातुरीं कलयति।**

**तानरंग: – धन्य एव यदि युष्मादृशैरभिनन्द्ये।**

**अपजलखान: – ( क्षणानन्तरम् ) अथ भवान् मूर्छना-प्रधानं गायति, तानप्रधानं वा?**

**तानरंग: – ईदृक्षं तादृक्षञ्च।**

**अपजलखान: – ( क्षणानन्तरम् ) अस्तु, आलप्यतां कश्चन राग:।**

**तानरंग: – ( किञ्चिद् विचार्य ) आज्ञा चेदेकां राग-माला-गीतिं गायामि, यत्र प्रत्याभोगं नवीन एव रागो भवेदेकेनैव च ध्रुवेण सङ्गच्छेत्, तत्तद्राग-नामानि च तत्रैव प्राप्येरन्।**

**अपजलखान: – आ:! किमेवम्? ईदृशं तु गानं न प्राय: श्रूयते, तद् गीयताम्।**

**प्रसङ्ग: –** अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अपजलखानतानरङ्गयो: वार्तालाप: वर्णित: अस्ति।

**पर्यायशब्दा: – अपजलखान –** स्वयम् = अपजलखान:, हसन् = प्रफुल्लन्, सर्वान् = अन्यान्, च, हसत:, पश्यन् = अवलोकयन्, सत्यं सत्यं = समीचीनं, धन्य: = साधुवादार्ह:, भवान् = त्वं, य: = तानरंग:, अल्पेनैव = अल्पीयसैव, वयसैवम् = अवस्थयैवं, विदेशभ्रमणै: = देशदेशाटनै:, चातुरीं = कुशलतां, कलयति = धारयति।

**तानरंग:** – धन्य एव = धन्योऽहं, यदि = चेत्, युष्मादृशै: = भवादृशै:, अभिनन्द्ये = अभिनिन्दतो भवामि?

**अपजलखान:** – किञ्चित्समयानन्तरम्, अथ, भवान् = तानरंग:, मूर्च्छनाप्रधानम् = आरोहावरोह क्रमयुक्त = स्वरसमूहं, गायति = गानं करोति, वा = अथवा, तानप्रधानं = आरोहक्रमयुक्तस्वरसमूहम्?

**तानरंग:** – ईदृक्षं = मूर्च्छनाप्रधानं, तादृक्षञ्च = तान प्रधानञ्च।

**अपजलखान:** – क्षणानन्तरं, अस्तु = युक्तम्, आलप्यताम् = आलाप: क्रियतां, कश्चन राग: = किमपि रञ्जकस्वर सन्दर्भ:।

**तानरंग:** – किञ्चिद् विचार्य, आज्ञा चेत् = चेत् आज्ञापयतु भवान्, एकां = केवलां, रागमालागीतिम् = एतन्नाम्नीं गीतिं, गायामि = गानं करोमि, यत्र = यस्मिन्, प्रत्याभोगं = प्रतिगेयखण्डं, नवीन एव = नूतन एव, राग: = आलाप:, भवेत् = स्यात्, एकेनैव च, ध्रुवेण = स्थिरपदेन, सङ्गच्छेत् = सम्मेल्येत्, तत्तद्रागनामानि = गीतप्रयुक्तप्रतिरागनामानि, च, तत्रैव = रागैव, प्राप्येरन् = लभेरन्।

**अपजलखान:** – आ:, किमेवम् = एतदस्ति? ईदृक्षम् = एतद्विधं, तु, गानं = गीतिं, न प्राय: = सामान्यरूपेण, श्रूयते = आकर्ण्यते, तद्, गीयताम् = आलप्यताम्।

**गद्यांशव्याख्या – अपजलखान: –** (स्वयं हसन् अन्यान् हसत: अवलोकयन्) सत्यं, सत्यं, भवान् धन्योऽस्ति। अल्पावस्थायामेव एवं विधविदेशभ्रमणे चातुर्यं प्राप्तवान् अस्ति।

**तानरङ्गः** – यदि भवादृशैः जनैः अभिनन्दितो भवामि तर्हि निश्चयेन धन्योऽस्मि।

**अपजलखानः** – (क्षणानन्तरं) किं भवान् मूर्धनाप्रधानगीतं गायति तानप्रधानं वा?

**तानरङ्गः** – एतादृशं तादृशं चापि।

**अपजलखानः** – (किञ्चित् कालानन्तरं) भवतु, कश्चित् रागः गीयताम्।

**तानरङ्गः** – (किञ्चित् चिन्तयित्वा) यदि श्रीमतः अनुमतिः स्यात् तर्हि एकां रागमालागीतिं श्रावयामि। यस्याः प्रत्येकं खण्डेऽपि एकः नूतनः एव रागः अस्ति। यः एकेनैव ध्रुवेण सङ्गमिष्यति तथा च सर्वेषां रागाणां नामानि अपि तत्रैव प्राप्तानि भविष्यन्ति।

**अपजलखानः** – अस्तु, एवमस्ति। एतादृशं गीतं प्रायः न श्रूयते। अतः अवश्यमेव गायतु।

**विशेषः** – हसन् = हस्+शतृ (प्र०वि०,एकवचनम्)।

पश्यन् = दृश्+शतृ।

विदेशभ्रमणैः = भ्रम्+ल्युट् (तृ०वि०,बहुवचनम्)।

सङ्गच्छेत् = सम्+गम्-विधिलिङ्ग, (प्र०पु०,एकवचनम्)।

**मूलम् – ततस्तानपूरिकायाः स्वरान् संमेल्य पातित-वामजानुः तानपूरिकातुम्बं क्रोडे निधाय दक्षपादस्योत्थिजानुनि च दक्ष-हस्त-कर्पूर-स्थापन-पुरःसरं तेनैव हस्तेन तर्जन्यङ्गुल्या तानपूरिकां रणयन् स्वकण्ठे नापि त्रीन् ग्रामान् सप्तस्वरांश्च समधात्।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन तानरङ्गस्य गानतत्परतां गानवैशिष्ट्यं वा वर्णितमस्ति।

**पर्यायशब्दाः** – ततः = तदनन्तरं, तानपूरिकाया = वाद्यविशेषस्य, स्वरान् = निषादादीन्, सम्मेल्य = संयोज्य, पातितवामजानुः = भूमिस्थापितदक्षेतरजानुः, तानपूरिकातुम्बं = तानपूरिकाप्रवालं, क्रोडे = अङ्के, निधाय = संस्थाप्य, दक्षपादस्य = सव्यचरणस्य, उत्थितजानुनि, दक्षहस्तकूर्परस्थापनपुरःसरं = दक्षकरकफोणिस्थानपूर्वकं, तेनैव = दक्षिणेनैव, हस्तेन = करेण, तर्जन्यंगुल्या = विशेषैकांगुल्या, तानपूरिकां = वाद्यविशेषं, रणयन् = वादयन्, स्वकण्ठेनाहि = निजोच्चारणनापि त्रीन्, ग्रामान् = षड्जमध्यमगान्धारान्, सप्तस्वरान् = निषादादिसप्तस्वरात्, समधात् = समयोजयत्।

**गद्यांशव्याख्या** – तदनन्तरं तानरङ्गः तानपूरिकायाः स्वरान् मेलयित्वा वामं जानु भूमौ निधाय तानपूरिकायाः तुम्बं क्रोडे स्थापयित्वा दक्षिणपादस्य उत्थिते जानुनि दक्षिणहस्तकफोणिं संस्थाप्य तस्य एव हस्तस्य तर्जनी-अङ्गुल्या तानपूरिकां वादयन् स्वकीयकण्ठेन अपि ग्रामत्रयं (षड्जमध्यमगान्धारान्) सप्तस्वरान् च (निषादादि) समायोजयत्।

**विशेषः** – संमेल्य = सम्+मिल्+णिच्+क्त्वा (ल्यप्)।

निधाय – नि+धा+क्त्वा (ल्यप्)।

समधात् – सम्+धा+लुङ्+तिप्।

पातितवामजानु – पातितं वामजानु येन सः (बहुव्रीहिसमासः)।

उत्थितजानुनि – उत्थितं च तद् जानु उत्थितजानु, तस्मिन् (कर्मधारयसमासः)।

**मूलम् – तन्मात्रश्रवणेनैव मुग्धेष्विवाऽखिलेषु इमां रागमाला-गीतिमगायत् –**

**सखि हे नन्द-तनय आगच्छति॥ सखि०॥**

**मन्दं मन्दं मुरली-रणनैः समधिक-सुखं प्रयच्छति॥**

**भैरव-रूपः पापिजनानां सतां सुख-करो देवः।**

**कलित-ललित-मालती-मालिकः सुरवरवाञ्छित-सेवः ॥**
**सारङ्गैः सारङ्ग-सुन्दरो दृग्भिर्निपीयमानः ।**
**चपला-चपल-चमत्कृति-वसनो विहित-मनोहर-गानः ॥**
**श्रीवत्सेन लाञ्छितो हृदये श्रीलः श्रीदः श्रीशः ।**
**सर्व-श्रीभिर्युतः श्रीपतिः श्रीमोहनो गवीशः ॥**
**गौरी-पतिना सदा भावितो बर्हिण-बर्ह-किरीटः ।**
**कनककशिपु-कदनो बलिमथनो विहत-दशानन-कीटः ॥**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अपजलखानस्य समक्षं तानरङ्गेन आलापितगीतेः वर्णनं कृतमस्ति।

**पर्यायशब्दाः** – तन्मात्रश्रवणेनैव = रागालापाकर्णनैव, मुग्धेषु = आनन्दितेषु, इव, अखिलेषु = सर्वेषु, इमाम् = एषां, रागमालागीतिं = रागमालागानम्, अगायत् = गानमकरोत् –

हे सखि = हे आलि, नन्दतनयः = नन्दपुत्रः, आगच्छति = आयाति। मन्दं मन्दं = शनैः शनैः, मुरलीरणनैः = मुरलीस्वरैः, समधिकसुखम् = अत्यधिकानन्दं, प्रयच्छति = ददाति। पापिजनानां = दुष्टजनानां, भैरवरूपः = भीषणः, सतां = सज्जनानां, सुखकरः = सुखदः, देवः = कृष्णः। कलितललितमालतीमालिकः = सुन्दरमालतीमालिकया विभूषितः, सुरवरवाञ्छितसेवः = देवश्रेष्ठेप्सितसेवः, सारंगसुन्दरः = निरंगसुन्दरः, सांरगैः = हरिणैः, दृग्भिः = नेत्रैः, निपीयमानः = दृश्यमानः। चपलाचपलचमत्कृतिवसनः = विद्युदिव चञ्चलचाकचिक्यायितवस्त्रः, विहितमनोहरगानः = सम्पादितचित्ताकर्षकगानः। श्रीवत्सेन = भृगुपदेन, हृदये = वक्षस्थले, लाञ्छितः = चिह्नितः, श्रीलः = श्रीमान्, श्रीदः = लक्ष्मीप्रदायकः, श्रीशः = लक्ष्म्याधीश्वरः, सर्वश्रीभिः = सर्वाभिः शोभाभिः, श्रीपतिः = लक्ष्मीपतिः, श्रीमोहनः = लक्ष्मीवशीकर्त्तुंशक्तः, गवीशः = वेदाविष्कारकः, जितेन्द्रियः, उद्वा वृन्दावनपशूनां, स्वामी। गौरीपतिना = शङ्करेण, सदा = सर्वदा, भावितः = सेवितः, बर्हिणबर्हकिरीटः = मयूरपिच्छमुकुटः, कनककशिपुकदनः = हिरण्यकशिपुसंहारकः, बलिमथनः = बलिविध्वंसी, विहतदशाननकीटः = नाशितरावणकीटः, (देवः आगच्छति)।

**गद्यांशव्याख्या** – एतावत् श्रवणमात्रेणैव यदा सर्वे मुग्धाः सञ्जाताः, तदा तानरङ्गेन इयं रागमालागीतिः गीता – हे सखि! नन्दपुत्रः आगच्छति। मन्दं मन्दं मुरलीस्वरैः अत्यधिकम् आनन्दं ददाति। (सः) दुष्टजनेभ्यः भीषणः सज्जनेभ्यश्च सुखदायी अस्ति। सुन्दरमालतीमालिकया विभूषितः अस्ति। सर्वे देवाः तस्य सेवायै इच्छुकाः भवन्ति। कामदेवच्छविरयं मृगैः सानुरागम् एकदृष्ट्या वीक्ष्यमाणो विद्यते। विद्युत् इव चञ्चलचमत्कृतिवसनः मनोहरगाननिरतः चास्ति। भृगुपदेन हृदये चिह्नितः अयं श्रीसम्पन्नः, लक्ष्मीप्रदायकः लक्ष्म्याधीश्वरः सर्वाभिः शोभाभिः लक्ष्मीपतिः लक्ष्मीवशीकर्त्तुं शक्तः, वेदाविष्कारकः वेदवाचाम् इन्द्रियाणां धेनूनाञ्च स्वामी अस्ति। अयं भगवता शङ्करेण सर्वदा सेवितः, मयूरपिच्छमुकुटधर्त्ता, हिरण्यकशिपुसंहारकः, बलिविध्वंसी दशाननरूपिकीटस्य चापि संहारकोऽयम्। (नन्दपुत्रः आगच्छतीति)।

**विशेषः** – प्रयच्छति = प्र+दाण्–यच्छ्+लिट्।
निपीयमानः = नि+पा – पीङ् पाने+य+शानच्+सु।
मुग्धेषु = मुह्+क्त+सुप्।
नन्दस्य तनयः नन्दतनयः (षष्ठी तत्पुरुषसमासः)।
श्रियं मोहयति इति श्रीमोहनः (उपपदतत्पुरुषः)।
सारङ्ग इव सुन्दरः सारङ्गसुन्दरः (कर्मधारय समासः)।

**मूलम् – अथ एतावदेव श्रुत्वा अतितरां प्रसन्नेषु पारिषदेषु, ससाधुवादं वितीर्णकङ्कणे च अपजलखाने, तानरङ्गोऽपि सप्रसादं तानपूरिकां भूमौ संस्थाप्य अपजलखानस्य गुणग्राहितां प्रशंशस।**

**अथ अपजलखानः क्रमशः मैरेय-मद-परवशतां वहन् उवाच – यत् कथ्यतामस्मिन् प्रान्ते भवादृशानां गुण-ग्राहकाः के सन्ति? के वा कवितायाः संगीतस्य च मर्माऽवगच्छन्ति?**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन गायकेन तानरङ्गेण प्रस्तुतगीतिं श्रुत्वा उत्सहितेन अपजलखानेन तस्मै तानरङ्गाय प्रदत्तदानस्य वर्णनं कृतमस्ति।

**पर्यायशब्दाः** – अथ, एतावेदव = इयन्मात्रमेव, श्रुत्वा = आकर्ण्य, अतितराम् = अतिशयां, प्रसन्नेषु = तुष्टेषु, परिषदेषु = सभासदेषु, ससाधुवादं = प्रशंसापूर्वकं, वितीर्णकङ्कणे = प्रदत्तकङ्कणे, च, अपजलखाने = सेनापतौ, तानरंगोऽपि, गायकोऽपि, सप्रसादं = सहर्षं, तानपूरिकां = वाद्यं, भूमौ = पृथिव्यां, संस्थाप्य = स्थापयित्वा, अपजलखानस्य = सेनापतेः, गुणग्राहितां = गुणज्ञतां, प्रशंशस = प्रशंसयामास।

अथ = अनन्तरम्, अपजलखानः = सेनापतिः, क्रमशः = क्रमेण, मैरेयमदपरवशताम् = आसवमदाधीनतां, वहन् = धारयन्, उवाच = जगाद, यत्, कथ्यतां = वदतु, अस्मिन् प्रान्ते = इह प्रदेशे, भवादृशानां = त्वत्सदृशानां, गुणग्राहकाः = गुणग्राहिणः, के सन्ति? के वा, कवितायाः = काव्यस्य, संगीतस्य, च, मर्म = रहस्यम्, अवगच्छन्ति = जानन्ति।

**गद्यांशव्याख्या** – तदनन्तरं तानरङ्गस्य गीतिश्रवणमात्रेणैव अत्यन्तं सन्तुष्टेषु सभासदस्येषु प्रशंसापूर्वकम् अपजलखानः तस्मै सुवर्णकङ्कणं दत्तवान्। तानरङ्गः अपि प्रसन्नतापूर्वकं तानपूरिकां भूमौ स्थापयित्वा अपजलखानः गुणग्राहितां प्रशंसितवान्।

तत्पश्चात् अफजलखानः क्रमेण मदिरामदाधीनतां वहन् उक्तवान् – अस्मिन् प्रान्ते भवादृशानां गीतकाराणां गुणग्राहकाः के जनाः सन्ति? के च कवितायाः सङ्गीतस्य च रहस्यं जानन्ति इति?

**विशेषः** – संस्थाप्य = सम्+स्था+णिच्+क्त्वा (ल्यप्)।

प्रशशंस = प्र+शंस्+लिट् (तिप्)।

वहन् = वह्+शतृ।

अवगच्छन्ति = अव+गम्+लट् (झि)।

मैरेयस्य मदः, तस्य परवशः (ष०त०)। तस्य भावः ताम्। वितीर्णं कङ्कणं येन सः वितीर्णकङ्कणः (बहुव्रीहिसमासः) तस्मिन्। साधुवादेन सहितं – ससाधुवादम्।

**मूलम् – ततस्तानरङ्गोऽचकथत् – को नामापरः शिववीरात्? स एव राजनीतौ निष्णातः, स एव सैन्धवाऽऽरोह-विद्या-सिन्धुः, स एव चन्द्रहासचालने चतुरः, स एव मल्ल-विद्या-मर्मज्ञः, स एव बाण-विद्या-वारिधिः, स एव पण्डित-मण्डल-मण्डनः, स एव धैर्य-धारि-धौरेयः, स एव वीर वारवरः, स एव पुरुष-पौरुष-परीक्षकः, स एव दीनदुःखदावदहनः, स एव स्वधर्मरक्षण-सक्षणः, स एव विलक्षण-विचक्षणः, स एव च मादृशगुणिगण-गुण-ग्रहणाऽऽग्रही वर्तते।**

**अथ अपजलखाने – ''तत् किं शिव एष एवं गुण-गण-विशिष्टोऽस्ति? एवं वा वीर-वरोऽस्ति?'' इति सचकितं सभयं सतर्कं सरोमोद्गमं च कथयति, किञ्चिद् विचार्यैव नीति-कौशल-पुरः सरं गौरः पुनरवादीत्।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अपजलखानस्य पुरतः गौरसिंहस्य मुखेन

शिववीरस्य गुणज्ञता, धर्मपरायणता वीरता च वर्णिता: सन्ति।

**पर्यायशब्दा: –** तत: = तदनन्तरं, तानरंग: = गायक:, अचकथत् = अवदत्, को नामापर: = को नामान्य:, शिववीरात् = शिवात्, स एव = शिववीर एव, राजनीतौ, निष्णात: = कुशल:, स एव, सैन्धवारोह-विद्या-सिन्धु: = अश्वारोहणकलासागर:, स एव, चन्द्रहासचालने = कृपाणचालने, चतुर: = दक्ष:, स एव, मल्लविद्यामर्मज्ञ: = मल्लविद्याविशेषज्ञ:, स एव, बाणविद्यावारिधि: = धनुर्विद्यार्णव:, स एव, पण्डितमण्डलमण्डन: = विद्वन्मण्डलाभरण:, स एव, धैर्यधारिधौरेय: = धीरधुरीण:, स एव, वीरवारवर: = वीरसमूहश्रेष्ठ:, स एव, पुरुष-पौरुष-परीक्षक: = पुरुषशक्तिज्ञ:, स एव, दीनदु:खदावदहन: = अनाथवलेषविपिनस्याग्नितुल्य:, स एव, स्वधर्मरक्षणसक्षण: = निजधर्मपरिपालनसोत्साह:, स एव, विलक्षणविचक्षण: = विशिष्टविद्वान्, स एव च, मादृशगुणिगणगुणग्रहणाऽऽग्रही = मत्सदृशगुणिसमूहगुणावग्रहाग्रही, वर्तते = अस्ति।

अथ = अनन्तरम्, अफजलखाने = सेनापतौ, तत्किं, शिव: = शिववीर:, एष: = अयम्, एवम् = ईदृग्, गुणगणविशिष्ट: = गुणगणयुक्त:, अस्ति = वर्तते? एवं वा वीरवरोऽस्ति = वीरश्रेष्ठोऽस्ति," इति = एवं, सचकितं = चकितेन सह, सभयं = भयेन सह, सतर्कं = तर्केण सह, सरोमोद्गम = सरोमाञ्चं च कथयति = वदति, किञ्चिद् = ईषद्, विचार्य इव = चिन्तयित्वेव, नीतिकौशलपुर:सरं = नीतिचातुर्यपूर्णं, गौर: = गौरसिंह:, पुन: = भूय:, अवादीत् = अवदत्।

**गद्यांशव्याख्या –** तदनन्तरं गायक: तानरङ्ग: अवदत् – शिववीरमतिरिच्य एतादृश: कोऽस्ति? स: शिववीर एव राजनीतौ निपुण: अश्वारोहणविद्यायां दक्ष:, चन्द्रहासनामकखड्गसंचालने चतुर:, पुनश्च मल्लविद्याविशारद:, धनुर्विद्याया: समुद्र:, विदुषामाभूषण:, वीरसमूहश्रेष्ठ:, पुरुषाणां पौरुषस्य निकष:, दुर्बलजनानां दु:खरूपिवनस्य दावाग्नि:, निजधर्मपरिपालने सोत्साह:, विलक्षण: विद्वान् स: शिववीर एव मादृशानां गुणिनां समूहस्य गुणग्राही आग्रहवान् चास्ति।

तत्पश्चात् अपजलखान: – एवं चेत् किमयं शिववीर: एवं गुणयुक्त: वीरश्चास्ति? इति साश्चर्यं, सभयं, सानुमानं, सरोमाञ्चं च पृच्छति। पुन: किञ्चिद् – चिन्तयित्वा नीतिकौशलयुक्त: गौरसिंह: तानरङ्गो वा उक्तवान्।

**विशेष: –** निष्णात: – नि+ष्णा+क्त+सु।

सैन्धव – सिन्धु+अण्।

धौरेय – धुर्+ढक् (एय)+सु।

दहन: – दह्+ल्यु(अन)+सु।

**मूलम् – भगवन्! सामान्य-राजभृत्यस्य पुत्र: शिववीरो यदि नाम-नाऽभविष्यत् स्वयमीदृश उर्जस्वल:, तत्कथं स्वर्णदेव-सदृशं सहचरं प्राप्स्यत्? तद्-द्वारा समस्तं कल्याण-प्रदेशं कल्याणदुर्गं च स्वहस्तगतमकरिष्यत्? कथं तोरण-दुर्ग-भोग-भाजनतामकलयिष्यत्? कथं तोरण-दुर्गाद् दक्षिण-पूर्वस्यां पर्वतस्य शिखरे महेन्द्र-मन्दिर-खण्डमिव धर्षितारि-वर्गं डमरु-हुडुक्कारतोषितभर्गं रायगढनामकं महादुर्गं व्यरचयिष्यत्? कथं वा तपनीय-भित्तिका-जटित-महारत्न-किरणावली-वितन्यमान-महावितान-वितति-विरोचित-प्रताप-तापित-परिपन्थि-निवहं चन्द्रचुम्बन चतुर-चारु-शिखर-निकरं भुशुण्डिका-किणाङ्कित-प्रचण्ड-भुजदण्ड-रक्षक-कुल-विधीयमान-परस्सहस्रपरिक्रमं धमद्धम-द्दोधूयमानाऽनेक-ध्वज-पटल-निर्मथित महाकाशं प्रताप-दुर्गं निरमापयिष्यत्? कथं वा आगत एष शिववीर: – इति भ्रमेणापि सम्भाव्य अस्य विरोधिषु केचन मूर्च्छिता: निपतन्ति, अन्ये विस्मृत-शस्त्रास्त्रा: पलायन्ते, इतरे महात्रासाऽऽकुञ्चितोदरा विशिथिल-**

**वाससो नग्ना भवन्ति अपरे च शुष्कमुखा दशनेषु तृणं सन्धाय साम्रेडं प्रणिपात-परम्परां रचयन्तो जीवनं याचन्ते।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन शिववीरस्य शौर्यविषये जिज्ञासमानं अपजलखानं प्रति गौरसिंहस्य कथनं वर्णितमस्ति।

**पर्यायशब्दाः** – भगवन् = श्रीमन्, सामान्यराजभृत्यस्य = सामान्यस्य राजानुचरस्य, पुत्रः = सुतः, शिववीरः = शिवः, यदि नाम = चेदेवं, न अभविष्यत् = स्यात्, स्वयं = शिववीरः, ईदृशः = एवम्, ऊर्जस्वलः = तेजस्वी, तत्कथं = केन प्रकारेण, स्वर्णदेवसदृशं = स्वर्णदेवसमं, सहचरं = सहयोगिनं, प्राप्स्यत् = प्राप्तमकरिष्यत्? तद् द्वारा स्वर्णदेवेन, समस्तं = निखिलं, कल्याणप्रदेशं? कल्याणदुर्गम् एतद्दुर्गं, च स्वहस्तगतं = स्वकरग्रहणम्, अकरिष्यत् = कुर्यात्? कथं, तोरणदुर्गभोगभाजनात् = एतद्दुर्गभोग्यताम्, आकलयिष्यत् = अप्राप्स्यत्,? कथं, तोरणदुर्गात् = तद्दुर्गात्, दक्षिणपूर्वस्यां = दक्षिणपूर्वयोः अन्तराले, पर्वतस्य = गिरेः, शिखरे = शृङ्गे, महेन्द्रमन्दिरखण्डम् = इन्द्रप्रासादशकलम्, इव धर्षितारिवर्गं = भीतारिसमूहं, डमरुहुडुक्कारतोषितभर्गं = डमरुशब्दतोषितशिवं, रायगढनामकं, महादुर्गं = व्यरचयिष्यत् = निरमापयिष्यत्? कथं वा, तपनीयस्य सुवर्णस्य, भित्तिकासु = कुड्येषु, जटितानां = खचितानां, महारत्नानां, किरणावलीभिः = मयूखसमूहैः, वितन्यमानस्य = विस्तार्यमाणस्य, महावितानस्य = महोल्लोचस्य, वितति = विस्तारेण, विरोचितेन = शोभितेन, प्रतापेन = तापेन, परिपन्थिनिवहः येन तं; चन्द्रचुम्बने = इन्दुस्पर्शे, चतुरः = समर्थः, चारुः = शोभनः, शिखर-निकरः = शृङ्गसमूहः, यस्य तं; भुशुण्डिकानां किणैः = आघातैः, अङ्किताः = चिह्निताः, प्रचण्डाः =भुजाः, दण्डा इव, येषां तेषां, रक्षकाणां = रक्षातत्पराणां, कुलेन = समूहेन, विधीयमाना = सम्पाद्यमाना, परस्सहस्राः = सहस्रादधिकाः, परिक्रमा = मण्डलानि, यस्य तं; धमद्धमद्दोधूयमान – धमद्धमदिति शब्देन दोधूयमाना भृशं सञ्चलताम्, अनेकेषां = बहूनां, ध्वजानां = पताकानां, पटलेन = समूहेन, निर्मथितः = विलोडितः, महाकाशः येन सः तं; प्रतापदुर्गं = एतन्नामकं दुर्गं, निरमाययिष्यत् = व्यरचयिष्यत्? कथं वा, ''आगतः आयातः, एषः = अयं, शिववीरः = शिवः'' इति भ्रमेणापि, सम्भाव्य अनुचिन्त्य, अस्य = शिवस्य, विरोधिषु = शत्रुषु, केचन, मूर्च्छिताः = चेतनारहिताः, निपतन्ति = स्खलन्ति, अन्ये, विस्मृतशस्त्रास्त्राः = विस्मृतायुधः, पलायन्ते = दूरं व्रजन्ति, इतरे, महात्रासेन = महाभयेन, आकुञ्चितानि = कृशिमानयन्ति, उदराणि येषां ते; विशिथिलवाससः = स्खलितवस्त्राः, नग्नाः = निर्वस्त्राः, भवन्ति, अपरे च = अन्ये च, शुष्कमुखाः = निरार्द्रमुखाः, दशनेषु = रदेषु, तृणं, सन्धाय = संस्थाप्य, साम्रेडं, भृशं, प्रणिपातपरम्परां = अतिनमनपरम्परां, रचयन्तः = कुर्वन्तः, जीवनं = जीवनदानं, याचन्ते = प्रार्थयन्ते।

**गद्यांशव्याख्या** – (गौरसिंहः वदति) भगवन्! साधारणनृपसेवकस्य पुत्रः शिववीरः यदि स्वयम् एतादृशः तेजस्वी न स्यात् तदा स्वर्णदेव सदृश मित्रं कथं प्राप्तम् अकरिष्यत्? तेन सम्पूर्णकल्याणप्रदेशः कल्याणदुर्गञ्च हस्तगतं कथं कृतं स्यात्? कथञ्च तोरणदुर्गसेवनपात्रताम् अवाप्स्यत्? पुनश्च कथं तोरणदुर्गात् दक्षिणपूर्वस्यां दिशि पर्वतशिखरे इन्द्रप्रासादखण्डमिव शत्रूणां भयदं डमरुशब्दतोषितं भगवन्तं शिवं प्रसादयितुं समर्थं रायगढनामकं महादुर्गं रचयितुं समर्थोऽभविष्यत्? कथं वा सुवर्णभित्तिषु खचितानां महारत्नानां किरणावलीभिः वितन्यमानेन महावितानेन सुशोभितेन प्रतापेन शत्रूणां संतापं, नभस्स्पर्शिभिः शिखरैः शोभितं, भुशुण्डि-आघात-चिह्नितप्रचण्डभुजदण्डैः, प्रहरिभिः सम्पाद्यमाना सहस्रादधिकपरिक्रमं, धमद्-धमदिति शब्दं कुर्वद्भिः दोधूयमानैः ध्वजैः विलोडितविशालाकाशं प्रतापदुर्गं व्यरचयिष्यत्? कथं वा ''आगतः अयं शिववीरः'' इति भ्रमेणापि अनुचिन्त्य विरोधिषु केचन चेतनारहिताः निपतन्ति, अन्ये शस्त्रास्त्राणि विहाय कथं धावन्ति अन्ये च महाभयात् संकुचितोदराः (अत एव) विशिथिलवस्त्राः। नग्नाः कथं जायन्ते इतरे च खिन्नवदनाः सन्तः दन्तेषु तृणं सन्धाय मुहुर्मुहुः प्रणमन्तः जीवनदानं कथं प्रार्थयन्ते?

**विशेषः** – ऊर्जस्वलः = ऊर्जस्+वलच्+सु।

अभविष्यत् = भू+लृङ्+तिप्।
प्राप्स्यत् = प्र+आप्+लृङ्+तिप्।
निरमापयिष्यत् = निर्+मा+णिच्+लृङ्+तिप्।
सन्धाय = सम्+धा+क्त्वा (ल्यप्)।
राजभृत्यः = राज्ञः भृत्यः (षष्ठी तत्पुरुषः)।

**मूलम् - ततस्तस्य महाप्रतापमवगत्य किञ्चिद्भीते इव तच्छत्रूणां चावहेलामाकलय्य किञ्चिदरुण-नयने इव, दक्षिण-हस्तांगुष्ठतर्जनीभ्यां श्मश्रुग्रं परिमृजति यवन-सेनापतौ; तानरङ्गः पुनर्न्यवेदयत् -**

**परन्त्वद्य सिंहेन सह शिवस्य साम्मुख्यमस्ति, तन्मन्ये इयमस्तमनवेला तत्प्रतापसूर्यस्य।**

**तत् कर्णे कृत्वा सन्तुष्ट इव सकन्धराकम्पं सेनापतिरुवाच - अथाऽत्र संग्रामे कस्य विजयः सम्भाव्यते?**

**स उवाच - श्रीमन्! यदि शिवस्य साहाय्यं साक्षाच्छिव एव न कुर्यात्; तद् विजयपुरस्यैव विजयः।**

**अथ सहासं सोऽब्रवीत् - को नाम खपुष्पायितः शशशृङ्गायितः कमठीस्तन्यायितः सरीसृप-श्रवणायितः भेक-रसनायितः वन्ध्यापुत्रायितश्च शिवोऽस्ति? य एनं रक्षिष्यति, दृश्यतां श्व एवैषोऽस्माभिः पाशैर्बद्ध्वा चपेटैस्ताड्यमानो विजयपुरं नीयते।**

**प्रसङ्गः** - अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन शिववीरस्य शौर्यस्य व्याख्यानं श्रुत्वा खिन्नम् अपजलखानं प्रति गौरसिंहस्य पुनरुक्तिर्वर्णिता अस्ति।

**पर्यायशब्दाः** - ततः = तदनन्तरं, तस्य = शिवस्य, महाप्रतापं = महाप्रभावम्, अवगत्य = संज्ञाय, किञ्चित् = ईषद्, भीते इव = धर्षिते इव, तच्छत्रूणां = शिववीरवैरिणां, च, अवहेलां = निन्दाम्, आकलय्य = श्रुत्वा, किञ्चिदारुणे = ईषद्रक्ते, इव, नयने = नेत्रे, दक्षिणहस्ताङ्गुष्ठतर्जनीभ्यां = वामेतरकरांगुष्ठतर्जनीभ्यां, श्मश्रुग्रं, परिमृजति = संस्पृशति, यवनसेनापतौ = अपजलखाने, तानरंगः = गायकः, पुनः, न्यवेदयत् = प्रार्थयत्, परन्तु = किन्तु, अद्य, सिंहेन सह = केसरिणा सह, शिवस्य = शिववीरस्य, सम्मुखम् = अभिमुख्यम्, अस्ति = वर्तते, तन्मन्ये = तस्माज्जानामि, इयम् = एषा, अस्तमनवेला = समाप्तिवेला, तत्प्रतापसूर्यस्य = शिवप्रतापरवेः।

तत्कर्णे कृत्वा = एतच्छ्रुत्वा, सन्तुष्ट इव = परितुष्ट इव, संकन्धराकम्पं = सकन्धकम्पं, सेनापतिः = अपजलखानः, उवाच = अवदत्, अथ, अत्र = अस्मिन्, संग्रामे = युद्धे, कस्य, विजयः = जयः, सम्भाव्यते = अनुमीयते?

सः = तानरंगः, उवाच - श्रीमन्? यदि शिवस्य = चेत् शंकरस्य, साहाय्यं = सहायतां, साक्षाच्छिवः = प्रत्यक्षरूपेण शंकरः, एव, न कुर्यात् = न विदध्यात्, तद् विजयपुरस्यैव = अपजलखानस्यैव, विजयः = जयः।

अथ = तदा, सहासं = हासपूर्वकं, सः = अपजलखानः, अब्रवीत् = को नाम = कश्चेत्, श्वपुष्पायितः = आकाशकुसुममिवाचरितः शशशृङ्गायितः = शशशृङ्गमिवाचरितः, कमठीस्तन्यायितः = कमठ्याः, स्तनमिवाचरितः, सरीसृपश्रवणायितः = सरीसृपस्य जन्तो कर्णमिवाचरि, भेकरसनायितः = मण्डूकीजिह्वा या इव आचरितः, बन्ध्यापुत्रायितश्च = बन्ध्यायाः पुत्रमिवाचरितः, शिवः = शङ्करः, अस्ति = वर्तते? या, एनं = शिववीरं, रक्षिष्यति = रक्षां करिष्यति, दृश्यतां = पश्यतु, श्व एव = आगामिनि दिने एव, एषः = अयम्, अस्माभिः = यवनसेनाभिः, पाशैः = जालैः, बद्ध्वा = संनियम्य चपेटैः, ताड्यमानः = प्रताडितः सन्, विजयपुरं = मद् राजधानीं, नीयते = प्रापयति।

**गद्यांशव्याख्या** - तदनन्तरं शिववीरस्य महाप्रतापं ज्ञात्वा यदा अपजलखानः किञ्चित् भीत इव जातः तथा च

तस्य शिववीरस्य शत्रूणां च तिरस्कारं श्रुत्वा ईषत् रक्ते नेत्रे इव, दक्षिणहस्ताङ्गुष्ठतर्जनीभ्यां श्मश्रग्रं संस्पृशति यवनसेनापतौ, तानरङ्गः पुनः निवेदितवान् –

परन्तु अद्य सिंहेन – (अपजलखानेन) सह शिवस्य साक्षात्कारः अस्ति, तस्मात् कारणात् तस्य प्रतापमभानोः अयं अस्तकालः समुपस्थितः इति मन्ये इति श्रुत्वा ग्रीवासञ्चालनपूर्वकं सन्तुष्ट इव अपजलखानः उक्तवान् – उच्यताम् अस्मिन् युद्धे कस्य जयो भविष्यति?

तानरङ्गः अवदत् – भगवन् यदि साक्षादेव भगवान् शिवः सहायतां न कुर्यात् तर्हि निश्चयेन विजयपुरस्य एव जयः भविष्यति।

अनन्तरं विहसन् अपजलखानोऽवदत् – कश्चेत् आकाशकुसुममिवाचरितः, शशश्रृंगमिवाचरितः, कच्छपीस्तनमिवाचरितः, सरीसृपस्य जन्तोः कर्णमिवाचरितः मण्डूकीजिह्वायाः इव आचरितः बन्ध्यायाः पुत्रमिवाचरितः शङ्करः अस्ति? यः एतस्य शिववीरस्य रक्षां करिष्यति? पश्यतु, श्व एव अयं शिववीरः अस्माभिः यवनसैनिकैः जालैः बद्ध्वा चपेटैश्च प्रताडितस्सन् विजयपुरं नीतो भविष्यति।

**विशेषः** – अवगत्य = अव+गम्+क्त्वा (ल्यप्)।

आकलय्य = आ+कल्+णिच्+क्त्वा (ल्यप्)।

परिमृजति = परि+मृज्+लट्+शतृ। (स०वि०, एकवचनम्)।

सम्भाव्यते = सम्+भावि+लट्।

ताड्यमानः = ताड्+णिच्+शानच्+सु।

महाश्चासौ प्रतापः (कर्मधारयः) – महाप्रतापः।

**मूलम् – इति सकष्टमाकर्ण्य, "स्यादेवं भगवन्!" इति कथयति तानरङ्गे, अभिमान-परवशः स स्वसहचरान् सम्बोध्य पुनरादिशत् – भो-भो योद्धारः! सूर्योदयात् प्रागेव भवन्तः पञ्चाऽपि सहस्राणि सादिनां दशाऽपि च सहस्राणि पत्तीनां सज्जीकृत्य युद्धाय तिष्ठत। गोपीनाथपण्डित द्वाराऽऽहूतोऽस्ति मया शिव-वराकः। तद् यदि विश्वस्य स समागच्छेत्, ततस्तु बद्ध्वा जीवन्तं नेष्यामः, अन्यथा तु सदुर्गमेनं धूलीकरिष्यामः। यद्यप्येवं स्पष्टमुदीरणं राजनीति-विरुद्धं, तथाऽपि मदावेशस्तु न प्रतीक्षते विवेकम्।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन सैनिकान् प्रति श्वः किं करणीयम् इति अपजलखानस्य कथनं वर्णितम् अस्ति।

**पर्यायशब्दाः** – इति = एतद्, सकष्टं = सक्लेशम्, आकर्ण्य = श्रुत्वा, स्यात् = भवेत्, एवं भगवन् = श्रीमन्! इति = एवं, कथयति = उक्तवति, तानरंगे = गायके, अभिमानपरवशः = अहङ्कारवशीभूतः, सः = अपजलखानः, स्वसहचरान् = निजसहयोगिनां, सम्बोध्य = अभिमुखीकृत्य, पुनः, आदिशत् = आदिष्टवान्, भोः भोः योद्धारः = युद्धकर्त्तारः, सूर्योदयात् प्रागेव = सूर्योदयात् पूर्वमेव, भवन्तः = यूयं, पञ्चापि, सहस्राणि, सादिनाम् = अश्वारोहिणां, दशापि च सहस्राणि, पत्तीनां = पदातीनां, सज्जीकृत्य = सुसज्जितं कृत्वा, युद्धाय = संग्रामाय, तिष्ठत = प्रतीक्षध्वं, गोपीनाथपण्डितद्वारा = एतन्नामकपण्डितेन, आहूतः = आमन्त्रितः अस्ति, मया = अफजलखानेन, शिववराकः = क्षुद्रशिवः। तद्, यदि = चेत्, विश्वस्य = विश्वासं कृत्वा, सः = शिवः, समागच्छेत् = आगच्छेत्, ततस्तु = तदा तु, बद्ध्वा = बन्दीकृत्य, जीवन्तं = प्राणान् धारयन्तमेव, नेष्यामः = प्रापयिष्यामः, अन्यथा तु, सदुर्गं = दुर्गसहितम्, एनं = शिवं, धूलीकरिष्यामः = चूर्णयिष्यामः, यद्यपि एवम् = इत्थं, स्पष्टम् = अगोप्यम्, उदीरणं = कथनं, राजनीतिविरुद्धं = राजनीतिविपरीतं, तथापि, मदावेशस्तु = अफजलखानावेशस्तु, न, प्रतीक्षते = प्रतीक्षां करोति, विवेकं = बौद्धिकताम् इति।

**गद्यांशव्याख्या** – अपजलखानस्य शिववीरं ग्रहीतुं भावियोजनायाः कथनं कष्टेन श्रुत्वा 'भगवन्! एतद् भवितुं

शक्नोति' इति तानरङ्गः उक्तवान्। ततः परम् अहङ्कारवशीभूतः सः अपजलखानः निजसहचरान् सम्बोध्य पुनः आदिष्टवान् – भोः योद्धारः! श्वः सूर्योदयात् पूर्वमेव भवन्तः पञ्चसहस्र – अश्वारोहिणः दशसहस्राणि च पदातीन् सज्जीकृत्य युद्धाय तत्पराः भवन्तु। गोपीनाथपण्डितेन मया सः वराकः शिववीरः आहूतोऽस्ति। तस्मात् यदि सः विश्वासेन आगच्छेत् तर्हि तं बन्दीकृत्य जीवन्तमेव नेष्यामः, नो चेत् सदुर्गं चूर्णयिष्यामः। यद्यपि एवं स्पष्टतया कथनन्तु रजनीतिविरुद्धमेव अस्ति, पुनरपि मम आवेशस्तु कर्त्तव्याकर्त्तव्यविचारस्य प्रतीक्षां न करोति।

**विशेषः** – कथयति – कथ्+शतृ – (स०वि०, एकवचनम्)।
आदिशत् = आ+दिश्+लङ्।
सज्जीकृत्य = सज्+च्वि+कृ+क्त्वा (ल्यप्)।
जीवन्तम् = जीव्+शतृ।
अभिमानस्य परवशः – अभिमानपरवशः (षष्ठी तत्पुरुषः)।
राजनीत्याः विरुद्धं राजनीतिविरुद्धम् (षष्ठी तत्पुरुषः)।
असज्जं सज्जं कृत्वा इति सज्जीकृत्य (गतितत्पुरुषः)।

**मूलम् – तदवधार्य समस्तक-कूर्चान्दोलनम् – ''यदाज्ञाप्यते'' ''यदाज्ञाप्यते'' इति वाचां धारासम्पातैरिव स्नापयत्सु पारिषदेषु, ''गोपनीयोऽयं वृत्तान्तः कथं स्पष्टं कथ्यते?'' इति दुर्मनायमानेष्विव च अकस्मादेव प्रविश्य सूदेनोक्तम् – ''श्रीमन्! व्यत्येति भोजनसमयः''। तत् श्रुत्वा ''आ! एवं किलैतत्'' इति सोत्प्रासं सविस्मयं सकूर्चोद्धूननं सोपबर्हताडनमुच्चार्य सपद्युत्थाय, 'पुनरागम्यताम् इति तानरङ्गं विसृज्य सेनापतिरन्तः प्रविवेश। तानरङ्गश्च यथागतं निववृते।**

**इतस्तु प्रतापदुर्गे विहिताहारव्यापारे रजतपर्यङ्किकामेकाधिष्ठिते किञ्चित् तन्द्रा परवशे इव गोपीनाथे, शिववीरः शनैरुपसृत्य प्रणम्य, उपाविशदवोचच्च – अहो! भाग्यमस्माकं यदालयं युष्मादृशा भूदेवाः स्वचरणरजोभिः पावयन्ति इति।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अपजलखानशिविरात् गौरसिंहस्याागमनं शिववीरेण पण्डितगोपीनाथस्य कृतदर्शनञ्च वर्णितमस्ति।

**पर्यायशब्दाः** – तदवधार्य = तच्छ्रुत्वा, समस्तककूर्चान्दोलनं = सशिरस्कूर्चकम्पं – ''यदाज्ञाप्ते = यदादिश्यते'', इति वाचां = गिरां, धारासंपातैरिव = मूसलाधारवृष्टिभिरिव, स्नापयत्सु = स्नानं कारयत्सु, परिषदेषु = सभासदेषु, गोपनीयोऽयं = रहस्यात्मकोऽयं, वृत्तान्तः = प्रवृत्तिः, कथं स्पष्टं = प्रत्यक्षतः कथ्यते, उच्यते'' इति, दुर्मनायमानेष्विव = विमनायमानेष्विव च, अकस्मादेव = सहसैव, प्रविश्यं = प्रवेशं कृत्वा, सूदेनोक्तं = पाचकेन कथितं, ''श्रीमन् = भगवन्, व्यत्येति = समाप्यते, भोजनसमयः = अथनावसरः, तत् श्रुत्वा = एतदाकर्ण्य, ''आ, एवं किलैतत्, किन्वेदम्?'' इति सोत्प्रासम् = ईषद्धास्येन सह, सविस्मयं = साश्चर्यं, सकूर्चोद्धूननं = श्मश्रूल्लसनेन सह, सोपबर्हतानम् = उपधानप्रहारेण साकम्, उच्चार्य = कथयित्वा, सपदि = तत्क्षणमेव, उत्थाय, ''पुनरागम्यतां-पुनरायातु'' इति तानरङ्गं = गायकं, विसृज्य = प्रस्थाप्य, सेनापतिः = अफजलखानः, अन्तःप्रविवेश = अन्तर्जगाम। तानरङ्गश्च = गायकश्च, यथागतं = यथायातं, निववृते = प्रत्यावर्तत्।

इतस्तु, प्रतापदुर्गे = एतद् दुर्गे, विहिताहारव्यापारे = सम्पादितभोजनव्यापारे, रजतपर्य्यङ्किकाम् एकाम्, अधितिष्ठते = विराजमाने, किञ्चित् ईषद्, तन्द्रापरवशे इव = निद्रावशीभूते इव, गोपीनाथे = एतन्नामके पण्डिते, शिववीरः

= महाराष्ट्राधीश्वर:, शनै: =मन्दम्, उपसृत्य = उपगम्य, प्रणम्य = नमस्कृत्य, उपाविशत् = अतिष्ठत, अवोचत् = उवाच, च, ''अहो अस्माकं = शिववीरस्य, भाग्यं = सौभाग्यं, यद्, युष्मादृशा: = भवत्सदृशा:, भूदेवा: = ब्राह्मणा: स्वचरणरजोभि: = निजपादधूलिभि:, आलयं = गृहं, पावयन्ती = पुनन्ति इति।

**गद्यांशव्याख्या –** अपजलखानस्य वचनं श्रुत्वा शिर: कूर्चं च आन्दोलायन्त: – 'यदादिश्यते' इति कथयन्त: केचन सभासदस्या: गिरां मूसलाधारवृष्टिभिरिव स्नापयन्त: इव (केचन च) अयं गोपीनीयो वृत्तान्त: कथं स्पष्टं कथ्यते? इति दुर्मनायमाना: इव अभूवन्। तदानीमेव पाचक: तत्रागत्य उक्तवान् – भगवन्! भोजनकाल: निर्गच्छति इति। तदाकर्ण्य आ:! एवमस्ति किम् इति ईषद्धास्येन सह साश्चर्यं श्मश्रूल्लसनेन सह उपधानप्रहारेण साकं ''पुनरागम्यताम्'' इत्युक्त्वा उत्थाय च तानरङ्गं विसृज्य सेनापति: अन्त: प्रविष्टवान् तानरङ्गश्च येन मार्गेण गत: आसीत् तेनैव पुनरागतवान्।

अत्र च प्रतापदुर्गे पण्डितगोपीनाथ: भोजनादनन्तरम् एकस्मिन् रजतपर्यङ्के उपविष्ट: किञ्चित् असल इव अभूत् तदैव शिववीर: शनै: तम् उपगम्य नमस्कृत्य च उपविष्टवान् उक्तवान् च – 'अहो अस्माकं सौभाग्यमस्ति, यत् मम गृहं भवादृशा: ब्राह्मणा: निजपादधूलिभि: पवित्रीकुर्वन्ति इति।'

**विशेष:** – तदवधार्य = तद्+अव+धृ+ल्यप्।

स्नापयत्सु = ष्ना+णिच्+पुक्+शतृ।

व्यत्येति = वि+अति+इण्+लट्।

विसृज्य = वि+सृज्+ल्यप्।

प्रविवेश = प्र+विश्+लिट्।

समस्तककूर्चान्दोलनम् – मस्तककूर्चयो: आन्दोलनं मस्तककूर्चान्दोलनं (षष्ठी तत्पुरुष:)। तेन सहितम्।

विहिताहारव्यापारे – विहित: आहारव्यापार: येन स: विहिताहारव्यापार:, तस्मिन् – (बहुव्रीहिसमास:)।

**मूलम् – अथ तयोरेवमभूवन्नालापा:।**

**गोपीनाथ: – राजन्! कोऽत्र संदेह:? सर्वथा भाग्यवानसि, परं साम्प्रतं नाहं पण्डितत्वेन कवित्वेन वा समायातोऽस्मि, किन्तु यवनराजदूतत्वेन। तत् श्रूयतां यदहं निवेदयामि।**

**शिववीर: – शिव! शिव! खलु खलु खल्विदमुक्त्वा, येषां श्रीमतां चरणेनाऽङ्कितं विष्णोरपि वक्ष: स्थलमैश्वर्यमुद्रयेव मुद्रितं विभाति, न तेषां ब्राह्मण-कुल-कमल-दिवाकराणां यवन-कैङ्कर्यकलङ्क-पङ्को युज्यते, यं शृण्वतोऽपि मम स्फुटत इव कर्णौ। तथाऽपि कुलीना निरभिमाना भवन्ति इति आनीतश्चेत् कश्चित् सन्देश:, तदेष आज्ञाप्यतां श्रीमच्चरण-कमलचञ्चरीक:।**

**गोपीनाथ: – वीर! कलिरेष-काल:, यवनाऽऽक्रान्तोऽयं भारतभूभाग:, तन्नाऽस्माकं तथा तानि तेजांसि, यथा वर्णयसि। साम्प्रतं तु विजयपुराधीश-वितीर्णां वृत्तिं भुञ्जे इति तदाज्ञामेव परिपालयामि। तत् श्रूयतां तदादेश:!**

**शिववीर: – आर्य! अवदधामि।**

**प्रसङ्ग:** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन कविगोपीनाथपण्डितस्य शिववीरस्य च मध्ये सञ्जातवार्तालापस्य वर्णनं कृतमस्ति।

**पर्यायशब्दा:** – अथ =, एवं = तदनन्तरं, तयो: = शिववीरगोपीनाथयो:, एवम् = इमा:, अभूवन्, आलापा: = वार्ता:। राजन् = क:, अत्र = अस्मिन् कथने, सन्देह: = संशय:, सर्वथा = सर्वप्रकारेण, भाग्यवान् = सौभाग्यशाली, असि, परं = किन्तु, साम्प्रतम् = इदानीम्, अहं, पण्डितत्वेन = विदुष: रूपे, कवित्वेन = कविरूपे, वा = अथवा, न समायात: =

आगतः, अस्मि, किन्तु, यवनराजदूतत्वेन = यवनानां राजा भूपतिः तस्य दूतः सन्देशवाहकः तस्य भावः तेन। तत् = अत एव, श्रूयतां = शृणोतु, यत्, अहं निवेदयामि = कथयामि। शिव! शिव! खलु = अलम्, इदम्, उक्त्वा = कथित्वा, येषां, श्रीमतां = महानुभावानां, चरणेन = पदेन, अङ्कितं = चिह्नितं, विष्णोः = हरेः, अपि, वक्षःस्थलम् = उरःस्थलम्, ऐश्वर्यमुद्रया = ऐश्वर्यस्य गौरवस्य मुद्रामणिः तया, मुद्रितं = अङ्कितम् इव, विभाति = शोभते, तेषां ब्राह्मणकुलकमलदिवाकराणां = ब्राह्मणानां द्विजानां कुलं वंशं तत् एव कमलं पंकजं तस्य दिवाकरः सूर्यः ये तेषां, यवनकैङ्कर्यकलङ्कपङ्क = यवनानां कैङ्कर्य सेवा तस्मात् यत् कलङ्क दोषं, तत् एव पङ्क, न, युज्यते = विशोभते, यं, शृण्वतः = साकर्णयतः, अपि, मम, कर्णौ = श्रवणौ, स्फुटतः = विदीर्णौ भवतः, इव। तथापि = तदपि, कुलीनाः = उच्चकुलोत्पन्नाः, निरभिमानाः = गर्वरहिताः, भवन्ति, इति, चेत् = यदि, कश्चित्, सन्देशः = संवादः, आनीतः = प्रस्तुतः, तत् = तर्हि, एषः, श्रीमच्चरणकमलचञ्चरीकः = श्रीमतः महानुभावस्य चरणे = पदे ते एव कमले पङ्कजे तयोः चञ्चरीकः भ्रमरः, आज्ञाप्यताम् = आदिश्यताम्, एषः, कलिकालः = कलियुगः, अयं, भारतभूभागः = भारतस्य = भारतवर्षस्य, भूभागः = प्रदेशः, यवनाऽऽक्रान्तः = यवनैः आक्रान्तः, पीडितः, तत् = अत एव, अस्माकं, तानि, तेजांसि = तेजपुञ्जाः, तथा न, यथा, वर्णयसि = कथयसि। साम्प्रतं तु इदानीं, विजयपुराधीशवितीर्णां = विजयपुरस्य आधीशः स्वामी तेन, वितीर्णां प्रदत्तां, वृत्तिं = वेतनं, भुञ्जे = भोगं करोमि, जीवननिर्वाहं करोमि इत्यर्थः, इति, तदाज्ञां = तस्य आशा, आदेशः ताम्, एव, परिपालयामि = धारयामि। तत् = अत एव, तदादेशः = तस्य आदेशः आज्ञा, श्रूयताम् = आकर्ण्यताम्, अवदधामि = सावधानोऽस्मि।

**गद्यांशव्याख्या** – एतदनन्तरं शिववीरस्य पण्डितगोपीनाथस्य मध्ये एवं विधः वार्त्तालापः सञ्जातः।

**गोपीनाथः** – राजन्! अत्र किञ्चिदपि संशयः अस्ति किम्? वस्तुतः भवान् भाग्यवान् अस्ति। परन्तु इदानीम् अहं पण्डितरूपेण कविरूपेण वा नात्र आगतः, अपितु यवनराजस्य दूतरूपेण आगतोऽस्मि। अतः शृणोतु, यदहं वदामि।

**शिववीरः** – शिव! शिव! इदं न वक्तव्यम्। येषां श्रीमतां महानुभावानां चरणेन चिह्नितं भगवतः विष्णोः वक्षस्थलमपि ऐश्वर्यमुद्रया अङ्कितमिव भाति, तेषां ब्राह्मणकुलकमलदिवाकराणां भवतां यवनसेनाककलङ्कपङ्कः इति न युज्यते, यञ्च शृण्वतो मम कर्णौ स्फुटत इव। तथापि उच्चकुलोत्पन्नाः गर्वरहिताः भवन्ति – इत्यस्मात् कारणात् यदि कश्चित् सन्देशः भवद्भिः आनीतः तर्हि अयं श्रीमतां चरणकमलचञ्चरीकः आदेष्टव्यः।

**गोपीनाथः** – वीर! अयं कलियुगः भारतवर्षमिदं यवनाक्रान्तम् अस्ति। अतः अस्माकं तादृशं तेजः नास्ति, यथा भवान् वर्णयति। सम्प्रति तु विजयपुराधीशदत्ताजीविकायाः भोगं करोमि। अतः तदादेशं पालयिष्यामि। अतस्तदादेशं शृणोतु।

**शिववीरः** – आर्य! सावधानोऽस्मि।

**विशेषः** – आलापः = आङ्+लप्+घञ्+जस्।

पण्डित्वेन = पण्डा+इतच्+टा।

समायातः = सम्+आङ्+या+क्त+सु।

उक्त्वा = वच्+क्त्वा।

शृण्वतः = श्रु+क्तवतु+ङस्।

आज्ञाप्यताम् = आङ्+ज्ञा+णिच्+पुक्+लोट्।

वितीर्णम् = वि+तॄ+क्त+टाप्+अम्।

**मूलम् – गोपीनाथः – कथयति विजयपुरेश्वरो यद् – ''वीर! परित्यज नवामिमां चञ्चलतामस्माभिः सह युद्धस्य, त्वदपेक्षयाऽत्यन्तमधिकं बलिनो वयं, प्रवृद्धोऽत्र कोषः, महती सेना, बहूनि दुर्गाणि, बहवश्च वीराः सन्ति। तच्छुभमात्मानः इच्छसि चेत्, त्यक्त्वा निखिलां चञ्चलतां, शस्त्रं दूरतः परित्यज्य,**

**करप्रदतामङ्गीकृत्य, समागच्छ मत्सभायाम्। मत्तः प्राप्तपदश्चिरं जीविष्यसि, अन्यथा तु सदुर्दशं निहितः कथावशेषः संवत्स्यसि। तत् केवलं त्वयि दययैव सन्देशं प्रेषयामि, अङ्गीकुरु। मा स्म वृद्धायाः प्रसविन्याः रजतश्वेतां पक्ष्मपङ्क्तिमश्रु-प्रवाह-दुर्दिने पातय'' – इति।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन पण्डितगोपीनाथस्य शिववीराय श्रावितापजलखानस्य सन्देशः वर्णितः अस्ति।

**पर्यायशब्दाः** – कथयति = वर्णयति, विजयपुरेश्वरः = विजयपुराधीशः, यद्, वीरः = बलवान्, अस्माभिः सह = सार्धं, युद्धस्य = रणस्य, इमाम् = एमां, नवां = नवीनां, चञ्चलतां = चपलतां, परित्यज्य = त्यज, त्वदपेक्षया = भवदपेक्षया, वयम्, अत्यन्तमधिकम् = अत्यधिकं, बलिनः = शक्तिशालिनः, अत्र, प्रवृद्धो = समृद्धः, कोषः = धनागारः, महती = विशाल, सेना = वाहिनीं, बहूनि = अनेकानि, दुर्गाणि = किलानि, बहवः = अनेके, वीराः = वीरसैनिकाः, च, सन्ति। तत्, आत्मनः = स्वस्य, शुभं = कल्याणम्, इच्छसि = वाञ्छसि, चेत् = यदि, निखिलां = सकलां, चञ्चलतां = चपलतां, त्यक्त्वा = विमुच्य, शस्त्रं, दूरतः = दूरात्, परित्यज्य =विमुच्य, करप्रदतां = करदानम्, अङ्गीकृत्य = स्वीकृत्य, मत्सभायां = मम सभायां राजद्वारे, समागच्छ = आगाहि। मत्तः, प्राप्तपदः = प्राप्तं गृहीतं पदं स्थानं यं सः, चिर = दीर्घकालं, जीविष्यसि = जीवनं धारिष्यसि, अन्यथा तु, सुदुर्दशं = सुदुर्गतिं, निहतः = हतः, कथावशेषः = वृत्तान्तमात्रशेषः, संवत्स्यसि = भविष्यसि। तत् = अत एव केवलं, त्वयि, दयया = कृपया, एव सन्देशं = संवादं, प्रेषयामि = कथयामि, अङ्गीकुरु = स्वीकारं कुरु। वृद्धायाः = जीर्णायाः, प्रसविन्याः = मातुः, रजतश्वेतां = रजतं कलधौतं तद्वत् श्वेतां धवलां, पक्ष्मपक्तिं = पक्ष्यमयोः पंक्तिम् = आवलिम्, अश्रुप्रवाहदुर्दिने = अश्रुणां नयनजलानां प्रवाहः, धारा एव दुर्दिनं = वर्षापूर्णदिवसं तस्मिन्, मा स्म, पातय = क्षेपय।

**गद्यांशव्याख्या** – विजयपुरनरेशः कथयति यत् वीर! अस्माभिः सह युद्धार्थम् एतां नवीनां चञ्चलतां त्यज। (यतोहि) भवदपेक्षया वयम् अत्यन्तं शक्तिशालिनः स्मः, अत्र समृद्धकोषोऽपि विद्यते महती सेना चापि अस्ति। न केवलम् एतावदेव अनेकाणि दुर्गाणि बहवश्च वीरसैनिकाः अस्माकं सविधे सन्ति। यदि स्वीयं कल्याणम् इच्छति भवान् तर्हि सम्पूर्णचञ्चलतां परित्यज्य शस्त्रञ्च दूरात् विमुच्य करदानम् अङ्गीकृत्य मम सभाम् आगच्छतु। मत्तः पदं सम्प्राप्य भवान् दीर्घकालं जीविष्यति। अन्यथा तु दुर्दशया सह मृत्युं प्राप्स्यति। अतः केवलं कृपयैव सन्देशं प्रेषयामि, स्वीकरोतु। वृद्धायाः जनन्याः श्वेतां पक्ष्मपक्तिम् अश्रुप्रवाहदुर्दिने न पातयतु' अर्थात् स्वकर्मणा मातरं न रोदयतु इति।

**विशेषः** – प्रवृद्धः = प्र+वृध्+क्त+सु।

अङ्गीकृत्य = अङ्ग+च्वि+कृ+क्त्वा (ल्यप्)।

निहतः = नि+धा+क्त+सु।

संवत्र्स्यसि = सम्+वृत्त+लृट्+सिप्।

पातय = पत्+णिच्+लोट्।

**मूलम् – शिववीरः – भगवन्! कथयेदेवं कश्चिद् यवनराजः, परं किं, भवानपि मामनुमन्यते – यद् ये अस्मदिष्टदेवमूर्तीर्भङ्क्त्वा, मन्दिराणि समुन्मूल्य, तीर्थस्थानानि पक्कणीकृत्य, पुराणानि पिष्ट्वा वेदपुस्तकानि विदार्य च, आर्यवंशीयान् बलाद् यवनीकुर्वन्ति; तेषामेव चरणयोरञ्जलिं बद्ध्वा लालाटिकतामङ्गीकुर्याम्? एवं चेद् धिङ् मां कुल-कलङ्क क्लीबं; यः प्राणभयेन सनातनधर्मद्वेषिणां दासेरकतां वहेत्। यदि चाऽहमाहवे म्रियेय, वध्येय, ताड्येय वा, तदैव धन्योऽहं, धन्यौ च मम पितरौ। कथ्यतां भवादृशां विदुषामत्र का सम्मतिः?**

**गोपीनाथः – (विचार्य) राजन्! धर्मस्य तत्त्वं जानासि, तन्नाऽहं स्वसम्मतिं कामपि**

**दिदर्शयिषामि। महती ते प्रतिज्ञा, महत्तवोद्देश्यमिति प्रसीदामितमाम्। नारायणस्तव साहाय्यं विदधातु।**

**शिववीरः – करुणानिधान! नारायणः स्वयं प्रकटीभूय न प्रायेण साहाय्यं विदधाति, किन्तु भवादृश-महाशय-द्वारैव। तत् प्रतिज्ञायतां काऽपि सहायता।**

**गोपीनाथः – राजन्! कथ्यतां किमहं कुर्याम्, परं यथा न मामधर्मः स्पृशेत्, तथैव विधास्यामि।**

**शिववीरः – शान्तं पापम्। कोऽत्राधर्मः? केवलं श्वोऽस्मिन्नुद्यानप्रान्तस्थ-पट-कुटीरे यवनसेनापतिः अपजलखानः आनेयः; यथा तेनैकाकिनाऽहमेकाकी मिलित्वा किमप्यालपामि।**

**गोपीनाथः – तत् सम्भवति।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन गोपीनाथपण्डितमुखात् विजयपुराधीशसन्देश-श्रवणानन्तरं शिववीरेण प्रदत्तोत्तरस्य वर्णनं कृतमस्ति।

**पर्यायशब्दाः** – भगवन् = श्रीमन्, कश्चिद्, यवनराजः = यवनभूपतिः, एवं = तादृशं, कथयेत् = उच्चारयेत्, परं = किन्तु, किं, भवनापि, मां = शिववीरम्, अनुमन्यते = अनुज्ञां ददाति, यद्, ये = यवनाः अस्मदिष्टदेवमूर्तीः = अस्माकम् इष्टस्य वाञ्छितस्य देवस्य ईश्वरस्य मूर्तीः प्रतिमाः। भङ्क्त्वा = नष्ट्वा, मन्दिराणि = देवगृहाणि, समुन्मूल्य = नष्ट्वा, तीर्थस्थानानि = पुण्यस्थलानि, पक्कणीकृत्य = शबराणां नगरीं निर्माय, पुराणानि, पिष्ट्वा = चूर्णं कृत्वा, वेदपुस्तकानि = वेदान्, विदार्य = भिदित्वा, च, आर्यवंशीयान् = सनातनधर्मानुयायिनः, बलाद् = सशक्तेः, यवनीकुर्वन्ति = यवनाः निर्मान्ति, तेषामेव = एतादृशामेव, चरणयोः = पादयोः, अञ्जलिं = पाणिद्वयसंयोगं, बद्ध्वा = कृत्वा, लालाटिकतां = सेवाम्, अङ्गीकुर्यात् = स्वीकुर्यात्? एवं चेत् = यदि इदं भवेत्, मां कुलकलंकं = कुलस्य = वंशस्य, कलंकः = दोषः यः तं, क्लीबं = पुरुषार्थहीनं, यः, प्राणभयेन = मृत्युभीतेः, सनातनधर्मद्वेषिणां = सनातनः यः हिन्दूः धर्मः मनः तस्य द्वेषिणां विरोधिनां, दासेरकतां = दासतां, वहेत् = गृह्णीयात्। यदि च, अहम्, आहवे = युद्धे, म्रियेय = मृतः स्यां, बध्येय = मारितः स्यां, ताड्येय = पीड्येय, वा, तदा, एव, धन्यः = सौभाग्यशाली, अहं, धन्यौ = सौभाग्यशालिनौ, च, मम = मे, पितरौ = मातापितरौ। कथ्यतां = वदतु, भवादृशां = त्वादृशां, विदुषां = पण्डितानाम्, अत्र = अस्मिन् विषये का, सम्मतिः = मतम्? राजन् = भूपते! धर्मस्य = सनातनमतस्य, तत्त्वं = सारं, जानासि = अधिगच्छसि, तत् = अत एव, अहं = गोपीनाथः कामपि स्वसम्मतिं = स्वविचारं, न, दिदर्शयिष्यामि = दर्शयितुमिच्छामि। महती = महत्त्वपूर्णा, ते = तव, प्रतिज्ञा = वचनं, महत् = उच्चं, तव = ते, उद्देश्यं = लक्ष्यम् इति, प्रसीदामितमान् = अत्यन्तं प्रसीदामि। नारायणः = विष्णुः, तव, साहाय्यं = सहायतां, विदधातु = करोतु। करुणानिधान = दयागार, नारायणः, स्वयं = सशरीरं, प्रकटीभूय = आगत्य, प्रायेण = प्रायः, साहाय्यं = सहायतां, न, विदधाति = करोति, किन्तु, भवादृशमहाशयद्वारा = भवादृशाः त्वादृशमहापुरुषद्वारा, एव, तत् = अतः, काऽपि, सहायतां = साहाय्यम्। प्रतिज्ञायतां = प्रणं क्रियतात् राजन्, कथ्यतां = वदतु, किम्, अहं, कुर्याम्, विधेयं, परं = किन्तु, यथा = येन, मां, अधर्मः = पापं, न, स्पृशेत् = भवेत्, तदैव = तदेव, विधास्यामि = करिष्यामि। शान्तं = विनाशं, पापं = दोषः, कोऽत्र, अधर्मः =पापं, केवलं, श्वः, अस्मिन् = तस्मिन्, उद्यानप्रान्तस्थपटकुटीरे = उद्यानस्य उपवनस्य, प्रान्तस्थः = उपान्तस्थः, पटस्य = वस्त्रस्य, कुटीरे = गृहे, यवनसेनापतिः = यवनानां सेनापतिः, कटकाध्यक्षः, अपजलखानः, आनेयः = आनेतव्यः, यथा = यस्मात्, एकाकिना तेन = सहायकरहितेन अपजलखाने, अहम्, एकाकी, मिलित्वा = संसर्गं कृत्वा, किमपि = किंचिद्, आलपामि = वार्तां करिष्यामि। तत् = इदं, सम्भवति = सम्भवमस्ति।

**गद्यांशव्याख्या** – पण्डितगोपीनाथस्य मुखात् अपजलखानस्य संदेशं श्रुत्वा शिववीरः उत्तरयति –

**शिववीरः** – भगवन्! कश्चिद् यवनराजः एवं वदति चेत् किं भवान् अपि माम् एतदर्थमनुमन्यते यत् येऽस्माकम् इष्टदेवानां प्रतिमाः खण्डयित्वा, मन्दिराणि विनश्य, तीर्थस्थलानि शबरनिवासस्थलानि विधाय, पुराणानि च चूर्णीकृत्य वेदान् च विदार्य सनातनधर्मावलम्बिनः बलाद् यवनान् निर्मान्ति, तेषामेव यवनानां चरणयोः अञ्जलिं बद्ध्वा किं सेवकत्वं

स्वीकुर्याम? यदि एवं क्रियते तर्हि मादृशं कुलकलङ्कपुरुषार्थहीनं धिक्! यदि अहं युद्धे हतो भवामि अथवा पीडिता भवामि तर्हि एव धन्योऽस्मि, मम पितरौ चापि धन्यौ स्तः। भवान् कथयतु – अस्मिन् विषये भवादृशानां विदुषां का सम्मतिरस्ति?

**गोपीनाथः** – (विचिन्त्य) राजन्! धर्मस्य तत्त्वं भवान् जानाति। अतः अहम् अस्मिन् विषये न कामपि सम्मतिं दातुमिच्छामि। भवतः प्रतिज्ञा श्लाघनीया अस्ति। भवतः उद्देश्यमपि प्रशंसनीयम्। अतः अहं भवति प्रसन्नोऽस्मि। भगवान् नारायणः भवतः साहाय्यं कुर्यात्।

**शिववीरः** – करुणानिधान! नारायणः सशरीरम् आगत्य प्रायः सहायतां न करोति। अपितु भवादृशमहानुभावानां माध्यमेनैव सहायतां कारयति। अत एव कामपि सहायतां कर्त्तुं प्रतिज्ञां कुर्वन्तु भवन्तः।

**गोपीनाथः** – राजन्! उच्यतां, मया किं करणीयम्? परन्तु येन प्रकारेण अधर्मः मां न स्पृशेत्, अहं तथैव करिष्यामि।

**शिववीरः** – शान्तं पापम्। अत्र अधर्मः कः? केवलं श्वः अस्य उद्यानस्य पार्श्वस्थपटकुटीरे यवनसेनापतिरेव अर्थात् अपजलखानः एव आनेतव्यः। यस्मात् एकान्ते तेन सह मेलयित्वा अहं किञ्चित् वार्त्तालापं करवाणि।

**गोपीनाथः** – इदं सम्भवम् अस्ति।

**विशेषः** – कथयेत् = कथ्+वि०लि० (प्र०पु०, एकवचनम्)।

अनुमन्यते = अनु+मन्+लट् (प्र०पु०, एकवचनम्)।

पिष्ट्वा = पिश्+क्त्वा।

बद्धवा = बध्+क्त्वा।

बध्येय = बध्+णिच्+वि०लि०।

भवादृश = भवत्+दृश्+क्विन्।

निधानम् = नि+धा+ल्युट्।

प्रकटीभूय = प्रकट+च्वि+भू+ल्यप्।

प्रान्तस्थ = प्रान्त+स्था+क।

सम्भवति = सम्+भू+लट्।

**मूलम् – ततः परं गोपीनाथेन सह शिववीरस्य बहुविधा आलापा अभूवन्, यैः शिववीरस्य उदारहृदयतां धार्मिकतां शूरताञ्चावगत्य गोपीनाथोऽतितरां पर्य्यतुष्यत्।**

**अथ स तमाशीर्भिरनुयोज्य यावत्प्रतिष्ठते, तावदुपातिष्ठत् ससहचरस्तानरङ्गः। गोपीनाथस्तु तमनवलोकयन्निव तस्मिन्नेव निशीथे दुर्गादवातरत्। कपटगायको गौरसिंहस्तु शिववीरेण सह बहुश आलप्य, सेनाऽभिनिवेश-विषये च सम्मन्त्र्य, तदाज्ञातः स्ववासस्थानं जगाम।**

**शिववीरोऽप्यन्यसेनापतीन् यथोचितमादिश्य, स्वशयनागारं प्रविश्य होरात्रयं यावत्किञ्चन निद्रासुखमनुभूय, अल्पशेषायामेव रजन्यामुदतिष्ठत्।**

**शिववीरसेनास्तु यथासंकेतं प्रथममेव इतस्ततो दुर्गप्राचीरान्तरालेषु गहन-लता-जालेषु उच्चावच-भूभाग-व्यवधानेषु सज्जाः पर्यवातिष्ठन्त। बहवो अश्वारोहा यवन-पट-कुटीर-कदम्बकं परिक्रम्य ततः पश्चादागत्य, अवसरं प्रतिपालयन्ति स्म।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अपजलखानस्य सैनिकानां मध्ये

व्याप्तहतोत्साहिता वर्णिता अस्ति।

**पर्यायशब्दाः** – ततः परं = तदनन्तरं, गोपीनाथेन सह = साकं, शिववीरस्य बहुविधाः = अनेकप्रकाराः, आलापाः = वार्ताः, अभूवन्, यैः = आपालैः, शिववीरस्य, उदारहृदयतां = हृदयविशालतां, शूरतां = वीरतां च, अवगत्य = ज्ञात्वा, गोपीनाथः, अतितराम् = अत्यधिकं, पर्य्यतुष्यत् = अतृपद्। अथ = ततः, सः = गोपीनाथः, तं = शिववीरम्, आशीर्भिः = आशीर्वचोभिः, अनुयोज्य = योजयित्वा। तावत्, प्रतिष्ठते = प्रस्थानमकरोत्, तावत्, ससहचरः = ससखः, तानरङ्ग, उपातिष्ठत् = आगच्छत्। गोपीनाथः तु, तं = तानरङ्गम्, अनवलोकयन् = न पश्यन् इव, सदृशं, तस्मिन् एव, निशीथे = अर्धरात्रौ, दुर्गात् = प्रतापदुर्गात्, अवतरत् = अवारोहत्, कपट-गायकः = कपटेन छलेन गायकः, संगीतज्ञः = गौरसिंहः, तु, शिववीरेण, सह = समं, बहुशः = अनेकशः, आलाप्य = विचार्य, सेनाऽभिनिवेश-विषये = सेनायाः = वाहिन्याः अभिनिवेशः स्थितिः तस्मिन् विषये सम्बन्धे, च सम्मन्त्र्य = विचार्य, तदाज्ञातः = तस्य शिववीरस्य आज्ञाम् = अनुज्ञां प्राप्तः, स्ववासस्थानं = स्वस्य गौरसिंहस्य वासस्य निवासस्य स्थानम्। जगाम = यायात्। शिववीरोऽपि, अन्यसेनापतीन् = इतरकटकाध्यक्षान्, यथोचितं = यथायोग्यम्, आदिश्य = निर्देशं दत्वा, स्वशयनागारं = स्वस्य शयनागारं, निशावासगृहं, प्रविश्य = गत्वा, होरात्रयं यावत्। किञ्चन् = अल्प, निद्रासुखं = निद्रायाः शयनस्य सुखं कलम्, अनुभूय = प्राप्य, अल्पशेषायाम् = अल्पं किञ्चित्, शेषम् अवशिष्टं यस्याः सा तस्यां, रजन्यां = रात्रौ, उदतिष्त्। शिववीरसेनाः = शिववीरस्य सेनाः वाहिन्यः, तु यथासङ्केतं = सङ्केतानुसारं, प्रथममेव = पूर्वमेव, इतस्ततः = अत्र, तत्र दुर्गप्राचीरान्तरालेषु = दुर्गाणां किलानां प्राचीराणां, वेष्टिनीनाम् अन्तरालेषु मध्येषु। महालता-जालेषु = गहनानां सघनानां लतानां बल्लरीणाम् आलेषु समूहेषु, उच्चावचभूभाग-व्यवधानेषु = उच्चानि उन्नतानि अवचानि अवनतानि च भूभागाः प्रदेशः तेषां व्यवधानेषु मध्येषु, सज्जाः = सुसज्जिताः, पर्यवातिष्ठन्त = आसन्। बहवः = अनेकतः, अश्वारोहाः = सैन्धवोरूढाः, यवन-पट-कुटीर-कदम्बकं = यवनानां पटकुटीराणां वस्त्रगृहाणानां कदम्बकसमूहं, परिक्रम्य = परिगत्य, ततः = तस्मात्, पश्चादागत्य = प्रत्यागत्य, अवसरम् = उपयुक्तसमयं, प्रतिपालयन्ति स्म = प्रतीक्षाम् अकुर्वन्।

**गद्यांशव्याख्या** – तदनन्तरं गोपीनाथपण्डितेन सह शिववीरस्य अनकेविधा वार्तालापाः सञ्जाताः। यैः वार्तालापैः शिववीरस्य उदारहृदयतां, धार्मिकतां वीरताञ्च ज्ञात्वा गोपीनाथः अत्यधिकः सन्तुष्टो जातः।

ततः परं सः गोपीनाथपण्डितः तस्मै शिववीराय आशीर्वादान् प्रदाय यावत् प्रस्थानमकरोत्, तावत् सहचरेण सह तानरङ्गः तत्र आगच्छत्। गोपीनाथपण्डितः अपि तं गौरसिंहम् अपश्यन् इव तस्यामेव अर्द्धरात्रौ प्रतापदुर्गात् अवतरितवान्। छलगायकः गौरसिंहस्तु शिववीरेण सह अनेकशः विचारं विधाय सेनासज्जाविषये च मन्त्रणां कृत्वा तस्य शिववीरस्य अनुज्ञां सम्प्राप्य स्वनिवासं गतवान्।

शिववीरः अपि अन्यान् सेनापतीन् समुचितम् आदिश्य स्वशयनभवनं गत्वा होरात्रयं यावत् किञ्चित् निद्रायाः अनुभूतिं कृत्वा अल्पशेषायामेव रात्रौ पुनः उदतिष्ठत्।

शिववीरस्य सेनाः तु सङ्केतानुसारं पूर्वमेव इतस्ततः दुर्गप्राचीरमध्येभागेषु गहनेषु लतागुल्मेषु उच्चावचभूभागव्यवधानेषु च सज्जिताः भूत्वा परितः स्थिताः सञ्जाताः। बहवः अश्वारोहिणः यवनानां पटकुटीरसमूहं परिक्रम्य ततः आगत्य च उपयुक्तसमयं प्रतीक्षन्ते स्म।

**विशेषः** – आलापः = आङ्+लप्+घञ्।

अवगत्य = अव+गम्+ल्यप्।

अनुयोज्य = अनु+युज्+ल्यप्।

प्रतिष्ठते = प्र+स्था+लट्।

उपातिष्ठत् = उप+स्था+लङ्लकारः।
अवलोकयन् = अव+लोक्+शतृ।
गायकः = गै+ण्वुल् (अक)+सु।
अनुभूय = अनु+भू+क्त्वा (ल्यप्)।
प्रतिपालयन्ति = प्रति+पाल्+णिच्+लट्लकारः।

**मूलम् - इतश्च सूर्यप्रभाभिररुणी-क्रियमाणे भूभागे अरुण-श्मश्रवोऽपि सेनाः सज्जीकृतवन्तः।**

**बहवो - ''वयमद्य शिवमवश्यमेव विजेष्यामहे; परं तथाऽपि न जानीमहे किमिति कम्पत इव हृदयम्, अहो! विलक्षणः प्रताप एतस्य, पवनेऽपि प्रवहति, पतत्रेऽपि पतति, पत्रेऽपि मर्मरीभवति, स एवाऽऽगत इत्यभिशङ्क्यतेऽस्माभिः। अहह!! विचित्रोऽयं वीरो, यो दुर्गप्राचीरमुल्लंघ्य, प्रहरिपरीवारमविगणय्य, लोहार्गलशृंखलासहस्रनद्धानि करिकुम्भाघातसहानि द्वाराणि प्रविश्य, विकोशचन्द्रहासाऽसिधेनुकारिष्टितोमशक्तित्रिशूलमुद्गरभुशुण्डीकराणां रक्षकाणां मण्डलमवहेत्य, प्रियाभिः सह पर्य्यङ्केषु सुप्तानामपि प्रत्यर्थिनां वक्षःस्थलमारोहति, निद्रास्वपि तान् न जहाति, स्वप्नेष्वपि च विदारयति। कथमेतस्य चञ्चच्चन्द्रहास-चमत्कार-चाकचक्य-चिल्लीभूत-चक्षुष्काः समराङ्गणे स्थास्यामः? इति चिन्ताचक्रमारूढा अपि कथं कथमपि कैश्चित् वीरवरैर्वर्धितोत्साहाः समरभूमिमवातरन्।**

**प्रसङ्गः -** अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन शिववीरेण सह युद्धं कर्तुं यवनसेनायाः सज्जतायाः वर्णनं कृतमस्ति।

**पर्यायशब्दाः -** वयम्, अद्य, शिव = शिववीरम्, अवश्यमेव = निश्चितमेव, विजेष्यामहे = पराजितं करिष्यामः, परं = किन्तु, तथाऽपि = तदपि, न, जानीमहे = जानीमः, किमिति, कम्पते = धुनोति, इव, हृदयं = मनः, अहो = आश्चर्यसूचकः, अव्ययः, एतस्य = शिववीरस्य, प्रतापः = प्रभावः, विलक्षणः = अद्वितीयः, पवने = वायौ, अपि, प्रवहति = चलति, पतत्रेऽपि = खगेऽपि, पतति = उड्डीयमाने, पत्रेऽपि = किसलयेऽपि, मर्मरीभवति = मर्मरिति शब्दे सति, सः = शिववीरः, एव, आगतः = आयातः, इति, अस्माभिः = यवनसैनिकैः, अभिशक्यते = शंका क्रियते। अहह, विचित्र = अद्भुतः, अयं, वीरः = शूरवीरः, यः, दुर्गप्राचीरं = दूर्गस्य प्राचीरं वेष्टिनीं, उल्लंघ्य = उत्क्रम्य, प्रहरिः परीवारमविगणय्य प्रहरीणां रक्षकाणां परिवारम् अविगणय्य अवहेल्य। लोहार्गलशृङ्खलासहस्रनद्धानि = लौहस्य लोहस्य अर्गलानां जंजीराणां शृंखलाणां पंक्तीनां सहस्रं ते नद्धानि, बद्धानि, करिकुम्भाघात = सहानि = करीणाम्, इमानां कुम्भानां मस्तकानाम्, आघातं प्रहारं सहन्ते ये ते। द्वाराणि, प्रविश्य = प्रवेशं कृत्वा, विकोशचन्द्रहासऽसिधेनुकारिष्टितोमरशक्तित्रिशूलमुद्गर-भुशुण्डीकराणां = नयनचन्द्रहासऽसिधेनुकारिष्टितोमशक्ति-त्रिशूलमुद्गरभुशुण्डीहस्तानां, रक्षकाणां = पालकानां, मण्डलं, समूहम्, अवहेल्य = अवगण्य्य, प्रियाभिः = कान्ताभिः, सह पर्य्यङ्केषु, शयनेषु = सुप्तानां, निद्राप्राप्तानां, प्रत्यर्थिनां = शत्रूणां, वक्षःस्थलम् = उरःस्थलम्, आरोहति, निद्रासु = शयनेषु, अपि, तान् = शत्रून्, न, जहाति = मुञ्चति, स्वप्नेषु, अपि, च, विदारति = हन्ति। कथं = केन प्रकारेण, एतस्य = शिववीरस्य, चञ्चच्चन्द्रहास-चमत्कारचाकचक्यचिल्लीभूतचक्षुष्काः = समराङ्गणे = युद्धक्षेत्रे, स्थास्यामः = योत्स्यामहे? इति, चिन्ताचक्रं = चिन्तायाः आशंकायाः, चक्रम्, आरूढाः = धृताः, बहवः = अनेके यवनसैनिकाः, कथं = कथमपि, येन येन प्रकारेण, कैश्चित्, वीरवरैः = वीरेषु शूरेषु वरैः श्रेष्ठैः, वर्धितोत्साहाः, वर्धितं वितानितम् उत्साहं, साहसं येषां, ते

समरभूमिं, युद्धक्षेत्रम्, अवातरन् = आगच्छन्।

**गद्यांशव्याख्या –** एकस्मिन् पक्षे तु सूर्यस्य प्रकाशेन यदा पृथ्वी रक्तवर्णीया सञ्जाता तदा रक्तश्मश्रुयवनसेना अपि सुसज्जिता: सञ्जाता:। अनेके यवनसैनिका: तु – अद्य अस्माभि: शिववीर: नूनमेव जेतव्य:, परन्तु न जानीम: यत् अस्माकं हृदयं कथं कम्पमानमिव अस्ति। अहो! अस्य शिववीरस्य प्रताप: महान् अस्ति। अत एव पवनस्य प्रवाहेऽपि खगस्य उड्डयनेऽपि, पत्राणां मर्मर् इति ध्वनिनापि च स: शिव एव आगत: इत्येव अस्माकं शङ्का भवति। अहह! विचित्र: अयं वीर:, य: दुर्गप्राकारं उल्लंघ्य प्रहरिगणम् उपेक्ष्य लोहार्गलशृंखलासहस्रबद्धानि करिकुम्भानामाघातान् सोढुं योग्यानि द्वाराणि प्रवेशं कृत्वा नग्नचन्द्रहासऽसिधेनुकारिष्टितोमशक्तित्रिशूलमुद्गर–भुशुण्डिहस्तानां रक्षकाणां समूहम् अवगण्य्य कान्ताभि: सह शय्यासु सुप्तानामपि शत्रूणां हृदयम् आरोहति निद्रासु अपि तान् न त्यजति स्वप्नेषु अपि विदारयति च। अस्य शिववीरस्य चञ्चलखड्गचमत्कारस्य चाकचक्येन चमत्कृतनेत्रा: वयं कथं युद्धक्षेत्रे युद्धं करिष्याम:? इत्येवं प्रकारेण चिन्ताग्रस्ता: अपि यथा कथञ्चित् कैश्चित् श्रेष्ठवीरै: प्रेरिता: सन्त: युद्धभूमिम् आगच्छन्।

**विशेष:** – मर्मरीभवति – मर्मर+च्वि+भू+शतृ (सप्तमी विभक्ति:, एकवचनम्)।

आरुढा – आ+रूह्+क्त+जस्।

अवहेल्य = अव+हेल्+क्त्वा (ल्यप्)।

पतति = पत्+शतृ (सप्तमी विभक्ति:, एकवचनम्)।

**मूलम् – अथ कथंचित् प्रकाश-बहुले संवृत्ते नभ:स्थले, परस्परं परिचीयमानासु आकृतिषु, कमलेष्विव विकचतामासादयत्सु वीरवदनेषु, भ्रमरालिष्विव परित: प्रस्फुरन्तीषु असि-पंक्तिषु, चाटकैर-चकचकायितेषु; कवचचमत्कारेषु गोपीनाथ-पण्डितो वारमेकं शिववीरदिशि परतश्च यवनसेनापति-दिशि गतागतं विधाय, सेनाद्वयस्य मध्य एव कस्मिंश्चित् पटकुटीरे अपजलखानमानेतुं प्रबबन्ध।**

**शिववीरोऽपि कौशेय-कञ्चुकस्याऽन्तर्लोहवर्म परिधाय, सुवर्णसूत्रग्रथितोष्णीषस्याऽप्यधस्तादायसं शिरस्त्राणं संस्थाप्य, सिंहनख-नामकं शस्त्रविशेषं करयोरारोप्य, दृढबद्धकटिरपजलखानसाक्षात्काराय सज्जस्तिष्ठति स्म।**

**प्रसङ्ग:** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन उभयो: सेनयोर्मध्ये स्थिते पटकुटीरे अपजलखान शिववीरयो: सम्मेलनं कारयितुम् उद्यतस्य गोपीनाथपण्डितस्य क्रियाकलाप: वर्णित: अस्ति।

**पर्यायशब्दा:** – अथ = तदनन्तरं, कथञ्चित् प्रकाश–बहुले = ज्योत्यधिके, संवृत्ते = प्रसृते, नभ:स्थले = आकाशे, परस्पर, परिचीयमानासु = अवगम्यमानासु, आकृतिषु = मुखाकृतिषु, कमलेषु = सरोजेषु, इव, विकचतां = प्रफुल्लतां, आसादयत्सु = वीरवदनेषु = वीराणां शूराणां वदनेषु, मुखेषु, भ्रमरालिषु = भ्रमराणां मधुराणां आलिषु पंक्तिषु, परित: = समन्तात्, प्रस्फुरन्तीषु = सचलनतीषु, असि–पंक्तिषु = असीनां चन्द्रहासां पंक्तिषु आलिषु, चटकै: चटकनामकै: = पक्षिविशेषै:, चकचकायितेषु = कवच–चमत्कारेषु वर्मशब्दायितेषु, गोपीनाथ: = पण्डित:, वारमेकं = सकृत्, शिववीर – दिशि = शिववीरस्य, दिशि = आशायां, परतश्च = ततश्च, यवन–सेनापतिदिशि = यवनानां सेनापते:, सेनाध्यक्षस्य दिशि = आशायां, गतागतं = गमनागमनं, विधाय = कृत्वा, सेनाद्वयस्य = मराठायवनकटकयो:, मध्ये = अन्तरे, एव कस्मिंश्चित् = कस्मिन्, पट–कुटीरे = वस्त्रगृहे, अपजलखानम्, आनेतुं प्रबबन्ध = व्यवस्थामकरोत्।

शिववीरोऽपि, कौशेयकञ्चुस्य = कौशेयं दुकूलं कञ्चुकं शरीरपरिवेष्टनाय वस्त्रं तस्य, अन्त: = अधस्तात्, वर्मं = कवचं, परिधाय = गृहीत्वा, सुवर्णसूत्रग्रथितोष्णीषस्य = सुवर्णस्य कञ्चनस्य सूत्रै: तारै: ग्रथित निर्मित: उष्णीषशिरोवेष्टन: तस्य अपि, अधस्तात् = अध:, आयसं = लौहं शिरस्त्राण: = शिरस:, रक्षाकवचं, संस्थाप्य = धारित्वा, सिंहनखनामकं =

शस्त्रविशेषं = विशिष्टं शस्त्रं, करयोः = भुजयोः, आरोप्य – परिधाय, दृढबद्धकटिः = दृढेन प्रगाढेन बद्धः नद्धः कटिः शरीर मध्यभागः यस्य सः, अपजलखानसाक्षात्काराय = अपजलखानस्य, साक्षात्काराय, मेलितुं सज्जः तिष्ठति = उपविशति स्म।

**गद्यांशव्याख्या –** तदनन्तरम् आकाशे अत्यधिकप्रकाशे प्रसृते सति, परस्परम् अवगम्यमानासु मुखाकृतिषु, सरोजेषु इव प्रफुल्लितवीरमुखेषु, भ्रमरपङ्क्तिषु इव खड्गपङ्क्तिषु परितः प्रस्फुरन्तीषु, चकचकायमानेषु चाटकैः पक्षिषु, शब्दायमानेषु कवचेषु (सत्सु) गोपीनाथपण्डितः एकवारं शिववीरस्य दिशि ततश्च यवनसेनापतिदिशि च गमनागमनं कृत्वा उभयोः सेनयोर्मध्ये एकस्मिन् पर्णकुटीरे अपजलखानम् आनेतुं व्यवस्थाम् अकरोत्।

शिववीरोऽपि कौशेयकञ्चुकस्य अधः लौहकवचं परिधाय, सुवर्णसूत्रछूरितोष्णीषस्य अधः लौहमयं शिरस्त्राणं हस्तयोश्च सिंहनखनामकं शस्त्रविशेषं धारयित्वा कटिं दृढं बद्ध्वा अपजलखानस्य साक्षात्काराय सज्जः उपविष्टः आसीत्।

**विशेषः** – संवृत्ते = सम्+वृत्+क्त+ङि।

परिचीयमानासु = परि+चि+शानच्+सुप्।

आसादयत्सु = आ+सद्+णिच्+शतृ+सुप्।

प्रस्फुरन्तीषु = प्र+स्फुर्+शतृ+ङीप्+सुप्।

विधाय = वि+धा+क्त्वा (ल्यप्)।

संस्थाप्य = सम्+स्था+णिच्+क्त्वा (ल्यप्)।

सज्जः = सञ्ज्+क्त+सु।

**मूलम् – अपजलखानोऽपि च – ''यदाऽहमेनं साक्षात्कृत्य, करताडनमेकं कुर्य्याम्, तदैव तालिकाध्वनिसमकालमेव अमुकामुकैः श्येनैरिवाऽभिपत्य पाशैरेष बन्धनीयः, सेनया च क्षणात् तत्सेना झञ्झया घनघटेवापनेया''। इति संकेत्य, सूक्ष्म-वसन-परिधानः, वज्रक-जटितोष्णीषिकः, गलविलुलित- पद्मरागमालः; मुक्ता-गुच्छ-चोचुम्ब्यमान-भालः, निश्वास-प्रश्वास-परिमथित-मद्यगन्ध-परिपूरित-पार्श्व-देशान्तरालः, शोण-श्मश्रुकूर्च-विजित-नूतन-प्रवालः, कञ्चुक-स्यूत-काञ्चन-कुसुमजालः, विविधवर्ण-वर्णनीय-शिविकामारुह्य निर्दिष्टपटकुटीराभिमुखं प्रतस्थे।**

**इतस्तु कुरङ्गमिव तुरङ्गं नर्त्तयन् रश्मिग्राह-वेषेण गौरसिंहेनाऽनुगम्यमानः माल्यश्रीक-प्रभृतिभिर्वीरवरैर्युद्ध-सज्जैः सतर्कं निरीक्ष्यमाणः शिववीरोऽपि तस्यैव संकेतितस्य समागमस्थानस्य निकटे एव सव्यकरेण वल्गामाकृष्याऽश्वमवारुधत्।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन स्वसैनिकान् प्रति कूटयोजनां निर्दिश्य शिववीरेण सह साक्षात्काराय गतस्य अपजलखानस्य वर्णनं कृतमस्ति।

**पर्यायशब्दाः –** अफजलखानोऽपि च, यदा, अहम् = अफजलखानः, एवं = शिववीरं, साक्षात्कृत्य = मिलित्वा, एकं केवलं, करताडनं = करध्वनिं, कुर्यां = विधेयं, तदैव = तत्क्षणमेव, तालिकाध्वनिसमकालं = तालिकायाः तालस्य ध्वनेः शब्दस्य समकालम्, एव = समम् एव, अमुकामुकैः = निर्दिष्टवीरैः, श्येनैः = बाजैः, इव, अभिपत्य = आक्रमणं कृत्वा, पाशैः = बन्धनैः, बन्धनीयः = बन्धितुं योग्यः, सेनया = वाहिन्या, च, क्षणात् = तत्क्षणं, तत्सेना = तत् शिववीरस्य सेना = वाहिनी, झञ्झया = तीव्रवायुना, घनघटा = अविरला मेघमाला, अपनेया = नष्टव्या, इति, संकेत्य = आदिश्य, सूक्ष्मवसनपरिधानः = सूक्ष्मवसनानां = सूक्ष्मपटानां परिधानानि यस्य सः, वज्रकजटितोष्णीषिकः = वज्रकेण

हीरेण जटितः खचितः उष्णीषः शिरोवेष्टनः यस्य सः, गलविलुलितपद्मरागमालाः = गले कण्ठे विलुलिता शोभिता, पद्मरागाणां रक्तवर्णानां रक्तवर्णमणीनां माला स्रग् यस्मिन् सः, मुक्तागुच्छचोचुम्ब्य-मानभालः = मुक्तानां मौक्तिकाना गुच्छेन स्तब्केन चोचुम्ब्यमानं स्पर्शमाणं भाल मस्तकं यस्य सः, निश्वासप्रश्वासपरिमथित-मद्यगन्धपरिपूरितपार्श्वदेशान्तरालः = निश्वासप्रश्वासाभ्यां प्राणवायवागमननिगमनाभ्यां परिमथितः निसृतः मद्यस्य सुरायाः गन्धेन दुर्गन्धेन परिपूरिताः व्याप्ताः पार्श्वस्य समीपस्य देशस्य, अन्तरालः येन सः, शोणश्मश्रुकूर्चविजितनूतनप्रवालः = शोणौ रक्तवर्णौ श्मश्रूकूर्चौ ताभ्यां विजितं तिरस्कृतं नूतनं नवीनं प्रवालं पत्रं येन सः कञ्चुकस्यूतकाञ्चकुसुमजालः कञ्चुके = वस्त्रे, स्यूतः = ग्रथितं, काञ्चनानां = सौवर्णानां, कुसुमानां = पुष्पाणां, जालं = समूहं यस्मिन् सः, विविधवर्णवर्णनीयशिविकां – विविधानि = अनेकानि, वर्णानि अत एव वर्णनीया प्रशंसनीयां शिविकां पालकीम्, आरुह्य = स्थित्वा, निर्दिष्टपटकुटीराभिमुखं = निर्दिष्टः निश्चितः पटकुटीरः तस्य अभिमुखं, प्रतस्थे = प्रस्थानम् अकरोत्। इतस्तु = अत्र, कुरङ्ग = हरिणं, इव, तुरङ्ग = अश्वं, नर्त्तयन् = रश्मिग्राह-वेषेण = रश्मिग्राहस्य सारथेः वेषेण रूपेण, गौरसिंहेन, अनुगम्यमानः = पश्चाद्गम्यमानः, युद्धसज्जैः = युद्धाय रणाय सज्जैः, तत्परैः, माल्यश्रीकप्रभृतिभिः = माल्यश्रीकादिभिः, वीरवरैः = वीरेषु शूरेषु वरैः श्रेष्ठैः, सतर्कं = सतर्कतापूर्वकं, निरीक्ष्यमाणः = प्रेक्ष्यमाणः, शिववीरोऽपि तस्यैव संकेतितस्य = तस्यैव निर्दिष्टस्य, समागमस्थानस्य = समागमस्य मिलनस्य स्थानं प्रदेशं तस्य, निकटे एव = समीपे एव, सव्यकरेण = वामकरेण, बल्गां = खलीलम्,आकृष्य = दृढं कृत्वा, अश्वं = तुरङ्गम्, अवारुधत् = अरुधत्।

**गद्यांशव्याख्या –** अपजलखानश्चापि – ''यदैव अहं तेन शिववीरेण सह मिलित्वा एकवारं करताडनं करिष्यामि तदैव करताडनध्वनिं श्रवणसमनन्तरमेव श्येनैः इव अमुकामुकैः सैनिकैः सहसैव आक्रमणं कृत्वा अस्य शिववीरस्य पाशैः बन्धनं कर्त्तव्यम्। सेनाऽपि तत्क्षणमेव, तीव्रवायुयुक्तमेघमालेव तस्य शिववीरस्य सेनां नाशयतु एवं प्रकारेण निर्देशनं कृत्वा सूक्ष्मवस्त्राणि धृत्वा हीरकखचितोष्णीषं धृत्वा,कण्ठे पद्मरागमणिमालां धृत्वा, मुक्तागुच्छेन चोचुम्ब्यमानभालः, निःश्वासप्रश्वासाभ्यां निःसृतेन मद्यगन्धेन समीपस्थान् भूभागान् पूरयन्, रक्तश्मश्रुकूर्चाभ्यां तिरस्कृतनवपल्लवः कञ्चुके स्यूतकाञ्चनकुसुमजालः अनेकवर्णैः युक्तां शिविकाम् आरुह्य निर्दिष्टपटकुटीरं प्रति प्रस्थितवान्।

अपरस्मिन् पक्षे तु हरिणमिव अश्वं नर्त्तयन् सारथिवेषेण गौरसिंहेन अनुगम्यमानः युद्धार्थं तत्परैः माल्यश्रीकादीभिः वीरश्रेष्ठैः सावधानतया विलोक्यमानः शिववीरोऽपि तस्यैव संकेतितस्य सम्मेलनस्थलस्य समीपे एव वामहस्तेन खलीलम् आकृष्य अश्वम् अरुधत्।

**विशेषः** – साक्षात्कृत्य = साक्षात्+कृ+क्त्वा (ल्यप्)।

अभिपत्य = अभि+पत्+क्त्वा (ल्यप्)।

बन्धनीयः = बन्ध्+अनीयर्+सु।

अपनेया = अपनेतुं योग्या, अप+नी+यत्+टाप्।

परिधानः = परि+धा+ल्युट्+सु।

चोचुम्ब्यमानः = चुबि+यङ्+शानच्+सु।

निःश्वासः = निर्+श्वस्+घञ्।

विजित = वि+जि+क्त।

प्रतस्थे = प्र+स्था+लिट्+त।

नर्त्तयन् = नृत्+णिच्+शतृ+सु।

अनुगम्यमानः = अनु+गम्+शानच्+सु।

**मूलम्** - **ततस्तु, इतोऽश्वात् शिववीरः, ततस्तु शिविकातोऽपजलखानः अपि युगपदेवावाऽतरतां, परस्परं साक्षात्कृत्य च, उभावप्युत्सुकाभ्यां नयनाभ्यां, सत्वराभ्यां पादाभ्यां, स्वागताऽऽम्रेडनतत्परेण वदनेन, आश्लेषाय प्रसारिताभ्यां च हस्ताभ्यां कौशेयास्तरण-विरोचितायां बहिर्वेदिकायां धावमानौ परस्परमालिलिङ्गतुः।**

**शिववीरस्तु आलिङ्गन-च्छलेनैव स्वहस्ताभ्यां तस्य स्कन्धौ दृढं गृहीत्वा सिंहनखैर्जत्रुणी कन्धरां च व्यपाटयत्। रुधिरदिग्धं च तच्छरीरं कटि-प्रदेशे समुत्तोल्य भूपृष्ठेऽपोथयत्।**

**प्रसङ्गः** - अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन शिववीरेण हतस्य अपजलखानस्य हननघटना वर्णिता अस्ति।

**पर्यायशब्दाः** - ततस्तु = तदनन्तरम्, इतः = अत्र, अश्वात् = तुरङ्गात्, शिववीरः, ततः = तत्र, तु शिविकातः = शिविकायाः, अपजलखानोऽपि, युगपदेव = सहैव, अवतरताम् = अवारुहतां, परस्परं, साक्षात्कृत्य = प्रेक्ष्य, च, उभौ = शिववीरापजलखानौ, अपि, उत्सुकाभ्याम् = उत्कण्ठिताभ्यां, नयनाभ्यां = नेत्राभ्यां, सत्वराभ्यां = तीव्राभ्यां, पादाभ्यां = चरणाभ्यां, स्वागताऽऽम्रेडनतत्परेण = वारं वारं स्वागतनिवेदनतत्परेण, वदनेन = मुखेन, आश्लेषाय = आलिङ्गनाय, प्रसारिताभ्यां = विस्तारिताभ्यां, हस्ताभ्यां = कराभ्यां, कौशयास्तरणविरोचितायां = कौशेयेन दुकूलेन अस्तरणेन वस्त्रेण विरोचिता सुशोभिता तस्यां, बहिः, वेदिकायां मार्गं, धावमानौ = तीव्रगतिना गच्छन्तौ, परस्परम्, आलिलिङ्गतुः = आलिङ्गनमकुरुताम्। शिववीरस्तु = आलिङ्गनेच्छलेन = आलङ्गनस्य आश्लेषस्य छलेन व्याजेन, एव, स्वहस्ताभ्यां = स्वकराभ्यां, तस्य = अफजलखानस्य, स्कन्धौ = अंसौ, दृढं = बलेन, गृहीत्वा = धारयित्वा, सिंहनखैः = सिंहनखनामकैः, अस्त्रविशेषैः, जत्रुणी = स्कन्धयोः सन्धी, कन्धरां ग्रीवां च, व्यपाटयत् = अविदारयत्। रुधिरदिग्धं = रुधिरेण रक्तेन दिग्धं व्याप्तं च, तच्छरीरं = तस्य शरीरं, देहं, कटिप्रदेशे = शरीरमध्यभागे, समुत्तोल्य = उत्क्षिप्य, भूपृष्ठे भुवः पृथिव्यां, पृष्ठे तले, अपोथयत् = अक्षिपत्।

**गद्यांशव्याख्या** - तदनन्तरम् एक भागात् अश्वात् शिववीरः अपरभागाच्च शिविकातः अपजलखानः युगपदेव अवतरितवन्तौ परस्परञ्च दृष्ट्वा द्वौ अपि उत्कण्ठित नेत्राभ्यां तीव्रचरणाभ्यां मुखेन वारं वारं स्वगतवचनानि उक्त्वा मिथ आलिङ्गनार्थं प्रसारितहस्ताभ्यां कौशेयप्रच्छदसुशोभितायां बहिर्वेदिकायां धावमानौ अन्योन्यम् आलिङ्गनम् अकुरुताम्।

शिववीरः तु आलिङ्गनव्याजेनैव स्वहस्ताभ्यां तस्य अपजलखानस्य स्कन्धौ सुदृढं गृहीत्वा सिंहनखनामकैः अस्त्रविशेषैः अंसयोः सन्धीकन्धरां च व्यदारयत्, रुधिरयुक्तञ्च तस्य शरीरं कटिप्रदेशे उत्क्षिप्य धरायाम् अपातयत्।

**विशेषः** - अवातरताम् = अव+तृ+लङ्+तस्।

आश्लेषाय = आ+श्लिष+घञ्+ङे।

धावमानौ = धाव्+शानच्+औ।

व्यपाटयत् = वि+पट्+णिच्+लङ्+तिप्।

दिग्ध = दिह्+क्त।

समुतोल्य = सम्+उत्+तुल्+णिच्+क्त्वा (ल्यप्)।

अपोथयत् = पुथ्+णिच्+लङ्-तिप्।

**मूलम् - तत्क्षणादेव च शिववीरध्वजिन्यां महाध्वज एकः समुच्छ्रितः। तत्समकालमेव यवन-शिविरस्य पृष्ठस्थिता शिववीर-सेना शिविरमग्निसात्कृतवती, पुरःस्थितसेनासु च अकस्मादेव महाराष्ट्र-केसरिणः समपतन्। तेषां 'हर हर-महादेव' गर्जनपुरस्सरं छिन्धि-भिन्धि-मारय-विपोथय इति**

**कोलाहलः, प्रत्यर्थिनां च 'खुदा तोबा अल्लादि' पारस्य-पदमयः कलकलो रोदसी समपूरयत्।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन अपजलखानवधानन्तरं शिवसेनायाः आक्रमणं ततश्चोभयोः सेनयोः कोलाहलश्च वर्णितः अस्ति।

**पर्यायशब्दाः** – तत्क्षणादेव = तत्कालमेव, च, शिववीरध्वजिन्यां = शिववीरस्य ध्वजिन्यां सेनायां, महाध्वजः = महापताकाः, एकः, समुच्छ्रितः = आकाशे समुल्लसितः। तत्समकालमेव, यवन-शिविरस्य = यवनानां शिविरस्य पटकुटीरस्य पृष्ठस्थिता = विपरीतदिक्स्था, शिववीरसेना = शिववीरस्य, सेनावाहिनी, शिविरं = पटकुटीरम्, अग्निसात्कृतवती = अज्वलत्, पुरःस्थितसेनासु = पुरः अग्रे स्थितासु सेनासु वाहिन्यासु च, अकस्मादेव, महाराष्ट्रस्य केसरिणः सिंहसदृशाः वीराः, समपतन् आक्रमणम् अकुर्वन्। तेषां = शिववीरसैनिकानां, हरहरमहादेव गर्जनपुरस्सरं = कथनपूर्वकं, छिन्धि = छेदनं कुरु, भिन्दि = भेदनं कुरु, मारय = जहि, विपोथय = निपातय, इति, कोलाहलेन = कलकलेन, च, प्रत्यर्थिनां = शत्रूणां, खुदा-तोबा-अल्लादि पारस्यपदमयः = पारसीशब्दमयः, कलकलः = कोलाहलः, रोदसी = द्यावापृथिवी, समपूरयत् = पूर्णम् अकरोत्।

**गद्यांशव्याख्या** – तत्कालमेव च शिववीरस्य सेनायाम् एका महापताका समुल्लसिता। तत्समकालमेव यवनशिविरस्य पृष्ठभागे स्थिताः शिवसैनिकाः यवनशिविरं दग्धवन्तः। अग्रे स्थितासु सेनासु च सहसैव महाराष्ट्रसिंहाः आक्रमणं कृतवन्तः। तेषां 'हर हर-महादेव' इति गर्जनापूर्वकं छिन्धि, भिन्धि, मारय निपातय चेति कोलाहलेन शत्रूणां च ''खुदा-तोबा-अल्लादि'' फारसीशब्दमयेन कलकलेन द्यावापृथिवी पूर्णे सञ्जाते।

**विशेषः** – समुच्छ्रितः = सम्+उद्+श्रि+क्त+सु।
स्थिता = स्था+क्त+टाप्।
समपतन् = सम्+पत्+लङ् (झि)।
छिन्धि = छिद्+लोट्लकारः (सिप्)।
भिन्धि = भिद्+लोट्लकारः (सिप्)।
मारय = मृ+णिच्+लोट् लकारः (सिप्)।
विपोथय = वि+पुथ्+णिच्+लोट्लकारः (सिप्)।
समपूरयत् = सम्+पुर्+णिच्+लङ् (तिप्)।

**मूलम्** – **ततो यवन-सेनासु शतशः सादिनः, गगनं चोचुम्ब्यमानाः, कृत-दिगन्त प्रकाशाः कडकडाध्वनिधर्षितप्रान्तप्रजाः उड्डीयमान-दन्दह्यमानपरस्सहस्र-पटखण्ड-विहित-हैम-विहङ्गम-विभ्रमाः ज्योतिरिङ्गणायितपरस्कोटिस्फुलिङ्गरिङ्गितपिङ्गीकृतप्रान्ताः दोधूयमानधूमघटापटल-परिपात्यमान-भसित-सितीकृतानोकहाः, सकलकलध्वनि पलायमानैः पतत्रिपटलैरिव सोसूच्यमानाः शिविरघस्मरा ज्वालामाला अवलोक्य, सहाहाकारं तदभिमुखं प्रयाताः अपरे च महाराष्ट्रऽसिभुजङ्गिनीभिः दन्दश्यमानाः, केचन ''त्रायस्व, त्रायस्व'' इति साम्रेडं व्याहरमाणाः पलायमानाः, अन्ये धीरा वीराश्च – 'तिष्ठत रे तिष्ठत धूर्तधुरीणाः! महाराष्ट्रहतकाः! किमिति चौरा इव लुण्ठका इव दस्यव इव च यवनसेनापतिनाक्राम्यथ? समागच्छत सम्मुखं, यथा शाम्येदस्मच्चन्द्रहासानां चिरप्रवृद्धा महाराष्ट्ररुधिराऽऽस्वादतृषा इति सक्ष्वेडं सङ्गर्ज्य, युद्धाय सज्जाः समतिष्ठन्त।**

**तेषां चाऽश्वानां सव्यापसव्यमार्गैः खुरक्षुण्णा व्यदीर्यत वसुधा। खड्ग खटखटाशब्दैः सह च प्रादुरभूवन् स्फुलिङ्गाः। रुधिरधाराभिः जपासुमनस्समाच्छन्नमिवाभूद्रणाङ्गणम्।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन यवनसैनिकानां शिववीरसैनिकानाञ्च मध्ये प्रारब्धयुद्धस्य स्थितिः वर्णिता विद्यते।

**पर्यायशब्दाः** – ततः = तदनन्तरं, यवनसेनां = म्लेच्छपताकिनीसु, शतशः, सादिनः अश्वारोहिणः, गगनं चोचुम्ब्यमाना = आकाशं स्पर्शमाणाः, कृतदिगन्तप्रकाशः = प्रकाशिताशाः, कडकडाध्वनिधर्षितप्रान्तप्रजाः = कडकडाध्वनित्रासित् निकटस्थ प्रजाः, उड्डीयमानैः = उद्गच्छद्भिः, दन्दह्यमानैः = नितरां ज्वलद्भिः, परस्सहस्रः = सहस्राधिकैः, पटखण्डैः = वस्त्रशकलैः, विहितः = सम्पादितः, हैमानां = सौवर्णानां, विहङ्गमानां = पक्षिणां, विभ्रमाः = भ्रमः याभिस्ताः। ज्योतिरिङ्गणायितानां = खद्योतायितानां, परस्कोटिनां = कोट्यधिकानां, स्फुलिङ्गानाम् अग्नि कणानां, रिङ्गितैः = उड्डयनैः, पिङ्गीकृताः = पिञ्जरीकृताः, प्रान्ताः = परिसरभूमयः याभिस्ताः। दोधूयमानानां = अतितरां वृद्धिगच्छन्तीनां, धूमचटानां = धूमलेखानां, पटलेन = समूहेन, परिपात्यमानैः = विकीर्यमाणैः, भासितैः = भस्नाभिः, सितीकृताः, अनोकहाः = वृक्षाः, याभिस्ताः। सकलध्वनिपलायमानैः = कलकलशब्देन सह पलायमानैः, पतत्रिपटलैरिव = पक्षिसमूमहैरिव, सोसूच्यमानाः = बोबुध्यमानाः, शिविरघस्मराः = पटगृहभक्षिकाः, ज्वालमानाः = ज्वालापंक्तीः, अवलोक्य, सहाहाकारं स, तदभिमुखं = शिविराभिमुखं, प्रयाताः = प्रचलिताः। अपरे = अन्ये, महाराष्ट्रासिभुजङ्गिनीभिः = महाराष्ट्रकृपाणसर्पिणीभिः, दन्दश्यमानाः = भृशं द्रक्ष्यमानाः केचन त्रायस्व त्रायस्व = पाहि-पाहि इति साम्रेडम् = अनेकशः, व्याहरमाणाः = उच्चार्यमाणाः, पलायमानाः = प्रस्थाप्यमाणाः, अन्ये, धीराः = वीराश्च = धैर्यशालिनः भटाश्च, तिष्ठत रे तिष्ठत धूर्तधूरीणाः = धूर्तधौरेयाः, महाराष्ट्रहतकाः = दुष्टमहाराष्ट्राः, किमिति-कथमिति, चौरा इव = परिग्रहिण इव, लुण्टका इव, दस्यव इव, च यवन सेनापतीन् = अपजलखानम्, आक्राम्यथ = आक्रमण कुरुथ? समागच्छत् – आयात, सम्मुखम् = अभिमुखं, यथा = येन, शाम्येत् = शान्तिं नयेत्, अस्मच्चन्द्रहासानाम् = अस्मत्कृपाणानां, चिरप्रवृद्धा = चिरकालात् वृद्धि गता, महाराष्ट्ररुधिराऽऽस्वाद्तृषा = महाराष्ट्राणां रक्तास्वादपिपासा इति = एवं, सक्ष्वेडं = ससिहंनादं, संगर्ज्य = गर्जनं कृत्वा, युद्धाय = संग्रामाय, सज्जाः = सजगाः, समतिष्ठन्त = स्थिताः बभूवुः।

तेषां = यवनानां, च, सव्यापसव्यमार्गैः = दक्षिणवामपथैः, खुरक्षुण्णा = खुरहता, वसुधा = पृथ्वी, व्यदीर्यत = अभिद्यत्। खडग्कटकटाशब्दैः = कृपाणकटकटारवैः, सह च, प्रादुरभूत् = सञ्जाताः, स्फुलिङ्गाः = अग्निकणाः। रुधिरधाराभिः = रक्तप्रवाहैः, जपासुमनस्समाच्छन्नं = जपाकुसुमाच्छादितम्, इव, अभूत्, रणाङ्गणं = युद्धप्राङ्गणम्।

**गद्यांशव्याख्या** – तदनन्तरं यवनवाहिनीषु शतशः अश्वरोहिणः, आकाशं संस्पृश्यमानाः दिशः प्रकाशायित्रीः कडकडेतिध्वनिना समीपस्थानां प्रजानां भीतिप्रदायकाः, उद्गच्छद्भिः नितरां ज्वलद्भिः सहस्राधिकैः पटखण्डैः स्वर्णिमपक्षिणां भ्रान्तिं जनयित्रीः, खद्योतसमपरस्कोटिरग्निकणानाम् उद्गमनेन प्रान्तभागं पीतं कुर्वतीः, उत्पतन्तीनां घनघटानां पटलेन परिपात्यमानेन भसितेन वृक्षान् सितीकुर्वतीः, कलकलध्वनिना सह पलायमानैः पक्षिसमूहैरिव बोबुध्यमानाः पटगृहभक्षिकाः अग्निज्वालाः दृष्ट्वा हाहाकारं कुर्वन्तः शिविरं प्रति धावितवन्तः। अन्ये च यवनसैनिकाः महाराष्ट्राणां खड्गसर्पिणीभिः भृशं दंश्यमानाः आसन्। केचित्तु पुनः पुनः ''त्रायताम्'' इति शब्दं कुर्वाणाः धावितवन्तः। अन्ये केचन धीराः वीराश्च ''तिष्ठत रे तिष्ठत धूर्तधुरन्धराः! महाराष्ट्रहतकाः! चौरा इव लुण्ठका इव, दस्यव इव च सेनापतिं कथम् आक्रामथ? समक्षम् आगम्यतां, येन अस्माकं खड्गानां चिरकालात् वृद्धिगता महाराष्ट्राणां रुधिरास्वादपिपासा शान्ता भवेत् इति सिंहनादपूर्वकं गर्जनां कृत्वा युद्धार्थं तत्पराः सञ्जाताः।

तेषां यवनानामश्वानां दक्षिणवामपथैः खुरैः क्षुण्णा वसुधा विदीर्णा सञ्जाता। कृपाणानां खटखटेति शब्दैः सह अग्निकणाः समुत्पन्नाः। रक्तप्रवाहैः युद्धप्राङ्गणं जपापुष्पाच्छादितमिव सञ्जातम्।

**विशेषः** – चोचुम्ब्यमानाः = चुबि+यङ्+लट्+शानच्+टाप् (शस्)।

उड्डीयमान – उद्+डि+यक्+लट्+शानच्।

दन्दह्यमान = दह्+यङ्+लट्+शानच्।

ज्योतिरिङ्गणः इव आचरति = ज्योतिरिङ्गणायते –ज्योतिरिङ्गण+क्यच्+इट्+क्त।
पिङ्गीकृता = अपिङ्ग पिङ्गाकृता इति, पिङ्ग+च्वि+कृ+क्त (जस्)।
व्याहरमाणाः = वि+आ+हृ+शानच् (जस्)।
आस्वाद = आ+स्वद्+घञ्।
सङ्गर्ज्य – सम्+गर्ज्+क्त्वा (ल्यप्)।
समतिष्ठन्त = सम्+स्था+लङ् (झ)।
व्यदीर्यत = वि+दृ+यक्+लङ्।

**मूलम् – तदवलोक्य गौरसिंहो मृतस्याऽपजलखानस्य शोणितशोणं शोणशरीरं प्रलम्बवेणुदण्डाग्रेषु बद्ध्वा समुत्तोल्य सर्वान् संदर्श्य सभेरीनादं घोषितवान् यद् – ''दृश्यतां, दृश्यतामितो हतोऽयं यवन-सेनापतिः, ततश्चाऽग्निसात्कृतानि ससकल-सामग्री-जातानि-शिविराणि परितश्च बहूनि विनाशितानि यवनवीर-कदम्बकानि, तत्किमिति अवशिष्टा यूयं मुधा बकगृध्रशृगालानां भोज्याः संवर्तध्वे? शस्त्राणि त्यक्त्वा पलायध्वं, यथा नेयं भूः कदुष्णैः भवतां सद्यश्छिन्न-कन्धरागलद्रुधिरप्रवाहैर्भवद्रमणीनां च कज्जलमलिनैर्वाष्पपूरैरार्द्रा भवेद्'' इति। तदवधार्य, दृष्ट्वा च रुधिरदग्धं क्रीडापुत्तलायितं स्वस्वामिशरीरं, सर्वे ते हतोत्साहा विसृज्य शस्त्राणि कान्दिशीका दिशो भेजुः।**

**ससेनः शिववीरश्च विजयशङ्खनादैः रोदसी सम्पूर्य रणाङ्गणशोधनाधिकारं माल्यश्रीकाय समर्प्य, प्रतापदुर्गं प्रविश्य मातुः चरणौ प्रणनाम।**

**प्रसङ्गः** – अस्मिन् गद्यांशे महाकविना श्रीमदम्बिकादत्तव्यासेन हतम् अपजलखानं दृष्ट्वा यवनसैनिकानां पलायनं शिववीरस्य च मातुः समीपे गमनमिति वर्णितमस्ति।

**पर्यायशब्दाः** – तदवलोक्य = तद्दृष्ट्वा, गौरसिंहः = पूर्वोक्तः ब्रह्मचारिबटुः, मृतस्य = त्यक्तशरीरस्य, अपजलखानस्य = सेनापतेः, शोणितशोणं = रक्तशोणं, शोणं = रक्तयुक्तं, शरीरं = देहं, प्रलम्बवेणुदण्डाग्रेषु दीर्घवंशाग्रेषु, बद्ध्वा, समुत्तोल्य = उत्थाप्य, सर्वान् = यवनानां, सन्दर्श्य = दर्शयित्वा, सभेरीनादं = सडिण्डिभिनादं, घोषितवान् = घोषणां कृतवान्, यद् – दृश्यतां, पश्यतु, इतः = अत्र, अयं, सेनापतिम् = अपजलखानः, हतः = नष्टः, ततश्च = तत्रपक्षेऽपि च अग्निसात्, कृतानि = प्रज्वलितानि, ससकलसामग्रीजातानिशिविराणि = समग्रसामग्रीयुक्तानि पटगृहाणि, परितश्च = समन्तात्, बहूनि = अनेकानि, विनाशितानि नष्टानि, यवनवीरकदम्बानि = म्लेच्छभटसमूहः, तत्किं = तत्कथम्, अवशिष्टः = शेषजातः, येयं = भवन्तं, मुधा = वृथैव, वकगृधशृगालानां = पशुपक्षिणां, भोज्याः = खाद्याः, संवर्तध्वे = भवथ? शस्त्राणि = आयुधानि, त्यक्त्वा = परित्यज्य, पलायध्वं = अपसरत्, यथा = येन, नेयं, भूः = पृथिवी, कदुष्णैः = ईषदुष्णैः, भवतां = युष्माकं, सद्यः = सपदि, छिन्नाः = कर्तिताः, कन्धराः ग्रीवाः, तासां, गलेभ्यः = कण्ठेभ्यः, ये रुधिराणां = रक्तानां प्रवाहाः धाराः तैः, भवद्रमणीनां = भवद्दाराणां, च कज्जलमनिलैः = नेत्राञ्जनदूषितैः, वाष्पपूरेः = अश्रुप्रवाहैः, आर्द्रा = सिक्ता, भवेत् = स्यात्? तदवधार्य = दृष्ट्वा, अवलोक्य, च, रुधिरदिग्धं = रक्तक्लिन्नं, क्रीडापुत्तलायितं = खेलाय निर्मितपरादिमूर्तिवदाचरितं, स्वस्वामिशरीरम् = अफजलखानदेहं, सर्वे ते = यवनसैनिकाः, हतोत्साहाः = निरुत्साहिताः, शस्त्राणि = आयुधानि, विसृज्य = त्यक्त्वा,, कान्दिशीकाः = भीताः, दिशः = पारितः, भेजुः = प्रापुः।

ससेनः, सेनया सहितः, शिववीरः = शिवः, विजयशङ्खनादेः = विजयशङ्खादिध्वनिभिः, रोदसी = द्यावापृथिवी, सम्पूर्य = पूरयित्वा, रणाङ्गणशोधनाधिकारं, युद्धस्थलशोधनकार्यं, माल्यश्रीकाय = एतन्नाम्ने, समर्प्य =

अर्पयित्वा, प्रतापदुर्गं = एतन्नामकं दुर्गं, प्रविश्यं = प्रवेशं कृत्वा, मातु: = जनन्या:, चरणौ = पादौ, प्रणनाम = नमस्कार:।

**गद्यांशव्याख्या –** तत्सर्वं दृष्ट्वा गौरसिंह: मृतस्य अपजलखानस्य रक्तयुक्तं रक्तशरीरं दीर्घवंशदण्डाग्रभागे बद्ध्वा उत्थाप्य च सर्वान् यवनान् दर्शयित्वा सडिण्डिभिनादं उद्घोषितवान् यत् अत्र पश्यन्तु, अत्र पश्यन्तु, अयं यवनसेनापति: हत:, अन्यत्र च समग्रसामग्रीयुक्तानि पटगृहाणि अपि प्रज्वलितानि, चतुर्दिक्षु च यवनवीरसमूह: विनाशित:, अत्र: अवशिष्टा: यूयं कथं व्यर्थमेव बकगृध्रश्रृगालानां खाद्यपदार्था: भवथ? शस्त्राणि परित्यज्य पलायनं कुरुत, पलायनं कुरुत। यस्मात् इयं भूमि: युष्माकं सद्यकर्तितग्रीवाकण्ठाभ्यां प्रवहद्भि: रुधिरप्रवाहै: कज्जलमलीनैश्च युष्माकं दाराणाम् अश्रुप्रवाहैश्च सिक्ता न भवेत्? तच्छ्रुत्वा दृष्ट्वा च रक्तयुक्तं क्रीडापुत्तलिकेव प्रतीयमानं स्वस्वामिन: शरीरं च दृष्ट्वा सर्वे यवनसैनिका: निरुत्साहिता: भूत्वा शस्त्राणि परित्यज्य भीता: परित: प्रत्यधावन् (धावितवन्त:)।

तत: परं सेनासहित: शिववीर: विजयशङ्खनादै: द्यावापृथिवी पूरयित्वा युद्धस्थलस्वच्छताकार्यं माल्यश्रीकनामक स्वीय प्रमुखम् आदिश्य च प्रतापदुर्गं प्रविश्य मातु: चरणौ नमस्कृतवान्।

**विशेष:** – बद्ध्वा = बध्+क्त्वा।

समुत्तोल्य – सम्+उद्+तुल्+णिच्+क्त्वा (ल्यप्)।

संदर्श्य = सम्+दृश्+णिच्+क्त्वा (ल्यप्)।

घोषितवान् = घुष्+क्तवतु (सु)।

दृश्यताम् = दृश्+यक्+लोट् (त)।

हत: – हन्+क्त (सु)।

संवर्तध्वे = सम्+वृत्+लट् (ध्वम्)।

दिग्धम् – दिह्+क्त (अम्)।

प्रणनाम = प्र+नम्+लिट् (तिप्)।

प्रलम्बवेणुदण्डाग्रेषु – प्रलम्बाश्च ते वेणुदण्डा:, प्रलम्बवेणुदण्डा:, तेषाम् अग्रेषु (षष्ठीतत्पुरुष:)।

हतोत्साहा: – हत: उत्साह: येषां ते हतोत्साहा: (बहुव्रीहिसमास:)।

रणाङ्गणशोधनाधिकारम् – रणाङ्गणस्य शोधनं तस्य अधिकार:, तम् (षष्ठी तत्पुरुष:)।

**॥ इति द्वितीयो नि:श्वास: ॥**

# अभ्यास-प्रश्नाः

## बहुविकल्पात्मकप्रश्नाः -

**अधोलिखितानां प्रश्नानां शुद्धोत्तरक्रमः कोष्ठकेषु लेखनीयः -**

१. शिवराजविजयस्य लेखकस्य नाम किम्?

(क) दण्डी (ख) सुबन्धुः

(ग) बाणभट्टः (घ) अम्बिकादत्तव्यासः ( )

२. शिवराजविजयमहाकाव्यस्य नायकोऽस्ति -

(क) शिववीरः (ख) गौरसिंहः

(ग) अपजलखानः (घ) अवरंगजीवः ( )

३. शिववीरः निवसति स्म -

(क) जयदुर्गे (ख) प्रतापदुर्गे

(ग) सिंहदुर्गे (घ) रक्तदुर्गे ( )

४. यवनराजदूतरूपेण शिववीरस्य सविधे समागतः -

(क) गोपीनाथ पण्डितः (ख) गौरसिंहः

(ग) अपजलखानः (घ) द्वारपालः ( )

## अतिलघूत्तरात्मकप्रश्नाः -

१. 'शिवराजविजयः' पुस्तकस्य लेखकः कः अस्ति?

२. तानरंगः कः आसीत्?

३. गोपीनाथपण्डितः कस्य राजदूतः आसीत्?

४. अपजलखानं शिववीरस्य हननार्थं ग्रहणार्थं वा कः प्रेषितवान्?

५. दौवारिकं परीक्षितुं गौरसिंह किं कृतवान्?

६. शिवराजविजयः कतिविरामेषु विभक्तः अस्ति?

७. शिवराजविजयः आधुनिकसंस्कृत-उपन्यासः अस्ति अथवा प्राचीन-संस्कृत-उपन्यासः?

## लघूत्तरात्मकप्रश्नाः -

१. गौरसिंह-अपजलखानयोः सञ्जातसंवादः लेखनीयः।

२. अपजलखानस्य शिविरव्यवस्था लेखनीया।

३. शिववीरस्य विषये पञ्चवाक्यानि लेख्यानि।

४. शिववीरः अपजलखानं कथं हतवान्?

५. गौरसिंहद्वारपालयोः सञ्जातसंवादः स्वशब्देषु लेखनीयः।

६. 'शिवराजविजयः' इत्यस्याध्ययनेन का शिक्षा प्राप्ता भवति?

## दीर्घोत्तरात्मकप्रश्नाः –

१. श्रीमदम्बिकादत्तव्यासस्य संक्षिप्तपरिचयः लेख्यः।

२. शिवराजविजयस्य प्रथमविरामस्य द्वितीयनिःश्वासस्य कथावस्तु संक्षेपेण लेखनीयम्।

३. शिवराजविजयस्य काव्यगतवैशिष्ट्यं किम्?

**४. अधोलिखितगद्यांशानां सप्रसङ्गभावार्थाः लेखनीयाः –**

(क) ततः संवृत्ते किञ्चिदन्धकारे ...................................... कः कोऽत्र भोः? इति।

(ख) शिववीरस्तु कस्याञ्चिच्चन्द्रचम्बिन्यां ............................. आसीत्।

(ग) ततो बाढमित्युक्त्वा ............................................... कर्णान्तिकं व्याहार्षीत्।

(घ) ततस्तानपूरिकायाः ................................................ समधात्।

(ङ) अथ कथञ्चित् प्रकाशबहुले ..................................... प्रबबन्ध।

**५. अधोलिखितगद्यांशानां सप्रसंगव्याख्याः लेखनीयाः –**

(क) ततः पुनर्बद्धाञ्जलेर्दौवारिकस्य .................................. प्रतिष्ठत्।

(ख) इतस्तु छलेनाऽस्मत्स्वामिसहचराः .............................. विकीर्यन्ते।

(ग) तदवधार्य समस्तकूर्चान्दोलनं .................................... प्रविवेश।

(घ) इतस्तु कुरङ्गमिव ................................................. अवरुधत्।

(ङ) तत्क्षणादेव च शिववीरध्वजिन्यां ................................ समपूरयत्।

# महाकविभर्तृहरिविरचितम्

# नीतिशतकम्

## ५१ श्लोकतः १०१ श्लोक-पर्यन्तम्

# भूमिका

## संस्कृतं नाम दैवीवागन्वाख्याता महर्षिभिः (दण्डी)

संस्कृतभाषा सर्वासां भाषाणां जननी देवभाषा श्रेष्ठभाषा चेति ख्याता। अस्यामेव भारतीयसंस्कृतेः प्राणभूताः वेदोपनिषद्रामायण-महाभारत-पुराणादयः ग्रन्थाः संरचिताः विद्यन्ते। संस्कृतसाहित्यं द्विविधम्- वैदिकं लौकिकञ्च। वेदोपनिषदः वैदिकसाहित्ये समायान्ति। लौकिकसाहित्यस्य काव्यस्य प्रारम्भः आदिकवि-महर्षि-वाल्मीकि-रचितात् रामायणादेवाभवत्। काव्यं द्विविधम्- दृश्यं श्रव्यञ्च। दृश्यं रूपकाणि उपरूपकाणि च। श्रव्यकाव्यस्य उपभेदत्रयम्- गद्य-पद्य-चम्पू इति। पद्यकाव्यस्य उपभेदत्रयम्- महाकाव्यं, खण्डकाव्यं गीतिकाव्यञ्च। महाकाव्यं सर्गबन्धं महापुरुषचरितात्मकं विद्यते। खण्डकाव्यं मानवजीवनोचितमेकदेशीयकथानकाधारितं दृश्यते। गीतिकाव्यस्योपभेदद्वयं कर्तुं शक्यते- प्रबन्धात्मकं मुक्तकञ्च। संस्कृते शतकग्रन्थाः अस्यामेव कोटौ समाविष्टाः सन्ति। यथा-अग्निपुराणे उक्तं - **मुक्तकं श्लोक एवैकश्चमत्कारक्षमं सताम्।** यत्र सहृदयाहृदयाह्लादाः श्लोकाः विद्यन्ते, तत् काव्यं मुक्तककाव्यं कथ्यते। ध्वन्यालोके आचार्य-आनन्दवर्धनेन प्रोक्तं '**पूर्वापरनिरपेक्षेणापि हि येन रसचर्वणा क्रियते तदेव मुक्तकम्**' अर्थात् मुक्तककाव्ये श्लोकाः पूर्वापरप्रसङ्गरहिताः रसास्वादनाय स्वतन्त्रकाव्यत्वक्षमाश्च भवन्ति । महाकविभर्तृहरेः शतकत्रयं मुक्तककाव्यत्वं भजते।

**जीवनपरिचयः-** संस्कृतसाहित्ये प्रसिद्धानां कालिदासादीनां कवीनां सदृशः अस्य कवेः जीवनपरिचयविषये प्रामाणिकं किमपि जीवनवृतं नोपलभ्यते तथापि अन्तः-बाह्यप्रमाणानुसारं वक्तुं शक्यते यत् कवेः जीवनं राजैश्वर्यभोगयुक्तमासीत्। वाक्यपदीयस्य मङ्गलश्लोकः '**अनादिनिधनं ब्रह्म**' नीतिशतकस्य मङ्गलश्लोकः '**अनन्तचिन्मात्रमूर्तये**' एताभ्यां श्लोकाभ्यां कविरयं ब्रह्मवादीति प्रतीयते। अस्य कवेः जीवनवृत्तविषये अनेकाः जनश्रुतयः प्रचलिताः सन्ति। तदनुसारं कविरयं मालवप्रदेशनिवासी क्षत्रियः आसीत्। पितुः नाम गन्धर्वसेनः। गन्धर्वसेनस्य पत्नीद्वयमासीत्। तस्य द्वौ पुत्रौ जातौ। भर्तृहरिः विक्रमादित्यश्च। धाराधिपतेः पुत्री विक्रमादित्यस्य माता आसीत्। कालक्रमेण सन्तानरहितः धारानृपतिः स्वराज्यं विक्रमादित्याय प्रदातुमिष्टवान् परन्तु विक्रमादित्यः अग्रजाय भर्तृहरये राज्यं प्रदाय तस्य मन्त्रीत्वेन कार्यं कृतवान्। मालवप्रदेशस्य राजधानी धारानगरी परिवर्त्य उज्जयिनी अभवत्। राजसत्तां प्राप्य भर्तृहरिः विषयासक्तः संजातः। एकदा प्रेयसीकथनेन कुपितः सन् भर्तृहरिः विक्रमादित्यं राज्यात् बहिष्कृतवान्।

**भर्तृहरेः** जीवनस्य एका महत्त्वपूर्णा घटना- एकदा केनचित् ब्राह्मणेन वा यतिना नृपाय भर्तृहरये एकमायुवर्द्धकं दिव्यं फलं दत्तम्। तत् फलं नृपः स्वयं अखादित्वा स्वप्रियपत्न्यै पद्माक्ष्यै वा अनङ्गसेनायै वा पिङ्गलायै प्रदत्तवान्। सा तत् फलं स्वप्रियतमाय बलाध्यक्षाय दत्तवती। सः बलाध्यक्षोऽपि प्रेमिकावेश्यायै अयच्छत्। सा वेश्या तत् फलं महाराजाय भर्तृहरये प्रदत्तवती। तत् फलं विलोक्य नृपः चकितोऽभवत्। अनन्तरं संपूर्णं रहस्यं विज्ञाय स नृपः दुःखितो जातः। प्रसङ्गेऽस्मिन् श्लोकोऽयं विरचितः-

**यां चिन्तयामि सततं मयि सा विरक्ता,**
**साऽप्यन्यमिच्छति जनं स जनोऽन्यसक्तः।**
**अस्मत्कृते च परितुष्यति काचिदन्या,**
**धिक् ताञ्च तञ्च मदनञ्च इमाञ्च माञ्च।**

अनन्तरं नृपः भर्तृहरिः अनुजाय विक्रमादित्याय राज्यं समर्प्य वैराग्यं गृहीतवान्। योगिराजस्य गोरखनाथस्य शिष्यत्वं गृहीत्वा योगसाधनामकरोत्। ततः भगिनीपुत्रेण गोपीचन्देन सह तीर्थानि भ्रमित्वा समाधौ लीनः सञ्जातः।

**कवेः कृतित्वम्-** (मुक्तककाव्यत्रयम्) १. नीतिशतकम्, २. शृङ्गारशतकम्, ३. वैराग्यशतकम्,।

**नीतिशतकस्य परिचयः-** अस्मिन् नीतिशतके प्रतिपाद्यश्लोकाः लोकव्यवहारोपयोगिनः विद्यन्ते। कश्चित्

मनुष्यः एतान् श्लोकान् पठित्वा नैतिकसिद्धान्तान् सद्गुणान् च स्वजीवने समाचर्य्य सत्पुरुषः भवितुं शक्नोति। नीतिशतकमिदं मुक्तककाव्यं विद्यते। कविना बहुविधाः प्रसङ्गाः सुवर्णिताः। यथा- सद्गुणमहिमा, नीचजनस्य दुष्टता, मूर्खस्य जडता, विद्या-महत्त्वम्, विवेकहीनजनस्य अधोगतिः, धनस्य महत्ता, सत्सङ्गतेः महत्त्वम्, परोपकारस्य महत्त्वञ्च। नीतिशतकमिदं सर्वश्रेष्ठं नीतिप्रधानमुपदेशात्मकं व्यावहारिकञ्चास्ति। रचनेयं संस्कृतसाहित्यस्यामूल्यनिधिस्वरूपा विद्यते। सत्यमुक्तम्-

**जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।**
**नास्ति येषां यशः काये जरामरणजं भयम्।**

**सूक्तयः-** १. प्रकृतिसिद्धमिदं हि दुरात्मनाम्। २. सेवाधर्मः परमगहनो योगिनामप्यगम्यः। ३.छायेव मैत्री खल-सज्जनानाम्। ४.प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते। ५.स्वभाव एवैष परोपकारिणाम्। ६.सन्तः स्वयं परहितेषु कृताभियोगाः। ७.निजहृदि विकसन्तः सन्ति सन्तः कियन्तः। ८.न निश्चितार्थद्विरमन्ति धीराः। ९.मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम्।१०.सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम्। ११.न्याय्यात्पथः प्रविचलन्ति पदं न धीराः। १२.लोकाः !पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम्। १३.प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः। १४.यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः। १५.काले फलन्ति पुरुषस्य यथैव वृक्षाः।

संस्कृतवाङ्मयादर्शः प्रथमो भागः कनिष्ठोपाध्याय-कक्षायां पाठ्यते। तत्र नीतिशतकस्य १(एकतः) ५० (पञ्चाशत्) श्लोकाः सन्ति। संस्कृतवाङ्मयादर्शः द्वितीयो भागः वरिष्ठोपाध्याय-कक्षायां पाठयिष्यते। अस्मिन् पुस्तके ५१ (एकपञ्चाशत्)श्लोकतः १०० (शतम्) पर्यन्तं श्लोकाः सन्ति। सर्वे श्लोकाः छात्राणां नैतिकमूल्यवर्धकाः विद्यन्ते।

**डॉ. निरञ्जनसाहुः**

# महाकविभर्तृहरिविरचितम्
# नीतिशतकम्

**रे रे चातक ! सावधानमनसा मित्र ! क्षणं श्रूयता-**
**मम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः।**
**केचिद् वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद् वृथा,**
**यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः।।५१।।**

**प्रसङ्गः**- अत्र कविना सोदाहरणं वर्णितं यत् संसारे सर्वे उदाराः न भवन्ति अतः सर्वत्र याच्ञा न करणीया।

**पदच्छेदः** - रे रे चातक ! सावधानमनसा मित्र ! क्षणं श्रूयताम् अम्भोदाः बहवः वसन्ति गगने सर्वे अपि न एतादृशाः केचिद् वृष्टिभिः आर्द्रयन्ति वसुधां गर्जन्ति केचिद् वृथा यं यं पश्यसि तस्य तस्य पुरतः मा ब्रूहि दीनं वचः।

**अन्वयः**- रे रे मित्र चातक ! सावधानमनसा क्षणं श्रूयताम्। गगने बहवः अम्भोदाः वसन्ति, सर्वे अपि एतादृशाः न (सन्ति)। केचिद् वसुधां वृष्टिभिः आर्द्रयन्ति, केचिद् वृथा गर्जन्ति, (त्वं) यं यं पश्यसि तस्य तस्य पुरतः दीनं वचः मा ब्रूहि।

**व्याख्या**- रे रे मित्र चातक ! = हे हे सखे सारङ्ग ! सावधानमनसा = अवहितचेतसा, क्षणम् = अल्पकालम्, श्रूयताम् = आकर्ण्यताम्। गगने = आकाशे, बहवः = अनेके, अम्भोदाः = जलदाः, वसन्ति = तिष्ठन्ति, सर्वे = मेघाः, अपि एतादृशाः = ईदृशाः जलप्रदाः, न (सन्ति) = न वर्तन्ते। केचिद् = केचन पयोदाः, वसुधाम् = धराम्, वृष्टिभिः = वर्षाजलैः, आर्द्रयन्ति = सिञ्चन्ति, केचिद् = अपरे केचन मेघाः, वृथा = विना कारणम्, गर्जन्ति = शब्दायन्ते, (त्वं) यं यं = मेघम्, पश्यसि = अवलोकयसि, तस्य तस्य = सर्वस्य मेघस्य, पुरतः = अग्रतः, दीनम् = कृपणाम्, वचः = वाणीम्, मा ब्रूहि = मा वद।

**भावार्थः**- हे मित्र चातक ! स्वस्थमनसा क्षणमात्रं शृणु। आकाशे बहवः जलदाः निवसन्ति परन्तु सर्वे जलं प्रदातुं समर्थाः न भवन्ति। केचिद् मेघाः वर्षाजलेन धरां सिञ्चन्ति अपरे व्यर्थमेव गर्जन्ति। अतः यं यं मेघमवलोकयसि तस्य तस्य अग्रतः जलप्रार्थनायुक्तां दीनवाणीं मा वद।

**याकरणम्**- अम्भोदाः =अम्भ ददाति इति ते अम्भोदाः (उपपदसमासः)। नैतादृशाः = न + एतादृशाः (वृद्धिसन्धिः)।

**कोषः**- अथ 'मित्रं सखा सुहृद्' इत्यमरः। 'भाषितं वचनं वचः' इत्यमरः।

**छन्दः**- शार्दूलविक्रीडितम्।

**अलङ्कारः** - काव्यलिङ्गम्।

**अकरुणत्वमकारणविग्रहः**
**परधने परयोषिति च स्पृहा।**
**सुजनबन्धुजनेष्वसहिष्णुता**
**प्रकृतिसिद्धमिदं हि दुरात्मनाम्।।५२।।**

**प्रसङ्गः**- प्रस्तुते श्लोके कविना दुर्जनानां स्वाभाविकानि लक्षणानि सुवर्णितानि।

**पदच्छेदः**- अकरुणत्वम् अकारणविग्रहः परधने परयोषिति च स्पृहा, सुजनबन्धुजनेषु असहिष्णुता प्रकृतिसिद्धम् इदं हि दुरात्मनाम्।।

**अन्वयः**- अकरुणत्वम् अकारणविग्रहः परधने परयोषिति च स्पृहा। सुजनबन्धुजनेषु असहिष्णुता इदं हि दुरात्मनां प्रकृतिसिद्धम् (अस्ति)।।

**व्याख्या**- अकरुणत्वम् = (करुणायाः भावः करुणत्वं न करुणत्वं) दयाहीनता, अकारणविग्रहः = (न कारणं यस्य विग्रहः कलहः) व्यर्थः कलहः, परधने = (परेषां धनं तत्र) परवित्ते, परयोषिति = (परस्य योषित् तत्र) अन्यस्त्रियां, च स्पृहा =

अभिलाषः, सुजनबन्धुजनेषु =(सुजनाः बन्धुजनाः तेषु) साधुजनेषु परिवारवर्गेषु, असहिष्णुता = (न सहिष्णुता) असहनशीलत्वं, इदं =एतत् सर्वं हि=निश्चयेन, दुरात्मनां = दुर्जनानां, प्रकृतिसिद्धं =(प्रकृत्या सिद्धम्) स्वभावप्रसिद्धम् (अस्ति)।।

**भावार्थः-** निर्दयत्वं, निष्कारणकलहत्वं, परेषां धने परस्त्रियां च इच्छा, सज्जनपरिवारवर्गेषु च असहनशीलता - इदं स व दुर्जनानां निसर्गसिद्धं जन्मजातं च भवति।

**व्याकरणम्-** सुजनबन्धुजनेषु = सुजनाश्च बन्धुजनाश्च द्वन्द्वः तेषु, दुरात्मनां = दुष्टः आत्मा यस्य सः बहुव्रीहिः तेषाम्, प्रकृतिसिद्धम = प्रकृत्या सिद्धम् तृ.तत् पु.।

**कोषः-**'कारुण्यं करुणा घृणा' इत्यमरः। 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः। 'इच्छा काङ्क्षा स्पृहेहा तृड्' इत्यमरः।' '

**छन्दः-**द्रुतविलम्बितमाह नभौ भरौ।

**अलङ्कारः-** अर्थान्तरन्यासः।

**दुर्जनः परिहर्तव्यो विद्ययाऽलङ्कृतोऽपि सन्।**
**मणिना भूषितः सर्पः किमसौ न भयङ्करः।।५३।।**

**प्रसङ्गः-** अत्र श्लोके कविः वर्णयति यत् विद्यादिगुणयुक्तः खलजनः मणिभूषितसर्पः इव सदा त्यजनीयः भवति।

**पदच्छेदः-** दुर्जनः परिहर्तव्यः विद्यया अलङ्कृतः अपि सन् मणिना भूषितः सर्पः किम् असौ न भयङ्करः।

**अन्वयः-** दुर्जनः विद्यया अलङ्कृतः सन् अपि परिहर्तव्यः,मणिना भूषितः असौ सर्पः किं भयङ्करः न ।

**व्याख्या-** दुर्जनः = खलः, विद्यया = शास्त्रज्ञानेन, अलङ्कृतः = विभूषितः, सन् अपि = भवन् अपि, परिहर्तव्यः = त्याज्यः, मणिना = रत्नेन, भूषितः = अलङ्कृतः, असौ = सः, सर्पः = उरगः, भयङ्करः = भयप्रदः, किं न ? = भयप्रदः नास्ति किम्? अपि तु महाभयङ्करः अस्ति।

**भावार्थः-** अत्र कविः भर्तृहरिः वर्णयति यत् समस्तशास्त्रज्ञानेन युक्तोऽपि खलजनः सदा त्यजनीयः, यथा शिरोमणिना भूषितः सर्पः किं भयप्रदः नास्ति अर्थात् महाभयङ्करो भवति, अतः मणियुक्तः सर्प इव विद्याविभूषितः दुष्टजनः स द ा भयप्रदो भवति।

**व्याकरणम्-** विद्यया = विद् + क्यप् + तया। अलङ्कृतः = अलम् + कृ + क्त। सन् = अस् + शतृ। परिहर्तव्यः = परि + हृ + तव्य। भूषितः = भूष् + क्तः। सर्पः = सृ + अच्। भयङ्करः = भयं करोति इति = भय + कृ +खश्।

**कोषः-**'पिशुनो दुर्जनः खलः' इत्यमरः।'सर्पः पृदाकुर्भुजगो' इत्यमरः।'रत्नं मणिः' इत्यमरः।

**छन्दः-** अनुष्टुप्।

**अलङ्कारः-** दृष्टान्तः।

**जाड्यं ह्रीमति गण्यते, व्रतरुचौ दम्भः, शुचौ कैतवं,**
**शूरे निघृणता, मुनौ विमतिता, दैन्यं प्रियालापिनि।**
**तेजस्विन्यवलिप्तता, मुखरता वक्तर्यशक्तिः स्थिरं,**
**तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः।।५४।।**

**प्रसङ्गः-** प्रस्तुते श्लोके कविना वर्णितं यत् दुर्जनः सुजनानां सुगुणान् दूषयति।

**पदच्छेदः-** जाड्यं ह्रीमति गण्यते, व्रतरुचौ दम्भः, शुचौ कैतवं, शूरे निघृणता, मुनौ विमतिता, दैन्यं प्रियालापिनि। तेजस्विनि अवलिप्तता, मुखरता वक्तरि, अशक्तिः स्थिरं, तत्कः नाम गुणः भवेत् सः गुणिनां यः दुर्जनैः न अङ्कितः।

**अन्वयः-** ह्रीमति जाड्यं, व्रतरुचौ दम्भः, शुचौ कैतवं, शूरे निघृणता, मुनौ विमतिता, प्रियालापिनि दैन्यं, तेजस्विनि अवलिप्तता, वक्तरि मुखरता, स्थिरे अशक्तिः गण्यते। तत् गुणिनां सः कः नाम गुणः भवेत् यः दुर्जनैः न अङ्कितः।

**व्याख्या-** ह्रीमति = ह्रीः लज्जा अस्ति ह्रीमान् अस्मिन् इति = लज्जाशीले, जाड्यं = जडस्य भाव = मान्द्यम्, व्रतरुचौ = व्रतेषु रुचिः तस्मिन् =व्रतशुद्धौ, दम्भः = आडम्बरः, शुचौ = पवित्रजने, कैतवं = कितवस्य भावः, कैतव्यं = कापट्यं, शूरे = वीरपुरुषे, निर्घृणता = निर्दयता, मुनौ = मननशीलजने, विमतिता = विगता मतिः =बुद्धिहीनता, प्रियालापिनि = मधुरवादिनि जने, दैन्यं = दीनस्य भावः = दीनता, तेजस्विनि = ओजस्विपुरुषे, अवलिप्तता

=अभिमानिता, वक्तरि = भाषणशीलजने, मुखरता = दुर्मुखता, स्थिरे = निश्चलचित्तजने, अशक्तिः = असमर्थता, गण्यते = सम्भाव्यते। तत् = तस्मात् कारणात्, गुणिनां = गुणयुक्तजनानां, सः क : = विशिष्टः, नाम = नामकः, गुणःभवेत् = गुणः स्यात्, यः दुर्जनैः =यः खलैः, न अङ्कितः = न चिह्नितः।

**भावार्थः-** दुर्जनैः लज्जासंपन्नजने मूर्खता, व्रतादिषु रुचिशीले जने पाखण्डता, पवित्रचरित्रजने कपटता, पराक्रमिजने निर्दयता, मननशीलजने बुद्धिहीनता, मधुरभाषणयुक्ते दीनता, तेजस्विपुरुषे दर्पभावना, भाषणशक्तिसंपन्नजने वाचालता, निश्चलबुद्धियुक्तजने च अशक्तिः संभाव्यते। गुणिजनानां कोऽपि एतादृशः गुणः नास्ति यो दुष्टजनानां निन्दाविषयः न भवेत्। अर्थात् गुणिनां एकोऽपि गुणः दुर्जनैः अदूषितः नास्ति।

**व्याकरणम्-** ह्रीमति = ह्री + मतुप् तस्मिन्। जाड्यं = जड + ष्यञ्। व्रतरुचौ= व्रते रुचिः यस्य सः बहुव्रीहिसमासः तस्मिन्। दम्भः = दम्भ + घञ्। कैतवं = कितव + अण्। निर्घृणता = निर्घृण + तल् + टाप्। विमतिता = विमति + तल् + टाप्। दैन्यं = दीन +ष्यञ्। अवलिप्तता = अव +लिप् + क्त =अवलिप्त + तल् + टाप्। मुखरता = मुखर+तल् +टाप्। अशक्तिः = न शक्तिः (नञ् तत्पु.)। अङ्कितः= अङ्क + क्त। ( )

**कोषः-**'जडोऽज्ञः' इत्यमरः।'कलङ्काङ्कौ लाञ्छनं च' इत्यमरः।'कपटोऽस्त्रीव्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः।

**छन्दः -** सूर्याश्वैर्यदिमः सजौ सततगा शार्दूलविक्रीडितम्। (शार्दूलविक्रीडितम्)

**अलङ्कारः-** समुच्चयः।

**लोभश्चेदगुणेन किं, पिशुनता यद्यस्ति किं पातकैः,**
**सत्यं चेत्तपसा च किं, शुचिमनो यद्यस्ति तीर्थेन किम्।**
**सौजन्यं यदि किं गुणैः, सुमहिमा यद्यस्ति किं मण्डनैः,**
**सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना।।५५ ।।**

**प्रसङ्गः-** प्रस्तुते श्लोके कविना उपदिष्टं यत् अस्माभिः किं ग्राह्यम् किम् अग्राह्यम् इति।

**पदच्छेदः-** लोभः चेत् अगुणेन किम्, पिशुनता यदि अस्ति किं पातकैः, सत्यं चेत् तपसा च किम्, यदि शुचिमनः अस्ति तीर्थेन किम्। सौजन्यं यदि गुणैः किम्, सुमहिमा यदि अस्ति मण्डनैः किम् , सत् विद्या यदि किं धनैः,अपयशः यदि अस्ति मृत्युना किम्।

**अन्वयः-** चेत् लोभः अगुणेन किं, यदि पिशुनता अस्ति किं पातकैः, सत्यं चेत् तपसा च किं,यदि शुचिमनः अस्ति तीर्थेन किम्। यदि सौजन्यं गुणैः किम्, यदि सुमहिमा अस्ति मण्डनैः किम् , यदि सत् विद्या धनैः किम्, यदि अपयशः अस्ति मृत्युना किम्।

**व्याख्या-** लोभः = धनतृष्णा, चेत् = यदि, अगुणेन = दुर्गुणेन किं प्रयोजनम्? यदि पिशुनता = परदोषसूचकता, अस्ति = विद्यते, पातकैः = पापकर्मभिः किं प्रयोजनम्? सत्यं = ऋतं, चेत् = तर्हि, तपसा = तपश्चर्यया, च किं प्रयोजनम्? यदि शुचिमनः = पवित्रं मनः, अस्ति = विद्यते, तीर्थेन = श्रीजगन्नाथपुर्यादिगमनेन, किम् प्रयोजनम्?। यदि सौजन्यं = सज्जनता अस्ति तर्हि, गुणैः = दयादाक्षिण्यादिभिः, किं प्रयोजनम् ? यदि सुमहिमा = यदि शोभनं गौरवम्, अस्ति = विद्यते, मण्डनैः = भूषणैः किं प्रयोजनम्? यदि सत् = अनवद्यम्, विद्या = वेदादिशास्त्रज्ञानम् अस्ति,धनैः = वित्तैः, किं प्रयोजनम्? यदि अपयशः = यदि अपकीर्तिः, अस्ति मृत्युना = मरणेन, किं प्रयोजनम्?

**भावार्थः-** यदि मनुष्यस्य मनसि लोभः विद्यते तर्हि दुर्गुणानां काऽपि आवश्यकता नास्ति, दुर्गुण एव प्रधानोऽवगुणो वर्तते। यदि दुर्जनता अस्ति अन्यैः पापकर्मभिः को लाभः? यदि सदा सत्यभाषणं क्रियते तर्हि तपसा किं प्रयोजनमस्ति। यदि मनः पवित्रं तर्हि तीर्थाटनस्य का आवश्यकता? चेतसि सज्जनत्वं विद्यते चेत् दयादाक्षि- ण्यादिभिः सुगुणैः किं प्रयोजनम्? यदि सन्महिमाऽस्ति तर्हि अलङ्करणैः न किमपि प्रयोजनम्। यदि वेदादि-सच्छास्त्रज्ञानं वर्तते तर्हि धनैः न प्रयोजनम्। यदि अपकीर्तिरस्ति तर्हि मरणेन काऽवश्यकता? अत्र कविना उपदिष्टं यत् लोभ-पिशुनता-अपयशादि-दुर्गुणान् परित्यज्य मानवैः सत्यता-सज्जनता-पवित्रता सुमहत्तादि -सुगुणाः समादरणीयाः इति।

**व्याकरणम्-** लोभ: = लुभ् + घञ्। पिशुनता = पिशुन + तल +टाप्। पातकै: = पत् +णिच् + ण्वुल् +तै: ।सौजन्यम्= सुजनस्य भाव: सुजन + ष्यञ्। मण्डनै: = मण्ड् + ल्युट्+ तै:।

**कोष:-** 'पिशुनो दुर्जन: खल:' इत्यमर:। 'सत्यं तथ्यमृतं सम्यक्' इत्यमर:। 'मृत्युर्मरणम्' इत्यमर:।

**छन्द:-** शार्दूलविक्रीडितम्।

**अलङ्कार:-** अर्थापत्ति:।

**न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम्।**
**होतारमपि जुह्वानं स्पृष्टो दहति पावक:।। ५६ ।।**

**प्रसङ्ग:-** अत्यन्तकोपनशीलानां नृपाणाम् अनुग्रहस्य आशा दुराशा एव भवति इति कविरत्र सोदाहरणं वर्णयति।

**पदच्छेद:-** न कश्चित् चण्डकोपानाम्आत्मीय: नाम भूभुजां होतारम् अपि जुह्वानं स्पृष्ट: दहति पावक:।

**अन्वय:-** चण्डकोपानां भूभुजां कश्चित् अपि न आत्मीय: नाम। पावक: जुह्वानं होतारम् अपि स्पृष्ट: दहति ।

**व्याख्या-** चण्डकोपानां = चण्ड: उग्र: कोप: क्रोध: येषाम् उग्रकोपनयुक्तानां, भूभुजां = भुवं भुञ्जन्ति ये तेषां नृपाणां, कश्चित् = कश्चन: जन:,अपि न आत्मीय: = स्वजन:भवति नाम। अत्र दृष्टान्त:-पावक: = अनल:, स्पृष्ट: = करस्पर्श: प्राप्त: चेत्,जुह्वानं = हवन- कत्तारं, होतारम् अपि = ऋत्विजमपि, दहति = तापयति।

**भावार्थ:-** उग्रक्रोधवतां भूपतीनां कोऽपि जन: स्वजन: न भवति। यतोहि कुपिता: नृपा: सर्वान् जनान् समानरूपेण दण्डयन्ति। अत्र कवि: दृष्टान्तं प्रस्तौति यत् अग्नौ कदाचित् करस्पर्श: भवति चेत् असौऽनल: हवनं कुर्वन्तं पुरोहितं ऋत्विजमपि दहति।

**व्याकरणम्-** भूभुजाम्=भू+भुज्+क्विप् +तेषाम्। आत्मीय: = आत्मन्+छ-ईय। पावक: = पूञ् +ण्वुल्-अक। होतारम् =हु +तृच्-कर्तरि अम्। जुह्वानम्= हु+शानच्। स्पृष्ट: =स्पृश् +क्त। कोपानाम्= कुप्+घञ्-तेषाम्।

**कोष:-** 'चण्डस्त्वत्यन्तकोपन:'इत्यमर:।' कृशानु: पावकोऽनल:' इत्यमर:।

**छन्द:-** अनुष्टुप्।

**अलङ्कार:-** दृष्टान्त:।

**मौनान्मूक:प्रवचनपटुर्वातुलो जल्पको वा,**
**धृष्ट: पार्श्वे वसति च सदा दूरतश्चाऽप्रगल्भ:।**
**क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजात:,**
**सेवाधर्म: परमगहनो योगिनामप्यगम्य:।। ५७।।**

**प्रसङ्ग:-** प्रस्तुते पद्ये कवि: वर्णयति यत् सेवाधर्म: दुष्कर: विद्यते।

**पदच्छेद:-** मौनात् मूक: प्रवचनपटु: वातुल: जल्पक: वा धृष्ट: पार्श्वे वसति च सदा दूरत: च अप्रगल्भ: क्षान्त्या भीरु: यदि न सहते प्रायश: न अभिजात: सेवाधर्म: परमगहन: योगिनाम् अपि अगम्य:।

**अन्वय:-** मौनात् मूक:, प्रवचनपटु: वातुल: जल्पक: वा, सदा च पार्श्वे वसति धृष्ट:, दूरत: च अप्रगल्भ:, क्षान्त्या भीरु:, यदि न सहते प्रायश: न अभिजात:, परमगहन: सेवाधर्म: योगिनाम् अपि अगम्य:।

**व्याख्या-** मौनात् = मुने: भाव: मौनं तस्मात् = तूष्णीभावात्, मूक: = निर्वच:, प्रवचनपटु: = प्रवचने पटु: =भाषणे कुशल:, वातुल: अतिवादी, जल्पक: = वाचाल: वा, च सदा = सर्वदा, पार्श्वे = समीपे, वसति = निवसति, तर्हि धृष्ट: = अविनीत: निर्भीक: वा, च दूरत: = दूरे वसति तर्हि अप्रगल्भ: = अकुशल: अप्रतिभ:, क्षान्त्या = क्षमागुणेन, भीरु:=भयालु:, यदि न सहते = यदि परभवं न क्षमते, तर्हि प्रायश:= बहुधा, न अभिजात: = अकुलीन:,अत: परमगहन: = अतिदुष्कर:, सेवाधर्म: = परिचर्याकर्म, योगिनाम् = योगशक्तिसंपन्नां महापुरुषाणाम्, अपि अगम्य: = ज्ञातुम् अशक्य: अज्ञेय: अस्ति।

**भावार्थ:-** यदि कश्चित् सेवक: तूष्णीभावं स्वीकरीति तर्हि स: मूक:, यदि भाषणे पटुत्वं दर्शयति तर्हि जल्पक:, यदि निकटे तिष्ठति तर्हि अविनीत:, यदि दूरे वसति तर्हि अपटु:, यदि मायुक्त: तर्हि भीरु:, यदि असहिष्णु: भवति तर्हि अकुलीन: इति कथ्यते। इत्थम् अतिगूढं परिचर्याकर्म त्रिकालज्ञानामपि ज्ञातुं योग्यं नास्ति।

**व्याकरणम्-** मौनात् = मुनि +अण्-तस्मात्। मूक:= मू+कक्। जल्पक: = जल्प्+ण्वुल् अक। वातुल:= वात+उलच्। धृष्ट:=

धृष् + क्त। क्षान्त्या = क्षम् +क्तिन्,तया।     अभिजात: अभि+जन्+क्त। अगम्य: = न गन्तुं योग्य: अ+गम्+यत्।
**कोष:-** 'अवाचि मूक:' इत्यमर:। 'धृष्टे धृष्णग्वियाच्च' इत्यमर:। 'स्याज्जल्पाकस्तु वाचाल:' इत्यमर:। 'अभिजात: कुलीने' स्यात् इत्यमर:।
**छन्द:-** मन्दाक्रान्ता-मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्।।
**अलङ्कार:-** अर्थान्तरन्यास:।

**उद्भासिताऽखिलखलस्य विशृङ्खलस्य**
**प्राग्जातविस्तृतनिजाधमकर्मवृत्ते:।**
**दैवादवाप्तविभवस्य गुणोद्विषोऽस्य,**
**नीचस्य गोचरगतै: सुखमाप्यते कै:।।५८।।**

**प्रसङ्ग:-** अत्र श्लोके कविना वर्णितं यत् अतिनीच: जन: सदा त्यजनीयो भवति।
**पदच्छेद:-** उद्भासिता अखिलखलस्य विशृङ्खलस्य प्राक् जातविस्तृतनिजाधमकर्मवृत्ते: दैवात् अवाप्तविभवस्य गुणोद्विष: अस्य,नीचस्य गोचरगतै: सुखम् आप्यते कै:।
**अन्वय:-** उद्भासिता अखिलखलस्य विशृङ्खलस्य प्राक् जातविस्तृतनिजाधमकर्मवृत्ते: दैवात् अवाप्तविभवस्य गुणोद्विष: अस्य, नीचस्य गोचरगतै: कै: सुखम् आप्यते ।
**व्याख्या-** उद्भासिता-अखिलखलस्य = प्रकाशिता: अखिलखलस्य अखिला: समस्ता: खला: दुर्जना: येन स: तस्य = पुरस्कृत-समस्त-दुर्जनस्य, विशृङ्खलस्य = स्वच्छन्दस्य, प्रग्जातविस्तृतनिजाधर्मकर्मवृत्ते: = प्राग्जातानि पूर्वनिष्पन्नानि, विस्तृतानि सर्वत्र प्रसृतानि, निजानि स्वकीयानि, अधर्मकर्माणि दुराचरणानि तेषु वृत्ति: प्रवृत्ति: यस्य= पूर्वकृत-प्रसृत-स्वकीय-दुराचरण-लब्धजीविकस्य, दैवात् = भाग्यवशात्,अवाप्तविभवस्य = प्राप्तसमृद्धे:, गुणोद्विष: = गुणान् दयादाक्षिण्यादिगुणान् द्वेष्ट: इति तस्य =गुणद्रोहिण:, अस्य = पूर्वोक्त-दोषयुक्तस्य,नीचस्य = अधमजनस्य, गोचरगतै: गोचरं नेत्रयो: समक्षं गता: प्राप्ता: तै: तथाभूतै:= नेत्रसमक्षं प्राप्तै:, कै: = पुरुषै:, सुखं = आनन्दं कल्याणं वा, आप्यते = प्राप्यते।
**भावार्थ:-** येन सर्वे जना: प्रकाशिता:, य: स्वेच्छाचार:, येन पूर्वकृतानि दुष्कर्मपूर्णाचरणानि समये अस्मिन् विस्तृतानि तथा तेष्वेव वर्तनं क्रियते, य: गुणानां द्वेष्टा तथा भाग्यवशात् ऐश्वर्यपूर्ण: संजात:, एतादृशस्य अधमस्य समक्षं प्राप्ता: गता: जना: कदापि सुखं न लभ्यन्ते।
**व्याकरणम्-** उद्भासिता-अखिलखलस्य = उद्भासिता: अखिला: खला: येन बहुव्रीहि: तस्य।
प्राग्जातविस्तृतनिजाधमकर्मवृत्ते: =प्राग्जातानि यानि अधमकर्माणि तै: वृत्ति: यस्य स: बहुव्रीहि: तस्य। अवाप्तविभवस्य = अव् + आप्+क्त= अवाप्त: विभव: येन स: बहुव्रीहि: तस्य।
**कोष:-** 'पिशुनो दुर्जन: खल:' इत्यमर:। 'दैवं दिष्टं भागधेयम्' इत्यमर:। 'शर्मशातसुखानि च' इत्यमर:।
**छन्द:-** वसन्ततिलका।
**अलङ्कार:-** काव्यलिङ्गम्।

**आरम्भगुर्वी क्षयिणी क्रमेण,**
**लघ्वी पुरा वृद्धिमती च पश्चात्।**
**दिनस्य पूर्वार्द्ध-परार्द्ध भिन्ना,**
**छायेव मैत्री खल-सज्जनानाम्।।५९।।**

**प्रसङ्ग:-** अत्र श्लोके कवि: भर्तृहरि: दुर्जन-सज्जनयो: मैत्रीं वर्णयति।
**पदच्छेद:-** आरम्भगुर्वी क्षयिणी क्रमेण, लघ्वी पुरा वृद्धिमती च पश्चात्, दिनस्य पूर्वार्द्ध-पराद्ध भिन्ना, छाया इव मैत्री खल-सज्जनानाम्।
**अन्वय:-** खल-सज्जनानां मैत्री आरम्भगुर्वी क्रमेण क्षयिणी पुरा लघ्वी च पश्चात् वृद्धिमती च, पूर्वार्द्ध-पराद्ध भिन्ना दिनस्य छाया इव भवति।

**व्याख्या-** खल-सज्जनानां = खला: दुर्जना: सज्जना: सत्पुरुषा: तेषाम् = दुर्जन-सुजनानां, मैत्री= मित्रता, आरम्भगुर्वी = आरम्भे प्रारम्भसमये गुर्वी महती, क्रमेण = समयक्रमेण, क्षयिणी = क्षीयमाणा, पुरा= प्रथमं, लघ्वी = ह्रस्वा, पश्चात् = अनन्तरं, च वृद्धिमती वर्धमाना, च पूर्वार्द्ध-परार्द्धभिन्ना= पूर्वाह्ण-अपराह्ण-भेदेन, दिनस्य = दिवसस्य, छाया प्रतिछाया, इव = सदृशी, भवति।

**भावार्थ:-** यथा दिनस्य पूर्वार्द्धे छाया दीर्घरूपा तदनन्तरं क्रमश: लघुरूपा च भवति तथा दिवसस्य उत्तरार्द्धभागे प्राक् ह्रस्वरूपा तदनन्तरं क्रमश: दीर्घरूपा च भवति इत्येवं खलानां मित्रता प्रथमं स्वकार्यं साधयितुं बृहदरूपा तत:परं कार्यसिद्धे: पश्चात् ह्रस्वरूपा च भवति परन्तु सज्जनानां मैत्री अहेतुकी भवति प्रथमं ह्रस्वरूपा क्रमश: अतिपरिचयात् मित्रता बृहद्रूपा च भवति।

**व्याकरणम्-** मैत्री =मित्र +अण् +ङीप्। गुर्वी= गुरु + ङीप्। क्षयिणी=क्षि+णिनि+ङीप्। वृद्धिमती =वृद्धि + मतुप् +ङीप्। भिन्ना = भिद् +क्त + टाप्।

**कोष:-** 'छाया सूर्यप्रिया कान्ति: प्रतिबिम्बमनातप:' इत्यमर:।

**छन्द:-** उपजाति:।

**अलङ्कार:-** यथासंख्यम्, उपमा च।

**मृग-मीन-सज्जनानां तृण-जल-सन्तोष-विहितवृत्तीनाम्।**
**लुब्धक-धीवर-पिशुना निष्कारणवैरिणो जगति।।६०।।**

**प्रसङ्ग:-** प्रस्तुते श्लोके कवि: वर्णयति यत् दुर्जना: विना कारणं शत्रुतामाचरन्ति।

**पदच्छेद:-** मृग-मीन-सज्जनानां तृण-जल-सन्तोष-विहितवृत्तीनां लुब्धक-धीवर-पिशुना: निष्कारणवैरिण: जगति।

**अन्वय:-** जगति लुब्धक-धीवर-पिशुना: तृण-जल-सन्तोष-विहितवृत्तीनां मृग-मीन-सज्जनानां निष्कारणवैरिण: भवन्ति।

**व्याख्या-** जगति = संसारे, लुब्धका: = व्याधा:, धीवरा: = मत्स्याजीवा:, पिशुना: = दुर्जना:, तृण-जल-सन्तोष-विहितवृत्तीनां = घास-जल-सन्तोषाश्च येषां वृत्तिं जीविनं तेषाम्, मृग-मीन-सज्जनानां = हरिण-मत्स्य-सत्पुरुषाणाम्, निष्कारणवैरिण: = अकारण- शत्रव:, भवन्ति।

**भावार्थ:-** संसारे मृगा: तृणादिना, मत्स्या: जलेन, सज्जना: सन्तोषमात्रेण च स्ववृत्तिं चालयन्ति। अर्थात् एतेअन्येषामहितमाचरन्त: स्वजीविकां निर्वाहयन्ति। पुनश्च व्याधा: मृगान् घ्नन्ति धीवरा: मत्स्यान् धरन्ति, दुर्जना: सज्जनेभ्य: असूयन्ति च। अर्थात् व्याध-धीवर-दुर्जना: क्रमश: हरिण-मत्स्य-सत्पुरुषाणां निर्हेतुकशत्रव: भवन्ति। अत: सदैव निष्कारणशत्रुभ्य: सावधाना: भवितव्या:।

**व्याकरणम्-** सन्तोष:= सम्+तुष्+घञ्। विहित:=वि + धा +क्त। वृत्ति:= वृ+क्तिन्। मृगमीनसज्जना:= मृगश्च मीनश्च सज्जनश्च द्वन्द्व: ते। तृणजलसन्तोषविहितवृत्तीनाम्= तृणं च जलं च सन्तोषश्च तै: विहिता: वृत्तय: येषां ते। वैरिण: =वैर+इनि-ते।

**कोष:-** 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि स:' इत्यमर:। 'कैवर्ते दासधीवरौ' इत्यमर:। 'वृत्तिर्वर्तनजीवने' इत्यमर:।

**छन्द:-** आर्या।

**अलङ्कार:-** यथासंख्यम्।

**वाञ्छा सज्जनसंगमे, परगुणे प्रीतिर्गुरौ नम्रता,**
**विद्यायां व्यसनं, स्वयोषिति रतिर्लोकापवादाद् भयम्।**
**भक्ति: शूलिनि शक्तिरात्मदमने, संसर्गमुक्ति: खले,**
**येष्वेते निवसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नम:।।६१।।**

**प्रसङ्ग:-** प्रस्तुते पद्ये कवि: वर्णयति यत् सज्जनानां सद्गुणा: सदा वन्दनीया:।

**पदच्छेद:-**वाञ्छा सज्जनसंगमे, परगुणे प्रीति: गुरौ नम्रता विद्यायां व्यसनं स्वयोषिति रति: लोकापवादाद् भयम् भक्ति: शूलिनि शक्ति: आत्मदमने, संसर्गमुक्ति: खले येषु एते निवसन्ति निर्मलगुणा: तेभ्य: नरेभ्य: नम:।

**अन्वय:-** सज्जनसंगमे वाञ्छा, परगुणे प्रीति:, गुरौ नम्रता, विद्यायां व्यसनं, स्वयोषिति रति:, लोकापवादाद् भयम्, शूलिनि

भक्तिः, आत्मदमने शक्तिः, खले संसर्गमुक्तिः, एते निर्मलगुणाः येषु निवसन्ति तेभ्यः नरेभ्यः नमः।

**व्याख्या–** सज्जनसंगमे= सज्जनानां संङ्गमे, साधूनां संगतौ, वाञ्छा = इच्छा, परगुणे= परेषां गुणः तस्मिन्= परकीये गुणे,प्रीतिः = प्रेम, गुरौ = पूज्यजने, नम्रता =विनयः, विद्यायाम् = शास्त्राध्ययने, व्यसनम् = आसक्तिः, स्वयोषिति =निजधर्मपत्न्याम्, रतिः =अनुरागः, लोकापवादाद् = लोकनिन्दायाः, भयम् = भीतिः, शूलिनि = त्रिशूलधारिणि शिवे, भक्तिः = अनुरक्तिः, आत्मदमने = आत्मनः दमने= स्वस्य निग्रहे, शक्तिः = सामर्थ्यम्, खले = दुर्जने, संसर्गमुक्तिः =संपर्कत्यागः, एते = इमे, निर्मलगुणाः = निर्मलाश्च ते गुणाः= पवित्रगुणाः, येषु = सत्पुरुषेषु, निवसन्ति = तिष्ठन्ति, तेभ्यः = सज्जनेभ्यः, नरेभ्यः = मानवेभ्यः, नमः = प्रणामः।

**भावार्थः–** साधुसमागमे अभिलाषा, परगुणे प्रेम, पूज्ये गुरुजने विनयभावः, सच्छास्त्रे आसक्तिः, पाणिगृहीतायां पत्न्यां प्रेम, लोकनिन्दायाः भयं, महादेवे ईश्वरे भक्तिः, आत्मनिग्रहे सामर्थ्यम्, दुष्टजनैः साकं संपर्कत्यागः– एते पूर्वोक्ताः पवित्रगुणाः येषु मानवेषु विद्यन्ते तेभ्यः सत्पुरुषेभ्यः प्रणामाः सन्तु।

**व्याकरणम्–** वाञ्छा = वाञ्छ् + अ+ टाप्। प्रीतिः = प्री + क्तिन्। नम्रता = नम्र + तल्।व्यसनं = वि + अस् + ल्युट्। रतिः = रम् + क्तिन्। लोकापवादाद् = लोक + अप+ वद्+ घञ्, तस्मात्। भयम् = भी +अच्। भक्तिः = भज् + क्तिन्। शूलिनि = शूल + इनि= शूली, तस्मिन्। शक्तिः = शक् + क्तिन्। मुक्तिः = मुच् + क्तिन्। तेभ्यः नरेभ्यः नमः = नमः योगे चतुर्थी।

**कोषः–** 'शिवः शूली महेश्वरः' इत्यमरः। 'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च'। इति धरणीकोषः।

**छन्दः–** शार्दूलविक्रीडितम्।

**अलङ्कारः–** उदात्तम्।

**विपदि धैर्यमथाभ्युदये क्षमा,**
**सदसि वाक्पटुता, युधि विक्रमः।**
**यशसि चाऽभिरुचिर्व्यसनं श्रुतौ**
**प्रकृतिसिद्धमिदं हि महात्मनाम्।।६२।।**

**प्रसङ्गः–** प्रस्तुते श्लोके कविः महापुरुषाणां स्वभावसिद्धगुणान् वर्णयति।

**पदच्छेदः–** विपदि धैर्यम् अथ अभ्युदये क्षमा,सदसि वाक्पटुता,युधि विक्रमः यशसि च अभिरुचिः व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम्।

**अन्वयः–** विपदि धैर्यम्, अथ अभ्युदये क्षमा,सदसि वाक्पटुता, युधि विक्रमः, यशसि च अभिरुचिः, श्रुतौ व्यसनं, इदं हि महात्मनां प्रकृतिसिद्धम्।

**व्याख्या–** विपदि=विपत्काले, धैर्यम्= धृतिः, अथ= अनन्तरम्, अभ्युदये = समृद्धिकाले, क्षमा = सहिष्णुता, सदसि = सभायाम्, वाक्पटुता = वाग्मिता, युधि= संग्रामे, विक्रमः = परा– क्रमः, यशसि = कीर्तौ,च अभिरुचिः = प्रेम,श्रुतौ= वेदशास्त्रे, व्यसनम्= आसक्तिः, इदम् = एतत्, हि=एव,महात्मनाम्= महापुरुषाणाम्, प्रकृतिसिद्धम् = निसर्गसिद्धमस्ति।

**भावार्थः–** आपत्काले धृतिः, संपदि सहिष्णुता, सभायां वाक्पटुत्वम्, समरे पराक्रमः, यशसः अभिलाषः, वेदशास्त्राध्ययने आसक्तिः, एतत् सर्वं महानुभावानां निश्चयेन निसर्गसिद्धं वर्तते। अर्थात् सज्जनपुरुषाणाम् एते गुणाः स्वभावसिद्धाः भवन्ति।

**व्याकरणम्–** विपदि= वि+पद्+क्विप्, तस्याम्। धैर्यम्=धीर+ष्यञ्। अभ्युदये अभि + उद् + इ + अच्, तस्मिन्। क्षमा= क्षम्+अङ्+टाप्। वाक्पटुता= वच्+क्विप्, वाक्, पटु + तल् + टाप्। युध्+क्विप्। विक्रमः= वि+क्रम्+अच्। श्रुतौ= श्रु + क्तिन्, तस्याम्।

**कोषः–** 'विपत्यां विपदापदौ' इत्यमरः। 'सभासमितिसंसदः' इत्यमरः। 'वाचोयुक्तिपटु–र्वाग्मी'इत्यमरः। 'श्रुतिः स्त्री वेद आम्नायः' इत्यमरः।

**छन्दः–** द्रुतविलम्बितमाह नभौ भरौ। द्रुतविलम्बितम्

**अलङ्कारः–** अर्थान्तरन्यासः।

**प्रदानं प्रच्छन्नं, गृहमुपगते सम्भ्रमविधिः,**

**प्रियं कृत्वा मौनं, सदसि कथनं चाप्युपकृतेः।**
**अनुत्सेको लक्ष्म्यां, निरभिभवसाराः परकथाः,**
**सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्।। ६३।।**

**प्रसङ्गः**– अत्र श्लोके कविः वर्णयति यत् सज्जनानां प्रकृतिः परोपकाराय एव भवति। अतः एतेषां व्रतं कठिनतममेव विद्यते।
**पदच्छेदः**– प्रदानं प्रच्छन्नं, गृहम् उपगते सम्भ्रमविधिः, प्रियं कृत्वा मौनं, सदसि कथनं च अपि उपकृतेः अनुत्सेकः लक्ष्म्यां,निरभिभवसाराः परकथाः, सतां केन उद्दिष्टं विषमम् असिधाराव्रतम् इदम्।
**अन्वयः**– प्रदानं प्रच्छन्नं गृहम् उपगते सम्भ्रमविधिः, प्रियं कृत्वा मौनं, सदसि च उपकृतेः कथनं, लक्ष्याम् अनुत्सेकः,परकथाः निरभिभवसाराः,इदम् विषमम् असिधाराव्रतम् सतां केन उद्दिष्टम्।
**व्याख्या**– प्रदानं = दानं, प्रच्छन्नं = गुप्तम्, गृहम्= स्वभवनम्, उपगते = समागते, सम्भ्रमविधिः = संभ्रमस्य आदरस्य विधिः क्रिया, प्रियं = हितं, कृत्वा मौनं =तूष्णीभावः, सदसि = विद्वत्सभायाम्, च उपकृतेः = उपकारस्य, कथनं = प्रकाशनं, लक्ष्म्याम् = सम्पत्तौ, अनुत्सेकः = न उत्सेकः गर्वराहित्यम्, , परकथाः= परेषाम् अन्येषां कथाः चर्चाः, निरभिभवसाराः= नास्ति अभिभवस्य सारः यासु ताः=निन्दालेशरहिताः, इदम् = एतत्, विषमम् =कठिनम्, असिधाराव्रतम् = खड्गधारा इव तीक्ष्णं सङ्कल्पं,सतां = सज्जनानां, केन = मानवेन, उद्दिष्टम् = उपदिष्टम्।
**भावार्थः**– गुप्तं दानं, गृहं समागते पूजाविधिः, उपकारं कृत्वा अप्रचारः, सभायां अन्यकृतस्य उपकारस्य प्रकाशनं,समृद्धौ अगर्वं, परचर्चाप्रसङ्गे निन्दावर्जनम् एतत् सर्वं कठिनं खड्गधारेव तीक्ष्णं व्रतं सज्जनानां कृते केन उपदिष्टम्? न केनापि। ते स्वयमेव कुर्वन्ति।
**व्याकरणम्**– प्रदानं = प्र+दा+ल्युट्। प्रच्छन्नं = प्र + छद् + क्त। गृहम् = ग्रह् + क। उपगते = उप + गम् + क्त, तस्मिन्। सभ्रमः = सम् + भ्रम् + घञ्। विधिः = वि + धा + कि। कृत्वा = कृ + क्त्वा। उपकृतेः = उप + कृ + क्तिन्, तस्य। कथनं = कथ् + ल्युट्। अनुत्सेकः = उत् + सिच् + धञ् – उत्सेकः, न उत्सेकः। निरभिभवः = निर् +अभि + भू + अप्। सतां = अस् + शतृ + तेषाम्, पुं। उद्दिष्टं = उद् + दिश् + क्त।
**कोषः**–'गृहं गेहोदवसितम्' इत्यमरः।'अतिथीनां गृहागते' इत्यमरः।'संभ्रमः साध्वसेऽपि मेदिनी' कोषः। 'गन्धो गन्धक आमोदे लेशे' इति विश्वः।
**छन्दः**– शिखरिणी।
**अलङ्कारः**– अर्थापत्तिः।

**करे श्लाघ्यस्त्यागः, शिरसि गुरुपादप्रणयिता,**
**मुखे सत्या वाणी, विजयि भुजयोर्वीर्यमतुलम्।**
**हृदि स्वच्छा वृत्तिः, श्रुतमधिगतं च श्रवणयो–**
**र्विनाऽप्यैश्वर्येण, प्रकृतिमहतां मण्डनमिदम्।।६४।।**

**प्रसङ्गः**–अत्र श्लोके कविः भणति यत् महापुरुषाणाम् अवयवानामलङ्करणं तेषां सद्गुणा एव भवन्ति।
**पदच्छेदः**– करे श्लाघ्यः त्यागः, शिरसि गुरुपादप्रणयिता, मुखे सत्या वाणी, विजयि भुजयोः वीर्यम् अतुलम् हृदि स्वच्छा वृत्तिः, श्रुतम् अधिगतं च श्रवणयोः विना अपि ऐश्वर्येण प्रकृतिमहतां मण्डनम् इदम्।
**अन्वयः**– करे श्लाघ्यः त्यागः, शिरसि गुरुपादप्रणयिता, मुखे सत्या वाणी, भुजयोः विजयि अतुलं वीर्यं, हृदि स्वच्छा वृत्तिः, श्रवणयोः च अधिगतं श्रुतम् इदम् ऐश्वर्येण विना अपि प्रकृतिमहतां मण्डनम् अस्ति।
**व्याख्या**– करे= हस्ते, श्लाघ्यः = प्रशंसनीयः, त्यागः=दानम्, शिरसि = मस्तके, गुरुपादप्रणयिता = गुरोः पादयोः प्रणयिता =

पित्रादेः चरणयोः प्रणामरूपो विनयः, मुखे = वदने, सत्या = ऋता, वाणी = वचनम्, भुजयोः = करयोः, विजयि =जयशीलम्, अतुलम् = नास्ति तुला यस्य तत्= अनुपमम्, वीर्यम् = सामर्थ्यम्, हृदि = अन्तःकरणे, स्वच्छा = निर्मला, वृत्तिः = व्यवहारः, श्रवणयोः = कर्णयोः च अधिगतं = ज्ञातं, श्रुतम् = शास्त्रम्, इदम् = एतत् सर्वम्, ऐश्वर्येण = संपत्या, विना = अनन्तरेण, अपि प्रकृतिमहताम् =प्रकृत्याम् महान्तः तेषाम् = स्वभावेन सत्पुरुषाणाम्, मण्डनम् = भूषणम्, अस्ति।

**भावार्थः**-संसारे जनानामाभूषणैः कङ्कणादिभिः करादि-अवयवानां मण्डनं भवति। परन्तु स्वभावेन महात्मनां सज्जनानां करे प्रशंसनीयं दानं, मस्तके गुरुजनानां कृते प्रणामरूपा विनम्रता, मुखे सत्यस्वरूपा वाक्, भुजयो जयशीलमतुलनीयं शौर्यं, हृदये निर्मला वृत्तिः, कर्णयोः ज्ञातं ज्ञानं च संपत्तिरहितम् आभूषणमस्ति।

**व्याकरणम्**- श्लाघ्यः =श्लाघ् + ण्यत् । त्यागः = त्यज् + घञ्। प्रणयिता = प्रणय +इनि- प्रणयिन् +तल् +टाप् ।विजयि = वि + जि +णिनि। वीर्यम् = वीर + यत्। अधिगतम् = अधि + गम् + क्त। ऐश्वर्येण= ईश् + वरच्, ईश्वरस्य भावः ऐश्वर्यम् तेन। मण्डनम्= मण्ड+ ल्युट्।

**कोषः**- 'बलिहस्तांशवः कराः' इत्यमरः। 'त्यागो विहायितं दानम्' इत्यमरः। 'सत्यं तथ्यमृतम् ' इत्यमरः। 'गीर्वाग्वाणीसरस्वती' इत्यमरः। 'श्रुतं शास्त्रावधृतयोः' इत्यमरः।

**छन्दः**- शिखरिणी।

**अलङ्कारः**- विभावना- विभावना विनापि स्यात् कारणं कार्यजन्म चेत्।

**सम्पत्सु महतां चित्तं भवत्युत्पलकोमलम्।**
**आपत्सु च महाशैलशिलासङ्घातकर्कशम्।। ६५ ।।**

**प्रसङ्गः**- प्रस्तुते श्लोकेकविः विपत्संपदोः सज्जनानां मनोवृत्तिं वर्णयति।

**पदच्छेदः**- सम्पत्सु महतां चित्तं भवति उत्पलकोमलम् आपत्सु महाशैलशिलासङ्घातकर्कशम्।।

**अन्वयः**- महतां चित्तं सम्पत्सु उत्पलकोमलम् आपत्सु च महाशैलशिलासङ्घातकर्कशं भवति।

**व्याख्या**- महताम् = सज्जनानाम्, चित्तम् = मनः, सम्पत्सु = समृद्धिषु, उत्पलकोमलम् = उत्पलम् इव कोमलम्= कमल-मृदुलम्, आपत्सु = विपत्सु, च महाशैलशिलासङ्घात- कर्कशम्=महान् विशालः यः शैलः पर्वतः तस्य शिलाः प्रस्तराः तासां संघातः समूहः इव कर्कशं कठिनम् = विशाल-पर्वत-प्रस्तर-समूहः वत् कठिनं भवति= जायते।

**भावार्थः**- धन-धान्यादि-संपत्सु सुजनानां चित्तं कमलवत् कोमलं भवति। सर्वेषां परोपकाराय दुःखनाशाय सदा प्रयत्नशीलाः भवन्ति। विपत्सु च विशालपर्वतस्य पाषाणवत् कठिनं भवति। अर्थात् ते स्वधीरतां न त्यजन्ति। सुख-दुःखेषु समभावं सज्जनानां चित्तं तिष्ठति।

**व्याकरणम्**- उत्पलकोमलं = उत्पलम् इव कोमलम् - कर्मधारयः, सम्पत्सु = सम् + पद् +क्विप्। आपत्सु =आ + पद् + क्विप्। शिलासङ्घातः = शिलानां संङ्घातः षष्ठी तत्पु.।

**कोषः**- 'स्यादुत्पलं कुवलयम्'इत्यमरः। 'कोमलं मृदुलं मृदुः'इत्यमरः। 'प्रस्तरग्रावोपलाश्मानः' इत्यमरः। 'कर्कशं कठिनं क्रूरम्' इत्यमरः।

**छन्दः**- अनुष्टुप्।

**अलङ्कारः**- समुच्चयः।

**सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते,**
**मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते।**
**स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते,**
**प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते।। ६६ ।।**

**प्रसङ्गः**– अस्मिन् श्लोके कविः अधम–मध्यम–उत्तमजनानां चित्तवृत्तिं वर्णयति।
**पदच्छेदः**– सन्तप्त–अयसि संस्थितस्य पयसः नाम अपि न ज्ञायते, मुक्ताकारतया तत् एव नलिनीपत्रस्थितं राजते स्वात्यां सागरशुक्तिमध्यपतितं तत् मौक्तिकं जायते, प्रायेण अधममध्यम–उत्तमगुणः संसर्गतः जायते।
**अन्वयः**– सन्तप्त–अयसि संस्थितस्य पयसः नामापि न ज्ञायते, तदेव नलिनीपत्रस्थितं मुक्ताकार– तया राजते तत् स्वात्यां सागरशुक्तिमध्यपतितं मौक्तिकं जायते प्रायेणाधममध्यमोत्तम– गुणः संसर्गतः जायते।
**व्याख्या**– सन्तप्त–अयसि = सन्तप्तं च तत् अयः तस्मिन्= ज्वलित–लौहे, संस्थितस्य निक्षिप्तस्य, पयसः = जलस्य, नामापि = नामधेयमपि, न ज्ञायते = न जानाति, तदेव = तत् जलम् एव, नलिनीपत्रस्थितं = नलिन्याः पत्रं तस्मिन् स्थितं तत्= कमलिनी–पत्र–मध्यस्थितं, मुक्ताकारतया = मुक्तायाः आकार इव आकारः यस्य सः मुक्ताकारः तस्य भावः मुक्ताकारता तया = मौक्तिकरूपेण, राजते = शोभते, तत् = जलम्, स्वात्याम् = स्वाति –नक्षत्र–योगे, सागरशुक्तिमध्यपतितं = सागरे या शुक्तिः तस्याः मध्ये पतितं तत्= अन्तराल–शुक्तिमध्यगतं, मौक्तिकं = मुक्तारत्नं, जायते = भवति, प्रायेण = बाहुल्येन, अधममध्यमोत्तमगुणः = अधमः मध्यमः उत्तमश्च गुणः, संसर्गतः =संपर्कात्, जायते = उद्भवति।
**भावार्थः**–जलं प्रज्वलिते लौहे नाममात्रमपि न तिष्ठति अर्थात् विलुप्तं भवति।तदेव जलं कमलिनी–पत्रे मुक्ताकारतया शोभते। तदेव जलं स्वातिनक्षत्रे सागरशुक्तौ पतितं मुक्तारत्नं जायते। बाहुल्येन वस्तूनाम् अधम–मध्यम–उत्तमगुणः तत्तद्गुण–युक्तानां पदार्थानां सम्पर्कवशात् समुद्भवति।
**व्याकरणम्**– सन्तप्त–अयसि = सम् + तप् + क्त, सन्तप्तं च तत् अयः तस्मिन्। संस्थितस्य = सम्+स्था+क्त–तस्य, मौक्तिकं =मुक्ता + इक्।संसर्गतः =संसर्ग +तस्। पतितं=पत्+क्त।
**कोषः**– 'लौहऽस्त्री शस्त्रकं तीक्ष्णं कालाययसायसी' इत्यमरः। 'सलिलं कमलं जलम्'इत्यमरः।
**छन्दः**– शार्दूलविक्रीडितम्।
**अलङ्कारः**– समुच्चयः।

**यः प्रीणयेत् सुचरितैः पितरं स पुत्रो,**
**यद् भर्तुरेव हितमिच्छति तत्कलत्रम्।**
**तन्मित्रमापदि सुखे च समक्रियं य–**
**देतत्त्रयं जगति पुण्यकृतो लभन्ते।। ६७।।**

**प्रसङ्गः**– प्रस्तुते श्लोके कविः वर्णयति यत् पुण्यकर्मणा मनुष्यः सत्पुत्र–भार्या–मित्र–त्रयम् एव लभते।
**पदच्छेदः**– यः प्रीणयेत् सुचरितैः पितरं स पुत्रः यद् भर्तुः एव हितम् इच्छति तत् कलत्रम् तत् मित्रम् आपदि सुखे च समक्रियं यद् एतत् त्रयं जगति पुण्यकृतः लभन्ते।
**अन्वयः**– यः सुचरितैः पितरं प्रीणयेत् स पुत्रः, यद् भर्तुः एव हितम् इच्छति तत् कलत्रं, यद् आपदि सुखे च समक्रियं तत् मित्रम्, एतत् त्रयं जगति पुण्यकृतः लभन्ते।
**व्याख्या**– यः = पुत्रः, सुचरितैः = सदाचारैः, पितरं = जनकं, प्रीणयेत् = सन्तोषयेत्, स पुत्रः = आत्मजः, यद् भर्तुः = पत्युः, एव हितम् = कल्याणम्, इच्छति = वाञ्छति, तत् कलत्रं = पत्नी, यद् आपदि = विपदि, सुखे च = सम्पत्तौ च, समक्रियं = एकरूपम्,तत् मित्रम् = सखा, एतत् त्रयं = उक्तं सत्पुत्र–भार्या–सुहृत्त्रयं, जगति = संसारे, पुण्यकृतः = पुण्यवन्तः, लभन्ते = प्राप्तुं शक्नुवन्ति।
**भावार्थः**– सदाचरणैः पितुः सन्तोषकारकः पुत्रः, पत्युः हितकाङ्क्षिणी भार्या, दुःखे सुखे च समव्यवहारशीलं मित्रम्–एतत् त्रयं संसारे पुण्यशालिनः एव प्राप्नुवन्ति।
**व्याकरणम्**– पितरम्= पा + तृच्–तम्। भर्तुः = भृ + तृच्–तस्य। पुण्यकृतः = पुण्य + कृ + क्विप्–ते। सुचरितैः= शोभनानि चरितानि तैः। समक्रियम्= समा क्रिया यस्य तत्।

**कोषः-** 'तातस्तु जनकः पिता' इत्यमरः। 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः। 'कलत्रं श्रोणिभार्ययोः' इत्यमरः। 'मित्रं सखा सुहृत्' इत्यमरः।
**छन्दः-** वसन्ततिलका।
**अलङ्कारः-** काव्यलिङ्गम् समुच्चयश्च।

**एको देवो केशवो वा शिवो वा,**
**ह्येकं मित्रं भूपतिर्वा यतिर्वा।**
**एको वासः पत्तने वा वने वा,**
**एका नारी सुन्दरी वा दरी वा।। ६८।।**

**प्रसङ्गः-** प्रस्तुते श्लोके कविना वर्णितं यत् सदा एकाश्रयः एव श्रेयस्करः भवति।
**पदच्देदः-** एकः देवः केशवः वा शिवः वा, हि एकं मित्रं भूपतिः वा यतिः वा एकः वासः पत्तने वा वने वा, एका नारी सुन्दरी वा दरी वा।
**अन्वयः-** केशवः वा शिवः वा एकः देवः, हि भूपतिः वा यतिः वा एकं मित्रं, पत्तने वा वने वा एकः वासः, सुन्दरी वा दरी वा एका नारी।
**व्याख्या-** केशवः = विष्णुः, वा = अथवा, शिवः = महादेवः वा, एकः = अद्वितीयः, देवः = ईश्वरः,हि = यतोहि,भूपतिः = नृपतिः,वा यतिः = अथवा संन्यासी,वा एकं = एकमेव, मित्रं = सखा, पत्तने =नगरे, वा = अथवा, वने = अरण्ये वा, एकः = एकमात्रः, वासः = निवासः, एका नारी = एका भार्या, सुन्दरी = सुरूपा स्त्री, वा = अथवा, दरी = पर्वतगुहा, वा ।
**भावार्थः-** हरिहरयोः मध्ये मानवेन यथेच्छम् एकः देवः समाश्रयणीयः। जीवने एकमेव मित्रं करणीयं नृपतिः यतिः वा। सदा एकत्र वासः विधातव्यः नगरे वा अरण्ये वा। जीवने एका स्त्री स्वीकरणीया सुन्दरी वा पर्वतकन्दरा वा।
**व्याकरणम्-** भूपतिः = भुवः पतिः षष्ठी तत्पु.। वासः = वस् + घञ्। सुन्दरी = सुन्दर + ङीष्।
**कोषः-**'पूः स्त्री पुरी नगर्यौ वा पत्तनं पुटभेदनम्' इत्यमरः। 'दरी तु कन्दरी वा स्त्री' इत्यमरः।
**छन्दः-** शालिनी।
**अलङ्कारः-** अनुप्रासः।

**नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान् गुणान् ख्यापयन्तः,**
**स्वार्थान्सम्पादयन्तो विततपृथुतरारम्भयत्नाः परार्थे।**
**क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान् दुर्जनान् दूषयन्तः,**
**सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः।। ६९।।**

**प्रसङ्गः-** अत्र कविः वर्णयति यत् नम्रतादयः गुणयुक्ताः सज्जनाः संसारे सदा पूजनीयाः भवन्ति।
**पदच्छेदः-** नम्रत्वेन उन्नमन्तः परगुणकथनैः स्वान् गुणान् ख्यापयन्तः, स्वार्थान् सम्पादयन्तः विततपृथुतरारम्भयत्नाः परार्थे क्षान्त्या एव आक्षेपरूक्षाक्षरमुखरमुखान् दुर्जनान् दूषयन्तः, सन्तः साश्चर्यचर्या जगति बहुमताः कस्य न अभ्यर्चनीयाः।
**अन्वयः-** नम्रत्वेन उन्नमन्तः परगुणकथनैः स्वान् गुणान् ख्यापयन्तः,परार्थे विततपृथुतरारम्भयत्नाः स्वार्थान् सम्पादयन्तः क्षान्त्या एव आक्षेपरूक्षाक्षरमुखरमुखान् दुर्जनान् दूषयन्तः, साश्चर्यचर्या जगति बहुमताः सन्तः कस्य न अभ्यर्चनीयाः?
**व्याख्या-** नम्रत्वेन = विनयेन, उन्नमन्तः= उन्नतिं प्राप्नुवन्तः, परगुणकथनैः = परेषां गुणानां कथनं तैः = परकीय-सद्गुण-वर्णनैः, स्वान्=निजान्, गुणान् = दयादाक्षिण्यादिगुणान्, ख्यापयन्तः = ख्यातिं नयन्तः= प्रकटयन्तः, परार्थे = परेषाम् अर्थे = परप्रयोजन-सम्पादने, विततपृथुतरारम्भयत्नाः = विततः पृथुतरः आरम्भः स चासौ यत्नः =वस्तृत- महत्तर-उपक्रम-उद्योगः,

स्वार्थान् = आत्मीय-प्रयोजनानि, सम्पादयन्तः =साधयन्तः, क्षान्त्या = क्षमया, एव = हि, आक्षेपरूक्षाक्षरमुखरमुखान् = आक्षेपेण रूक्षाणि च तानि अक्षराणि तैः मुखरं मुखं येषां ते तान् =परनिन्दया परुषवाक्य- भाषिणः, दुर्जनान् = खलान्, दूषयन्तः = तिरस्कुर्वन्तः, साश्चर्यचर्या = साश्चर्यं चर्या येषां ते = विस्मयजनक चेष्टा, जगति = संसारे, बहुमताः =लोकमान्याः, सन्तः =भवन्तः, कस्य = जनस्य न अभ्यर्चनीयाः =न पूजनीयाः?

**भावार्थः-** विनम्रतया समुन्नतिं प्रकटयन्तः, परकीयप्रशंसया निजगुणान् कथयन्तः, परोपकारेणैव स्वार्थं संपादयन्तः, कटुवचनभाषिणः दुर्जनान् क्षमया एव तिरस्कुर्वन्तः, विस्मयजनक चरित्राः सत्पुरुषाः संसारे सर्वेषां जनानामेव पूजनीयाः भवन्ति।

**व्याकरणम्-** नम्रत्वेन = नम्र + त्व-तेन। उन्नमन्तः =उत्+ नम् + शतृ-ते। ख्यापयन्तः = ख्या +णिच् + पुक् + शतृ-ते। वितत = वि + तत् +क्त। यत्न = यत् + नङ्। सम्पादयन्तः =सम् + पद् + णिच् + शतृ-ते। क्षान्त्या = क्षम् + क्तिन्-तया। आक्षेपः =आ + क्षिप् +घञ्। बहुमताः = बहु + मतुप्-ते। सन्तः = अस् + शतृ-ते। अभ्यर्चनीयाः =अभि +अर्च +अनीयर्।

**कोषः-** 'अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। 'दुर्मुखे मुखराबद्धमुखी' इत्यमरः।

**छन्दः-** स्रग्धरा।

**अलङ्कारः-** विरोधाभासः, उदात्तः, समुच्चयश्च।

**भवन्ति नम्रास्तरवः फलोद्गमै-**
**र्नवाम्बुभिर्दूरविलम्बिनो घनाः।**
**अनुद्धताः सत्पुरुषाः समृद्धिभिः,**
**स्वभाव एवैष परोपकारिणाम्।। ७०।।**

**प्रसङ्गः-** प्रस्तुते श्लोके कविः परोपकारिणां प्रकृतिं सम्यग् वर्णयति।

**पदच्छेदः-** भवन्ति नम्राः तरवः फलोद्गमैः नव अम्बुभिः दूरविलम्बिनः घनाः अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एव एष परोपकारिणाम्।

**अन्वयः-** तरवः फलोद्गमैः नम्राः भवन्ति, घनाः नवाम्बुभिः दूरविलम्बिनः सत्पुरुषाः समृद्धिभिः अनुद्धताः एष परोपकारिणां स्वभाव एव।।

**व्याख्या-** तरवः = वृक्षाः, फलोद्गमैः = फलानाम् उद्गमैः = फलागमैः, नम्राः = अवनताः, भवन्ति =जायन्ते, घनाः = मेघाः, नवाम्बुभिः = नवानि च तानि अम्बूनि तैः= नूतनजलबिन्दुभिः, दूरविलम्बिनः = दूरं विलम्बन्ते इति= भूमिपर्यन्तं नम्रीभवन्ति, सत्पुरुषाः = सज्जनाः, समृद्धिभिः = ऐश्वर्यादिभिः, अनुद्धताः = अहंकाररहिताः नम्राः, एषः = अयम्, परोपकारिणां = परहितरतानां जनानां, स्वभावः = प्रकृतिः, एव।

**भावार्थः-** वृक्षाः फलागमैः नम्रीभूताः भवन्ति। जलदाः नवजलागमैः दूरप्रदेशं भूमिपर्यन्तम् अधोलम्बिनः भवन्ति। सज्जनाः ऐश्वर्यैः धनैः नम्राः भवन्ति। यतोहि महापुरुषाणां स्वभावः एतादृशः एव भवति। कथितं च- परोपकारय फलन्ति वृक्षाः, परोपकाराय वहन्ति नद्यः। परोपकाराय दुहन्ति गावः, परोपकारार्थमिदं शरीरम्।।

**व्याकरणम्-** नवाम्बुभिः = नवानि च तानि अम्बूनि तैः कर्म.। समृद्धिभिः= सम् + ऋध् + क्तिन् + ताभिः। परोपकारिणाम्- पर + उप + कृ+ णिनि-तेषाम्। एवैषः- एव + एषः।

**कोषः-** 'वृक्षो महीरुहः शाखी विटपः पादपस्तरुः' इत्यमरः। 'घन-जीमूत-मुदिर-जलमुग्धूमयोनयः' इत्यमरः।

**छन्दः-** वंशस्थः- वदन्ति वंशस्थबिलं जतौ जरौ।

**अलङ्कारः-**अर्थान्तरन्यासः।

**श्रोत्रं श्रुतेनैव न कुण्डलेन,**
**दानेन पाणिर्न तु कङ्कह्वणेन।**
**विभाति कायः करुणापराणां,**
**परोपकारैर्न तु चन्दनेन।। ७१ ।।**

**प्रसङ्गः**- प्रस्तुते श्लोके कविना वर्णितं यत्- परहिताचरणैः दयापराणां कायः शोभते।

**पदच्छेदः**- श्रोत्रं श्रुतेन एव न कुण्डलेन, दानेन पाणिः न तु कङ्कणेन विभाति कायः करुणापराणां, परोपकारैः न तु चन्दनेन।

**अन्वयः**- श्रोत्रं श्रुतेन एव विभाति कुण्डलेन न (विभाति), पाणिः दानेन (विभाति) तु कङ्कणेन न , करुणापराणां कायः परोपकारैः (विभाति) तु चन्दनेन (विभाति) न।

**व्याख्या**- श्रोत्रं = कर्णः, श्रुतेन = वेदशास्त्रश्रवणेन, एव = हि, विभाति = शोभते, कुण्डलेन = कर्णभूषणेन, न (विभाति), पाणिः = हस्तः दानेन = धनादिवस्तुवितरणेन, (विभाति) तु = किन्तु, कङ्कणेन न = करवलयेन न, (विभाति), तु= किन्तु, करुणापराणां = दयापराणां , कायः = शरीरं, परोपकारैः = परेषां हितैः, (विभाति) तु चन्दनेन न = तु गन्धसारलेपनेन न (विभाति)।

**भावार्थः**- सत्पुरुषाणां कर्णः वेदशास्त्रश्रवणेन शोभते परन्तु स्वर्णकुण्डलेन न शोभते। सज्जनानां हस्तः धनादिदानेन शोभते किन्तु स्वर्णवलयेन न विभाति। सुजनानां शरीरं परोपकारेण राजते किन्तु चन्दनलेपनेन न विभाति।

**व्याकरणम्**- श्रोत्रम्= श्रु + ष्ट्रन्। कुण्डलेन= कुण्ड् + कलच् +क, तेन। परोपकारैः = पर + उप + कृ +घञ्, तैः। परेषाम् उपकारः (ष. तत्पु.)तैः। विभाति= वि + भा + लट्, तिप्। कायः= चि + घञ्।

**कोषः**- 'कर्ण-शब्दग्रहौ श्रोत्रम्' इत्यमरः। 'कुण्डलं कर्णवेष्टनम्' इत्यमरः। 'कङ्कणं कर्णभूषणम्' इत्यमरः। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः।

**छन्दः**- उपजातिः।

**अलङ्कारः**- क्रियागत-दीपकम्।

**पापान्निवारयति, योजयते हिताय,**
**गुह्यं निगूहति, गुणान्प्रकटीकरोति।**
**आपद्गतं च न जहाति, ददाति काले,**
**सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः।। ७२ ।।**

**प्रसङ्गः**- श्लोकेऽस्मिन् कविना सन्मित्रलक्षणं वर्णितम्।

**पदच्छेदः**-पापात् निवारयति, योजयते हिताय,गुह्यं निगूहति, गुणान् प्रकटीकरोति, आपद्गतं च न जहाति, ददाति काले, सत् मित्रलक्षणम् इदं प्रवदन्ति सन्तः।

**अन्वयः**- पापात् निवारयति, हिताय योजयते ,गुह्यं निगूहति, गुणान् प्रकटीकरोति, आपद्गतं च न जहाति, काले ददाति, सन्तः इदं सत् मित्रलक्षणं प्रवदन्ति ।

**व्शख्या**- पापात् = पापकर्मणः, निवारयति = दूरीकरोति, हिताय = सत्कर्माचरणाय, योजयते = प्रवर्तयति, गुह्यं = गोपनीयं निगूहति = आच्छादयति, गुणान् = दयादाक्षिण्यादिगुणान्, प्रकटीकरोति = उद्भावयति, आपद्गतं = संकटग्रस्तं, च न जहाति = न त्यजति, काले = योग्यसमये, ददाति = धनादिकं वितरति, सन्तः = सज्जनाः, इदम् = एतत्, सन्मित्रलक्षणं = निष्कपटसुहृदः चिह्नं, प्रवदन्ति = प्रभाषन्ते ।

**भावार्थः**- सत्यमित्रस्य लक्षणं सत्पुरुषाः इदं वदन्ति यत्- सः पापाचरणात् निवर्तयति, मङ्गलकर्मणि नियोजयति, गोपनीयं तथ्यं संवृणोति, गुणान् ख्यापयति, विपद्ग्रस्तं मित्रं न त्यजति, यथासमयं यथोचितं धनादिकं च वितरति।

**व्याकरणम्**- गुह्यम्= गुह् + क्यप्। आपत् + गतम्। सन्मित्रम् = सत् + मित्रम्।

**कोषः**- 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः।

**छन्दः**- वसन्ततिलका।

**अलङ्कारः**- समुच्चयः।

**पद्माकरं दिनकरो विकचीकरोति,**
**चन्द्रो विकासयति कैरवचक्रवालम्।**
**नाभ्यर्थितो जलधरोऽपि जलं ददाति,**
**सन्तः स्वयं परहितेषु कृताभियोगाः।। ७३।।**

**प्रसङ्गः**- सन्तः स्वयं परेषां कल्याणेषु सदा तत्पराः तिष्ठन्ति इत्येतत् कविनात्र सोदहरणं सुवर्णितम्।

**पदच्छेदः**- पद्माकरं दिनकरः विकचीकरोति, चन्द्रः विकासयति कैरवचक्रवालं नाभ्यर्थितः जलधरः अपि जलं ददाति,सन्तः स्वयं परहितेषु कृताभियोगाः।

**अन्वयः**- नाभ्यर्थितः दिनकरः पद्माकरं विकचीकरोति, (नाभ्यर्थितः) चन्द्रः कैरवचक्रवालं विकासयति, (नाभ्यर्थितः) जलधरः अपि जलं ददाति, सन्तः स्वयं परहितेषु कृताभियोगाः (भवन्ति)।

**व्याख्या**- नाभ्यर्थितः = अयाचितः, दिनकरः =(दिनं करोतीति) दिवाकरः, पद्माकरं = (पद्मानाम् आकरः तम्) कमलसमूहं, विकचीकरोति = (अविकचं विकचं करोति) विकासयति, (नाभ्यर्थितः) चन्द्रः = रजनीकरः, कैरवचक्रवालं =(कैरवाणां चक्रवालं) कुमुदमण्डलं, विकासयति = प्रफुल्लं करोति, (नाभ्यर्थितः) जलधरः = (जलं धरतीति) मेघः, अपि जलं =वारि, ददाति = वितरति, सन्तः = सज्जनः, स्वयं = प्रकृत्या, परहितेषु = (परेषां हितानि तेषु) जनकल्याणेषु, कृताभियोगाः =(कृतः अभियोगः यैः ते) विहितयत्नाः (भवन्ति)।

**भावार्थः**-सूर्यः स्वयमेव प्रार्थनां विनैव पद्मसमूहं विकासयति,इन्दुरपि अयाचितमेव कुमुदमण्डलं प्रफुल्ली-करोति, जलधरोऽपि याचनां विनैव जलं ददाति, अपितु सत्पुरुषाः स्वयमेव परकल्याणसंपादने सदैव तत्पराः तिष्ठन्ति।

**व्याकरणम्**- नाभ्यर्थितः = न + अभि+ अर्थः + क्त। दिनकरः = दिन+कृ+ट। पद्माकरं= पद्म + कृ +ट। विकचीकरोति = विकच+च्वि, चन्द्रः=चन्दयति इति । जलधरः =जल + धृ + अच्। कृताभियोगाः =कृ+ क्त +अभि +युज् + घञ्।

**कोषः**- 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोचविकचस्फुटः' इत्यमरः। 'सिते कुमुदकैरवे' इत्यमरः। 'चक्रवालं तु मण्डलम्' इत्यमरः। 'खनिः स्त्रियामाकरः' स्यात् इत्यमरः।

**छन्दः**- वसन्ततिलका।

**अलङ्कारः**- अर्थान्तरन्यासः।

**एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये,**
**सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये।**
**तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये,**
**ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे।। ७४।।**

**प्रसङ्गः**- प्रस्तुते श्लोके कविः व्यापारक्रमेण मनुष्याणाम् उत्तमादि-श्रेणीविभाजनं वर्णयति।

**पदच्छेदः**- एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये, सामान्याः तु परार्थम् उद्यमभृतः स्वार्थ+अविरोधेन ये ते अमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये, ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे।

**अन्वयः**- ये स्वार्थं परित्यज्य परार्थघटकाः ये एके सत्पुरुषाः, ये स्वार्थाविरोधेन परार्थम् उद्यमभृतः (ते) तु सामान्याः, ये स्वार्थाय परहितं निघ्नन्ति, ते अमी मानुषराक्षसाः (किन्तु) ये तु निरर्थकं परहितं घ्नन्ति ते के न जानीमहे।

**व्याख्या**- ये = पुरुषाः, स्वार्थं = स्वप्रयोजनं, परित्यज्य = त्यक्त्वा, परार्थघटकाः = (परेषाम् अर्थस्य घटकाः) परप्रयोजनसाधकाः, सन्ति ते = पुमांसः, एके = अद्वितीयाः, सत्पुरुषाः = पुरुषोत्तमाः भवन्ति, ये = मानवाः, स्वार्थाविरोधेन = (स्वार्थस्य अविरोधेन) स्वप्रयोजन-निर्वाहतत्परत्वेन, परार्थम् = परप्रयोजनसाधनार्थं, उद्यमभृतः = (उद्यमं बिभ्रति इति ते) परार्थमुद्योगभाजः, (ते) तु सामान्याः = साधारणाः मध्यमकोटिभाजः, ये=मानवाः, स्वार्थाय =स्वप्रयोजनाय, परहितं = परकल्याणं, निघ्नन्ति = विनाशयन्ति, ते अमी = वक्ष्यमाणाः पुरुषाः, मानुषराक्षसाः =(मानुषेषु राक्षसाः इव) नरपिशाचाः अधमकोटिभाजः, (किन्तु) ये तु = मानुषाः, निरर्थकं =(निर्गतोऽर्थ यस्मादिति) विना प्रयोजनं,परहितं =अन्येषाम्

अभीष्टम्, घ्नन्ति = घातयन्ति, ते = पुमांसः, के = कथंभूताः, न जानीमहे = वयं न जानीमः।

**भावार्थः-** उत्तमकोटिभाजः पुरुषोत्तमाः स्वार्थं विहाय परहितसाधनरताः भवन्ति। अपरे मध्यमकोटिभाजः पुरुषाः स्वहितानुकूल्येन परप्रयोजनसंपादकाः भवन्ति। अधमकोटिभाजः राक्षसप्रकृतयः मनुष्याः स्वार्थाय परकल्याणघातकाः भवन्ति। किन्तु ये जनाः व्यर्थमेव परहितविनाशकाः ते परमनीचाः कथंभूताः सन्ति वयं (कवयः) अपि न विद्मः।

**व्याकरणम्-** परित्यज्य = परि + त्यज् + ल्यप्। परार्थघटकाः = परार्थ + घट् + णिच् +ण्वुल्। उद्यमभृतः = उद्यम + भृ क्विप्-तस्य।

**कोषः-** 'एके मुख्यान्यकेवलाः' इत्यमरः। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृतिषु' इत्यमरः।

**छन्दः-** शार्दूलविक्रीडितम्।

**अलङ्कारः-**अनुप्रासः।

**क्षीरेणात्मगतोदकाय हि गुणाः दत्ताः पुरा तेऽखिलाः,**
**क्षीरोत्तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः।**
**गन्तुं पावकमुन्मनस्तदभवद् दृष्ट्वा तु मित्रापदं,**
**युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी।। ७५ ।।**

**प्रसङ्गः-** प्रस्तुते श्लोके कविः वर्णयति यत् सज्जनानां मित्रतायाः लक्षणं नीरक्षीरस्वरूपेण भवति।

**पदच्छेदः-** क्षीरेण आत्मगत+उदकाय हि गुणाः दत्ताः पुरा ते अखिलाः, क्षीर+उत्तापम् अवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः। गन्तुं पावकम् उन्मनः तत् अभवद् दृष्ट्वा तु मित्रापदं, युक्तं तेन जलेन शाम्यति सतां मैत्री पुनः तु ईदृशी।

**अन्वयः-** पुरा क्षीरेण आत्मगत+उदकाय अखिलाः ते,(स्वे)गुणाः हि दत्ताः,तेन पयसा क्षीरोत्तापम् अवेक्ष्य स्वात्मा कृशानौ हुतः, तत् मित्रापदं दृष्ट्वा पावकं गन्तुं उन्मनः अभवत्, तेन जलेन युक्तं (सत् तत्) शाम्यति सतां मैत्री पुनः तु ईदृशी।

**व्याख्या-** पुरा = प्राक्, क्षीरेण = पयसा, हि आत्मगतोदकाय = (आत्मनि गतम् आत्मगतं तच्च उदकं चेति तस्मै) सम्मिश्रजलाय, अखिलाः = सर्वे, ते=प्रसिद्धाः, (स्वे) गुणाः =धवलता-मधुरतादयः गुणाः, हि= निश्चितं, दत्ताः= संपादिताः, तेन = दुग्धमिश्रितेन, पयसा =जलेन, क्षीरे = दुग्धे, उत्तापं = अग्निसंतापं, अवेक्ष्य = अवलोक्य, स्वात्मा = स्वशरीरं, कृशानौ = अग्नौ, हुतः = प्रक्षिप्तः, तत् = अग्निना तप्तं क्षीरं, मित्रापदं = (मित्रस्य आपदम्) जलस्य संशोषरूपां विपत्तिं, दृष्ट्वा = विलोक्य, पावकं = अनलं, गन्तुं = प्रवेष्टुम्, उन्मनः = उत्कण्ठितम्, अभवत् = संजातः, तेन = दुग्धमिश्रितेन, जलेन = वारिणा,युक्तं= मिश्रितं (सत् तत्) शाम्यति = शान्तं शीतलं भवति, तु = किन्तु, पुनः = निश्चयेन, सतां = सज्जनानां,मैत्री = मित्रता, ईदृशी = परस्परसहयोगशीला सापेक्षा स्थिरा च भवति।

**भावार्थः-** दुग्धे यदा जलं मिलति तदा सर्वप्रथमं क्षीरेण शीत-माधुर्य-शुक्लतादयः सर्वे आत्मगुणाः जलाय समर्पिताः भवन्ति। तेन क्षीरमिश्रितेन जलेनापि क्षीरदाहे प्रथमात्मा एव दग्धः। क्षीरं तु जलस्य शोषरूपं मित्रापदं दृष्ट्वा पावकं गन्तुमुत्कण्ठितम्। यदा पुनः क्षीरस्य जलेन संयोगः भवति तदा क्षीरं शान्तं शीतलं भवति। उक्तमेव सज्जनानां मित्रता ईदृशी परस्परसहयोगशीला स्थिरा भवति।

**व्याकरणम्-**पुरा = पुर् +का। दत्ताः = दा + क्त-ते। क्षीरोत्तापम् = क्षीर + उत् +तप् + घञ्-तम्। अवेक्ष्य = अव + ईक्ष +ल्यप्। हुतः = हु + क्त। दृष्ट्वा = दृश् + क्त्वा। पावकं = पूञ् + ण्वुल्-तम्। गन्तुं = गम् + तुमुन्। उन्मनः = उत् +मनः। युक्तं = युज् +क्त। सतां = अस् + शतृ+ क्त-तेषाम्।

**कोषः-** 'सलिलं कमलं जलम्' इत्यमर।'कीलालं पयः' इत्यमरः। 'अग्निवैश्वानरो वह्निः' इत्यमरः। 'उत्क उन्मनाः' इत्यमरः।

**छन्दः-** शार्दूलविक्रीडितम्।

**अलङ्कारः-** समासोक्तिः अर्थान्तरन्यासश्च।

**इतः स्वपिति केशवः, कुलमितस्तदीयद्विषा-**
**मितश्च शरणार्थिनां शिखरिणां गणाः शेरते।**

**इतोऽपि बडवानलः सह समस्तसंवर्तकै-**
**रहो ! विततमूर्जितं भरसहञ्च सिन्धोर्वपुः।। ७६ ।।**

**प्रसङ्गः**– श्लोकेऽस्मिन् कविः भर्तृहरिः महापुरुषाणां महत्तां वर्णयति।

**पदच्छेदः**– इतः स्वपिति केशवः, कुलम् तदीयद्विषाम् इतः च शरणार्थिनां शिखरिणां गणाः शेरते, इतः अपि बडवानलः सह समस्तसंवर्तकैः अहो ! विततम् ऊर्जितं भरसहं च सिन्धोः वपुः।

**अन्वयः**– इतः केशवः स्वपिति , इतः तदीयद्विषाम् इतः कुलं (तिष्ठति) इतः च शरणार्थिनां शिखरिणां गणाः शेरते, इतः अपि समस्तसंवर्तकैः सह बडवानलः (तिष्ठति) अहो! सिन्धोः वपुः विततम् ऊर्जितं भरसहं च ।

**व्याख्या**– इतः = अस्मिन् देशे, केशवः = भगवान् विष्णुः, स्वपिति = शेते, इतः = अस्मिन् देशे, तदीयद्विषाम् = (तस्य इमे तदीयाः ते द्विषः तेषाम्) विष्णुशत्रूणाम् असुराणाम्,कुलम् = समूहः (तिष्ठति), इतः=अन्यत्र च शरणार्थिनाम् = शरणमिच्छूनाम्, शिखरिणाम् = मैनाकादि- पर्वतानाम्,गणाः = समूहाः,शेरते = शयनं कुर्वन्ति, इतः = अन्यत्र,अपि समस्तसंवर्तकैः = (समस्ताश्च ते संवर्तकाः, तैः) सकल-प्रलयकालिक-मेघैः, सह = साकं, वडवानलः = समुद्राग्निः (तिष्ठति), अहो ! = आश्चर्यम्, सिन्धोः = समुद्रस्य, वपुः = शरीरं, विततम् = विस्तृतम्, ऊर्जितं = वलशालि, भरसहं = भारधारणक्षमत्वं च विद्यते।

**भावार्थः**– समुद्रस्य शरीरं बृहद् विद्यते। एतावद् विस्तृतं बलशालि वपुश्चापि अस्ति। अस्य प्रमाणं यत् एकत्र देशे भगवान् विष्णुः शेते, अन्यत्र राक्षसानां समूहः निवसति, अन्यत्र च मैनाकादिपर्वताः तिष्ठन्ति, तथा एकत्र प्रलयकालिकैः मेघैः सह वडवानलोऽवतिष्ठति। एतत् सर्वं महदाश्चर्यं विद्यते।

**व्याकरणम्**– इतः– इदम् + तसिल्। द्विषाम्= द्विष् + क्विप्–तेषाम्। शरणार्थिनां = शरण + इनि, तेषाम्। शिखरिणाम्= शिखर + इनि, तेषाम्। समस्तसंवर्तकैः = समस्ताश्च ते संवर्तकाः कर्मधारयसमासः, तैः । विततम्= वि + तन् +क्त। ऊर्जितम्= ऊर्जा + इतच्।

**कोषः**–'दामोदरो हृषीकेशः केशवो माधवः स्वभूः ' इत्यमरः। 'द्विड् विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः। 'महीध्रे शिखरिक्ष्माभृद्' इत्यमरः। 'और्वस्तु वाडवः वडवानलः ' इत्यमरः। 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त' इत्यपि इत्यमरः।

**छन्दः**–पृथ्वी।

**अलङ्कारः**– अर्थान्तरन्यासः।

**तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः,**
**सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम्।**
**मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयं,**
**कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम्।। ७७ ।।**

**प्रसङ्गः**– प्रस्तुते श्लोके कविः सज्जनानाम् आचरणं वर्णयन् कथयति।

**पदच्छेदः**– तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः, सत्यं ब्रूहि अनुयाहि साधुपदवीं सेवस्व विद्वज्जनम्, मान्यान् मानय विद्विष:अपि अनुनय प्रख्यापय प्रश्रयं, कीर्तिं पालय दुःखिते कुरु दयाम् एतत् सतां लक्षणम्।

**अन्वयः**– (हे मनुष्य!) तृष्णां छिन्धि, क्षमां भज, मदं जहि, पापे रतिं मा कृथाः, सत्यं ब्रूहि, साधुपदवीम् अनुयाहि, विद्वज्जनं सेवस्व, मान्यान् मानय, विद्विषः अपि अनुनय, प्रश्रयं प्रख्यापय,कीर्तिं पालय, दुःखिते दयां कुरु, एतत् सतां लक्षणम्।

**व्याख्या**– (हे मनुष्य!) तृष्णां = अलभ्यपद-धनाभिलाष-पिपासां, छिन्धि = विदारय, क्षमां = भज, मदं = दर्पं, जहि = विनाशय, पापे = दुष्कर्मणि, रतिं = प्रीतिं, मा कृथाः = न कुरु, सत्यं = सत्यवचनं, ब्रूहि = कथय, साधुपदवीम् = (साधूनां पदवीम्) सज्जनमार्गम्, अनुयाहि = अनुसर, विद्वज्जनं = (विद्वान् च असौ जनः तम्) पण्डितसमूहम्, सेवस्व = सेवां कुरु, मान्यान् = पूज्यान्, मानय = अर्चय, विद्विषः अपि = शत्रून् अपि, अनुनय = प्रसादय, प्रश्रयं = विनयं, प्रख्यापय = प्रकटय,

कीर्तिं = यशः, पालय = रक्ष, दुःखिते = कष्टपीडित-जने, दयां = कृपां, कुरु = विधेहि, एतत् = इदं, सतां = सज्जनानां, लक्षणं = आचरणं वर्तते।

**भावार्थः-** हे मानव ! धनपिपासां विदारय, क्षमां सेवस्व, अहङ्कारं त्यज, पापाचरणे अनुरागः न करणीयः, सत्यवचनं वदनीयम्, सज्जनानाम् आचरणम् आचरणीयम्, विद्वज्जनैः सह संपर्कः करणीयः, पूज्यजनाः पूजनीयाः, शत्रूनपि प्रसादय, विनम्रतां प्रकटय,कीर्तिः रक्षणीया, दुःखिते जने दयां कुरु,यतोहि एतत् सर्वं सत्पुरुषाणाम् आचरणं विद्यते।

**व्याकरणम्-** तृष्णाम्= तृष्णा + न + टाप्, ताम्। छिन्धि= छिन्द् + लोट्, म.पु.एकव.। जहि= हन् + लोट्, म.पु.एकव.। मानय= मान् + णिच् + लोट्, म.पु.एकव.। विद्विषः= वि + द्विष् + क्विप्, तान्। प्रश्रयम्= प्र + श्रि + अच्, तम्। प्रख्यापय = प्र + ख्या +णिच् + लोट्, म.पु.एकव.। दुःखिते = दुःख + इतच्, तस्मिन्।

**कोषः-** 'तृष्णे स्पृहापिपासे द्वे' इत्यमरः। 'दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयः मदः' इत्यमरः। 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः।

**छन्दः-** शार्दूलविक्रीडितम्।

**मनसि वचसि काये पुण्यपीयूषपूर्णा-**
**स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।**
**परगुणपरमाणून् पर्वतीकृत्य नित्यं,**
**निजहृदि विकसन्तः सन्ति सन्तः कियन्तः।। ७८।।**

**प्रसङ्गः-** प्रस्तुते श्लोके कविना वर्णितं यत्- एतादृशाः गुणयुक्ताः महापुरुषाः सदैव विरलाः दृश्यन्ते।

**पदच्छेदः-**मनसि वचसि काये पुण्यपीयूषपूर्णाः त्रिभुवनम् उपकारश्रेणिभिः प्रीणयन्तः,परगुणपरमाणून् पर्वतीकृत्यनित्यं, निजहृदि विकसन्तः सन्ति सन्तः कियन्तः।

**अन्वयः-**मनसि वचसि काये पुण्यपीयूषपूर्णाः, उपकारश्रेणिभिः त्रिभुवनं प्रीणयन्तः, नित्यं परगुणपरमाणून् पर्वतीकृत्य, निजहृदि विकसन्तः सन्तः कियन्तः सन्ति।

**व्याख्या-** मनसि = चेतसि, वचसि = वचने, काये = शरीरे, पुण्यपीयूषपूर्णाः = (पुण्यम् एव पीयूषम् तेन पूर्णाः) सुकृत-अमृतपूरिताः, उपकारश्रेणिभिः = हिताचरण-परम्पराभिः, त्रिभुवनम्= (त्रयाणां भुवनानां समाहारः) जगत्त्रयम्, प्रीणयन्तः = सन्तोषयन्तः, नित्यम् = सदैव, परगुणपरमाणून् = (परेषां गुणाः परगुणाः, परमाश्च ते अणवः परमाणवः, परगुणानां परमाणवः तान्) अन्येषाम् अत्यल्पगुणानपि, पर्वतीकृत्य = (अपर्वतान् पर्वतान् कृत्वा इति) शैलान् इव महत्तरान् कृत्वा, निजहृदि = स्वान्तःकरणे, विकसन्तः = विलसन्तः, सन्तः= सज्जनाः, कियन्तः = कतिसंख्याकाः कतिपये विरलाः, सन्ति = विद्यन्ते।

**भावार्थः-** हृदये वाण्यां शरीरे च सत्कर्माचरणतत्पराः पवित्रामृतेन पूरिताः , भुवनत्रयम् उपकारेण सन्तोषयन्तः, परेषाम् अत्यल्पगुणान् पर्वतान् इव बृहत्तरान् कृत्वा निजहृदि आनन्दमनुभवन्तः एतादृशाः सत्पुरुषाः संसारे अल्पसंख्यकाः विरलाः एव विद्यन्ते।

**व्याकरणम्-** पूर्णाः = पृ + क्त, ते। त्रिभुवनम्= त्रयाणां भुवनानां समाहारः द्विगु. स.। प्रीणयन्तः= प्री + णिच् + शतृ, ते। पर्वतीकृत्य = पर्वत + च्वि+ईत्व, कृ + ल्यप्। विकसन्तः- वि+ कस्+शतृ, ते। सन्तः=अस्+शतृ, ते।

**कोषः-** 'स्वान्तः हृन्मानसं मनः' इत्यमरः। 'पीयूषममृतं सुधा' इत्यमरः।

**छन्दः-** मालिनी।

**अलङ्कारः-** अर्थापत्तिः अनुप्रासः च।

**किं तेन हेमगिरिणा, रजताद्रिणा वा,**
**यत्राश्रिताश्च तरवस्तरवस्त एव।**
**मन्यामहे मलयमेव यदाश्रयेण,**
**कङ्कोलनिम्बकुटजा अपि चन्दनाः स्युः।। ७९।।**

**प्रसङ्गः-** प्रस्तुते श्लोके कविः वर्णयति यत् गुणरहितान् स्वाश्रितान् कृत्वा महान्तः जनाः सगुणान् कुर्वन्ति।

**पदच्छेद:**- किं तेन हेमगिरिणा, रजताद्रिणा वा, यत्र आश्रिता: च तरव: तरव: ते एव, मन्यामहे मलयम् एव यद् आश्रयेण, कङ्कोल-निम्ब-कुटजा: अपि चन्दना: स्यु:।

**अन्वय:**- तेन हेमगिरिणा, रजताद्रिणा वा किं, यत्र च आश्रिता: तरव: ते तरव: एव, (वयं तु) मलयमेव मन्यामहे, यदाश्रयेण, कङ्कोलनिम्बकुटजा अपि चन्दना: स्यु:।

**व्याख्या-** तेन = प्रसिद्धेन, हेमगिरिणा = हेमपर्वतेन सुमेरुपर्वतेन, रजताद्रिणा = रौप्यपर्वतेन हिमालयेन कैलासेन वा, किं = प्रयोजनम्, यत्र च = यस्मिन् प्रदेशे, आश्रिता: = संस्थिता:, तरव: = वृक्षा:, ते = साधारणरूपा:, तरव: = पादपा:, एव = हि, (वयं तु) मलयमेव = मलयाचलम् एव, मन्यामहे = बहुमानसदृशा: पश्याम:, यदाश्रयेण =(यस्य आश्रय: यदाश्रय: तेन) यत्र निवासेन, एव, कङ्कोलनिम्बकुटजा = (कङ्कोला श्च निम्बाश्च कुटजाश्च )तन्नामधारिण: वृक्षा:, अपि चन्दना: = चन्दनतरुसदृशा: सुगन्धिन:, स्यु: =भवेयु:।

**भावार्थ:**- सुवर्णपर्वतेन सुमेरुणा रौप्यगिरिणा हिमालयेन वा किंप्रयोजनम्? यत्र स्थिता: वृक्षा: पूर्वरूपा: सामान्यपादपा एव सन्ति न तु सुवर्ण-रजतरूपा: कृता: विद्यन्ते। वयं तु मलयाचलमेव बहु प्रशंसाम: यतोहि यस्य मलयपर्वतस्य आश्रिता: कङ्कोल-निम्ब-गिरिमल्लिकानामयुक्ता: वृक्षा: अपि चन्दनगन्धसंयुक्ता: भवन्ति। अर्थात्-चन्दनसंगत्या निम्बादय: वृक्षा: अपि चन्दनसुगन्धिन: भवन्ति तथैव सज्जनसंगत्या दुर्जनोऽपि गुणवान् सज्जन: जायते। अत: गुणवान् सर्वत्र पूज्यते। उक्तं च-विद्वान् सर्वत्र पूज्यते।

**व्याकरणम्**- यदाश्रयेण= यस्य आश्रय: यदाश्रय: तेन। कङ्कोलनिम्बकुटजा = कङ्कोलाश्च निम्बाश्च कुटजाश्च द्वन्द्व:।

**कोष:**- 'मेरु: सुमेरु: हेमगिरि:' इत्यमर:।'पिचुमन्दश्च निम्ब:' इत्यमर:।'कुटज: शक्रो वत्सको गिरिमल्लिका' इत्यमर:।

**छन्द:**- वसन्ततिलका।

**अलङ्कार:**- काव्यलिङ्गम्।

**रत्नैर्महार्हैस्तुतुषुर्न देवा:,**
**न भेजिरे भीमविषेण भीतिम्।**
**सुधां विना न प्रययुर्विरामं,**
**न निश्चितार्थाद्विरमन्ति धीरा:।।८०।।**

**प्रसङ्ग:**- प्रस्तुते श्लोके कवि: वर्णयति यत् धीरपुरुषा: लक्ष्यप्राप्तेरनन्तरमेव विरमन्ति परन्तु अल्पलाभेन न विश्रामं गच्छन्ति।

**पदच्छेद:**- रत्नै: महार्है: तुतुषु: न देवा:, न भेजिरे भीमविषेण भीतिं, सुधां विना न प्रययु: विरामं, न निश्चितार्थात् विरमन्ति धीरा:।

**अन्वय:**- देवा: महार्है: रत्नै: न तुतुषु:, भीमविषेण भीतिं न भेजिरे, सुधां विना विरामं न प्रययु: ,धीरा: निश्चितार्थात् न विरमन्ति।

**व्याख्या-** देवा: = सुरा:,(समुद्रमन्थनावसरे),महार्है: = बहुमूल्यै:, रत्नै: = ऐरावत-कल्पवृक्ष-कौस्तुभादिश्रेष्ठवस्तुभि:, न तुतुषु: = सन्तुष्टिं न प्राप्तवन्त:, भीमविषेण = (भीमं यद् विषं तेन)कालकूटाख्यगरलेन, भीतिं = भयं, न भेजिरे = न प्राप्तवन्त:, सुधाम् = अमृतम्, विना = अन्तरेण, विरामम् = विश्रामम्, न प्रययु: = न गता:, यतोहि धीरा: = धैर्यवन्त: महापुरुषा:, निश्चितार्थात् = (निश्चित: अर्थ: तस्मात्) संकल्पितार्थात्, न विरमन्ति = विश्रामं न प्राप्नुवन्ति। अर्थात् आफलोदय: प्रयतन्ते।

**भावार्थ:**-पौराणिक-कथानुसारं देवा: समुद्रम् अमथ्यन्। तत: चतुर्दशबहुमूल्यरत्नानि निर्गतानि परन्तु देवा: समुद्रस्य रत्नै: न सन्तुष्टा: जाता:, कालकूटाख्येन भयङ्करेण विषेणापि न भीता:, तथा अमृतप्राप्तिं विना स्वप्रयत्नात् न विरता:, यतोहि धैर्यवन्त: मनस्विन: प्रतिज्ञार्थाद् + आफलोदयं कदापि न विरमन्ति।

**व्याकरणम्**- देवा: = दिव् +अच्। भीमविषेण = भीमं यद् विषं तेन कर्म.। भीतिं = भी + क्तिन्। तुतुषु: = तुष् +लिट्, प्र.पु.बहुव.। भेजिरे = भज् + लिट्,प्र.पु.बहुव.। प्रययु: = प्र + या+ लिट्,प्र.पु.बहुव.। विरमन्ति = वि + रम् +लट्,प्र.पु. बहुव.।

**कोषः**- 'रत्नं श्रेष्ठे मणावपि' विश्वः। 'धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः' इत्यमरः। 'पीयूषम् अमृतं सुधा' इत्यमरः।
**छन्दः**- उपजातिः।
**अलङ्कारः**- अर्थान्तरन्यासः।

**क्वचिद्भूमौ शय्या, क्वचिदपि च पर्यङ्कशयनः,**
**क्वचिच्छाकाहारी, क्वचिदपि च शाल्योदनरुचिः।**
**क्वचित्कन्थाधारी, क्वचिदपि च दिव्याम्बरधरो,**
**मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम्।।८१।**

**प्रसङ्गः**- अस्मिन् श्लोके कविः वर्णयति यत् धीराः महापुरुषाः सुख-दुःखे न गणयन्ति।
**पदच्छेदः**- क्वचित् भूमौ शय्या, क्वचिद् अपि च पर्यङ्कशयनः, क्वचित् शाकाहारी, क्वचिद् अपि च शाल्योदनरुचिः, क्वचित् कन्थाधारी, क्वचिद् अपि च दिव्याम्बरधरः, मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम्।
**अन्वयः**- मनस्वी कार्यार्थी क्वचित् भूमौ शय्या, अपि च क्वचिद् पर्यङ्कशयनः, क्वचित् शाकाहारी, अपि च क्वचिद् शाल्योदनरुचिः, क्वचित् कन्थाधारी, अपि च क्वचिद् दिव्याम्बरधरः, दुःखं न गणयति न च सुखं गणयति।
**व्याख्या**- मनस्वी = (प्रशस्तं मनः यस्य असौ) धीरः, कार्यार्थी = (कार्यम् अर्थयते इति) स्वकार्यसिद्धयभिलाषी, क्वचित् = कुत्रचित्, भूमौ = पृथिव्यां, शय्या = भूमिशायी, अपि च क्वचिद् = कुत्रचित्, पर्यङ्कशयनः =(पर्यङ्के शयनं यस्य सः) तल्पशायी, क्वचित् = कदाचित्, शाकाहारी =(शाकम् आहारः यस्य सः) फलमूलादिनीरसाहार, अपि च क्वचिद् = शाल्योदनरुचिः (शाल्योदने रुचिः यस्य सः) मिष्टान्नभोजी, क्वचित् = कुत्रचित्, कन्थाधारी =(कन्थां धारयति इति)जीर्ण-शीर्णवस्त्रधारी, अपि च क्वचिद् = कुत्रचित्, दिव्याम्बरधरः = (दिव्यम् अम्बरं धरतीति ) शाोभनवस्त्रधारी, दुःखम् = कष्टम्, न गणयति = न चिन्तयति, सुखम् = शर्म, न च गणयति = न विचारयति।
**भावार्थः**- कार्यसाधनोत्सुकः मनस्वी कुत्रचित् प्रदेशे पृथिव्यां स्वपिति। कुत्रचित् पर्यङ्के शेते। कुत्रचित् शाकाहारं खादति, कदाचित् मिष्टान्नं भुङ्क्ते, कदाचित् जीर्णवस्त्रं धारयति, क्वचित् शोभनवस्त्रधारी भवति। अनेन प्रकारेण जीवनं यापयन् सुखं दुःखं च न विचारयति।
**व्याकरणम्** = मनस्वी = मनस् + विनि। कार्यार्थी = कार्य + अर्थ + इनि।शय्या = शीङ् + क्यप् + टाप्।, शाकाहारी =शाक +आ + हृ + णिनि। शाल्योदनरुचिः= शाल्या ओदनः ष.तत्, शाल्योदने रुचिः यस्य सः बहुव्रीहिः। कन्थाधारी = कन्था+धृ+णिनि। दिव्याम्बरधरः = दिव्यम् अम्बरं धरतीति कर्म.। गणयति = गण् + लट् प्र. पु. एकव.।
**कोषः**- 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वा समाः' इत्यमरः। 'स्यान्निद्राशयनं स्वापः' इत्यमरः। 'पीडा बाधा व्यथा दुःखम्' इत्यमरः।
**छन्दः**- शिखरिणी- रसैः रुद्रैच्छिन्ना यमनसभलागः शिखरिणी।
**अलङ्कारः**- समुच्चयः।

**ऐश्वर्यस्य विभूषणं सुजनता, शौर्यस्य वाक्संयमो,**
**ज्ञानस्योपशमः, श्रुतस्य विनयो, वित्तस्य पात्रे व्ययः।**
**अक्रोधस्तपसः, क्षमा प्रभवितुर्धर्मस्य निर्व्याजता,**
**सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम्।।८२।।**

**प्रसङ्गः**- अत्र श्लोके कविना भर्तृहरिणा वर्णितं यत् चरित्रमेव सर्वश्रेष्ठं भूषणं विद्यते।
**पदच्छेदः**- ऐश्वर्यस्य विभूषणं सुजनता, शौर्यस्य वाक्संयमः, ज्ञानस्य उपशमः, श्रुतस्य विनयः वित्तस्य पात्रे व्ययः, अक्रोधः तपसः, क्षमा प्रभवितुः धर्मस्य निर्व्याजता, सर्वेषाम् अपि सर्वकारणम् इदं शीलं परं भूषणम्।
**अन्वयः**- ऐश्वर्यस्य सुजनता विभूषणं , शौर्यस्य वाक्संयमः, ज्ञानस्य उपशमः, श्रुतस्य विनयः वित्तस्य पात्रे व्ययः, तपसः अक्रोधः, प्रभवितुः क्षमा, धर्मस्य निर्व्याजता (विभूषणं), सर्वकारणम् इदं शीलं सर्वेषाम् अपि परं भूषणम् (अस्ति)।
**व्याख्या**- ऐश्वर्यस्य = (ईश्वरस्य भावः) प्रभुत्वस्य, सुजनता (सुजनस्य भावः) सौजन्यं, विभूषणम् = अलङ्करणम्,

शौर्यस्य = (शूरस्य भावः) पराक्रमस्य, वाक्संयमः = (वाचः संयमः) वाङ्नियमः, ज्ञानस्य = विद्यायाः, उपशमः = शान्तिः, श्रुतस्य =शास्त्रश्रवणस्य विभूषणं विनयः = विनम्रता, वित्तस्य = धनस्य, पात्रे =सत्पात्रे, व्ययः = दानकरणम्, तपसः = तपश्चरणस्य, अक्रोधः = कोपराहित्यं, प्रभवितुः = समर्थस्य, क्षमा = सहिष्णु त्वम्, धर्मस्य = सदाचारपालनस्य, निर्व्याजता = छलविहीनता, (विभूषणं), सर्वकारणम् = सर्वेषाम् ऐश्वर्यादीनां कारणं निदानम्, इदम् = एतत्, शीलम् = चरित्रम्, सर्वेषाम् = सर्वपुसाम्,अपि परं भूषणम् = उत्कृष्टम् अलङ्करणम् (अस्ति)।

**भावार्थः**- प्रभुत्वस्य सौजन्यं विभूषणमस्ति, पराक्रमस्य वचसां निग्रहः भूषणमस्ति, ज्ञानस्य विषयेच्छानिवृत्तिः अलङ्करणमस्ति, वेदादिशास्त्रज्ञानस्य विनम्रताविभूषणमस्ति, धनस्य सत्पात्रेभ्यः प्रदानं भूषणमस्ति, तपश्चरणस्य कोपस्याभावः विभूषणमस्ति, समर्थशालिनः जनस्य सहिष्णुता विभूषणमस्ति, सुकृतस्य अकैतवं भूषणं विद्यते। परन्तु सर्वेषां ऐश्वर्यादीनां भूषणं सद्वृत्तं च विद्यते। अतः उक्तं च **वृत्तं यत्नेन संरक्षेत्।**

**व्याकरणम्**- ऐश्वर्यस्य = ईश + वरच्= ईश्वरः तस्य भावः- ईश्वर + ष्यञ्, तस्य। विभूषणं = वि + भूष् + ल्युट्। सुजनता (सुजनस्य भावः) सुजन + तल +टाप्। शौर्यस्य= (शूरस्य भावः) शूर + ष्यञ्। वाक्संयमः = वाचः संयमः ष.तत्.। उपशमः =उप + शम् + घञ्। , श्रुतस्य = श्रु + क्त, तस्य। विनयः = वि + नी + अच्। प्रभवितुः = प्र + भू + तृच्, तस्य। निर्व्याजता = निर् + व्याज+ तल् + टाप्। भूषणम्= भूष् + ल्युट्।

**कोषः**- 'कपटोऽस्त्री व्याजदम्भोपधयश्छलकैतव' इत्यमरः। 'शीलं स्वभावे सद्वृत्ते:' इत्यमरः।

**छन्दः**- शार्दूलविक्रीडितम्।

**निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु,**
**लक्ष्मीः समाविशतु, गच्छतु वा यथेष्टम्।**
**अद्यैव वा मरणमस्तु युगान्तरे वा,**
**न्याय्यात्पथः प्रविचलन्ति पदं न धीराः।। ८३।।**

**प्रसङ्गः**- धैर्यशालिनः पुरुषाः स्तुति-निन्दा-हानि-लाभादिभिः अप्रभाविताः सन्तः न्यायमार्गं सदैव अनुसरन्ति।

**पदच्छेदः**- निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु, गच्छतु वा यथेष्टम्, अद्य एव वा मरणम् अस्तु युगान्तरे वा, न्याय्यात् पथः प्रविचलन्ति पदं न धीराः।

**अन्वयः**- नीतिनिपुणा निन्दन्तु यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु, वा यथेष्टं गच्छतु, अद्य एव वा मरणम् अस्तु युगान्तरे वा, धीराः न्याय्यात् पथः पदं न प्रविचलन्ति ।

**व्याख्या**- नीतिनिपुणा = (नीतौ निपुणाः) नीतिशास्त्रविशारदाः, निन्दन्तु = निन्दां कुर्वन्तु, यदि वा = अथवा,स्तुवन्तु = प्रशंसां कुर्वन्तु, लक्ष्मीः = सम्पत्तिः, समाविशतु = समीपमागच्छतु, वा यथेष्टम् = यथेच्छम्, गच्छतु = यातु, अद्य = अधुना, एव = हि, वा मरणम् = मृत्युः, अस्तु= भवतु, युगान्तरे = अन्यस्मिन् युगे, वा अस्तु, धीराः = धैर्यशालिनः जनाः, न्याय्यात् = न्याययुक्तात्, पथः = मार्गात्, पदं = एकचरणमपि,न प्रविचलन्ति = न इतस्ततः भवन्ति न भ्रश्यन्ति।

**भावार्थः**- नयपण्डिताः दूषयन्तु वा प्रशंसां कुर्वन्तु, लक्ष्मीः आगच्छतु वा बहिर्गच्छतु, सम्प्रति एव मृत्युः भवतु वा अन्यस्मिन् युगे भवतु, धैर्यशालिनः पुरुषाः न्यायोचितात् मार्गात् एकपादविन्यासमात्रमपि न इतस्ततः भवन्ति।

**व्याकरणम्**- लक्ष्मीः = लक्ष् +ई +मुट्। यथेष्टम् = इष्टम् अनतिक्रम्य अव्ययीभावः। धीराः = धी + ईर् + अच्। न्यायः= नि + अय् +घञ्। न्यायात् = न्याय + यत्, तस्मात्।

**कोषः**- 'लक्ष्मीः पद्मालया पद्मा' इत्यमरः।'मरणं निधनोऽस्त्रियाम्' इत्यमरः।

**छन्दः**- वसन्ततिलका।

**अलङ्कारः**- उदात्तः।

**भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा,**
**कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः।**

**तृप्तस्तत्पिशितेन सत्वरमसौ तेनेव यातः पथा,**
**लोकाः पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम्।।८४।।**

**प्ररङ्गः-** प्रस्तुते श्लोके कविः नराणां सुखदुःखयोः बन्धमोक्षयोश्च कारणं दैवमेव इति वर्णयति।

**पदच्छेदः-** भग्नाशस्य करण्डपिण्डिततनोः म्लानेन्द्रियस्य क्षुधा, कृत्वा आखुः विवरं स्वयं निपतिनः नक्तं मुखे भोगिनः, तृप्तः तत् पिशितेन सत्वरम् असौ तेन एव यातः पथा, लोकाः ! पश्यत दैवम् एव हि नृणां वृद्धौ क्षये कारणम्।

**अन्वयः-** लोकाः! पश्यत, आखुः नक्तं विवरं कृत्वा भग्नाशस्य करण्डपिण्डिततनोः, क्षुधा म्लानेन्द्रियस्य भोगिनः मुखे स्वयं निपतिनः, असौ तत् पिशितेन तृप्तः (सन्) तेन एव पथा सत्वरं यातः। हि दैवम् एव हि नृणां वृद्धौ क्षये कारणम् (अस्ति)।

**व्याख्या-**लोकाः! = जनाः! पश्यत = अवलोकयत, आखुः = मूषकः, नक्तम् = रात्रौ, विवरम् = बिलम्, कृत्वा = विधाय, भग्नाशस्य (भग्ना आशा यस्य सः) भग्नमनोरथस्य, करण्डपिण्डिततनोः = (करण्डे पेटिकायां पिण्डीकृताः पुञ्जीकृताः तनुः शरीरं यस्य सः तस्य) वंशपिटके वर्तुलितदेहस्य, क्षुधा = बुभुक्षया, म्लानेन्द्रियस्य = (म्लानानि इन्द्रियाणि यस्य सः तस्य) अशक्तेन्द्रियस्य, भोगिनः = सर्पस्य, मुखे = आनने, स्वयं = स्वतः, निपतिनः = प्रविष्टः, असौ = सर्पः, तत् पिशितेन = मूषकमांसेन, तृप्तः = खादित्वा सन्तुष्टः,(सन्) तेन एव पथा = मूषकनिर्मितेन मार्गेण, सत्वरम् = शीघ्रम्, यातः = गतः। हि =यतोहि, दैवम् एव= भाग्यम् एव, नृणाम् = मनुष्याणाम्, वृद्धौ = उन्नतौ सुखे वा, क्षये = विनाशे दुःखे वा, कारणम् = हेतुः (अस्ति)।

**भावार्थः-** हे नराः! सम्मुखे अवलोकयत, मूषकः रात्रौ बिलं निर्माय भग्नमनोरथस्य वंशपेटिकायां वर्तुलितदेहस्य बुभुक्षया क्षीणेन्दियस्य सर्पस्य मुखे प्रविष्टः अभवत्। सः भुजगः तस्य मूषकस्य मांसं खादित्वा सन्तुष्टः संजातः। तदनन्तरं सर्पः मूषकनिर्मितेन बिलमार्गेण बहिर्निगतः। अतः ज्ञायते यत् बन्धमोक्षयोः हानिलाभयोः सुखदःखयोः च दैवमेव कारणं भवति।

**व्याकरणम्-**आखुः = आ +खन् +कु। म्लानेन्द्रियस्य = म्लानानि इन्द्रियाणि यस्य सः (बहुव्रीहिः) तस्य। म्लानः= म्लै + क्त। क्षुधा = क्षुध् + क्विप्। भग्नाशस्य =भग्ना आशा यस्य सः (बहुव्रीहिः)। भोगिनः= भोग + णिनि + तस्य। वृद्धौ = वृध् + क्तिन्, तस्याम्। क्षये = क्षि + अच्, तस्मिन्।

**कोषः-** 'मूषकोऽप्याखुः इत्यमरः। विवरं विलम्' इत्यमरः। 'पिशितं तरलं मांसम्' इत्यमरः। 'दैवं दिष्टं भागधेयम्' इत्यमरः। 'उरगः पन्नगः भोगी जिह्मगः पवनाशनः' इत्यमरः।

**छन्दः-** शार्दूलविक्रीडितम्।

**अलङ्कारः-** अर्थान्तरन्यासः।

**आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।**
**नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति।।८५।।**

**प्रसङ्गः-** प्रस्तुते श्लोकेकविः प्रतिपादयति यत् आलस्य-उद्यमौ रिपु-मित्रवत् भवतः।

**पदच्छेदः-** आलस्यं हि मनुष्याणां शरीरस्थः महान् रिपुः, न अस्ति उद्यमसमः बन्धुः यं कृत्वा न अवसीदति।

**अन्वयः-** हि आलस्यं मनुष्याणां शरीरस्थः महान् रिपुः। उद्यमसमः बन्धुः नास्ति, यं कृत्वा नावसीदति।

**व्याख्या-** हि = निश्चयेन, आलस्यम् = कार्येषु अप्रवृत्तिः, मनुष्याणाम् = नराणाम्, शरीरस्थः = देहस्थितः, महान् रिपुः = विशालः शत्रुः। उद्यमसमः = (उद्यमेन समः) प्रयत्नसदृशः, बन्धुः = इतरं मित्रं, नास्ति = न विद्यते, यम् = उद्यमम्, कृत्वा = कुर्वन्, नावसीदति = दुःखं न लभते।

**भावार्थः-** कार्येषु प्रवृत्ति-अभावरूप-आलस्यं नराणां देहस्थितः महान् शत्रुः अस्ति। उद्योगसदृशः मनुष्याणाम् अन्यः कश्चित् स्वजनः नास्ति। यम् उद्यमं कुर्वन् मनुष्यः कदापि दुःखी न भवति। अतः सर्वैः मानवैः प्रयत्नः करणीयः।

**व्याकरणम्-** आलस्यं = अलसस्य भावः, अलस + ष्यञ्। शरीरस्थः = शरीरे तिष्ठति इति। कृत्वा = कृ + क्त्वा।

**कोषः-** 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इत्यमरः।

**छन्दः-** अनुष्टुप्।

**अलङ्कारः-** काव्यलिङ्गम्।

**छिन्नोऽपि रोहति तरुः, क्षीणोऽप्युपचीयते पुनश्चन्द्रः।**
**इति विमृशन्तः सन्तः सन्तप्यन्ते न दुःखेषु।। ८६।।**

**प्रसङ्गः**- प्रस्तुते श्लोके कविः उपदिशति यत् सत्पुरुषाः सदैव दुःखरहिताः तिष्ठन्ति।

**पदच्छेदः**- छिन्नः अपि रोहति तरुः, क्षीणः अपि उपचीयते पुनः चन्द्रः, इति विमृशन्तः सन्तः सन्तप्यन्ते न दुःखेषु।

**अन्वयः**-छिन्नः अपि तरुः (पुनः) रोहति, क्षीणः अपि चन्द्रः पुनः उपचीयते, इति विमृशन्तः सन्तः दुःखेषु न सन्तप्यन्ते।

**व्याख्या**- छिन्नः = कृत्तः, अपि तरुः = वृक्षः, (पुनः) रोहति = उद्भवति, क्षीणः = कृशः, अपि चन्द्रः = शशी, पुनः उपचीयते = वृद्धिं प्राप्नोति, इति = एवं, विमृशन्तः = विचारयन्तः, सन्तः = सत्पुरुषाः, दुःखेषु = कष्टेषु, न सन्तप्यन्ते =न अनुतप्ताः भवन्ति।

**भावार्थः**- कृत्तोऽपि तरुः पुनः उद्भवति। कृष्णपक्षे क्रमेण क्षीणोऽपि चन्द्रः शुक्लपक्षे पुनः वर्धते। अयं प्रकृत्याः नियमः। इति विचारयन्तः सज्जनाः कष्टां दशां प्राप्यापि संसारे दुःखपीडिताः न भवन्ति।

**व्याकरणम्**-तरुः = तृ + उ। छिन्नः = छिद् + क्त। क्षीणः = क्षि + क्त। विमृशन्तः = वि + मृश् + शतृ। सन्तः = अस् + शतृ।

**कोषः**- 'विटपी पादपस्तरुः' इत्यमरः।

**छन्दः**- आर्या।

**अलङ्कारः**- काव्यलिङ्गम्।

**नेता यस्य बृहस्पतिः, प्रहरणं वज्रं, सुराः सैनिकाः,**
**स्वर्गो दुर्गमनुग्रहः किल हरेरैरावतो वारणः।**
**इत्यैश्वर्यबलान्वितोऽपि बलभिद् भग्नः परैः सङ्गरे,**
**तद्युक्तं ननु दैवमेव शरणं, धिग्धिग्वृथा पौरुषम्।। ८७।।**

**प्रसङ्गः**- अस्मिन् श्लोके कविना दैवस्य प्राधान्यं प्रतिपादितम्।

**पदच्छेदः**- नेता यस्य बृहस्पतिः, प्रहरणं वज्रं, सुराः सैनिकाः, स्वर्गः दुर्गम् अनुग्रहः किल हरेः ऐरावतः वारणः, इति ऐश्वर्यबलान्वितः अपि बलभिद् भग्नः परैः सङ्गरे, तद् युक्तं ननु दैवम् एव शरणं, धिक् धिक् वृथा पौरुषम्।

**अन्वयः**- यस्य नेता बृहस्पतिः, प्रहरणं वज्रं, सैनिकाः सुराः, दुर्गं स्वर्गः अनुग्रहः हरेः किल, वारणः ऐरावतः, इति ऐश्वर्यबलान्वितः अपि बलभिद् सङ्गरे परैः भग्नः । तद् युक्तं ननु दैवम् एव शरणं, वृथा पौरुषं धिक् धिक्।

**व्याख्या**- यस्य = इन्द्रस्य, नेता = पथप्रदर्शकः, बृहस्पतिः = देवगुरुः, प्रहरणं = अस्त्रम्, वज्रं = कुलिशम्, सैनिकाः = युद्धकर्त्तारः, सुराः = देवाः,दुर्गं = गुप्तिस्थानं, स्वर्गः = नाकः, अनुग्रहः = कृपा, हरेः = भगवतः विष्णोः, किल = निश्चयेन, वारणः = गजः, ऐरावतः = गजेन्द्रः, इति ऐश्वर्यबलान्वितः =(ऐश्वर्येण बलेन अन्वितः) वैभव-पराक्रम-युक्तः, अपि बलभिद् = बलस्य तन्नाकस्य असुरस्य भिद् = इन्द्रः, सङ्गरे= युद्धे, परैः = अरिभिः,भग्नः = पराजितः। तद् युक्तं = अतः कथितं, ननु = निश्चयं, दैवम् = भाग्यम्,एव शरणं= प्रधानम्, वृथा = निरर्थकं, पौरुषं = पुरुषस्य कर्म, धिक् धिक्= पुनः पुनः तिररस्कारम्।

**भावार्थः**- यस्य देवेन्द्रस्य मार्गदर्शकः देवगुरुः बृहस्पतिः, युद्धसाधनं वज्रं, यस्य सैनिकाः देवाः सन्ति, यस्य गुप्तिस्थानं स्वर्गम् अस्ति, यस्य रक्षकः भगवान् विष्णुरस्ति, यस्य गजेन्द्रः ऐरावतः विद्यते एतादृशः वैभव-पराक्रम-युक्तः इन्द्रः संग्रामे शत्रुभिः पराजितः। अतः प्रोक्तमेव भाग्यमेव प्रधानं किन्तु बलं न। यत्र भाग्यस्य प्राधान्यं भवति तत्र पौरुषं धिक्।

**व्याकरणम्**- नेता = नृ + तृच्। बृहस्पतिः = बृहतां पतिः। प्रहरणं = प्र + हृ + ल्युट्। वारणः = वृ + णिच् + ल्यु। ऐरावतः = इरा + मतुप्। बलभिद् = बल + भिद् + क्विप्। भग्नः = भञ्ज् + क्त। युक्तं = युच् + क्त। शरणं = शृ + ल्युट्। बलभिद् = बल + भिद् + क्विप्।

**कोषः**- 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः' इत्यमरः।

**छन्दः**-शार्दूलविक्रीडितम्।

**अलङ्कारः**- अर्थान्तरन्यासः।

**कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी।**
**तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता॥८८॥**

**प्रसङ्गः**- श्लोकेऽस्मिन् कविना वर्णितं यत् सर्वाणि कर्माणि बुद्धिमता जनेन सुविचार्यैव करणीयानि।
**पदच्छेदः**- कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी, तथापि सुधिया भाव्यं सुविचार्य एव कुर्वता।
**अन्वयः**- (यद्यपि)पुंसां फलं कर्मायत्तं, बुद्धिः (च) कर्मानुसारिणी (भवति), अपि सुधिया सुविचार्य एव कुर्वता भाव्यम्।
**व्याख्या**- (यद्यपि)पुंसां = नराणां, फलं = सुखदुःखादिरूपं फलं, कर्मायत्तं = (कर्मणः आयत्तं तत्) कर्मपरतन्त्रं, बुद्धिः = मतिः (च) कर्मानुसारिणी = (कर्मणः अनुसारिणी) प्रारब्धाधीना (भवति), अपि सुधिया = बुद्धिमता, सुविचार्य = सम्यक् रूपेण चिन्तयित्वा, एव = हि, कुर्वता = कार्यकारिणा, भाव्यं = भवनीयम्।
**भावार्थः**- यद्यपि नराणां सुखदुःखादिरूपं फलं कर्मणः अधीनमेव भवति, तथा मतिरपि कर्मानुगामिनी विद्यते तथापि एवं स्थितेऽपि बुद्धिमता मनुष्येण विचारपूर्वकमेव कार्यं करणीयम्।
**व्याकरणम्**- कर्मायत्तम् = कर्म + आ + यत् + क्त। बुद्धिः = बुध् + क्तिन्। सुधिया = सुष्ठु+ धीः यस्य स सुधी तेन। भाव्यम् भू + ण्यत्। सुविचार्य = सु + वि + चर् + णिच् + ल्यप्। कुर्वता = कृ + शतृ-तेन।
**कोषः**- 'बुद्धि-मनीषा धिषणा धीः' इत्यमरः।'अधीनो निघ्न आयत्तः' इत्यमरः।
**छन्दः**- अनुष्टुप्।

**खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके,**
**वाञ्छन् देशमनातपं विधिवशात्तालस्य मूलं गतः।**
**तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः,**
**प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः॥८९॥**

**प्रसङ्गः**- उद्धृते श्लोके कविः भाग्यहीनस्य जनस्य दशां वर्णयति।
**पदच्छेदः**- खल्वाटः दिवसेश्वरस्य किरणैः सन्तापितः मस्तके, वाञ्छन् देशम् अनातपं विधिवशात् तालस्य मूलं गतः, तत्र अपि अस्य महाफलेन पतता भग्नं सशब्दं शिरः, प्रायः गच्छति यत्र भाग्यरहितः तत्र एव यान्ति आपदः।
**अन्वयः**- खल्वाटः दिवसेश्वरस्य किरणैः मस्तके सन्तापितः सन्, अनातपं देशं वाञ्छन् विधिवशात् तालस्य मूलं गतः, तत्र अपि पतता महाफलेन अस्य शिरः सशब्दं भग्नं , प्रायः यत्र भाग्यरहितः गच्छति तत्र एव आपदः यान्ति ।
**व्याख्या**- खल्वाटः =लुप्तरोमशिरस्कः, दिवसेश्वरस्य (दिवसस्य ईश्वरः तस्य) सूर्यस्य, किरणैः = मयूखैः, मस्तके = शिरसि, सन्तापितः = सूर्यातपेन पीडितः सन्, अनातपं (न आतपम्) छायायुक्तं, देशं = स्थानं, वाञ्छन् = इच्छन्, विधिवशात् = दैववशात्, तालस्य = तालवृक्षस्य, मूलं = अधस्थानं, गतः = संप्राप्तः, तत्र = तालवृक्षस्य मूले अपि, पतता = भ्रंशता, महाफलेन = पृथुलफलेन, अस्य = खल्वाटस्य, शिरः = मस्तकं, सशब्दं = (शब्देन सहितं) पट्इति ध्वनिं कुर्वन्, भग्नं = स्फूटितं, प्रायः = निश्चयेन, यत्र = यत्स्थानं, भाग्यरहितः = (भाग्येन रहितः) भाग्यहीनः, गच्छति = याति, तत्र = तत्स्थानं, एव आपदः = विपत्तयः, यान्ति = गच्छन्ति ।
**भावार्थः**- केशरहितः पुरुषः सूर्यस्य रश्मिभिः शिरसि पीडितः भूत्वा छायायुक्तं प्रदेशं तालवृक्षस्य मूलं गतः। तत्र बृहत्तालफलेन पतता तस्य शिरः पटत् इति सशब्दं विदलितम्। अतः कविना प्रोक्तं यत् प्रायशः भाग्यहीनाः नराः यत्र गच्छन्ति तत्र विपत्तयोऽपि सपरिवारं समायान्ति।
**व्याकरणम्**-दिवसेश्वरस्य = दिवसस्य ईश्वरः ष.तत्. तस्य । सन्तापितः = सम् + तप् +णिच् + क्त। वाञ्छन्= वाञ्छ् + शतृ। भग्नम्= भञ्ज् + क्त। भाग्यरहितः = भाग्येन रहितः, तृ.तत्.। आपदः= आ + पद् + क्विप्।
**कोषः**- 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः।'विधिर्विधाने दैवेऽपि ' इत्यमरः।
**छन्दः**- शार्दूलविक्रीडितम्।
**अलङ्कारः**- अर्थान्तरन्यासः।

**शशिदिवाकरयोर्ग्रहपीडनं,**
**गजभुजङ्गमयोरपि बन्धनम्।**
**मतिमताञ्च विलोक्य दरिद्रतां,**
**विधिरहो ! बलवानिति मे मतिः।। ९०।।**

**प्रसङ्गः**– प्रस्तुते श्लोके कविः वर्णयति यत् दैवमेव बलवत्तरं विद्यते।

**पदच्छेदः**–शशिदिवाकरयोः ग्रहपीडनं, गजभुजङ्गमयोः अपि बन्धनम्, मतिमतां च विलोक्य दरिद्रतां, विधिः अहो! बलवान् इति मे मतिः।

**अन्वयः**– शशिदिवाकरयोः ग्रहपीडनं, गजभुजङ्गमयोः अपि बन्धनम्, मतिमतां च दरिद्रतां विलोक्य, विधिः अहो ! बलवान् इति मे मतिः।

**व्याख्या**– शशिदिवाकरयोः = (शशी च दिवाकरश्च तयोः) चन्द्रसूर्ययोः, ग्रहपीडनं = (ग्रहेण पीडनं )राहुग्रहेण ग्रसनं , गजभुजङ्गमयोः = (गजश्च भुजङ्श्च तयोः) हस्तिसर्पयोः, अपि बन्धनम् = नियमनं, मतिमतां = बुद्धिमतां, च विलोक्य = दृष्ट्वा, दरिद्रतां = निर्धनतां, विधिः = नियतिः, अहो! = इत्याश्चर्यं, बलवान् =प्रबलः, इति मे = मम कवेः, मतिः = बुद्धिः।

**भावार्थः**– सूर्यचन्द्रयोः राहुग्रहग्रसनं गजसर्पयोः बन्धनं प्रशस्तं बुद्धिमतां दारिद्र्यम् अवलोक्य भाग्यमेव बलीयः इति मम कवेः भर्तृहरेः चिन्तनं वर्तते।

**व्याकरणम्**– शशिदिवाकरयोः = शशी च दिवाकरश्च शशिदिवाकरौ द्वन्द्वः तयोः। दिवाकरः= दिवा+ कृ + ट। ग्रहपीडनं =ग्रह + अच्= ग्रहः, ग्रहेण पीडनम्। पीडनम् = पीड् + ल्युट्। गजभुजङ्गमयोः = गजश्च भुजङ्श्च गजभुजङ्गौ द्वन्द्वः तयोः। बन्धनम्= बन्ध् + ल्युट्। मतिमताम् = मति + मतुप्, तेषाम्। विलोक्य = वि + लुक् + ल्यप्। दरिद्रताम् = दरिद्र + तल् + टाप्। विधिः = वि + धा + कि। बलवान् = बल + मतुप्। मतिः = मन् + क्तिन्।

**कोषः**– 'भाग्यं स्त्री नियतिः विधिः' इत्यमरः।

**छन्दः**– द्रुतविलम्बितम्।

**अलङ्कारः**– अर्थान्तरन्यासः।

**सृजति तावदशेषगुणाकरं**
**पुरुषरत्नमलङ्करणं भुवः।**
**तदपि तत्क्षणभङ्गि करोति चे-**
**दहह! कष्टमपण्डितता विधेः।। ९१।।**

**प्रसङ्गः**– प्रस्तुते श्लोकेकविना विधातुरपण्डितत्वं वर्णितमस्ति।

**पदच्छेदः**– सृजति तावद् अशेषगुणाकरं पुरुषरत्नम् अलङ्करणं भुवः तदपि तत्क्षणभङ्गिकरोति चेद् अहह! कष्टम् अपण्डितता विधेः।

**अन्वयः**– (विधिः)अशेषगुणाकरं भुवः अलङ्करणं पुरुषरत्नं सृजति तावद् तदपि तत् क्षणभङ्गि चेत् करोति। अहह! विधेः अपण्डितता कष्टम्।

**व्याख्या**– (विधिः) = नियतिः, अशेषगुणाकरं = (अशेषाणां गुणानाम् आकरः) समस्तगुणनिधिं, भुवः = धरायाः, अलङ्करणं = विभूषणं, पुरुषरत्नं = (पुरुषेषु रत्नं) पुरुषोत्तमं, तावद् सृजति = निर्माति, तदपि = तथापि, तत् = नरश्रेष्ठं, क्षणभङ्गि = (क्षणेन भङ्गि) नाशशीलं, चेत् करोति = विदधाति। अहह! = खेदकरं, विधेः = ब्रह्मणः, अपण्डितता = मूढता, कष्टं = कष्टकरं भवति।

**भोवार्थः**– विधाता अखिलगुणविभूषितं पृथिव्याः अलङ्कारभूतं कमपि नरश्रेष्ठं निर्माति। एतत् सत्यं तत् नररत्नं निर्माय क्षणभङ्गुरं करोति। खेदमस्ति यत् ब्रह्मणः मूढता कष्टकारिणी विद्यते।

**व्याकरणम्**– अशेषगुणाकरं = अशेषाणां गुणानाम् आकरः ष.तत्.। अलङ्करणम् = अलम् + कृ +ल्युट्। पुरुषरत्नं = पुरुषेषु रत्नम्, पुरुषः एव रत्नम् वा। अपण्डितता = अपण्डित + तल् + टाप्।

**कोषः**- 'खनिः स्त्रियामाकरः स्याद् ' इत्यमरः। 'विधाता विश्वसृड्विधिः' इत्यमरः।
**छन्दः**- द्रुतविलम्बितम्।
**अलङ्कारः**- अर्थान्तरन्यासः।

**पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं,**
**नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम्।**
**धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं,**
**यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः।। ९२।।**

**प्रसङ्गः**- श्लोकेऽस्मिन् कविः वर्णयति यत् प्रजापतिना ललाटे यल्लिखितं तत् मार्जितुं कोऽपि समर्थो न भवति।
**पदच्छेदः** - पत्रं न एव यदा करीरविटपे दोषः वसन्तस्य किं, न उलूकः अपि अवलोकते यदि दिवा सूर्यस्य किं दूषणं, धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं, यत्पूर्वं विधिना ललाटलिखितं तत् मार्जितुं कः क्षमः।
**अन्वयः**- यदा करीरविटपे पत्रं न एव (तर्हि) वसन्तस्य दोषः किं? यदि उलूकः दिवा अपि न अवलोकते (तर्हि) सूर्यस्य किं दूषणं ? धारा नैव चातकमुखे पतन्ति (तर्हि) मेघस्य किं दूषणं ?, पूर्वं यत् विधिना ललाटलिखितं तत् मार्जितुं कः क्षमः?
**व्याख्या**- यदा = यदि, करीरविटपे = करीराख्ये वृक्षे शाखयां वा, पत्रं = पर्णं, न एव = न भवति (तर्हि) वसन्तस्य = वसन्तनाम -ऋतोः, दोषः किं? = दोषः नास्ति। यदि उलूकः = पेचकः, दिवा = दिवसे, अपि न, अवलोकते = पश्यति (तर्हि) सूर्यस्य = रवेः, किं दूषणं ?= दोषः नास्ति। धारा = जलधाराः, चातकमुखे = सारङ्गपक्षि-चञ्चौ वदने वा, नैव = न एव,पतन्ति = न आगच्छन्ति (तर्हि) मेघस्य = जलदस्य, किं दूषणं ? = नास्ति एव दोषः, पूर्वं = प्राक्, यत् विधिना = ब्रह्मणा, ललाटलिखितं = (ललाटे लिखितम्)= भालस्थले अक्षररूपेण लिखितम्, तत् मार्जितुं = तत् प्रोञ्छितुं, कः क्षमः?= न कोऽपि समर्थः।
**भावार्थः**- यदि करीरनामपादपे वसन्तर्तौ पत्रं न जायते तर्हि वसन्तस्य कः दोषः? यदि पेचकः सूर्यालोके दिने न पश्यति तर्हि दिवाकरस्य कोऽत्र दोषः? यदि चातकनाम-खगस्य चञ्चौ वर्षाबिन्दवः नैव पतन्ति तर्हि मेघस्य को दोषः? अतः उक्तं आदौ विधात्रा यद् ललाटपट्टे लिखितं तत् प्रोञ्छितुं न कोऽपि समर्थः भवति।
**व्याकरणम्**- दूषणम्= दुष् + ल्युट्। ललाटलिखितं = ललाटे लिखितम्, सप्तमी तत्पु.। मार्जितुम्= मृज् + तुमुन्। लिखितम् = लिख् + तुमुन्।
**कोषः**= 'उलूके तु वायसाऽरातिपेचकौ। दिवान्धः कौशिको धूको दिवाभीतो निशाटनः' इत्यमरः। 'विस्तारो विटपोऽस्त्रियाम्' इत्यमरः। 'ललाटभलिकम्' इत्यमरः।
**छन्दः**- शार्दूलविक्रीडितम्।
**अलङ्कारः**- अर्थापत्तिः।

**नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगाः,**
**विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः।**
**फलं कर्मायत्तं यदि किममरैः किञ्च विधिना,**
**नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति।। ९३।।**

**प्रसङ्गः**- प्रस्तुते श्लोकेकविना कर्मणः महत्त्वं प्रतिपादितम्।
**पदच्छेदः**-नमस्यामः देवान् ननु हतविधेः ते अपि वशगाः, विधिः वन्द्यः सः अपि प्रतिनियतकर्म एकफलदः, फलं कर्मायत्तं यदि किम् अमरैः किं च विधिना, नमः तत् कर्मभ्यः विधिः अपि न येभ्यः प्रभवति।
**अन्वयः**- (वयं) देवान् नमस्यामः ननु ते अपि हतविधेः वशगाः (सन्ति), विधिः वन्द्यः (किन्तु)सः अपि प्रतिनियत कर्म एकफलदः (अस्ति, तथा च), यदि फलं कर्मायत्तं (तर्हि)अमरैः किम् ? विधिना च किम्?, तत् कर्मभ्यः नमः, येभ्यः विधिः अपि न प्रभवति।

**व्याख्या-** (वयं) देवान् = सुरान्, नमस्याम: = प्रणमाम:, ननु = निश्चयेन, ते अपि = देवा अपि, हतविधे: = (हत: य: विधि: तस्य)दग्धदैवस्य ब्रह्मण:, वशगा: = (वशं गच्छन्तीति) अधीना: (सन्ति), विधि: = विधाता, वन्द्य: = वन्दनीय: (किन्तु)स: अपि = विधिरपि, प्रतिनियतकर्मैकफलद: = (प्रतिनियतानि च तानि कर्माणि, तदेकं फलं ददाति) शुभाशुभकर्मानुसारनिश्चित-फलप्रदाता। (अस्ति, तथा च), यदि = चेत्, फलं = परिणामं, कर्मायत्तं = कर्माधीनं (तर्हि) अमरै: = देवै:, किम् =किं प्रयोजनं ? विधिना = ब्रह्मणा च किम् = किं प्रयोजनम् ?, तत् = तस्मात् कारणात्, कर्मभ्य: = कर्त्तव्येभ्य:, नम: = नमो नम:, येभ्य: = कर्मभ्य:, विधि: अपि = साक्षाद् दैवमपि, न प्रभवति= न समर्थोऽस्ति।

**भावार्थ:-** अत्र कवि: कथयति वयं सुरान् प्रणमाम: किन्तु ते देवा अपि निश्चयेन दग्धदैवस्य ब्रह्मण: वशवर्तिन: सन्ति। अत: विधि: वन्दनीय: किन्तु सोऽपि स्वकृत-शुभाशुभकर्मानुसारिनिश्चितफलदाता विद्यते। यदि फलं कर्माधीनमेवास्ति तर्हि देवै: विधात्रा वा को लाभ:? अत: कर्मभ्य: एव नमो नम:। यानि कर्माणि ब्रह्माऽपि अन्यथा कर्तुं नैव शक्नोति।

**व्याकरणम्-** वशगा:= वश + गम् +उ। वन्द्य:= वन्द् + ण्यत्। कर्मायत्तम्= कर्म + आ + यत् + क्त।

**कोष:-**'विधिर्विधाने दैवेऽपि ' इत्यमर:।'विधाता विश्वसृड्विधि:' इत्यमर:।'अमरा निर्जरा देवास्त्रिदशा विबुधा: सुरा:' इत्यमर:।

**छन्द:-** शिखरिणी।

**अलङ्कार:-** सार:।

**ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे,**
**विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे।**
**रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारित:,**
**सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नम: कर्मणे।।९४।।**

**प्रसङ्ग:-** प्रस्तुते श्लोके कवि: वर्णयति यत् कर्म सर्वेषां ब्रह्मादीनां देवानां नियामकमस्ति।

**पदच्छेद:-**ब्रह्मा येन कुलालवत् नियमितो ब्रह्माण्डभाण्डोदरे, विष्णु: येन दशावतारगहने क्षिप्तो महासंकटे, रुद्र: येन कपालपाणिपुटके भिक्षाटनं कारित:, सूर्य: भ्राम्यति नित्यमेव गगने तस्मै नम: कर्मणे।

**अन्वय:-** येन ब्रह्मा ब्रह्माण्डभाण्डोदरे कुलालवत् नियमित:, येन विष्णु: दशावतारगहने क्षिप्त: महासंकटे, येन रुद्र: कपालपाणिपुटके भिक्षाटनं कारित:, (येन) सूर्य: नित्यमेव गगने भ्राम्यति तस्मै नम: कर्मणे।

**व्याख्या-** येन = कर्मणा, ब्रह्मा = विधाता, ब्रह्माण्डभाण्डोदरे =(ब्रह्माण्डम् एव भाण्डं तस्य उदरे ) निखिल- जगदण्ड- भाण्डमध्ये, कुलालवत् = कुम्भकार: तुल्य:, नियमित: = नियोजित:, येन = कर्मणा, विष्णु: = नारायण:, दशावतारगहने = (दश अवतारा एव गहनं तस्मिन्) दश-मत्स्यादि-अवतारधारण-गभीरे, महासंकटे = (महान्ति सङ्कटानि तस्मिन्) महाक्लेशपदे कर्मणि, क्षिप्त: = पातित:, येन = कर्मणा, रुद्र: = महादेव:, कपालपाणिपुटके = (कपालम् एव पाणिपुटकं तस्मिन्)ब्रह्ममुण्डरूपभिक्षापात्रे, भिक्षाटनं = (भिक्षायै अटनम् तत्) भिक्षार्थ-भ्रमणम्, कारित: = नियोजित:, (येन = कर्मणा) सूर्य: = भास्कर:, नित्यमेव = सर्वदेव, गगने = आकाशे भ्राम्यति = परिव्रजति, तस्मै = सकलनियामके, कर्मणे = कर्म- विशेषाय, नम: = नमो नम: अस्तु।

**भावार्थ:-** कर्मण: महत्त्वं प्रतिपादयन् कवि: भणति यत् सृष्टिकर्त्ता ब्रह्मा येन कर्मणा कुम्भकार: सदृश: ब्रह्माण्डरूपपात्र निर्माणे नियोजित:, येन कर्मणा योगेश्वर: नारायण: महाकष्टमये दश-मत्स्यादि-अवतारधारणे सन्नियोजित:, येन कर्मणा महादेव: शिव: ब्रह्ममुण्डरूपभिक्षापात्रे भिक्षार्थं भ्रमणं कारित:, येन कर्मणा भगवान् दिवाकर: आकाशे सततं भ्रमणकार्ये नियोजित:, तस्मै सर्वसमर्थाय कर्मविशेषाय प्रणामोऽस्तु।

**व्याकरणम्-** ब्रह्माण्डम् एव भाण्डं कर्म.। कुलालवत = कुलालेन तुल्य:। नियमित: = नि + यम् + णिच् + क्त। विष्णु: = विष् + नु। दशावतारगहने = दश अवतारा: तै: एव गहनं तस्मिन्। अवतार:= अव + तृ + घञ्। अव + तृ + अप्। क्षिप्त: = क्षिप् + क्त। भिक्षाटनं = भिक्षा + अट् + ल्युट्।

**कोष:-** 'ब्रह्मात्मभू: सुरज्येष्ठ:परमेष्ठी पितामह:' इत्यमर:।'कुम्भकार: कुलाल: स्यात्' इत्यमर:।'सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम्' इत्यमर:।'सङ्कटं ना तु सम्बाध:' इत्यमर:।'गहनं वनदु:खयो:' इत्यमर:।

**छन्दः**- शार्दूलविक्रीडितम्।
**अलङ्कारः**- काव्यलिङ्गम्।

**नैवाऽऽकृतिः फलति नैव कुलं न शीलं,**
**विद्यापि नैव न च यत्नकृताऽपि सेवा।**
**भाग्यानि पूर्वतपसा खलु सञ्चितानि,**
**काले फलन्ति पुरुषस्य यथैव वृक्षाः।। ९५।।**

**प्रसङ्गः**- प्रस्तुते श्लोके कविः प्रतिपादयति यत् पुरुषेण पूर्वकृतानि पुण्यानि यथासमयं फलन्ति इति।
**पदच्छेदः**- न एव आकृतिः फलति न एव कुलं न शीलं, विद्या अपि न एव न च यत्नकृता अपि सेवा, भाग्यानि पूर्वतपसा खलु सञ्चितानि, काले फलन्ति पुरुषस्य यथा एव वृक्षाः।
**अन्वयः**- (पुरुषस्य) आकृतिः नैव फलति, कुलं नैव, शीलं न, विद्या अपि नैव, च यत्नकृता अपि सेवा न। (किन्तु) पूर्वतपसा सञ्चितानि पुरुषस्य भाग्यानि काले फलन्ति खलु यथा एव वृक्षाः (फलन्ति)।
**व्याख्या**- (पुरुषस्य)आकृतिः = शरीर-स्वरूपम्,नैव फलति = फलकारणं न भवति, कुलं नैव = वंशः नहि (फलति), शीलं न = सदाचारः न (फलति), विद्या अपि नैव = वेदादिशास्त्रज्ञानमपि न (फलति), च यत्नकृता = प्रयत्नेन विहिता, अपि सेवा न = परिचर्या अपि न (फलति)। (किन्तु) पूर्वतपसा = पुराकृतसुकृतेन, सञ्चितानि = एकत्रीकृतानि, पुरुषस्य = मनुष्यस्य, भाग्यानि = दिष्टानि, काले = यथासमयं, फलन्ति = फलं ददति, खलु = निश्चयेन, यथा एव वृक्षाः = यथा एव पादपाः (फलन्ति)।
**भावार्थः**- अत्र भाग्यस्य महत्त्वं प्रतिपादयन् कविः वर्णयति यत् मनुष्यस्य रूपसौन्दर्यं, कुलीनता, सदाचारः, ज्ञानं तथा महता प्रयत्नेन कृता सेवा अभीष्टफलप्रदाने समर्थाः न भवन्ति। अपि तु पूर्वतपसा योगबलेन संपादितानि पुरुषस्य भाग्यानि एव अनुकूलसमये इष्टफलं प्रयच्छन्ति यथा वृक्षाः यथोचितसमये फलप्रदाः भवन्ति।
**व्याकरणम्** - आकृतिः = आ +कृ +क्तिन्। विद्या = विद् + क्यप् + टाप्। यत्नकृता = यत्नेन कृता तृ.त.। सञ्चितानि = सम् + चि + क्त-तानि। नैव = न +एव-वृद्धिसन्धिः। यथैव = यथा + एव-वृद्धिसन्धिः।
**कोषः**- 'आकारविङ्गिताकृती' इत्यमरः। 'दैवं दिष्टं भागधेयम्' इत्यमरः।
**छन्दः**- वसन्ततिलका।
**अलङ्कारः**- उपमा-दीपकौ।

**वने रणे शत्रुजलाग्निमध्ये,**
**महार्णवे पर्वतमस्तके वा।**
**सुप्तं प्रमत्तं विषमस्थितं वा,**
**रक्षन्ति पुण्यानि पुरा कृतानि। ९६।।**

**प्रसङ्गः**- प्रस्तुते श्लोके कविः वर्णयति यत् संकटकाले पुराकृतानि पुण्यकर्माणि रक्षकाणि भवन्ति।
**पदच्छेदः**- वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि।
**अन्वयः**- पुरा कृतानि पुण्यानि वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति ।
**व्याख्या**- पुरा = पूर्वजन्मनि, कृतानि = संपादितानि, पुण्यानि = सुकृतानि, वने = अरण्ये, रणे = संग्रामे, शत्रुजलाग्निमध्ये = (शत्रवश्च जलानि च अग्नयश्च तेषां मध्ये) रिपु-वारि-पावकानां मध्ये, महार्णवे = (महान् चासौ अर्णवः तस्मिन्) महासमुद्रे, पर्वतमस्तके= (पर्वतस्य मस्तकं तस्मिन्) गिरिशिखरे, वा सुप्तं = निद्राभिभूतं, प्रमत्तं = उन्मत्तं, विषमस्थितं = (विषमे स्थितं) संकटापन्नं, वा रक्षन्ति = त्रायन्ते।
**भावार्थः**- प्राग्जन्मनि सम्पादितानि सुकृतकर्माणि अरण्ये, युद्धक्षेत्रे, रिपूणां वारीणां पावकानां चान्तरे, शैलशिखरे अथवा शयानम् , असावधानं, सङ्कटापन्नं वा मनुष्यं पालयन्ति।
**व्याकरणम्**- शत्रुजलाग्निमध्ये = शत्रवश्च जलानि च अग्नयश्च द्वन्द्वः,तेषां मध्ये। महार्णवे = महान् चासौ अर्णवः कर्मधारयः

स., तस्मिन्। पर्वतमस्तके= पर्वतस्य मस्तके तत्पु.। सुप्तम्= स्वप् + क्त। प्रमत्तम्=प्र+मद्+क्त।

**कोषः-** 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः। 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतम्' इत्यमरः।

**छन्दः-** उपजातिः।

**अलङ्कारः-** अनुप्रासः।

**या साधूँश्च खलान् करोति विदुषो मूर्खान् हितान् द्वेषिणः,**
**प्रत्यक्षं कुरुते परोक्षममृतं हलाहलं तत्क्षणात्।**
**तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं,**
**हे साधो! व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः।। ९७।।**

**प्रसङ्गः-** प्रस्तुते श्लोकेकविना सत्कर्मणः समुपादेयता सुवर्णिता।

**पदच्छेदः-** या साधून् च खलान् करोति विदुषः मूर्खान् हितान् द्वेषिणः, प्रत्यक्षं कुरुते परोक्षम् अमृतं हलाहलं तत्क्षणात्। ताम् आराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं, हे साधो! व्यसनैः गुणेषु विपुलेषु आस्थां वृथा मा कृथाः।

**अन्वयः-** या खलान् साधून् करोति, मूर्खान् विदुषः, द्वेषिणः हितान् करोति, परोक्षं प्रत्यक्षं कुरुते, तत्क्षणात् हलाहलं अमृतं च कुरुते, हे साधो! वाञ्छितं फलं भोक्तुं तां भगवतीं सत्क्रियाम् आराधय। व्यसनैः विपुलेषु गुणेषु आस्थां वृथा मा कृथाः। (करोति)

**व्याख्या-** या = सत्क्रिया, खलान् = दुर्ज्जनान्, साधून् = सज्जनान्, करोति = विदधाति, मूर्खान् = अज्ञान्, विदुषः = पण्डितान्, द्वेषिणः = शत्रून्, हितान् = मित्राणि करोति, परोक्षं = अतीन्द्रियं, प्रत्यक्षं = दृष्टिगोचरं, कुरुते = करोति, तत्क्षणात् = साक्षात्, हलाहलं = विषम्, अमृतं = पीयूषं, च कुरुते, हे साधो! = हे सज्जन! वाञ्छितं = अभीष्टं, फलं = मनोरथं, भोक्तुं = लब्धुं, तां = पूर्वोक्तगुणविशिष्टां, भगवतीं = ऐश्वर्यादिषड्- गुणोपेतां, सत्क्रियां =शोभनं कर्म, आराधय = सेवस्व, व्यसनैः = विपत्तिभिः, विपुलेषु = अत्यधिकेषु, गुणेषु = विद्वत्तादिषु, आस्थां = आसक्तिं, वृथा = व्यर्थं, मा कृथाः = मा कुरु।

**भावार्थः-** हे सत्पुरुष! सत्कर्मणः महत्त्वमत्यधिकं विद्यते। इदं सत्कर्म दुर्ज्नान् सज्जनान् करोति,अज्ञान् पण्डितान् करोति, शत्रून् मित्राणि करोति, परोक्षं जनं समक्षं करोति, विषम् अमृतं विदधाति। अतः अभीष्टं फलं लब्धुं ताम् ऐश्वर्यशालिनीं सत्क्रियां सेवस्व। दुःखभूयिष्ठेषु अन्येषु गुणेषु आसक्तिः नैव करणीया।

**व्याकरणम्-** विदुषः = विद् + शतृ,पु. द्वि.बहुव.। द्वेषिणः = द्विष् + णिनि, पु. द्वि.बहुव.। प्रत्यक्षम् = अक्ष्णोः प्रति, अव्ययीभावः। वाञ्छितम्= वाच्छ् + क्त। भोक्तुम् = भुज् + तुमुन्। भगवतीम्= भग + मतुप्, स्त्री. द्वि.एकवचनम्।

**कोषः-** 'व्यसनं विपदि भ्रंशे दोषे' इत्यमरः। 'पीयूषममृतं सुधा ' इत्यमरः।

**छन्दः-** शार्दूलविक्रीडितम्।

**अलङ्कारः-** काव्यलिङ्गम्।

**गुणवदगुणवद्वा कुर्वता कार्यजातं,**
**परिणतिरवधार्या यत्नतः पण्डितेन।**
**अतिरभसकृतानां कर्मणामाविपत्ते-**
**र्भवति हृदयदाही शल्यतुल्यो विपाकः।। ९८।।**

**प्रसङ्गः-** अत्र श्लोकेकविः उपदिशति यत् प्रत्येकं कार्यस्य परिणामं सुविचार्यैव कार्यजातं करणीयम्।

**पदच्छेदः-** गुणवत् अगुणवत् वा कुर्वता कार्यजातं,परिणतिः अवधार्या यत्नतः पण्डितेन अतिरभसकृतानां कर्मणाम् आविपत्तेः भवति हृदयदाही शल्यतुल्यः विपाकः।

**अन्वयः-** गुणवत् अगुणवत् वा कार्यजातं कुर्वता पण्डितेन परिणतिः यत्नतः अवधार्या। हि अतिरभसकृतानां कर्मणां शल्यतुल्यः विपाकः आविपत्तेः हृदयदाही भवति।

**व्याख्या-** गुणवत् = गुणाः सन्ति अस्मिन् इति= गुणयुक्तं, अगुणवत् = गुणरहितं, वा कार्यजातं = कार्यसमूहं, कुर्वता सम्पादयता, पण्डितेन = बुद्धिमता, परिणतिः = परिणामः, यत्नतः = सावधानतया, अवधार्या = अनुसन्देया। हि = यतः,

अतिरभसकृतानां = (अतिरभसेन कृतानि, तेषाम्) अतित्वरया संपादितानां, कर्मणां = कार्याणां, शल्यतुल्य: =(शल्येन तुल्य: ) बाणाग्रेण सदृश: कष्टकर:, विपाक: = परिणाम:, आविपत्ते: = विपत्तिपर्यन्तम् आमरणं वा, हृदयदाही = (हृदयं दग्धुं शीलम् अस्य इति) मन: सन्तापकारी, भवति = जायते।

**भावार्थ:**- कवि: उपदिशति यत् मतिमान् नर: गुणयुक्तं गुणरहितं वा कार्यसमूहं संपादनस्य प्राक् सम्यक् विचार्य कार्यं कुर्यात्। तस्य कर्मण: परिणामोऽपि सुविचारणीय:। यतस्तु परिणामविवेचनं विनैव अतित्वरया कार्यं संपादयेत् चेत् संपादितानां कार्याणां फलं मृत्युपर्यन्तं बाणाग्रसदृशं पीडादायकं मन:सन्तापकारी च भवति।

**व्याकरणम्**- गुणवत्= गुण + मतुप्। अगुणवत्= न गुणवत्। कर्मजातम् = कर्मणा जातम्-ष.तत्। परिणति:= परि +नम् + क्तिन्। यत्नत:= यत्न + तस्। अवधार्या= अव + धृ + ण्यत्। विपाक: = वि + पच् + घञ्। विपत्ते: = वि + पद् + क्तिन्, तस्या:।

**कोष:**- 'रभसो वेगहर्षयो: ' इत्यमर:।

**छन्द:**- मालिनी।

**अलङ्कार:**- उपमा अर्थान्तरन्यासश्च।

**स्थाल्यां वैदूर्यमय्यां पचति तिलकणांश्चान्दनैरिन्धनौघै:,**
**सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कमूलस्य हेतो:।**
**कृत्वा कर्पूरखण्डान् वृतिमिह कुरुते कोद्रवाणां समन्तात्,**
**प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्य:।। ९९।।**

**प्रसङ्ग:**- प्रस्तुते श्लोकेकवि: वर्णयति यत् तपोविहीन: जन: मन्दभाग्य: भवति।

**पदच्छेद:**- स्थाल्यां वैदूर्यमय्यां पचति तिलकणान् चान्दनै: इन्धनौघै: सौवर्णै: लाङ्गलाग्रै: विलिखति वसुधाम् अर्कमूलस्य हेतो: कृत्वा कर्पूरखण्डान् वृतिम् इह कुरुते कोद्रवाणां समन्तात्, प्राप्य इमां कर्मभूमिं न चरति मनुज: य: तप: मन्दभाग्य:।

**अन्वय:**- य: मन्दभाग्य: मनुज: इमां कर्मभूमिं प्राप्य तप: न चरति (स:) इह वैदूर्यमय्यां स्थाल्यां चान्दनै: इन्धनौघै: तिलकणान् पचति, अर्कमूलस्य हेतो: सौवर्णै: लाङ्गलाग्रै: वसुधां विलिखति, कर्पूरखण्डान् कृत्वा समन्तात् कोद्रवाणां वृतिम् कुरुते।

**व्याख्या**- य: = कश्चन: पुरुष:, मन्दभाग्य: =(मन्दं भाग्यं यस्य स:) भाग्यरहित:, मनुज: = (मनो: जात:) मनुष्य:, इमाम् = एतां, कर्मभूमिं =(कर्मण: भूमि: ताम्) कार्यक्षेत्रं मर्त्यलोकं, प्राप्य = लब्ध्वा, तप: = अध्यात्मयोगं, न चरति = न आचरति, (स:) जन:, इह = अस्मिन् लोके, वैदूर्यमय्यां = (विदूरात् प्रभवति वैदूर्यं, तस्य विकार: वैदूर्यमयी, तस्याम्) वैदूर्यमणिनिर्मितायां, स्थाल्यां = पात्रे, चान्दनै: = चन्दन-तरु-सम्बन्धिभि:, इन्धनौघै: = काष्ठसमूहै:, तिलकणान् = (तिलस्य कणा: तान्) तिलनाम-अन्नकणान्, पचति = विक्लेदयति, अर्कतूलस्य =(अर्कस्य मूलं तस्य ) मन्दारमूलस्य, हेतो: = कारणात्, सौवर्णै: = सुवर्णनिर्मितै:, लाङ्गलाग्रै: = हलस्याग्रभागै:, वसुधां = धराम्, विलिखति = कर्षति, कर्पूरखण्डान् = (कर्पूरस्य खण्डं तान्) घनसार-शकलान्, कृत्वा = विधाय, समन्तात् = सर्वत:, कोद्रवाणां = कोरदूषकाख्यसस्य विशेषाणां, वृतिम् = आचरणं, कुरुते= विदधाति।

**भावार्थ:**- य: मानव: इमां कार्यक्षेत्रं पृथिवीलोकम् आगत्य सत्कर्मादिरूपतपोऽनुष्ठानं न आचरति स: भाग्यहीन: जन: कथ्यते। यतोहि स: हतभाग्य: वैदूर्यमणिनिर्मितपात्रे चन्दनकाष्ठसमूहै: तिलखलीं पचति, अर्काख्यमूलस्य कृते सुवर्णमयै: हलाग्रै: पृथिवीं कर्षति, कपूरस्य शकलान् कृत्वा चतुर्दिक् कोरदूषाणाम् अन्नानां वेष्ठनं करोति। अर्थात् सत्कर्म त्यक्त्वा असत्कर्मणि कालं यापयति य: स: भाग्यहीन: कथ्यते।

**व्याकरणम्**- मन्दभाग्य:= मन्दं भाग्यं यस्य स: बहुव्रीहि:। मनुज:= मनु + जन् + ड। वैदूर्यमय्याम् =वैदूर्य + मयट् +ङीप्, तस्याम्। सौवर्णै: = सुवर्ण + अण्। वृत्तिम् = वृ + क्तिन्।

**कोष:**- वैदूर्यं बालवायजम् इत्यमर:। लवलेशकणाणव: इत्यमर:। कोरदूषस्तु कोद्रव: इत्यमर:। मूढाल्पाऽपटुनिर्भाग्या मन्दा इत्यमर:।

**छन्दः-** स्रग्धरा।

**अलङ्कारः-** निदर्शना।

**मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे,**
**वाणिज्यं कृषिसेवने च सकला विद्याः कलाः शिक्षताम्।**
**आकाशं विपुलं प्रयातु खगवत् कृत्वा प्रयत्नं परं,**
**नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः।। १००।।**

**प्रसङ्गः-** प्रस्तुते श्लोके कविः वर्णयति यत् कर्मवशात् भवितव्यता भवत्येव।

**पदच्छेदः-** मज्जतु अम्भसि यातु मेरुशिखरं शत्रून् जयतु आहवे,वाणिज्यं कृषिसेवने च सकला विद्याः कलाः शिक्षताम् आकाशं विपुलं प्रयातु खगवत् कृत्वा प्रयत्नं परं,न अभाव्यं भवति इह कर्मवशतः भाव्यस्य नाशः कुतः।

**अन्वयः-** (मनुष्यः)अम्भसि मज्जतु, मेरुशिखरं यातु, आहवे शत्रून् जयतु ,वाणिज्यं कृषिसेवने सकला विद्याः कलाः च शिक्षताम्, परं प्रयत्नं कृत्वा खगवत् विपुलम् आकाशं प्रयातु, (तथापि) इह कर्मवशतः अभाव्यं न भवति भाव्यस्य नाशः कुतः भवति।

**व्याख्या-** (मनुष्यः) अम्भसि = जले, मज्जतु = मग्नो भवतु, मेरुशिखरं = (मेरोः शिखरं) सुमेरुपर्वतस्य शृङ्गं, यातु = गच्छतु, आहवे = युद्धे, शत्रून् = अरीन्, जयतु = पराजितान् करोतु, वाणिज्यं = वणिजां कर्म,कृषिसेवने = (कृषिश्च सेवनञ्च) कर्षणं तथा सेवनं, सकला = समस्ताः, विद्याः = वेदपुराणादि-चतुर्दशविद्याः, कलाः =इतिहास-आगमप्रभृति-चतुःषष्टिकलाः, च शिक्षताम् = अभ्यस्यतु, परम् = अत्यधिकम्, प्रयत्नम् = उद्यमम्, कृत्वा = विधाय, खगवत् = पक्षीव, विपुलम् = विस्तृतं, आकाशं = गगनं, प्रयातु = गच्छतु, (तथापि) इह = अत्र संसारे, कर्मवशतः = पुण्यापुण्यकर्मानुरोधतः, अभाव्यं (भवितुं शक्यं भाव्यं न भाव्यम् अभाव्यम्) अभाविफलम्, न भवति = न जायते,भाव्यस्य = अवश्यं भाविनः फलस्य, नाशः = अभावः, कुतः = कस्मात्, भवति = जायते।

**भावार्थः-** मनुष्यः जले निमग्नो भवतु, सुमेरुपर्वतस्य शृङ्गम् आरोहतु, संग्रामे रिपून् पराजितान् करोतु, वाणिज्यं कृषिकर्म सेवा चतुर्दशविद्याः चतुःषष्टिकलाः च अभ्यस्यतु, उत्कृष्टं प्रयत्नं विधाय पक्षिवत् विस्तृतमाकाशं गच्छतु परन्तु पुण्यापुण्यकर्मवशाद् यदभाविफलं तन्न भवति यच्चावश्यं भाविफलस्य कदापि नाशोऽपि भवितुं न शक्नोति। अर्थात् यद्भावि तद् भवत्येव यदभावि न तदभवेत्।

**व्याकरणम्-** वाणिज्यम् = वणिज् + ष्यञ्। कृषिसेवने = कृषिश्च सेवनञ्च द्वन्द्वः। अभाव्यम् = न भाव्यम्, भू + ष्यञ्। चतुर्दशविद्याः- अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।

**कोषः-** 'मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः।

**छन्दः-** शार्दूलविक्रीडितम्।

**अलङ्कारः-** अनुप्रासः दीपकश्च।

**को लाभो गुणिसङ्गमः, किमसुखं प्राज्ञेतरैः सङ्गतिः।**
**का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः।**
**कः शूरो विजितेन्द्रियः, प्रियतमा काऽनुव्रता, किं धनं,**
**विद्या किं सुखमप्रवासगमनं, राज्यं किमाज्ञाफलम्।। १०१।।**

प्रसङ्गः- अस्मिन् श्लोके कविः प्रश्नोत्तरमाध्यमेन जीवनस्य लाभादि-वास्तविकतां वर्णयति।

पदच्छेदः-कः लाभः गुणिसङ्गमः, किम् असुखं प्राज्ञतरैः सङ्गतिः। का हानिः समयच्युतिः निपुणता का धर्मतत्त्वे रतिः। कः शूरः विजितेन्द्रियः, प्रियतमा का अनुव्रता, किं धनम्, विद्या किं सुखम् अप्रवासगमनम्, राज्यं किम् आज्ञा-फलम्।

अन्वयः- लाभः कः? गुणिसङ्गमः, असुखं किम्? प्राज्ञतरैः सङ्गतिः, हानिः का? समयच्युतिः, निपुणता का? धर्मतत्त्वे रतिः, शूरः कः? विजितेन्द्रियः, प्रियतमा का? अनुव्रता, धनम् किम्?, विद्या, सुखं किम्? अप्रवास- गमनम् , राज्यं किम? आज्ञाफलम्।

**व्याख्या-** लाभः = अभीष्टप्राप्तिः, कः? = किं नामधेयः?, गुणिसङ्गमः=गुणिनां सद्गुणवतां जनानां सङ्गमः संपर्कः , असुखम् = दुःखं किम्?, प्राज्ञतरैः = (प्राज्ञेभ्यः इतरे, तैः) मूर्खैः सह, सङ्गतिः = सङ्गमः, हानिः = क्षतिः, का? = किं नामधेया?, समयच्युतिः = (समयस्य च्युतिः) वृथा कालयापनम्, निपुणता (निपुणस्य भावः) दक्षता, का? = किं नामधेया?, धर्मतत्त्वे = (धर्मस्य तत्त्वं तस्मिन्) धर्म-रहस्ये, रतिः = अनुरागः, शूरः = वीरः, कः? = किं नामधेयः?, विजितेन्द्रियः =इन्द्रियजयी (विजितानि इन्द्रियाणि येन सः), प्रियतमा = अतिशयेन प्रिया, का? = किं नामधेया?, अनुव्रता = आज्ञानुगामिनी, धनम् = वित्तम्, किम्? = किं नामधेयम्?, विद्या = चतुर्दशविद्या, सुखम् = शर्म, किम्? = किं नामधेम्?, अप्रवासगमनम् = परदेशगमनम्, राज्यम् = आधिपत्यम्, किम्?= किं नामधेयम्?, आज्ञाफलम् = आदेशसाफलम्।

**भावार्थः-** अस्मिन् संसारे सज्जनानां संपर्कः एव लाभः। मूर्खजनैः सह सङ्गतिः एव दुःखम्। वृथाकालयापनम् एव हानिः। धर्मरहस्ये अनुरागः एव निपुणता, जितेन्द्रियत्वम् एव वीरत्वम्, पत्यनुकूलचारिणी एव प्रियतमा, विद्याधनम् एव धनम्, स्वदेशनिवास एव सुखम्, अप्रतिहतशासनमेव राज्यम्। एतेषां कार्याणां वास्तविकतायाः अवगमने जीवने साफलम् एव लब्धुं शक्यते।

**व्याकरणम्-** गुणिसङ्गमः= गुणाः सन्ति येषां ते गुणिनः, तेषां सङ्गमः। समयच्युतिः = समयस्य च्युतिः। धर्मतत्त्वे = धर्मस्य तत्त्वं तस्मिन्। इन्द्रियजयी =विजितानि इन्द्रियाणि येन सः बहुव्रीहिः। अनुव्रता= अनुव्रतं यस्याः सा। आज्ञाफलम् = आज्ञा एव फलम्, कर्मधारय, यस्य तत्।

**कोषः-** शर्मसातसुखानि च इत्यमरः।

**छन्दः-** शार्दूलविक्रीडितम्।

## अभ्यास-प्रश्नाः

### वस्तुनिष्ठ-प्रश्नाः

१. अम्भोदाः कुत्र वसन्ति?

१. गगने  २. पाताले  ३.वृक्षे  ४.पृथिव्याम्  ( )

२. परधने कस्य स्पृहा भवति?

१. सज्जनस्य  २. दुरात्मनः  ३. पुरुषस्य  ४. कस्यापि न  ( )

३. मणिना भूषितः सर्पः किमसौ न ------। रिक्तस्थानं पूरयत।

१. सुन्दरः  २. दुष्करः  ३. दर्शनीयः  ४. भयङ्करः  ( )

४.मुनौ कः गुणः दुर्जनैः अङ्कितः?

१. कुमतिता  २. सुमतिता  ३. विमतिता  ४. निघृणता  ( )

५. दुर्जनैः कैतवं कुत्र अङ्कितः?

१.शुचौ  २. व्रतरुचौ  ३.शूरे  ४.मुनौ  ( )

६.लोभश्चेत्------किम्? रिक्तस्थानं पूरयत।

१.अगुणेन  २.पातकैः  ३.तपसा  ४.मण्डनैः  ( )

७.यदि शुचि मनः केन प्रयोजनं नास्ति?

१.अगुणेन  २.पातकैः  ३.तपसा  ४.तीर्थेन  ( )

८.यदि मनसि सत्यं विद्यते तर्हि केन प्रयोजनं नास्ति?

१.पातकैः  २.अगुणेन  ३.तपसा  ४.तीर्थेन  ( )

९. सद् विद्या यदि किं-------?

१.धनैः  २.पातकैः  ३.तपसा  ४.अगुणेन  ( )

१०. परमगहनः सेवाधर्मः केषाम् अगम्यः विद्यते?

१. नराणाम्  २.योगिनाम्  ३.नरीणाम्  ४.शिक्षकाणाम्  ( )

११. कस्य गोचरगतैः न कोऽपि सुखमाप्यते?

१. सज्जनस्य  २. नीचस्य  ३.गजस्य  ४.विदुषः  ( )

१२. मृगस्य निष्कारणवैरी कोऽस्ति?

१.धीवरः  २.दुर्ज्जनः  ३.लुब्धकः  ४.सिंहः  ( )

१३. धीवरः कस्य निष्कारणवैरी भवति?

१.मीनस्य  २.मृगस्य  ३.सज्जनस्य  ४.नरस्य  ( )

१४. नम्रता कुत्र भवेत्?

१.परगुणे  २.शूलिनि  ३.गुरौ  ४.विद्यायाम्  ( )

१५.कस्मात् भयं स्यात्?

१.सज्जनसङ्गमात्  २.शिवात्  ३.आत्मदमनात्  ४.लोकापवादात्  ( )

१६.महात्मनां विपदि किं भवेत्?

१.वाक्पटुता  २.धैर्यम्  ३.क्षमा  ४.विक्रमः  ( )

१७.महाशैलशिलासंघातकर्कशं महतां चित्तं कदा जायते?

१.सम्पत्सु  २.आपत्सु  ३.कर्मसु  ४.धर्मेषु  ( )

१८. यः सुचरितैः पितरं प्रीणयेत् सः कः?

| | | | | |
|---|---|---|---|---|
| १. पुत्रः | २.मित्रः | ३.सज्जनः | ४.नरः | ( ) |

१९. फलोद्गमैः तरवः कीदृशाः भवन्ति?

| | | | | |
|---|---|---|---|---|
| १. शीतलाः | २.फलयुक्ताः | ३.छायायुक्ताः | ४.नम्राः | ( ) |

२०. श्रोत्रं केन विभाति?

| | | | | |
|---|---|---|---|---|
| १.कुण्डलेन | २.श्रुतेन | ३.दानेन | ४.कङ्कणेन | ( ) |

२१.करुणापराणां कायः केन विभाति?

| | | | | |
|---|---|---|---|---|
| १.चन्दनेन | २.दानेन | ३.श्रुतेन | ४.परोपकारैः | ( ) |

२२.कैरवचक्रवालं कः विकासयति?

| | | | | |
|---|---|---|---|---|
| १. दिनकरः | २. चन्द्रः | ३.जलधरः | ४.सज्जनः | ( ) |

२३.स्वार्थं परित्यज्य परार्थघटकाः ते के?

| | | | | |
|---|---|---|---|---|
| १. सत्पुरुषाः | २.सामान्याः | ३.मानुषराक्षसाः | ४. अधमाः | ( ) |

२४. साधुपदवीं ------।

| | | | | |
|---|---|---|---|---|
| १. भज | २.जहि | ३.सेवस्व | ४.अनुयाहि | ( ) |

२५. क्षमां------।

| | | | | |
|---|---|---|---|---|
| १. भज | २.जहि | ३.सेवस्व | ४.कुरु | ( ) |

२६.-----ब्रूहि।

| | | | | |
|---|---|---|---|---|
| १.तृष्णाम् | २.क्षमाम् | ३.मदम् | ४.सत्यम् | ( ) |

२७.------सेवस्व।

| | | | | |
|---|---|---|---|---|
| १.विद्वज्जनम् | २.क्षमाम् | ३.मदम् | ४.सत्यम् | ( ) |

२८.तृष्णां------।

| | | | | |
|---|---|---|---|---|
| १. भज | २.जहि | ३.सेवस्व | ४.छिन्धि | ( ) |

२९. दुःखिते------ कुरु।

| | | | | |
|---|---|---|---|---|
| १.दयाम् | २.मा | ३.दानम् | ४.रतिम् | ( ) |

३०.देवाः कां विना विरामं न प्रययुः?

| | | | | |
|---|---|---|---|---|
| १.सुधाम् | २.प्रयत्नम् | ३.जलम् | ४.कर्म | ( ) |

३१.ऐश्वर्यस्य विभूषणं किम्?

| | | | | |
|---|---|---|---|---|
| १.वाक्संयमः | २.सुजनता | ३.विनयः | ४.उपशमः | ( ) |

३२.नीतिनिपुणाः निन्दन्तु वा---------।

| | | | | |
|---|---|---|---|---|
| १. समाविशन्तु | २.गच्छन्तु | ३.स्तुवन्तु | ४.सन्तु | ( ) |

३३. के न्याय्यात्पथः पदं न परिचलन्ति?

| | | | | |
|---|---|---|---|---|
| १.अधीराः | २.धीराः | ३.नीतिनिपुणाः | ४.नराः | ( ) |

३४. के दुःखेषु न सन्तप्यन्ते?

| | | | | |
|---|---|---|---|---|
| १. सन्तः | २.नराः | ३.दुर्जनाः | ४.अज्ञाः | ( ) |

३५. पुसां फलं कस्यायत्तम्?

| | | | | |
|---|---|---|---|---|
| १.धर्मस्य | २.कर्मणः | ३.भाग्यस्य | ४.ज्ञानस्य | ( ) |

३६. कर्मणा कः नित्यमेव गगने भ्राम्यति?

१.सूर्यः　　२.वायुः　　३.खगः　　४.चन्द्रः　　( )

**लघूत्तर-प्रश्नाः-**

१.खल-सज्जनानां मैत्री वर्णनीया।

२.मृग-मीन-सज्जनानां निष्कारणवैरिणः के सन्ति?

३. किं त्रयं पुण्यकृतो लभन्ते?

४.कीदृशः एकाश्रयो हि श्रेयस्करो भवति?

५. मनुष्याणां शरीरस्थः महान् रिपुः कः?

**अतिलघूत्तर-प्रश्नाः-**

१. यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः। इदं वाक्यं कः कं कथयति?

२.खल-सज्जनानां मैत्री कीदृशी भवति?

३. असिधाराव्रतं केषां विद्यते? कीदृशं च?

४.पुण्यकृतो किं त्रयं लभन्ते?

५.कीदृशः दुर्ज्जनः परिहर्तव्यः?

६.दुर्जनैः दम्भः कुत्र अङ्कितः?

७. यदि सुमहिमा अस्ति तर्हि किं प्रयोजनं नास्ति?

८. यदि अपयशः अस्ति तर्हि किं प्रयोजनं नास्ति?

९. कीदृशानां भूभुजां कश्चित् आत्मीयः नाम नास्ति?

१०. सेवाधर्मः कीदृशोऽस्ति?

११.महात्मनां वाक्पटुता कुत्र भवेत्?

१२. प्रियं कृत्वा मौनं केषां व्रतम्?

१३.महतां चित्तं सम्पत्सु कीदृशं भवति?

१४. कदा सागरशुक्तिमध्यपतितं जलं मौक्तिकं जायते?

१५. आपदि सुखे च मित्रं कीदृशं भवेत्?

१६. तत् कलत्रं किम्?

१७. समृद्धिभिः अनुद्धताः के भवन्ति?

१८.करुणापराणां पाणिः केन विभाति?

१९. पद्माकरं विकचीकरोति कः?

२०.स्वार्थाय परहितं निघ्नन्ति ते के?

२१. के भीमविषेण भीतिं न भेजिरे?

२२.सर्वेषामपि परं भूषणं किम्?

२३. केन समः बन्धुः नास्ति?

२४. कीदृशः तरुः रोहति?

२५. कर्मानुसारिणी का विद्यते?

**निबन्धात्मक-प्रश्नाः-**

१. दुरात्मनां प्रकृतिसिद्धगुणाः के भवन्ति ?

२. कानि सप्त मनसि शल्यानि सन्ति?
३. सेवाकर्मणः दुष्करतां वर्णयत।
४.के निर्मलगुणाः सन्ति?
५.ऐश्वर्येण विना प्रकृतिमहतां मण्डनानि कानि सन्ति?
६. एकाश्रयः हि श्रेयष्करः इति वर्णनीयः।
७.सन्मित्रलक्षणानि वर्णयत।
८. सतां लक्षणानि ग्रन्थदिशा लिखत।
९.मनस्विनः कार्यार्थिनः स्वभावं वर्णयत।
१०.भाग्यस्य बलवत्तां वर्णयत।
११. कर्मणः महत्त्वं वर्णयत।

**सूक्तीनां भावार्थः लेख्यः।**

१.प्रकृतिसिद्धमिदं हि महात्मनाम्।
२.विनाऽप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम्।
३.प्रायेणाधममध्यमोत्तमगुणाः संसर्गतो जायते।
४.स्वभाव एवैषः परोपकारिणाम्।
५.सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः।
६.सन्तः स्वयं परहितेषु कृताभियोगाः।
७. निज हृदि विकसन्तः सन्ति सन्तः कियन्तः।
८. न निश्चितार्थाद्विरमन्ति धीराः।
९. मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम्।
१०. सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम्।
११.न्याय्यात्पथः प्रविचलन्ति पदं न धीराः।

## पण्डितवरश्रीमदमरसिंहविरचित:

## अमरकोष:

अयम् अमरकोष: नामलिङ्गानुशासनं नाम्नापि प्रसिद्धम्। अस्य लेखक: पण्डितप्रवर: श्रीमद् अमरसिंह: विद्यते। अयं ग्रन्थ: त्रिषु काण्डेषु विभक्त:। ग्रन्थकार: कुत्र जात:? कदा जात:? विषयेऽस्मिन् प्रामाणिकत्वेन न किमपि समुपलभ्यते। तथापि किम्वदन्त्यानुसारेण विक्रमादित्यस्य राजसभायां नवरत्नेषु कविरत्न: आसीत्।

**धन्वन्तरि-क्षपणकामरसिंह-शङ्कु-**
**वेतालभट्ट-घटखर्पर-कालिदासा:।**
**ख्यातो वराहमिहिरो नृपते: सभायां,**
**रत्नानि वै वररुचिर्नवविक्रमस्य।।**

अत: अस्य काल: ईस्वीपूर्वा प्रथमा शताब्दी भवेत्। संस्कृतवाङ्मयमवगन्तुं कोषग्रन्थस्य महती आवश्यकता अनुभूयते।

वरिष्ठोपाध्याय-कक्षाया: पाठ्यक्रमे मनुष्यवर्ग: निर्धारितोऽस्ति।

## मनुष्य-वर्ग:-

**मनुष्या मानुषा मर्त्या मनुजा मानवा नरा:।**
**स्यु: पुमांस: पञ्चजना: पुरुषा: पूरुषा नर:।।**

**मनुष्यस्य एकादश नामानि-**

१.मनुष्य: (पु.), २.मानुष:(पु.),३.मर्त्य: (पु.), ४.मनुज: (पु.),५. मानव(पु.), ६.नर (पु.) ७.पुमान् (पु.), ८.पञ्चजन:(पु.), ९. पुरुष: (पु.), १०. पूरुष: (पु.) , ११. ना (पु.)।

**स्त्री योषिदबला योषा नारी सीमन्तिनी वधू:।**
**प्रतीपदर्शिनी वामा वनिता महिला तथा।।**

**स्त्रिय: एकादश नामानि-**

१. स्त्री (स्त्री.), २. योषित् (स्त्री.), ३. अबला (स्त्री.), ४. योषा (स्त्री.), ५. नारी(स्त्री.),६. सीमन्तिनी (स्त्री.), ७. वधू: (स्त्री.), ८. प्रतीपदर्शिनी(स्त्री.), ९. वामा(स्त्री.), १०. वनिता (स्त्री.), ११. महिला (स्त्री.)

**विशेषास्त्वङ्गना भीरु: कामिनी वामलोचना।**
**प्रमदा मानिनी कान्ता ललना च नितम्बिनी।।**
**सुन्दरी रमणी रामा कोपना सैव भामिनी।**
**वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी।।**

**विशेषस्त्रिय: द्वादशनामानि-**

१. अङ्गना (स्त्री.), २.भीरु: (स्त्री.), ३. कामिनी(स्त्री.), ४. वामलोचना (स्त्री.), ५. प्रमदा (स्त्री.), ६. मानिनी (स्त्री.), ७. कान्ता (स्त्री.), ८. ललना(स्त्री.), ९. नितम्बिनी(स्त्री.), १०.सुन्दरी (स्त्री.), ११. रमणी (स्त्री.), १२. रामा (स्त्री.)।

**कोपनाया: स्त्रिय: द्वे नामनी-** १.कोपना (स्त्री.), २. भामिनी (स्त्री.)।

**गुणवत्या: स्त्रिय: चत्वारि नामानि-** १. वरारोहा (स्त्री.), २. मत्तकाशिनि (स्त्री.), ३.उत्तमा (स्त्री.), ४. वरवर्णिनी(स्त्री.)।

**कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रिय:।**

**पत्नी पाणिगृहिती च द्वितीया सहधर्मिणी।।**
**भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी।**
**पुरन्ध्री सुचरिता तु सती साध्वी पतिव्रता।।**

**नृपस्त्रियः द्वे नामनी-**

१. महिषी (स्त्री.), २. भोगिनी (स्त्री.)।

**परिणीतास्त्रियः सप्त नामानि-**

१.पत्नी (स्त्री.), २. पाणिगृहिती(स्त्री.), ३. द्वितीया (स्त्री.), ४. सहधर्मिणी(स्त्री.),५.भार्या (स्त्री.), ६. जाया (स्त्री.), ७.दाराः (पु. बहुवचनम्)

**पुत्रादिमत्याः सधवायाः द्वे नामनी-**

१. कुटुम्बिनी(स्त्री.), २. पुरन्ध्री (स्त्री.)।

**पतिसेवातत्परायाः चत्वारि नामानि-**

१. सुचरिता (स्त्री.), २. सती (स्त्री.), ३. साध्वी (स्त्री.), ४. पतिव्रता (स्त्री.)।

**कृतसपत्निकाध्यूढधिविन्ना अथ स्वयंवरा।**
**पतिंवरा च वर्या च कुलस्त्री कुलपालिका।।**

**अनेकभार्यस्य स्त्रियः त्रीणि नामानि-**

१. कृतसपत्निका(स्त्री.), २. अध्यूढा(स्त्री.), ३.अधिविन्ना(स्त्री.)।

**स्वेच्छाकृतपतिवरणायाः स्त्रियः त्रीणि नामानि-**

१. स्वयंवरा (स्त्री.),२.पतिंवरा (स्त्री.), ३. वर्या (स्त्री.)।

**कुलरक्षायाः स्त्रियः द्वे नामनी -**

१. कुलस्त्री (स्त्री.), २. कुलपालिका (स्त्री.)।

**कन्या कुमारी ----तरुणी युवतिः समे।।**

**प्रथमवयस्क-कन्यायाः द्वे नामनी-**

१. कन्या (स्त्री.), २. कुमारी (स्त्री.)।

**प्रथमवयसि वर्तमानायाः कन्यायाः द्वे नामनी-**

१. तरुणी (स्त्री.), २. युवतिः / युवती (स्त्री.)।

**समाः स्नुषाजनीवध्वः चिरण्टी तु सुवासिनी।**
**इच्छावती कामुका स्यात् वृषस्यन्ती तु कामुकी।।**

**पुत्रभार्यायाः त्रीणि नामानि-**

१. स्नुषा (स्त्री.), २. जनी (स्त्री.), ३.वधूः (स्त्री.)।

**प्राप्तयौवन-पितृगेहस्थायाः द्वे नामनी-**

१. चिरण्टी (स्त्री.), २. सुवासिनी (स्त्री.)।

**धनादीच्छायुक्त-स्त्रियः द्वे नामनी-**

१. इच्छावती (स्त्री.), २. कामुका (स्त्री.)।

**कान्तार्थिनी तुया याति संकेतं साभिसारिका।**
**पुंश्चली धर्षणी बन्धक्यसती कुलटेत्वरी।।**
**स्वैरिणी पांशुला च स्यात् अशिश्वी शिशुना विना।**

**स्वैरिण्याः स्त्रियः अष्टौ नामानि-**

१. पुंश्चली (स्त्री.), २. धर्षणी (स्त्री.), ३. बन्धकी (स्त्री.), ४. असती (स्त्री.), ५. कुलटा(स्त्री.), ६. इत्वरी (स्त्री.), ७. स्वैरिणी (स्त्री.), ८. पांशुला (स्त्री.)।

**शिशुना विना स्त्रियः एकं नाम-** १. अशिश्वी (स्त्री.)।

**अवीरा निष्पतिसुता विश्वस्ता विधवे समे।**

**पतिपुत्ररहितायाः स्त्रियः एकं नाम-** १. अवीरा (स्त्री.)।

**विधवास्त्रियः द्वे नामनी -** १. विश्वस्ता (स्त्री.), २. विधवा (स्त्री.)।

**आलिः सखी वयस्या च पतिवत्नी सभर्तृका।**
**वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती।।**

**सख्याः त्रीणि नामानि-** १. आलिः (स्त्री.), २. सखी(स्त्री.), ३. वयस्या (स्त्री.)।

**जीवद्भर्तृकायाः द्वे नामनी-** १. पतिवत्नी (स्त्री.), २. सभर्तृका(स्त्री.)।

**वृद्धायाः द्वे नामनी-** १. वृद्धा (स्त्री.), २. पलिक्नी (स्त्री.)।

**विदुषी-स्त्रियः द्वे नामनी-** १. प्राज्ञी (स्त्री.), २. प्रज्ञा / प्राज्ञा (स्त्री.)।

**बुद्धिमत्याः स्त्रियः द्वे नामनी-** १. प्राज्ञा (स्त्री.), २. धीमती (स्त्री.)।

**शूद्री शूद्रस्य भार्या स्यात् शूद्रा तज्जातिरेव च ।**
**आभीरी तु महाशूद्री जातिपुंयोगयोः समाः।।**

**शूद्रभार्यायाः एकं नाम-** शूद्री (स्त्री.)।

**शूद्रजातीयायाः स्त्रियः एकं नाम-** शूद्रा (स्त्री.)।

**आभीर्याः स्त्रियः द्वे नामनी-** आभीरी(स्त्री.), २. महाशूद्री(स्त्री.)।

**अर्याणी स्वयमर्या स्यात् क्षत्रिया क्षत्रियाण्यपि।**
**उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः।।**

**वैश्यजातीयाः स्त्रियः द्वे नामनी-** १.अर्याणी (स्त्री.) २. अर्या (स्त्री.)।

**क्षत्रियजातीयायाः स्त्रियः द्वे नामनी-** १. क्षत्रिया (स्त्री.), २. क्षत्रियाणी(स्त्री.)।

**स्वयं विद्योपदेशिन्याः स्त्रियः द्वे नामनी-** १. उपाध्याया (स्त्री.), २. उपाध्यायी (स्त्री.)।

**या स्वयं मन्त्रव्याख्यानं करोति, तस्याः स्त्रियः एकं नाम-** १. आचार्या (स्त्री.)।

**आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा।**
**उपाध्यान्युपाध्यायी देष्टृभार्यायाः पोटा स्त्रीपुंसलक्षणा।।**

**आचार्यस्य स्त्रियः एकं नाम-** १. आचार्यानी (स्त्री.)।

**वैश्यपत्न्याः एकं नाम-** १. अर्यी (स्त्री.)।

**क्षत्रियपत्न्याः नाम-१.** क्षत्रियी (स्त्री.)।

**विद्योपदेशकर्तुः स्त्रियः द्वे नामनी-** १. उपाध्यानी (स्त्री.) २. उपाध्यायी (स्त्री.)।

**स्त्रीपुंसयोः एकं लक्षणम्-** १. पोटा (स्त्री.)।

**वीरपत्नी वीरभार्या वीरमाता तु वीरसूः।**
**जातपत्या प्रजाता च प्रसूता च प्रसूतिका।।**

**वीरस्य भार्यायाः द्वे नामनी-**

१. वीरपत्नी (स्त्री.), २. वीरभार्या (स्त्री.)।

**वीरस्य मातुः द्वे नामनी–**

१. वीरमाता (स्त्री.), २. वीरसूः(स्त्री.)।

**प्रसूतास्त्रियः चत्वारि नामानि–**

१. जातपत्या (स्त्री.),२. प्रजाता (स्त्री.),३. प्रसूता (स्त्री.),४. प्रसूतिका (स्त्री.)।

**दूतिसंचारिके समे।।**

दूत्याः द्वे नामनी– १. दूती (स्त्री.), २. संचारिका (स्त्री.)।

**वारस्त्री गणिका वेश्या रूपाजीवा अथ सा जनैः।**
**सत्कृता वारमुख्या स्यात् ---------।।**

**चत्वारि वेश्यायाः नामानि –**

१. वारस्त्री (स्त्री.), २. गणिका (स्त्री.), ३. वेश्या (स्त्री.), ४. रूपाजीवा (स्त्री.)।

**सत्कृतवेश्यायाः एकं नाम–**

१. वारमुख्या(स्त्री.)।

**विप्रश्निका त्वीक्षणिका दैवज्ञा अथ रजस्वला।**
**स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि।।**
**ऋतुमत्यप्युदक्यापि--------------।।**

**लक्षणादिना शुभाशुभे जानत्याः दैवज्ञा स्त्रियः द्वे नामनी –**

१. विप्रश्निका (स्त्री.), २. ईक्षणिका (स्त्री.)।

**ऋतुमतीस्त्रियः अष्टौ नामानि–**

१. रजस्वला (स्त्री.), २. स्त्रीधर्मिणी (स्त्री.), ३. अविः (स्त्री.), ४. आत्रेयी (स्त्री.), ५. मलिनी (स्त्री.), ६. पुष्पवती(स्त्री.), ७. ऋतुमती (स्त्री.), ८. उदकी(स्त्री.)।

**पैतृष्वसेयः स्यात् पैतृष्वस्रीयश्च पितृष्वसुः।**
**सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः।।**

**पितृष्वसुः पुत्रस्य द्वे नामनी–** १. पैतृष्वसेयः (पु.), २. पैतृष्वस्रीयः (पु.)। ()

**मातृष्वसुः सुतस्य द्वे नामनी–** १. मातृष्वसेयः (पु.), २. मातृष्वस्रीयः (पु.)।

**विमातुः पुत्रस्य द्वे नामनी–** १.वैमात्रेयः (पु.), २. विमातृजः(पु.)।

**अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः।**
**कौलटेयः कौलटेरः ।।**

**कुलटायाः पुत्रस्य पञ्च नामानि–** १. बान्धकिनेयः (पु.), २. बन्धुलः (पु.), ३. असतीसुतः (पु.), ४. कौलटेयः(पु.), ५. कौलटेरः (पु.)।

**आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी।**
**आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे।**
**स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता।।**

**पुत्रस्य पञ्च नामानि–**

१. आत्मजः (पु.), २. तनयः (पु.), ३. सूनुः (पु.), ४. सुतः (पु.), ५. पुत्रः (पु.)।

**पुत्र्याः षड् नामानि–**

१. दुहिता(स्त्री.), २. आत्मजा (स्त्री.), ३. तनया(स्त्री.),४.सूनुः (स्त्री.),५. सुता (स्त्री.),६.पुत्री

(स्त्री.)।

**सन्तानस्य द्वे नामनी–**

१. अपत्यम् (नपु.), २. तोकम् (नपु.)।

**स्वस्माज्जातस्य पुत्रस्य द्वे नामनी–**

१. औरसः (पु.), २. उरसः (पु.)।

**पितुः त्रीणि नामानि–**

१. तातः (पु.), २. जनकः (पु.), ३. पिता(पु.)।

**जनयित्री प्रसूर्माता जननी भगिनी स्वसा।**
**ननन्दा तु स्वसा पत्युः नप्त्री पौत्री सुतात्मजा।।**

**मातुः चत्वारि नामानि–**

१. जनयित्री (स्त्री.), २. प्रसूः (स्त्री.), ३. माता (स्त्री.), ४. जननी (स्त्री.)।

**भगिन्याः द्वे नामनी–**

१. भगिनी (स्त्री.), २. स्वसा (स्त्री.)।

**पत्युः भगिन्याः एकं नाम–** १. ननन्दा (स्त्री.)।

**सुतस्य सुतायाः वा पुत्र्याः त्रीणि नामानि–**

१. नप्त्री (स्त्री.), २. पौत्री (स्त्री.), ३. सुतात्मजा (स्त्री.)।

**भार्यास्तु भ्रातृवर्गस्य यातरस्युः परस्परम्।**
**प्रजावती भ्रातृजाया मातुलानी तु मातुली।।**
**पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः।**
**पितुर्भ्राता पितृव्यः स्यात् मातुर्भ्राता तु मातुलः।।**
**श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ।**
**स्वस्रीयो भागिनेयः स्यात् जामाता दुहितुः पतिः।।**
**पितामहः पितुःपिता तत्पिता प्रपितामहः।**
**मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः।।**

**परस्परं भ्रातृभार्याणाम् एकं नाम–** १. याता (स्त्री.)।

**भ्रातुः पत्न्याः द्वे नामनी–** १. प्रजावती(स्त्री.), २. भ्रातृजाया (स्त्री.)।

**मातुलभार्यायाः द्वे नामनी–** १. मातुलानी (स्त्री.), २. मातुली (स्त्री.)।

**पतिपत्न्योः मातुः एकं नाम–** १. श्वश्रूः (स्त्री.)।

**पत्युः पत्न्याः वा पितुः नाम–** १. श्वशुरः(पु.)।

**पितुःभ्रातुः एकं नाम–** १. पितृव्यः (पु.)।

**मातुः भ्रातुः एकं नाम–** १. मातुलः(पु.)।

**पत्न्याः भ्रातुः एकं नाम–** १. श्यालः (पु.)।

**पत्युः कनिष्ठभ्रातुः द्वे नामनी–** १. देवा (देवृ.पु.), २. देवरः (पु.)।

**भगिन्याः पुत्रस्य द्वे नामनी–** १.स्वस्रीयः(पु.), २. भागिनेयः (पु.)।

**दुहितुः पत्युः एकं नाम–** १. जामाता(पु.)।

**पितुः पितुः द्वे नामनी–** १. पितामहः (पु.), पितुःपिता (पु.)।

**पितामहस्य पितुः एकं नाम–** प्रपितामहः (पु.)।
**मातुः पितुः एकं नाम–** १. मातामहः (पु.)।
**मातामहस्य पितुः एकं नाम–** प्रमातामहः(पु.)।
**सप्तपुरुषावधिज्ञातिनां द्वे नामनी–** १. सपिण्डः(पु.), २. सनाभिः (पु.)।

**समानोदर्यसोदर्यसगर्भ्यसहजाः समाः।**
**सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः।।**

**एकादरोत्पन्नभ्रातुः चत्वारि नामानि–**
१. समानोदर्यः (पु.), २. सोदर्यः (पु.), ३. सगर्भ्यः (पु.), ४. सहजः (पु.)।
(एकादरोत्पन्नभगिन्याः चत्वारि नामानि– १. समानोदर्या(स्त्री.), २. सोदर्या (स्त्री.), ३. सगर्भ्या (स्त्री.), ४. सहजा (स्त्री.))।

**सगोत्रस्य ( बिरादरी इति भाषायाम् ) जनानां षण्णामानि–**
१. सगोत्रः (पु.), २. बान्धवः (पु.), ३. ज्ञातिः (पु.), ४. बन्धुः (पु.), ५. स्वः (पु.), ६. स्वजनः (पु.)।

**धवः प्रियः पतिर्भर्ता---------।**

**पत्युः चत्वारि नामानि–** १. धवः (पु.), २. प्रियः (पु.), ३. पति : (पु.),४. भर्ता (पु.)।

**जारस्तूपपतिः समौ।**

**मुख्यादन्यस्य पत्युः द्वे नामनी–** १.जारः(पु.), २. उपपतिः (पु.)।

**अमृते जारजः कुण्डः।**

**जिवति पत्यौ जारजातस्य एकं नाम–** १. कुण्डः (पु.),

**मृते भर्तरि गोलकः।**

**विधवायां जारजातस्य एकं नाम–** १. गोलकः (पु.)।

**भ्रात्रीयो भ्रातृजः ।**

**भ्रातृपुत्रस्य द्वे नामनी–** १. भ्रात्रीयः (पु.), २. भ्रातृजः (पु.)।

**भ्रातृभगिन्यौ भ्रातरावुभौ।**

**भ्रातृ-भगिन्योः द्वे नामनी–** १. भ्राता (पु.), २. भगिनी (स्त्री.)।

**मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ।**

**मातापित्रोः त्रीणि नामानि–** १. मातापितरौ (पु.) २. पितरौ (पु.)३. मातरपितरौ(पु.)।

**श्वश्रूश्वशुरौ श्वशुरौ।**

**सहक्तयोः श्वश्रूश्वशुरयोः द्वे नामनी–** १. श्वश्रूश्वशुरौ (पु.), २. श्वशुरौ (पु.)।
**पुत्रौ पुत्रश्च दुहिता च।**
**पुत्र-कन्ययोः एकं नाम–** १. पुत्रौ (पु.)।

**दंपती जंपती जायापती भार्यापती च तौ।**

**पत्नीपत्योः चत्वारि नामानि–** १. दंपती (पु.), २. जंपती (पु.), ३. जायापती (पु.), ४. भार्यापती(पु.)।

**गर्भाशयो जरायुः स्यात्।**

**गर्भवेष्ठनचर्मणः द्वे नामनी–** १. गर्भाशयः (पु.), २. जरायुः (पु.)।

**गर्भो भ्रूण इमौ समौ।**

**कुक्षिस्थगर्भस्य द्वे नामनी**– १. गर्भः (पु.), २. भ्रूणः (पु.)।

**तृतीया प्रकृतिः शण्ढः क्लीवः षण्डो नपुंसकम्।**

**नपुंसकस्य पञ्च नामानि**–

१. तृतीयप्रकृतिः (स्त्री.), २. शण्ढः (पु.), ३. क्लीवः (पु.), ४. षण्डः ५. नपुंसकम् (नपु.) ।

**शिशुत्वं शैशवं बाल्यम्।**

**बाल्यत्वे त्रीणि नामानि**– १. शिशुत्वम् (नपु.), २. शैशवम् (नपु.), ३. बाल्यम् (नपु.)।

**तारुण्यं यौवनं समे।**

**तारुण्यस्य द्वे नामनी**– १. तारुण्यम् (नपु.), २. यौवनम्(नपु.)।

**स्यात्स्थाविरं तु वृद्धत्वम्।**

**वृद्धत्वस्य द्वे नामनी**– १.स्थाविरम् (नपु.), २. वृद्धत्वम् (नपु.)।

**वृद्धसंघेऽपि वार्धकम्।**

**वृद्धसमूहस्य द्वे नामनी**– १.वृद्धसंघः(पु.), २. वार्धकम् (नपु.),।

**बालस्तु स्यान्माणवकः।**

**बालस्य द्वे नामनी**– १. बालः (पु.),२.माणवकः(पु.)।

**वयस्थस्तरुणो युवा।**

**यूनः त्रीणि नामानि**– १. वयस्थः (पु.), २. तरुणः (पु.), ३. युवा (पु.)।

**प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि।४२।।**

**वृद्धस्य षण्णामानि**–

१. प्रवयः (पु.), २. स्थविरः(पु.), ३. वृद्धः(पु.), ४.जीनः(पु.), ५. जीर्णः(पु.), ६. जरा (पु.),।

**वर्षीयान्दशमी ज्यायान्।**

**अतिवृद्धस्य त्रीणि नामानि**– १. वर्षीयान् (पु.), २. दशमी (पु.), ३. ज्यायान् (पु.),।

**पूर्वजस्त्वग्रियोऽग्रजः।**

**ज्येष्ठभ्रातुः त्रीणि नामानि**– १. पूर्वजः(पु.), २. अग्रियः (पु.), ३. अग्रजः (पु.)।

**जघन्येजे स्युः कनिष्ठयवीयोऽवरजानुजाः।**

**कनिष्ठभ्रातुः पञ्च नामानि**–

१.जघन्येजे (पु.), २. कनिष्ठः (पु.), ३. यवीयः(पु.), ४. अवरजः (पु.),५. अनुजः(पु.)।

**अमांसो दुर्वलश्छातः।**

**निर्वलस्य त्रीणि नामानि**– १. अमांसः (पु.), २. दुर्वलः (पु.), ३. छातः (पु.)।

**बलवान्मासंलोंऽसलः।**

**बलवतः त्रीणि नामानि**–१. बलवान् (पु.), २. मासंलों (पु.), ३. असलः (पु.), ।

**तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः।**

**स्थूलोदरस्य पञ्च नामानि**–

१. तुन्दिलः (पु.), २. तुन्दिकः (पु.), ३. तुन्दी (पु.), ४. बृहत्कुक्षिः (पु.), ५. पिचिण्डिलः (पु.)।

**अवटीटोऽवनाटश्चावभ्रटो नतनासिके।**

**चिपिटनासस्य त्रीणि नामानि**–

**१.** अवटीटः(पु.)/ अवटीटा (स्त्री.)/अवटीटम् (नपु.) २.अवनाटः (पु.) /अवनाटा (स्त्री.)/अवनाटम्

(नपु.) ३.अवभ्रटः (पु.)/अवभ्रटा (स्त्री.)/अवभ्रटम् (नपु.)।

**केशवः केशिकः केशी।**

**प्रशस्तकेशस्य त्रीणि नामानि**– १. केशवः(पु.)२. केशिकः(पु.)३. केशी(पु.)।

**बलिनो बलिभः समौ।**

**श्लथचर्मवतः द्वे नामनी**– १.बलिनः (पु.),२.बलिभः (पु.)।

**विकलाङ्गस्तु पोगण्डः।**

**स्वभावन्यूनाधिकाङ्गस्य द्वे नामनी**– १. विकलाङ्गः(पु.) २. पोगण्डः(पु.)।

**खर्वो ह्रस्वश्च वामनः।**

**वामनस्य त्रीणि नामानि**– **१.**खर्वः (पु.), २. ह्रस्वः (पु.), ३. वामनः(पु.)।

**स्यादेडे बधिरः।**

**श्रवणशक्तिहीनस्य द्वे नामनी**– १. एडः(पु.), २. बधिरः(पु.)।

**कुब्जे गडुलः।**

**कुब्जस्य द्वे नामनी**– १. कुब्जः (पु.), २. गडुलः(पु.)।

**कुकरे कुणिः।**

**रोगादिना वक्रकरस्य द्वे नामनी**– १. कुकरः (पु.),२. कुणिः (पु.)।

**पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते।**

**अल्पशरीरस्य द्वे नामनी**– १. पृश्निः(पु.), २. अल्पतनुः(पु.)।

**जङ्घाहीनस्य द्वे नामनी**– १. श्रोणः (पु.), २. पङ्गुः(पु.),।

**खण्डितकेशस्य द्वे नामनी**– १. मुण्डः (पु.), २. मुण्डितः(पु.)।

**भेषजौषधभैषज्यान्यगदो जायुरित्यपि।**

**औषधस्य पञ्च नामानि**–१.भेषजः(पु.)२.औषधम्(नपु.),३.भैषज्यम् (नपु.)४.गदः(पु.)५.जायुः (पु.)।

**स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः।**

**रोगस्य सप्त नामानि**– १. रुक् (स्त्री.), २.रुजा (स्त्री.), ३. उपतापः(पु.), ४. रोगः(पु.),
५.व्याधिः(पु.), ६. गद (पु.), ७. आमयः(पु.)।

**क्षयः शोषश्च यक्ष्मा च प्रतिश्यायस्तु पीनसः।**

**स्त्री क्षुत् क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान्।**

**शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका।**

**राजयक्ष्मणः त्रीणि नामानि**– १. क्षयः (पु.), २. शोषः(पु.), ३. यक्ष्मा (पु.)।

**नासारोगस्य द्वे नामनी**– १. प्रतिश्यायः (पु.),२.पीनसः (पु.)।

**छिक्कायाः त्रीणि नामानि**– १. क्षुत् (स्त्री.), २. क्षुतम् (नपु.), ३. क्षवः (पु.)।

**काशरोगस्य द्वे नामनी**– १. कासः (पु.), २. क्षवथुः (पु.)।

**शोथस्य त्रीणि नामानि**– १. शोफः (पु.), २.श्वयथुः(पु.), ३. शोथः(पु.)।

**पादस्फोटस्य द्वे नामनी**– १. पादस्फोटः (पु.), २. विपादिका(स्त्री.), ।

**कण्डूः खर्जूश्च कण्डूया।**

**गात्रविघर्षणस्य** (खूजली इति भाषायां)**त्रीणि नामानि**–१. कण्डूः(स्त्री.)२. खर्जूः(स्त्री.), ३. कण्डूया (स्त्री.),।

**प्रच्छार्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः।**

**वमनस्य त्रीणि नामानि**– १. प्रच्छार्दिका (स्त्री.), २. वमिः (स्त्री.),३. वमथुः (पु.)।

**वार्तो निरामयः कल्प उल्लाघो निर्गतो गदात्।**

**रोगनिर्मुक्तस्य चत्वारि नामानि**– १. वार्तः(पु.), २.निरामयः(पु.), ३.कल्पः (पु.), ४.उल्लाघः(पु.)।

**आमयावी विकृतो व्याधितोऽपटुः। आतुरोऽभ्यमितोऽभ्यान्तः----।**

**रोगिणः सप्त नामानि**–

१. आमयावी(पु.), २.विकृतः (पु.), ३. व्याधितः (पु.),४. अपटुः (पु.), ५. आतुरः (पु.), ६.अभ्यमितः (पु.), ७.अभ्यान्तः (पु.)।

**वातकी वातरोगी स्यात्।**

**वातरोगिणः द्वे नामनी**– १. वातकी (पु.), २.वातरोगी (पु.)।

**श्लेष्मलः श लेष्मणः कफी।**

**कफवतः त्रीणि नामानि**– १. श्लेष्मलः (पु.), २.श्लेष्मणः(पु.), ३.कफी (पु.)।

**शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च।**

**रेतसः षण्णामानि**– १. शुक्रं (नपु.) २.तेजः (नपु.) ३.रेतः (नपु.) ४.बीजम् (नपु.) ५.वीर्यम् (नपु.) ६ इन्द्रियम्।

**पिशितं तरसं मांसं पललं क्रव्यमामिषम्।**

**मांसस्य षण्णामानि**– १. पिशितम् (नपु.), २.तरसम् (नपु.),३.मांसम् (नपु.),४. पललम् (नपु.),५.क्रव्यम् (नपु.),६. आमिषम्(नपु.),।

**रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजश्रोणितम्।**

**रक्तस्य सप्त नामानि**–

१.रुधिरम् (नपु.),२.असृग् (नपु.),३.लोहितम् (नपु.),४.अस्रम्, (नपु.),५.रक्तम्, (नपु.),६. क्षतजम् (नपु.), ७. श्रोणितम् (नपु.)।

**नाडी तु धमनिः सिरा।**

**धमन्याः त्रीणि नामानि**– १.नाडी (स्त्री.), २. धमनिः(स्त्री.), ३. सिरा(स्त्री.)।

**मस्तिष्कं गोर्दम्।**

**मस्तकमवस्त्रेहस्य द्वे नामनी**– १.मस्तिष्कम् (नपु.), २. गोर्दम्(नपु.)।

**अन्त्रं पुरीतत् गुल्मस्तु प्लीहा पुंसि।**

**आन्त इत्यस्य द्वे नामनी**– १.अन्त्रम् (नपु.), २.पुरीतत् (नपु.)।

**कुक्षिवामपार्श्वस्थ-मांसखण्डस्य द्वे नामनी– १.**गुल्मः (पु.), २.प्लीहा (पु.)।

**कालखण्डयकृती तु समे इमे ।**

**कुक्षिदक्षिणपार्श्वस्थ-मांसखण्डस्य** (कलेजा) **द्वे नामनी**– १. कालखण्डम् (नपु.), २.यकृतम् (नपु.),।

**सृणिका स्यन्दिनी लाला, दूषिका नेत्रयोर्मलम्। मूत्रं प्रस्रावः, उच्चारावस्करी शमलं शकृत्।**

**गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविषौ स्त्रियौ।**

**लाला इत्यस्य त्रीणि नामानि**– १. सृणिका (स्त्री.), २. स्यन्दिनी (स्त्री.), ३. लाला (स्त्री.)।

**नेत्रयोर्मलम् एकम्** – १. दूषिका (स्त्री.)।

**मूत्रस्य द्वे नामनी**– १. मूत्रम् (नपु.)२. प्रस्रावः (पु.)।

**मलस्य नव नामानि**–

१. उच्चारः (पु.), २. अवस्करी (स्त्री.), ३. शमलम् (नपु.), ४. शकृत्(नपु.), ५. गूथम् (नपु.), ६. पुरीषम् (नपु.), ७. वर्चस्कम् (नपु.), ८.विष्ठा (स्त्री.), ९. विषः (पु.)।

**स्यात्कर्परः कपालोऽस्त्री, कीकसं कुल्यमस्थि च।**

**शिरोस्थिखण्डस्य द्वे नामनी–** १. कर्परः (पु.), २.कपालः(पु.)।

**अस्थिमात्रस्य त्रीणि नामानि–** १. कीकसम् (नपु.),२. कुल्यम् (नपु.),३.अस्थि(नपु.)।

**शिरोस्थनि करोटिः स्त्री, पार्श्वस्थनि तु पर्शुका।**

**मस्तकास्थ्नः द्वे नामनी–** १. शिरोस्थनि(स्त्री.), २.करोटिः(स्त्री.)।

**पार्श्वास्थ्नः एकं नाम–**१.पर्शुका(स्त्री.)।

**अङ्गं प्रतीकोऽवयवोऽपघनः।**

**देहावयवस्य नामानि चत्वारि–**१. अङ्गम् (नपु.)२. प्रतीकः (पु.)३. अवयवः (पु.)४. अपघनः (पु.)।

**अथ कलेवरम्। गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः।**

**कायो देहः क्लीवपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः।**

**देहस्य एकादश नामानि–**

१.कलेवरम् (नपु.), २. गात्रम् (नपु.), ३. वपुः(नपु.), ४. संहननम् (नपु.), ५. शरीरम्(नपु.), ६. वर्ष्म (नपु.), ७. विग्रहः(पु.), ८. कायः (पु.), ९. देहः (पु.), १०. मूर्तिः(स्त्री.)११. तनुः / तनूः (स्त्री.)।

**पादाग्रं प्रपदं पादः पदं घ्रिश्चरणोऽस्त्रियाम्।**

**पादाग्रस्य द्वे नामानि–** १. पादाग्रम् (नपु.),२. प्रपदम् (नपु.)।

**चरणस्य चत्वारि नामानि–** १. पादः (पु.), २. पदम् (नपु.), ३. अंघ्रः(पु.), ४. चरणम् (नपु.)।

**तद्ग्रन्थी घुटिके गुल्फौ, पुमान्पार्ष्णिस्तयोरधः।**

**पादग्रन्थ्योः द्वे नामनी– १.** घुटिका (स्त्री.), २.गुल्फः (पु.)।

**पादपश्चाद्भागस्य एकं नाम–** १. पार्ष्णिः (पु.)।

**जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम्।**

**जङ्घायाः द्वे नामनी–** १. जङ्घा (स्त्री.), २. प्रसृता (स्त्री.)।

**जानूरुसन्धेः त्रीणि नामानि–** १.जानुः(नपु.), २. ऊरुः (नपु.), ३. पर्वाष्ठीवद् (नपु.)।

**सक्थि क्लीवे पुमानूरुः।**

**जानूपरिभागस्य द्वे नामनी–** १.सक्थि (नपु.), २. ऊरुः(पु.)।

**गुदं त्वपानं पायुर्ना।**

**मलनिर्गममार्गस्य त्रीणि नामानि–** १. गुदम् (नपु.), २. अपानम् (नपु.), ३. पायुः(नपु.),।

**कटो ना श्रोणिफलकम्।**

कटी**फलकस्य द्वे नामनी–** १. कटी (पु.), २. श्रोणिफलकम् (नपु.)।

**कटिः श्रोणिः ककुद्मती।**

**कटेः त्रीणि नामानि–** १. कटिः (पु.), २. श्रोणिः (पु.), ३. ककुद्मती (स्त्री.)।।

**पश्चान्नितम्बः स्त्रीकट्याः।**

**स्त्रीकट्याः पश्चाद्भागस्य एकं नाम–** १. नितम्बः(पु.)।

**पिचण्डकुक्षी जठरोदरं तुन्दम्।**

**उदरस्य पञ्च नामानि-**

१.पिचण्डः (पु.), २. कुक्षी (पु.), ३. जठरम् (नपु.), ४. उदरम् (नपु.), ५.तुन्दम् (नपु.)।

**स्तनौ कुचौ चूचुकं तु कुचाग्रं स्यात् न ना क्रोडं भुजान्तरम्।**

**वक्षोजस्य द्वे नामनी-** १. स्तनौ (पु.), २. कुचौ (पु.)।

**स्तनाग्रस्य द्वे नामनी-** १. चूचुकम् (नपु.) २. कुचाग्रम् (नपु.)।

**अङ्कस्य द्वे नामनी-** १. क्रोडम् (नपु.), २. भुजान्तरम् (नपु.)।

**उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः।**

**उरसः त्रीणि नामानि- १.** उरः (नपु.), **२. वत्सम्** (नपु.)**, ३. वक्षः**(नपु.)।

**देहपश्चाद्भागस्य एकं नाम-** १. पृष्ठम् (नपु.)।

**स्कन्धो भुजशिरोंऽसोऽस्त्री।**

**स्कन्धस्य त्रीणि नामानि-** १. स्कन्धः (पु.), २. भुजशिरः (नपु.), ३. अंसः(नपु.)।

**बाहुमूले उभे कक्षौ।**

**कक्षस्य द्वे नामनी-** १. बाहुमूले (नपु.), २. कक्षौ (पु.)।

**मध्यमं चावलग्नं च मध्योऽस्त्री।**

**देहमध्यस्य त्रीणि नामानि-** १. मध्यमम् (नपु.), २. अवलग्नम् (नपु.), ३. मध्यम् (नपु.)।

**भुजबाहू प्रवेष्ठो दोः स्यात्, कफोणिस्तु कूर्परः।**

**भुजस्य चत्वारि नामानि-** १.भुजः(पु.), २.बाहुः (पु.),३. प्रवेष्ठः (पु.),४. दोः(पु.)।

**कूणी**(भुजमध्य)**इत्यस्य द्वे नामनी-** १. कफोणिः(पु.),२. कूर्परः (पु.)।

**अस्योपरि प्रगण्डः स्यात्, प्रकोष्ठस्तस्य चास्यधः।**

**कूर्परोपरिभागस्य एकं नाम-** १. प्रगण्डः (पु.)।

**कफोणेरधो मणिबन्धपर्यन्त-भागस्य एकं नाम-** १. प्रकोष्ठः (पु.)।

**मणिबन्धादाकनिष्ठं करस्य करभो बहिः।**

**करबहिर्भागस्य एकं नाम-** १. करभः (पु.)।

**पञ्चशाखः शयः पाणिः, तर्जनी स्यात्प्रदेशनी।**

**हस्तस्य त्रीणि नामानि-** १. पञ्चशाखः(पु.), २. शयः (पु.), ३. पाणिः(पु.)।

**अङ्गुष्ठसमीपाङ्गुल्याः द्वे नामनी-** १. तर्जनी (स्त्री.),२. प्रदेशनी (स्त्री.)।

**अङ्गुल्यः करशाखाः स्युः।**

**अङ्गुलीमात्रस्य द्वे नामनी-** १. अङ्गुली (स्त्री.), २. करशाखा (स्त्री.)।

**पुंस्यङ्गुष्ठः प्रदेशिनी, मध्यमानामिका चापिकनिष्ठा चेति ताः क्रमात्।**

**अङ्गुलीनां क्रमेण एकैकं नाम-** १. अङ्गुष्ठः (पु.),२. (तर्जनी)स्त्री., ३. मध्यमा(स्त्री.),४. अनामिका (स्त्री.), ५. कनिष्ठा(स्त्री.)।

**पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्।**

**नखस्य चत्वारि नामानि-** १. पुनर्भवः(पु.), २. कररुहः(पु.), ३. नखः(पु.), ४.नखरः(पु.)।

**कण्ठो गलः।**

**ग्रीवाग्रभागस्य द्वे नामनी**- १. कण्ठः (पु.),२.गलः(पु.)।

**वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्।**

**मुखविलस्य सप्त नामानि**-

१. वक्त्रम् (नपु.),२. आस्यम् (नपु.),३. वदनम् (नपु.),४. तुण्डम् (नपु.),५. आननम् (नपु.),६. लपनम् (नपु.),७.मुखम्(नपु.)।

**क्लीवे घ्राणं गन्धवहा घोणा नासा च नासिका।**

**नासिकायाः पञ्च नामानि**-

१. घ्राणम् (नपु.), २. गन्धवहा (स्त्री.), ३. घोणा (स्त्री.),४. नासा (स्त्री.), ५.नासिका (स्त्री.)।

**ओष्ठाधरौ तु रदनच्छदो दशनवाससी।**

**उत्तराधरोष्ठमात्रस्य चत्वारि नामानि**-

१. ओष्ठः (पु.), २. अधरः (पु.), ३. रदनच्छदः (पु.),४. दशनवाससी (पु.),।

**अधस्ताच्चिवुकम्।**

**ओष्ठोधोभागस्य एकं नाम**- १. चिवुकम्(नपु.), ।

**गण्डौ कपोलौ।**

**कपोलस्य द्वे नामनी**- १. गण्डः (पु.), २. कपोलः(पु.)।

**तत्परो हनुः।**

**कपोलाधोभागस्य एकं नाम**- १. हनुः(पु.)।

**रदना दशना दन्ताः रदाः।**

**दन्तस्य चत्वारि नामानि**- १. रदनः (पु.), २. दशनः (पु.), ३. दन्तः (पु.), ४. रदः(पु.), ।

**तालु तु काकुदम्।**

**तालुनः द्वे नामनी**- १. तालु (नपु.), २. काकुदम् (नपु.)।

**रसज्ञा रसना जिह्वा।**

**जिह्वायाः त्रीणि नामानि**- १. रसज्ञा (स्त्री.), २. रसना(स्त्री.), ३.जिह्वा(स्त्री.),।

**प्रान्तोष्ठस्य सृक्कणी।**

**ओष्ठप्रान्तयोः एकं नाम**- १. सृक्कणी (स्त्री.)।

**ललाटमलिकं गोधिः।**

**भालस्य त्रीणि नामानि**- १. ललाटम् (नपु.), २. अलिकम् (नपु.),३. गोधिः(पु.)।

**ऊर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ, कूर्चमस्त्री भ्रुवोर्मध्यम्।**

**नेत्रोपरिभागस्य रोमराजेः एकं नाम**- १. भ्रुवः(पु.)।

**नासोपरिभ्रूद्वयमध्यस्य एकं नाम**- १. कूर्चम् (नपु.)।

**लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी दृग्दृष्टी च।**

**नेत्रस्य अष्टौ नामानि**- १. लोचनम् (नपु.),२. नयनम् (नपु.), ३. नेत्रम् (नपु.),४. ईक्षणम् (नपु.), ५. चक्षुः(नपु.), ६. अक्षि(नपु.), ७. दृक्(स्त्री.), ८. दृष्टिः(स्त्री.)।

**अम्बु नेत्राम्बु रोदनं चास्रमश्रु च।**

**नेत्रोदकस्य पञ्च नामानि**-

१. अम्बु (नपु.), २. नेत्राम्बु (नपु.), ३.रोदनम् (नपु.), ४.अस्रम् (नपु.), ५. अश्रु (नपु.)।

**अपाङ्गौ नेत्रयोरन्तौ।**

**नेत्रप्रान्तयोः एकं नाम**-१. अपाङ्गः(पु.)।

**कटाक्षोऽपाङ्गदर्शने।**

**कटाक्षस्य द्वे नामनी**- १. कटाक्षः(पु.) २. अपाङ्गदर्शनम् (नपु.)।

**कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः।**

**कर्णस्य षण्णामानि**-

१. कर्णः (पु.), २. शब्दग्रहः (पु.), ३. श्रोत्रम् (नपु.), ४. श्रुतिः(स्त्री.) ५. श्रवणम् (नपु.), ६. श्रवः (नपु.)।

**उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकेऽस्त्रियाम्।**

**मस्तकस्य पञ्च नामानि**- १. उत्तमाङ्गम् (नपु.), २. शिरः (नपु.), ३. शीर्षम् (नपु.), ४. मूर्धा (नपु.), ५. मस्तकः (पु.)।

**चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः।**

**केशस्य षण्णामानि**-

१. चिकुरः (पु.), २. कुन्तलः (पु.), ३. बालः (पु.), ४. कचः (पु.), ५. केशः (पु.), ६. शिरोरुहः(पु.)।

**तद् वृन्दे कैशिकं कैश्यम्।**

**केशवृन्दस्य द्वे नामनी**- १. कैशिकम् (नपु.), २. कैश्यम् (नपु.)।

**अलकाश्चूर्णकुन्तलाः।**

**कुटिलकेशानां द्वे नामनी**- १. अलकाः (स्त्री.), २.चूर्णकुन्तलाः (पु.)।

**ते ललाटे भ्रमरकाः।**

**ललाटगतकेशानाम् एकं नाम**- १. भ्रमरकः (पु.)।

**काकपक्षः शिखण्डिकः।**

**बालानां शिखायाः द्वे नामनी**- १.काकपक्षः (पु.), २. शिखण्डिकः(पु.)।

**कवरी केशवेशः।**

**केशबन्धरचनायाः द्वे नामनी**- १. कवरी (पु.), २. केशवेशः(पु.)।

**अथ धम्मिल्लः संयताः केशाः।**

**चूडा इत्यस्य एकं नाम**- १. धमिल्लः (पु.)।

**शिखा चूडा केशपाशी।**

**शिरोमध्यस्थचूडायाः**(चोटी) **त्रीणि नामानि**- १. शिखा (स्त्री.),२. चूडा(स्त्री.),३. केशपाशी(स्त्री.)।

**व्रतिनस्तु जटा सटा।**

**व्रतिनः शिखायाः द्वे नामनी**- १. जटा (स्त्री.), २. सटा(स्त्री.)।

**वेणीप्रवेणी।**

**प्रोषितभर्तृकादिधार्यकेशरचनाविशेषस्य द्वे नामनी**- १. वेणी (स्त्री.), २. प्रवेणी (स्त्री.)।

**पाशः पक्षः हस्तश्च कलापार्थाः कचात्परे।**

**कलापार्थस्य त्रीणि नामानि**- १. पाशः (पु.), २. पक्षः(पु.), ३. हस्तः(पु.)।

**तनूरुहं रोम लोम।**

**रोम्णः त्रीणि नामानि**– १. तनूरुहम् (नपु.), २. रोम (नपु.), ३. लोम(नपु.)।

**तद् वृद्धौ श्मश्रु पुंमुखे।**

**पुरुषस्य दाढिकायाः एकं नाम**– १. श्मश्रु (नपु.)।

**आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्।**

**अलङ्काररचनादिकृतशोभायाः पञ्च नामानि**–

१. आकल्पः (पु.), २. वेषः (पु.), ३. नेपथ्यम् (नपु.), ४. प्रतिकर्म (नपु.), ५. प्रसाधनम् (नपु.)।

**अलङ्कर्तालङ्करिष्णुश्च।**

**अलङ्करणशीलस्य द्वे नामानि**– १. अलङ्कर्ता (पु.), २. अलङ्करिष्णुः(पु.)।

**मण्डितः प्रसाधितोऽलङ्कृतश्च भूषितश्च परिष्कृतः।**

**भूषितस्य पञ्च नामानि**–

१. मण्डितः (पु.), २. प्रसाधितः(पु.), ३. अलङ्कृतः(पु.), ४. भूषितः(पु.), ५.परिष्कृतः(पु.)।

**विभ्राड् भ्राजिष्णुरोचिष्णू**

**अलङ्कारादिना शोभमानस्य त्रीणि नामानि**–

१. विभ्राड् (पु.), २. भ्राजिष्णुः (पु.), ३. रोचिष्णुः (पु.)।

**भूषा तु स्यादलंक्रिया।**

**भूषणक्रियायाः द्वे नामनी**– १. भूषा (स्त्री.), २. अलंक्रिया (स्त्री.)।

**अलङ्कारस्त्वाभरणं परिष्कारो विभूषणं मण्डनञ्च।**

**भूषणानां नामानि पञ्च**–

१.अलङ्कारः(पु.),२. आभरणम्(नपु.),३. परिष्कारः(पु.),४. विभूषणम् (नपु.),५.मण्डनम् (नपु.)।

**अथ मुकुटं किरीटं पुंनपुंसकम्।**

**मुकुटस्य द्वे नामनी**– १. मुकुटम् (नपु.),२. किरीटम् (नपु.)।

**चूडामणिः शिरोरत्नम्।**

**शिरोमणेः द्वे नामनी**– १. चूडामणिः(पु.), २. शिरोरत्नम् (नपु.)।

**कर्णिका तालपत्रं स्यात्।**

**कर्णाभरणस्य द्वे नामनी**– १. कर्णिका (स्त्री.), २. तालपत्रम् (नपु.)।

**पत्त्रपाश्या ललाटिका।**

**ललाटाभरणस्य द्वे नामनी**– १. पत्त्रपाश्या (स्त्री.), २. ललाटिका (स्त्री.)।

**कुण्डलं कर्णवेष्टनम्।**

**कुण्डल द्वे नामनी**– १. कुण्डलम् (नपु.), २. कर्णवेष्टनम् (नपु.)।

**ग्रैवेयकं कण्ठभूषा।**

**कण्ठाभरणस्य द्वे नामनी**– १. ग्रैवेयकम् (नपु.), २. कण्ठभूषा (स्त्री.)।

**आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्।**

**प्रकोष्ठाभरणस्य चत्वारि नामानि**–

१. आवापकः (पु.), २. पारिहार्यः (पु.), ३. कटकः (पु.), ४. वलयः (पु.),।

**केयूरमङ्गदं तुल्ये।**

**प्रगण्डभूषणस्य द्वे नामनी**– १. केयूरम् (नपु.), २. अङ्गदम् (नपु.)।

**अङ्गुलीयकमूर्मिका।**

**अङ्गुलीभूषणस्य द्वे नामनी**- १. अङ्गुलीयकम् (नपु.), २. ऊर्मिका (स्त्री.)।

**स्त्रीकटयां मेखला काञ्ची सप्तकी रशना तथा क्लीवे सारसनं च।**

**स्त्रीकटिभूषणस्य पञ्च नामानि**-

१. मेखला (स्त्री.), २. काञ्ची (स्त्री.), ३. सप्तकी (स्त्री.),४. रशना (स्त्री.), ५. सारसनम् (नपु.)

कङ्कणं करभूषणम्।

मणिबन्धस्य द्वे नामनी- १. कङ्कणम् (नपु.), २. करभूषणम्, (नपु.)।

**पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्। हंसकः पादकटकः।**

**नूपुरस्य षण्णामानि**-

१. पादाङ्गदम् (नपु.), २. तुलाकोटिः (पु.), ३. मञ्जीरः(पु.), ४. नूपुरः (पु.) ५. हंसकः (पु.) ६. पादकटकः(पु.)।

**किङ्किणी क्षुद्रघण्टिका।**

**क्षुद्रघण्टिकायाः**(घुघुरा)**द्वे नामनी**- १. किङ्किणी (स्त्री.), २. क्षुद्रघण्टिका (स्त्री.)।

**वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम्।**

**वस्त्रस्य षण्णामानि**-

१. वस्त्रम् (नपु.), २. आच्छादनम् (नपु.), ३. वासः (पु.), ४. चेलम् (नपु.), ५. वसनम् (नपु.), ६. अंशुकम् (नपु.)।

**सुचेलकः पटोऽस्त्री।**

**शोभनवस्त्रस्य द्वे नामानि**- १.सुचेलकः (पु.), २. पटः(पु.)।

**निचोलः प्रच्छदपटः।**

**डोळिकाद्यावरणपटस्य**(बुरका) **द्वे नामनि**- १. निचोलः(पु.), २. प्रच्छदपटः(पु.)।

**समौ रल्लभकम्बलौ।**

**कम्बलस्य द्वे नामनी**- १. रल्लभः (पु.), २. कम्बलः (पु.), / कम्बलम् (नपु.)।

**अन्तरीयोपसंवयानपरिधानान्यधोंशुके।**

**परिधानवस्त्रस्य चत्वारि नामानि**-

१. अन्तरीयः (पु.), २. उपसंवयानम् (नपु.), ३. परिधानम् (नपु.), ४. अधोंशुकम् (नपु.)।

**द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा संव्यानमुत्तरीयं च।**

**उपरिवस्त्रस्य पञ्च नामानि**-

१. प्रावारः (पु.), २. उत्तरासङ्गः (पु.), ३. बृहतिका (स्त्री.)४. संव्यानम् (नपु.), ५.उत्तरीयम् (नपु.)।

**चोलकूर्पासकौ स्त्रियाः।**

**स्त्रीणां कञ्चुलिशाख्यस्य द्वे नामनी**- १. चोलः(पु.), २. कूर्पासकः(पु.)।

**नीशारः स्यात्प्रावरणे हिमानिलनिवारणे।**

**प्रावरणस्य एकं नाम**- १.नीशारः (पु.)। शैत्यवस्त्रम्।

**अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम्।**

**लहङ्गा इत्यस्य एकं नाम**- १. चण्डातकम्(नपु.)।

**दूष्याद्यं वस्त्रवेश्मनि।**

**वस्त्रगृहस्य एकं नाम**- १. दूष्यम् (नपु.)।

**प्रतिसीरा जवनिका स्यात्तिरस्करिणी च।**

**व्यवधानपट्याः** (कनात) **त्रीणि नामानि**-

१.प्रतिसीरा (स्त्री.), २. जवनिका (स्त्री.), ३. तिरस्करिणी(स्त्री.)।

**परिकर्माङ्गसंस्कारः।**

**शरीरशोभाधायककर्मणः द्वे नामनी**- १. परिकर्म (नपु.)२. अङ्गसंस्कारः(पु.)।

**स्यान्मार्ष्टिर्माजना मृजा।**

**प्रोञ्छनादिनाङ्गनिर्मलीकरणस्य त्रीणि नामानि**- १. मार्ष्टिः(स्त्री.) २. र्माजना (स्त्री.)३. मृजा(स्त्री.)।

**उद्वर्तनोत्सादने द्वे समे।**

**सुगन्धद्रव्येणाङ्गनिर्मलीकरणस्य द्वे नामनी**- १. उद्वर्तनम् (नपु.), २. उत्सादनम् (नपु.)।

**आप्लाव आप्लव स्नानम्।**

**स्नानस्य त्रीणि नामानि**- १. आप्लावः (पु.), २. आप्लवः (पु.), ३. स्नानम् (नपु.)।

**चर्चा तु चार्चिक्यं स्थासकः।**

**चन्दनादिना देहविलेपनस्य त्रीणि नामानि**- १. चर्चा (स्त्री.),२. चार्चिक्यम् (नपु.),३. स्थासकः(पु.)।

**तमालपत्रतिलकचित्रकाणि विशेषकम्। द्वितीयं च तुरीयं च न स्यात्।**

**ललाटकृततिलकस्य चत्वारि नामानि**-

१.तमालपत्रम् (नपु.), २. तिलकम् (नपु.),३. चित्रकम् (नपु.), ४. विशेषकम्(नपु.)।

अत्र द्वितीयं तिलकम्, चतुर्थकं विशेषकं च स्त्रियां न भवतः।

**अथ कुङ्कुमम्। काश्मीरजन्माग्निशिखं वरं वाह्लीकपीतनम्।**

**रक्तसंकोचपिशुनं धीरलोहितचन्दनम्।।**

**कङ्कुमस्य एकादश नामानि**-

१. कुङ्कुमम् (नपु.),२. काश्मीरजन्मम् (नपु.), ३. अग्निशिखम् (नपु.),४.वरम् (नपु.),५.वाह्लीक म् (नपु.), ६.पीतनम् (नपु.), ७. रक्तम् (नपु.), ८. संकोचम् (नपु.), ९. पिशुनम् (नपु.), १०. धीरः (पु.),११. लोहितम् (नपु.)।

**प्रोञ्छनादिनाङ्गनिर्मलीकरणस्य त्रीणि नामानि**- १. मार्ष्टिः(स्त्री.) २. र्माजना (स्त्री.)३. मृजा(स्त्री.)।

**उद्वर्तनोत्सादने द्वे समे।**

**राक्षा लाक्षा जतु क्लीवे यावोऽलक्तो द्रुमादयः।**

**लाक्षाः** (महावर) **इत्यस्य षण्णामानि**- १. राक्षा (स्त्री.), २. लाक्षा (स्त्री.), ३. जतु (नपु.) ४. यावः (नपु.)५. अलक्तः(नपु.) ६. द्रुमः(नपु.)।

**लवङ्गं देवकुसुमं श्रीसंज्ञम्।**

**लवङ्गस्य त्रीणि नामानि**-

१. लवङ्गम् (नपु.), २. देवकुसुमम् (नपु.), ३. श्रीसंज्ञम् (नपु.)।

**अथ जायकं कालीयकं च कालानुसार्यं च।**

**सुगन्धद्रव्यभेदस्य त्रीणि नामानि**-

१. जायकम् (नपु.), २. कालीयकम् (नपु.), ३.कालानुसार्यम् (नपु.)।

**यक्षधूपः सर्जरसो रालसर्वरसावपि बहुरूपोऽपि।**

**रालस्य** (सर्वरस) **पञ्च नामानि**-

१. यक्षधूपः (पु.),२. सर्जरसः (पु.),३.रालः (पु.), ४. सर्वरसः (पु.), ५. बहुरूपः(पु.),।

**मृगनाभिर्मृगमदः कस्तूरी च।**

**कस्तूर्या त्रीणि नामानि**– १. मृगनाभिः (पु.), २. मृगमदः (पु.), ३. कस्तूरी (स्त्री.)।

**अथ कर्पूरमस्त्रियाम्।**

**घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका।**

**कर्पूरस्य पञ्च नामानि**–

१. कर्पूरम् (नपु.),२. घनसारः (पु.),३. चन्द्रसंज्ञः (पु.),४. सिताभ्रः(पु.),५.हिमवालुका(स्त्री.)।

**गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्।**

**चन्दनस्य चत्वारि नामानि**–

१. गन्धसारः (पु.), २. मलयजः (पु.), ३. भद्रश्रीः (पु.), ४. चन्दनः(पु.)।

**तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम्। कुचन्दनञ्च।**

**रक्तचन्दनस्य पञ्च नामानि**–

१.तिलपर्णी(स्त्री.),२.पत्राङ्गम्(नपु.),३.रञ्जनम्(नपु.),४. रक्तचन्दनम्(नपु.),५.कुचन्दनम्(नपु.)।

**अथ जातीकोशजातीफले समे।**

**जातीफलस्य** (जाईफल) **द्वे नामनी**– १. जातीकोशम् (नपु.), २. जातीफलम्_(नपु.)।

**उपधानं तूपवर्हः।**

**शिरोनिधानस्य द्वे नामनी**– १.उपधानम् (नपु.), २. उपवर्हः (पु.)।

**मञ्चपर्यङ्कपल्यङ्काः खट्वा समाः।**

**पर्यङ्कस्य चत्वारि नामानि**–

१. मञ्चः (पु.),२. पर्यङ्कः(पु.), ३. पल्यङ्कः(पु.), ४. खट्वा(स्त्री.)।

**गेन्दुकः कन्दुकः।**

**कन्दुकस्य** (गेन्द) **द्वे नामनी**– १. गेन्दुकः (पु.), २. कन्दुकः(पु.)।

**दीपः प्रदीपः।**

**दीपस्य द्वे नामनी**– १. दीपः (पु.), २. प्रदीपः(पु.)।

**पीठमासनम्।**

**आसनस्य द्वे नामनी**– १.पीठम् (नपु.),२. आसनम् (नपु.)।

**समुद्गकः संपुटकः।**

**संपुटस्य द्वे नामनी**– १. समुद्गकः (पु.), २.संपुटकः (पु.)।

**प्रतिग्राहः पतद्ग्रहः।**

**पीकदानी इतिभाषायाम् इत्यस्य द्वे नामनी**– १. प्रतिग्राहः (पु.), २.पतद्ग्रहः(पु.)।

**प्रसाधनी कङ्कतिका।**

**केशमार्जन्याः**(कङ्ही) **द्वे नामनी**– १. प्रसाधनी (स्त्री.), २. कङ्कतिका(स्त्री.)।

**दर्पणे मुकुरादर्शौ।**

**दर्पणस्य त्रीणि नामानि**– १. दर्पणः (पु.), २. मुकुरः (पु.),३. आदर्शः(पु.)।

**व्यजनं तालवृन्तकम्।**

**व्यजनस्य द्वे नामनी**– १.व्यजनम् (नपु.), २. तालवृन्तकम् (नपु.)।

**–इति मनुष्यवर्गः–**

## वस्तुनिष्ठ-प्रश्नाः-

१. मनुष्यस्य नाम विद्यते-

१. प्रमदा, २. मनुजः ३. कन्या ४. स्नुषा ( )

२. पत्न्याः नामास्ति।

१. जाया २. जनी ३. कुमारी ४.चिरण्टी ( )

३. सख्याः पर्यायः विद्यते-

१. कुलटा २. आलिः ३. प्रज्ञा ४. वृद्धा ( )

४. एषु कः स्त्रीलिङ्गशब्दः?

१. वनिता २. कलत्रम् ३.मनुष्यः ४.दाराः ( )

५. आचार्यस्य पत्नी विद्यते।

१. आचार्याणी २. आचार्यानी ३. उपाध्यायी ४.आचार्या ( )

६. वेश्यायाः नाम विद्यते।

१. कान्ता २. प्रसूता ३. गणिका ४. दूती ( )

७. पितृष्वसुः पुत्रस्य नामास्ति।

१. पैतृष्वसेयः २. मातृष्वसेयः ३. कौलटेयः ४. वैमात्रेयः ( )

८.तातः इति नामास्ति।

१. पितृव्यस्य २. पितुः ३. सुतस्य ४. मातुलस्य ( )

९.भगिन्याः नाम विद्यते।

१. आत्मजा २. ननन्दा ३. स्वसा ४. नप्त्री ( )

१०. पति-पत्न्योः मातुः नाम विद्यते-

१. श्वसुरः २. श्वश्रूः ३. मातुली ४. प्रजावती ( )

११. मातुलस्य पत्नी-

१. मातुली २. प्रजावती ३. याता ४.स्वसा ( )

१२. पितुः भ्रातुः-

१. मातुलः २. स्यालः ३. पितृव्यः ४.भ्रातृजः ( )

१३. पितुः पिता-

१. मातामहः २. पितामहः ३. श्वशुरः ४. भ्रात्रीयः ( )

१४.मातुः पिता-

१. मातामहः २. पितामहः ३. श्वशुरः ४. भ्रात्रीयः ( )

१५. दुहितुः पत्युः नाम किम्?

१. जामाता २. भागिनेयः ३. पितृव्यः ४. मातुलः ( )

१६. पत्युः नाम विद्यते।

१.जारः २. देवरः ३. धवः ४. भ्रात्रीयः ( )

१७.वामनस्य नाम विद्यते-

१. पोगण्डः २. खर्वः ३. श्रोणः ४. नरः ( )

१८.गदः इति कस्य नाम-

| | | | | |
|---|---|---|---|---|
| १. रोगस्य | २. औषधस्य | ३. नासारोगस्य | ४.काशरोगस्य | ( ) |

१९. नखस्य नाम किम्?

| | | | | |
|---|---|---|---|---|
| १. कररुहः | २. पञ्चशाखः | ३. उरः | ४. पाणिः | ( ) |

२०.पुरुषस्य दाढिकायाः नाम विद्यते।

| | | | | |
|---|---|---|---|---|
| १. वीरकेशः | २.श्मश्रु | ३. केशः | ४. प्रसाधनम् | ( ) |

२१. योषित् इति पदस्य अर्थोऽस्ति।

| | | | | |
|---|---|---|---|---|
| १. वरवर्णिनी | २. अङ्गना | ३. स्त्री | ४.कोपना | ( ) |

## २२. अर्थ-भेदः प्रदर्शनीयः-

(क) पत्नी-पुरन्ध्री

(ख)आचार्या-आचार्यानी

(ग)उपाध्याया-उपाध्यानी

(घ)अवीरा-विधवा

(ङ) वामा-रामा

(च)सहधर्मिणी-पतिव्रता

(छ)संचारिका-वयस्या

(ज)तनयः-अपत्यम्

(झ)ननन्दा-प्रजावती

(ञ)नप्त्री-पौत्री

(ट)भर्ता-जारः

(ठ)अनुजः-अग्रजः

(ड)कुणिः-पङ्गुः

(ढ)यक्ष्मा-कासः

(ण)प्रकोष्ठः-करभः

(त)कपोलः-हनुः

(थ)श्रवः-चिकुरः

(द)ग्रैवेयकं-कुण्डलम्

(ध)ऊर्मिका-मेखला

(न)भ्रुवः-चक्षुः

## २३. अतिलघूत्तरात्मक-प्रश्नाः-

(क)स्त्रियः कति नामानि?

(ख)मनुष्यस्य कति नामानि?

(ग)सख्याः कति नामानि?

(घ) बुद्धिमतीस्त्रियः नामद्वयं लिखत।

(ङ)शूद्रजातीयायाः स्त्रियः एकं नाम किम्?

(च) आचार्यस्य स्त्रियः नाम किम्?
(छ) वैश्यपत्न्याः नाम किम्?
(ज) वेश्यायाः कति नामानि?

**२४. निबन्धात्मक-प्रश्नाः-**

(क) मनुष्यस्य नामानि कति? तेषु पञ्च नामानि लेख्यानि।
(ख) स्त्रियः कति नामानि? तेषु सप्त नामानि लिखत।
(ग) पतिसेवातत्परायाः स्त्रियः नामानि लेखनीयानि।
(घ) स्वैरिण्याः स्त्रियः नामानि लिखत।
(ङ) पितुः नामानि लेख्यानि।
(च) भ्रातुः चत्वारि नामानि कानि?
(छ) मातापित्रोः त्रीणि नामानि लिखत।
(ज) पति-पत्न्योः चत्वारि नामानि लेख्यानि।
(झ) बृद्धस्य पञ्च नामानि लिखत।
(ञ) कनिष्ठभ्रातुः पञ्च नामानि लिखत।
(ट) रोगस्य सप्त नामानि लेख्यानि।
(ठ) रक्तस्य पञ्च नामानि लिखत।
(ड) देहस्य कति नामानि? तेषु सप्त नामानि लिखत।
(ढ) अङ्गुलीनां नामानि लेखनीयानि।
(ण) नेत्रस्य कति नामानि? तेषु सप्त नामानि लिखत।
(त) नेत्रोदकस्य पञ्च नामानि लिखत।
(थ) भूषितस्य पञ्च नामानि लिखत।
(द) नूपुरस्य षण्णामानि लिखत।
(ध) वस्त्रस्य षण्णामानि लिखत।
(न) परिधानवस्त्रस्य चत्वारि नामानि लिखत।

# भूमिका

ज्योतिषशास्त्रं कालविधायकशास्त्रम् अस्ति। कालाश्रितमस्ति इदं शास्त्रम्। मुहूर्तगणना ग्रहसाधनं, जन्मपत्रनिर्माणं, जातकस्य वैयक्तिकं शुभाशुभफलज्ञानं, सामूहिकं शुभाशुभफलज्ञानं, गणेशचतुर्थीव्रतं, चन्द्रोदय-उमाव्रतं, कृष्णाष्टमीव्रतं, रामनवमीव्रतं, एकादशीव्रतं, महावारुणीव्रतं एकोद्दिष्टश्राद्धं, पार्वणश्राद्धं वा यत्किमपि शुभाशुभं कर्म भवतु। जगतः सर्वाण्यपि कर्माणि कालाश्रितानि सन्ति। कालाधीनं जगत् सर्वमिति वयं जानीमः। न किमपि कर्म कालज्ञानं विना सम्यक्तया कर्तुं शक्यते।

**ज्योतिषशास्त्रस्य प्रयोजनं वैशिष्ट्यं च –** धर्मार्थकाममोक्षेषु पुरुषार्थचतुष्टयेषु परमपुरुषार्थस्य मोक्षस्य प्राप्तिः विद्यया सम्भवति। तदैवोच्यते "सा विद्या या विमुक्तये" इति। विद्या पराऽपरा चेति द्विधा। पराविद्यान्तर्गतं ज्योतिषशास्त्रं वैज्ञानिकं, मनोवैज्ञानिकं, भौगोलिकं, वेदाङ्गशास्त्रमिति विदुषां मतम्। आर्षचिन्तनपरम्पराक्रमे वेदाङ्गेषु षट्सु ज्योतिषं नयनं वर्तते। उक्तञ्च –

**'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ कथ्यते।**

**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।**

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**

**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते।।'**

अन्यत्राऽपि –

**'ज्योतिः कल्पं निरुक्तं च शिक्षा व्याकरणं तथा।**

**छन्दोविचितिरेतानि षडङ्गानि विदुः श्रुतेः।।** (प्रश्नमार्गः १/१०)

**छन्दः पादौ शब्दशास्त्रं च वक्त्रं कल्पः पाणी ज्योतिषं चक्षुषी च।**

**शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्येवमाहुर्मुनीन्द्राः।।'** (तत्रैव-१/११)

तस्मात् वेदविहितकर्मसम्पादनाय सूर्यमण्डलस्य प्रकारनिर्णायकं समयज्ञापकं ज्योतिश्शास्त्रं चक्षुःस्वरूपं सत् सर्वदा सर्वथा च स्वकीयं महत्त्वमुपस्थापयति। यथा विना नेत्रं शरीरमपूर्णं भवति तथैव अन्यानि शास्त्राणि ज्योतिषं विना अपूर्णानि भवन्ति। तदुक्तं तथा –

**'वेदस्य चक्षुः किलशास्त्रमेतत्**

**प्रधानताऽङ्गेषु ततोऽस्य युक्ता।**

**अङ्गैर्यतोऽन्यैरपि पूर्णमूर्त्ति-**

**श्चक्षुर्विना कः पुरुषत्वमेति।।'** (प्रश्नमार्गः १/१२)

वैदिककालात् प्रवर्तितम् इदं शास्त्रं भूत-वर्तमान-भविष्यफलज्ञापकं भाग्यनिर्णायकञ्च होरा-सिद्धान्त-संहितादिस्कन्धत्रयेषु विभक्तो भवति। केचन अस्य शास्त्रस्य स्कन्धपञ्चकमस्तीति वदन्ति। ते एवं सन्ति – होरा, सिद्धान्तः, संहिता, प्रश्नः, शकुनञ्चेति।

ज्योतिश्शास्त्राध्ययनात् ग्रह-नक्षत्र-तारादीनां सम्यक् ज्ञानमुपलभ्यते। ग्रहाणां गतिः, स्थितिः, अयनांशः इत्यादिगणितिकविषयाः, शुभाशुभसमय-निर्णयः, मुहूर्त्तनिर्णयः, फलज्ञानञ्च इत्यादिविषयाः ज्योतिश्शास्त्रान्तर्भूताः। मानवजीवनस्य सुख-दुःख-इष्टानिष्ट-उन्नत्यवनति-भाग्योदयादिशुभाशुभवर्णनमपि ज्योतिषेण अवगन्तुं शक्यते। ज्योतिषस्य वेदाङ्गेषु बहुमहत्वं वर्तते। वेदाङ्गज्योतिषस्य प्रारम्भे ज्योतिश्शास्त्रस्य प्राधान्यमुक्तम् –

**'यथा शिखा मयूराणां नागानां मणयो यथा।**

**तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्धनि स्थितम्।।'**

एतादृशस्य ज्योतिषशास्त्रस्य प्रवेशज्ञानम् अस्माकं स्यात्। लक्ष्यमिदमेव मनसि निधाय पाठ्यांशोऽयं प्रदत्तः।

# ज्योतिष-अवकहडाचक्रम्

**मङ्गलम्**

**स्मृत्वा गणपतिं गौरीं ग्रहनाथं रविं तथा।**

**वच्म्यवकहडा चक्रं बालानां सुखदायकम्।।**

**भावार्थः** – (अहम्) गणेशं गौरीं ग्रहपतिं सूर्यं च स्मृत्वा बालानां सुखदायकं अवकहडाचक्रं वदामि।

**ज्योतिषशब्दार्थविचारः** – ''द्युतेरिसन्नादेशश्चजः'' इत्युणादिसूत्रेणज्वलितकर्मणो ''द्युति'' धातोः ''इसन्'' प्रत्यये द-कारस्य ज-कारादेशे गुणे कृते ''ज्योतिः'' इति पदस्य निष्पत्तिर्भवति। ज्योतिर्नाम स्वयं प्रकाशितग्रहनक्षत्रादयः। एवं ज्योतिः सूर्यादीनां ग्रहाणां गत्यादिकं प्रतिपाद्यतया अस्ति अस्य इति अच्-प्रत्यये ''ज्योतिषम्'' इति रूपसिद्धिः। सूर्यादीनां ग्रहाणामश्विन्यादीनां नक्षत्राणां धूमकेत्वादिज्योतिः पदार्थानां स्वरूपम्, सञ्चारः, परिभ्रमणकालः, ग्रहणम्, स्थितिः इत्यादयः विषयाः यस्मिन् शास्त्रे निरूप्यन्ते तच्छास्त्रं ज्योतिषमिति। ज्योतिषं नाम वेदाङ्गशास्त्रविशेषोऽपि। तद् ग्रहाणादिगणनशास्त्रमित्यप्युच्यते।

## अथ तिथिवारपंचांङ्गप्रकरणम्।।

**पञ्चाङ्गस्य परिभाषा** –

**तिथिर्वारं च नक्षत्रं योगः करणमेव च।**

**पञ्चाङ्गस्यैतान्यङ्गानि कथितानि महर्षिभिः।।१।।**

ज्योतिषशास्त्रस्य महर्षीणां मतानुसारेण पञ्चाङ्गस्य तिथिः वारः नक्षत्रं योगः करणं च इत्येतानि पञ्च अङ्गानि भवन्ति।

**तिथिनामानि** –

**प्रतिपद् द्वितीया चैव तृतीया तदनन्तरम्।**

**चतुर्थी पञ्चमी चैव षष्ठी चैव ततः परम्।।२।।**

**सप्तमी चाष्टमी चैव नवमी दशमी तथा।**

**ततश्चैकादशी ज्ञेया द्वादशी च त्रयोदशी।।३।।**

**ततश्चतुर्दशी प्रोक्ता कृष्णान्तेऽमा प्रकीर्त्तिता।**

**पूर्णिमा शुक्लपक्षान्ते तिथयः कथिता बुधैः।।४।।**

प्रतिपत् 1, द्वितीया 2, तृतीया 3, चतुर्थी 4, पञ्चमी 5, षष्ठी 6, सप्तमी 7, अष्टमी 8, नवमी 9, दशमी 10, एकादशी 11, द्वादशी 12, त्रयोदशी 13, चतुर्दशी 14, कृष्णपक्षे अमावस्या 30 तथा च शुक्लपक्षे पूर्णिमा 15 इति तिथयः भवन्ति।

**तिथिसंज्ञानिर्णयः** –

**नन्दा च भद्रा च जया च रिक्ता**

**पूर्णेतितिथ्योऽशुभमध्यशस्ताः।**

**सितेऽसिते शस्तसमाधमाः स्युः**

**सितज्ञ भौमार्किगुरौ च सिद्धाः।।५।।**

प्रतिपदादितिथीनां नन्दा भद्रा जया रिक्ता पूर्णा चेति क्रमशः पञ्च संज्ञाः भवन्ति। इत्थं एकस्मिन् पक्षे नन्दादिनां पञ्चानां तिथीनां त्रय भागाः भवन्ति। तत्र शुक्लपक्षे प्रतिपदतः पञ्चमी पर्यन्तं अशुभः षष्ठीतः दशमीपर्यन्तं मध्यमः एकादशीतः पूर्णिमापर्यन्तं

शुभ: काल: भवति। कृष्णपक्षे तु प्रतिपत्त: पञ्चमीपर्यन्तं शुभ: षष्ठीत: दशमीपर्यन्तं मध्यम: एकादशीत: अमावस्यापर्यन्तम् अशुभ: काल: भवति। सिद्धयोगनिर्णय: उच्यते शुक्रवासरे नन्दा: बुधवासरे भद्रा मङ्गलवासरे जया शनिवासरे रिक्ता गुरुवासरे च पूर्णातिथि: स्यात् तदा सिद्धियोग: भवति।

| तिथि | | | संज्ञा |
|---|---|---|---|
| 1 | 6 | 11 | नन्दा |
| 2 | 7 | 12 | भद्रा |
| 3 | 8 | 13 | जया |
| 4 | 9 | 14 | रिक्ता |
| 5 | 10 | 15 | पूर्णा |

**वारनामानि** –

**रवि: सोमस्तथा भौमो बुधो गीष्पतिरेव च।**

**शुक्र: शनैश्चरश्चैवं वारा: सप्त प्रकीर्त्तिता:।।६।।**

रवि:, सोम:, मंगल:, बुध:, गुरु:, शुक्र:, शनिश्चेति सप्तवारा: सन्ति।

**ग्रहानुरोधेन वारक्रमविचार:** – कालस्य होरा-दिन-पक्ष-मास-ॠतु-अयन-वर्षयुगादि प्रभेदा: सन्ति। एकस्मिन् दिने अह: रात्रिश्च मिलित्वा एक: वार:, वासरो वा उच्यते। सप्तवासरा: मिलित्वा एक: सप्ताह इति कथ्यते। एवं क्रमश: रवि:, सोम:, मङ्गल:, बुध:, बृहस्पति:, शुक्र:, शनिश्चेति वारा: सप्त भवन्ति। परन्तु अत्र ज्ञातव्यं यत् वाराणां क्रम इत्थमेव किमर्थं भवति? रविवारादनन्तरं सोमवार एव कथमागच्छति? इति। एष एव वारक्रम: भारतीयज्योतिषशास्त्रे सम्यक्तया प्रतिपादितोऽस्ति। दिनञ्च रात्रिश्च मिलित्वा अहोरात्रमित्युच्यते। एकस्मिन् अहोरात्रे चतुर्विंशतिमिता: होरा: भवन्ति। तेषु होरेशा: ग्रहा: सप्त एव सन्ति। यस्य दिनस्य प्रथमहोराया: य: स्वामी भवति, तस्य दिनस्य तद्ग्रहनामानुसारं वारनाम प्रचलति। ग्रहाणामवस्थित्यनुसारं क्रमश: अधोऽध: शनि:, बृहस्पति:, मङ्गल:, रवि:, शुक्र:, बुध:, चन्द्रमाश्च विद्यन्ते। एकघण्टापरिमिता एका होरा स्वीक्रियते। तथा एक: ग्रह: एकहोरात्मकोऽस्ति। सृष्टे: प्रारम्भकाले सूर्य: एव दृष्ट: आसीत्। अत: प्रथमहोराया: स्वामी रविरित्युच्यते। तथा च प्रथमो

वार: रविवासर:। तदनन्तरं तस्यैव दिनस्य द्वितीयहोराया: स्वामी शुक्र:, तृतीयस्य बुध:, चतुर्थस्य चन्द्रमा पञ्चमस्य शनि:, षष्ठस्य बृहस्पति:, सप्तमस्य मङ्गल:, अष्टमस्य रवि:, नवमस्य शुक्र:, दशमस्य बुध:, एकादशस्य चन्द्रमा, द्वादशस्य शनि:, त्रयोदशस्य बृहस्पति:, चतुर्दशस्य मङ्गल:, पञ्चदशस्य रवि:, नवमस्य शुक्र:, दशमस्य बुध:, एकादशस्य चन्द्रमा, द्वादशस्य शनि:, त्रयोदशस्य बृहस्पति:, चतुर्दशस्य मङ्गल:, पञ्चदशस्य रवि:, षोडशस्य शुक्र:, सप्तदशस्य बुध:, अष्टादशस्य चन्द्रमा, उनविंशते: शनि:, विंशते: बृहस्पति:, एकविंशते: मङ्गल:, द्वाविंशते: रवि: त्रयोविंशते: शुक्र:, चतुर्विंशतेश्च बुधोऽस्ति। द्वितीयदिनस्य प्रारम्भिकहोरायां चन्द्रमा अधिपतिर्भवति। तस्मात् द्वितीयो वार: तन्नाम्ना सोमवासर: इति। एवं क्रमेण सोमवासरत: प्रारभ्य क्रमश: एकैकस्यां होरायामेकस्य एकस्य ग्रहस्य ग्रहणात् चतुर्विंशतिहोरागणनया तृतीयदिवसस्य प्रारम्भकाले मङ्गलग्रहो वारेशो भवति। तस्मात् तृतीयक्रमे मङ्गलवासर: परिगृह्यते। एवं चतुर्थदिवसस्य प्रारम्भकाले बुधग्रह: स्वामी भवति। अत: स: तस्य वारस्य वारेश उच्यते। तन्नामानुसारं च बुधवासर:। तथैव गुरुवासर:, शुक्रवासर:, शनिवासर: इत्यादीनां नामग्रहणं क्रमशो जायते इति वारक्रम:। तदुक्तं –

''**मन्दादध: क्रमेण स्युश्चतुर्था दिवसाधिपा:।**'' इति

अर्थात् शनैश्चरात् अधोऽध: कक्षाक्रमेण चतुर्थ-चतुर्थग्रहा: वारेशा: भवन्ति। यथा – यदि प्रथम: वारेश: शनिस्तदा तस्मादधश्चतुर्थ: रविस्ततोऽपि चतुर्थश्चन्द्रस्ततश्चतुर्थो भौमस्ततो बुधस्तत: गुरुस्ततश्च शुक्र: इति वारेश-व्यवस्था ग्रहाणामारोहक्रमेण सिद्ध्यति।

**वार-कृत्यम्** –

**सोम सौम्यगुरु शुक्रवासरा:**

**सर्वकर्मसु भवन्ति सिद्धिदा:।**

**भानुभौम शनिवासरेषु च**

**प्रोक्तमेव खलुकर्म सिद्ध्यति।।७।।**

सोमवासरे, बुधवासरे, गुरुवासरे, शुक्रवासरे च कृतं सर्वविधं कार्यं सिद्धिदा भवति। परं रविवासरे मङ्गलवासरे शनिवासरे च विहितमेव कार्यं फलप्रदायकं भवति।

**वारवेलानिर्णय:** –

**रवौवर्ज्यं चतु: पञ्च सोमे सप्तद्वयं तथा।**

**कुजे षष्ठं द्वयं चैव बुधे पञ्च तृतीयकम्।।८।।**

**गुरौषष्ठाष्टकञ्चैव शुक्रेवेदतृतीयकम्।**

**शनावाद्यन्तषष्ठश्च वारवेलातिनिन्दिता:।।९।।**

दिने चत्वार: प्रहरा: भवन्ति रात्रौ चत्वार: प्रहरा: भवन्ति। एकस्य प्रहरस्य अर्ध: भाग: अर्धयाम: कथ्यते एवं दिने अष्टौ रात्रौ च अष्टौ अर्धयामा: भवन्ति। एतेषु रविवासरस्य चतुर्थपञ्चमौ अर्धयामौ, सोमवासरे द्वितीयसप्तयामौ, मङ्गलवासरे षष्ठ: द्वितीयौ, बुधवासरे पञ्चमतृतीयौ, गुरुवासरे षष्ठाष्टमौ अर्धयामौ, शुक्रवासरे चतुर्थ: तृतीयौ अर्धयामौ तथैव शनिवासरे प्रथम: षष्ठ: अष्टमार्धयामा: वारवेलादोषयुक्ता: भवन्ति। एतेषु शुभकर्मणां त्याग: कर्त्तव्य:।

**नक्षत्रपरिचय:** – 'न क्षरतीति नक्षत्रम्।' ताराणां समूह: नक्षत्रमित्युच्यते। समग्राकाशमण्डले भचक्रे सप्तविंशतिनक्षत्राणि विद्यन्ते।

एतदतिरिक्तमभिजिदपि अष्टविंशतितमं नक्षत्रमस्ति। ज्योतिषविदामभिप्रायेण उत्तराषाढाया: अन्तिमपञ्चदशघटिकास्तथा श्रवणाया: प्रारम्भिकचतुर्घटिका: मिलित्वा 19 घटिका: अभिजिन्नक्षत्रस्य वर्तन्ते। सर्वेषु कार्येष्वेता: घटिका: शुभप्रदास्सन्ति। एकस्य नक्षत्रस्य मानं = 360/27 = 13°20'।

**नक्षत्रनामानि –**

**अश्विनी भरणी चैव कृत्तिका रोहिणी तथा।**

**मृगशीर्षस्तथाऽऽर्द्रा च पुनर्वसुरतः परम्।।१०।।**

**पुष्याश्लेषा मघा प्रोक्तः पूर्वा चोत्तरफाल्गुनी।**

**हस्तश्चित्रा तथा स्वाती विशाखा तदनन्तरम्।।११।।**

**अनुराधा तथा ज्येष्ठा मूलभं च ततः परम्।**

**पूर्वाषाढोत्तराषाढाऽभिजिच्च श्रवणस्ततः।।१२।।**

**धनिष्ठा च ततो ज्ञेया शततारास्ततः परम्।**

**पूर्वाभाद्रपदा प्रोक्ता ततश्चोत्तरभाद्रकम्।।१३।।**

**रेवती चेति भानां हि नामानि कथितानि वै।**

**सप्तविंशतिसंख्याकं सदसत्फलहेतवे।।१४।।**

अश्विनी 1, भरणी 2, कृत्तिका 3, रोहिणी 4, मृगशीर्षः 5, आर्द्रा 6, पुनर्वसुः 7, पुष्यः 8, अश्लेषा 9, मघा 10, पूर्वाफाल्गुनी 11, उत्तराफाल्गुनी 12, हस्तः 13, चित्रा 14, स्वाती 15, विशाखा 16, अनुराधा 17, ज्येष्ठा 18, मूलः 19, पूर्वाषाढ़ा 20, उत्तराषाढ़ा 21, अभिजित् 22, श्रवणः 23, धनिष्ठा 24, शतभिषा 25, पूर्वाभाद्रपदः 26, उत्तराभाद्रपदः 27, रेवती 28इति अष्टाविंशतिः नक्षत्राणि भवन्ति।

**ध्यातव्यम्** – नक्षत्रेषु अभिजितः नक्षत्रस्य गणना न भवति तस्मात् नक्षत्राणां संख्या सप्तविंशतिः एव कथिता।

**नक्षत्राणां चरणज्ञानम् –**

**चू चे चो ला पदेष्वाद्ये ली लू ले लो यमस्य भे।**

**अ इ ऊ ए इमेऽग्नेर्भे ओ वा वी वू तथा कभे।।१५।।**

**वे वो का की मृगे ख्याताः कु घ ङ छ स्तु रौद्रभे।**

**के को ह ही त्वदिति भे हू हे हो ड़ा च पुष्यभे।।१६।।**

**डी डू डे डो इमे सार्पे मा मी मू मे मघाभिधे।**

**मो टा टी टू तथा भाग्ये टे टो प प्यर्यमर्क्षभे।।१७।।**

**पू ष ण ठ तथा हस्ते पे पो र री ति चित्रभे।**

**रु रे रो ता तथा स्वाती ती तू ते तो द्विदैवभे।।१८।।**

**न नी नू ने क्रमान्मैत्रे नो य यि यु इतीन्द्रभे।**

**ये यो भ भी ति मूलाख्ये भू ध फ ढ जलस्यभे।।१९।।**

**भे भो ज जी ति विश्वर्क्षे जू जे जो खाऽभिजिद्भवेत्।**

**खी खू खे खो श्रुतौ श्रेया ग गी गू गे च वासवे।।२०।।**

**गो स सी सू जलेशर्क्षे स सो द दीत्यजाङ्घ्रिभे।**

**दू थ झ ञ तथोपन्त्ये दे दो च ची ति पौष्णभे।।२१।।**

**इति प्रोक्ता इमे पद्ये वर्णानामादिजाः स्फुटाः।।**

चू, चे, चो, ला अश्विनी 1, ली लू ले लो भरणी 2, अ इ उ ए कृत्तिका 3, ओ वा वी वू रोहिणी 4, वे वो क की मृगशीर्षः 5, कु ध ङ छ आर्द्रा 6, के को ह ही पुनर्वसु 7, हू हे हो डा पुष्यः 7, डी डू डे डो आश्लेषा 9, मा मी मू मे मघा 10, मो टा टी टू पूर्वाफाल्गुनी 11, टे टो प पी उत्तराफाल्गुनी 12, पू ष ण ठ हस्त 13, पे पो रा री चित्रा 14, रु रे रो ता स्वाती 15, ती तू ते तो विशाखा 16, ना नी नू ने अनुराधा 17, नो या यी यू ज्येष्ठा 18, ये यो भ भी मूल 19, भू ध फ ढ पूर्वाषाढा 20, भे भो ज जी उत्तराषाढा 21, जू जे जो खा अभिजित् 22, खी खू खे खो श्रवण 23, ग गी गू गे धनिष्ठा 24, गो स सी सू शतभिषा 25, से सो द दी पूर्वाभाद्रपदा 26, दू थ झ ञ् उत्तराभाद्रपदा 24, दे दो च ची रेवती 28।

**नक्षत्रेशाः –**

**नासत्यान्तकवह्निधातृशशभृद्रुद्रादितीज्योरगा**

**ऋक्षेशाः पितरो भगोर्यमरवित्वष्टाशुगाश्च क्रमात्।**

**शक्राग्नी खलु मित्र इन्द्रनिर्ऋतिक्षीराणिविश्वेविधि-**

**र्गोविन्दो वसुतोयपाजचरणाहिर्बुध्न्यपूषाभिधाः।।२२।।**

सप्तविंशति नक्षत्राणि सन्ति तेषां नक्षत्राणां स्वामिनः के? अस्मिन् सन्दर्भे पद्येऽस्मिन् कस्य नक्षत्रस्य कः स्वामी इति वर्णनं वर्तते।

अश्विनीकुमारौ, यमः, अग्निः, ब्रह्मा, चन्द्रमा, शिवः, अदितिः, बृहस्पति, सूर्यः, पिता, भगनायकः सूर्यः, अर्यमा, सूर्यः, प्रजापतिः, वायुः, इन्द्रः, अग्निः, मित्रः, इन्द्रः, राक्षसः, जलम्, विश्वेदेवः, विधिः (ब्रह्मा), विष्णुः, वसुगणः, वरुणः, अजचरणः (देव-विशेषः), अहिर्बुध्न्यः सूर्यः, पूषा सूर्यः च क्रमात् अश्विन्यादीनां नक्षत्राणां स्वामिनः सन्ति।

विभिन्नानां नक्षत्रसमूहानां विभिन्ना संज्ञा वर्तते। येन संज्ञायाः कथनमात्रेण तत्संज्ञकानां सर्वेषां नक्षत्राणां ग्रहणं स्यात्। यथा व्याकरणशास्त्रे लघ्वर्थं प्रत्याहाराणां रचना शास्त्रप्रवृत्तिनिमित्तं कृता तथैव अत्रापि वारं वारं नक्षत्राणां नामग्रहणापेक्षया संज्ञा ग्रहणेन तत्संज्ञकानां सर्वेषां नक्षत्राणां ग्रहणं भवेत्। एतदर्थं संज्ञा कृता।

## नक्षत्राणां संज्ञाः

**ध्रुव-स्थिर-संज्ञकनक्षत्राणि –**

**उत्तरात्रयरोहिण्यो भास्करश्च ध्रुवं स्थिरम्।**

**तत्र स्थिरं बीजगेहशान्त्यारामादिसिद्धये।।२३।।**

उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी च एतानि चत्वारि नक्षत्राणि रविवासरश्च ध्रुवसंज्ञकः स्थिरसंज्ञकः च उक्तः। एतस्मिन् काले बीजवपनं, गृहनिर्माणं, शान्तिकरणं, उद्यानारम्भादीनि स्थिरकार्याणि करणीयानि।

**चर-चल-संज्ञकनक्षत्राणि –**

**स्वात्यादित्ये श्रुतेस्त्रीणि चन्द्रश्चापि चरं चलम्।**

**तस्मिन्गजादिकारोहो वाटिकागमनादिकम्।।२४।।**

स्वाति, पुनर्वसुः, श्रवणः, धनिष्ठा, शतभिषा च एतानि पञ्चनक्षत्राणि चन्द्रवासरश्च चरसंज्ञकः उक्तः। एतस्मिन् काले गजादिषु आरोहणं वाटिकादिषु च भ्रमणं शुभदायकं भवति।

**उग्रक्रूरसंज्ञनक्षत्राणि –**

**पूर्वात्रयं याम्यमघे उग्रं क्रूरं कुजस्तथा।**

**तस्मिन् घाताग्निशाठ्यानिविषशस्त्रादि सिद्ध्यति।।२५।।**

पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदः इति पूर्वात्रयम्, भरणी, मघा चेति पञ्च नक्षत्राणि मङ्गलवासरश्च उग्रसंज्ञकः

क्रूरसंज्ञकश्च कथितः। एतस्मिन् काले शठताघाताग्नि-सम्बन्धीनि विषशस्त्रादिकार्याणि तथा दारुणसंज्ञकानि अर्थात् अभिचारघातभेदसम्बन्धीनि पशुदमनादीनि च कार्याणि फलदायकानि भवन्ति।

**मित्रसाधारणसंज्ञकनक्षत्राणि –**

**विशाखाग्नेयभे सौम्ये मिश्रं साधारणं स्मृतम्।**

**तत्राग्निकार्यं मिश्रं च वृषोत्सर्गादि सिद्धयति।।२६।।**

विशाखा, कृतिका चेति द्वयोः नक्षत्रयोः बुधवासरस्य च मिश्रं साधारणं च संज्ञे वर्तेते। अस्मिन् काले अग्निकार्याणि मिश्रकार्याणि वृषोत्सर्गादिकार्याणि फलप्रदानि भवन्ति।

**क्षिप्र-लघुसंज्ञकनक्षत्राणि –**

**हस्ताश्विपुष्याभिजितः क्षिप्रं लघुगुरुस्तथा।**

**तस्मिन्पण्यरतिज्ञानं भूषाशिल्पकलादिकम्।।२७।।**

हस्तः अश्विनी, पुष्यः, अभिजित् चेति चत्वारि नक्षत्राणि गुरुवासरश्च क्षिप्रसंज्ञकः लघुसंज्ञकश्च स्मृतः। अस्मिन् काले व्यवसायः रतिज्ञानं भूषणनिर्माणं धारणं च, शिल्पकलादिकार्यं च फलप्रदं भवति।

**मृदु-मैत्रसंज्ञकनक्षत्राणि –**

**मृगान्त्यचित्रामित्रर्क्ष मृदुमैत्रं भृगुस्तथा।**

**तत्र गीताम्बरक्रीडा मित्रकार्यं विभूषणम्।।२८।।**

मृगशीर्षः, रेवती, चित्रा, अनुराधा चेति चत्वारि नक्षत्राणि शुक्रवासरश्च मृदुसंज्ञकः मैत्रसंज्ञकश्च उक्तः। अस्मिन् समये गीतवस्त्रक्रीडाविभूषण सम्बन्धीनि मित्रकार्याणि च शुभानि भवन्ति।

**तीक्ष्ण-दारुणसंज्ञकनक्षत्राणि –**

**मूलेन्द्रार्द्राहिमं सौरिस्तीक्ष्णं दारुणसंज्ञकम्।**

**तत्राभिचारघातोग्रभेदाः पशुदमादिकम्।।२९।।**

मूलः ज्येष्ठा, आर्द्रा, आश्लेषा चेति चत्वारि नक्षत्राणि शनिवासरश्च तीक्ष्णसंज्ञको दारुणसंज्ञकश्च कथितः। कालेऽस्मिन् अभिचारः घातः भेदः पशुदमनः क्रूरनक्षत्रे च उक्तानि कार्याणि सिद्धानि भवन्ति।

**अधोमुखादिसंज्ञकनक्षत्राणि –**

**मूलाहिमिश्रोग्रमधोमुखं भवेदूर्ध्वास्यमार्द्रेज्यहरित्रयं ध्रुवम्।**

**तिर्यङ्मुखं, मैत्रकरानिलादितिज्येष्ठाश्विमानीदृशकृत्यमेषु सत्।।३०।।**

मूलः आश्लेषा, विशाखा, कृतिका, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, भरणी मघा चेति नव नक्षत्राणि अधोमुखानि सन्ति तथा आर्द्रा, पुष्यः श्रवणः, धनिष्ठा, शतभिषा, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा रोहिणी चेति नव नक्षत्राणि ऊर्ध्वमुखानि भवन्ति। अनुराधा मृगशीर्षः, चित्रा, रेवती, हस्तः, स्वाती, पुनर्वसुः, ज्येष्ठा, अश्विनी चेति नव नक्षत्राणि तिर्यङ्मुखानि सन्ति। एतेषु अधोमुखसंज्ञकेषु ऊर्ध्वमुखसंज्ञकेषु तिर्यङ्मुखसंज्ञकेषु च नक्षत्रेषु नामानुसारमेव कार्याणि क्रियन्ते तर्हि फलदायकानि भवन्ति।

## योगविचारः

ज्योतिषशास्त्रे योगविचारः महत्त्वपूर्णं स्थानमावहति। सम्पूर्णं फलितं ज्योतिषमस्योपर्येव निर्भरं भवति। कुण्डल्यां ग्रह-नक्षत्र-राशीनां स्थित्यनुरोधेन योगो भवति। तेषां योगानुरोधेन च जातकस्य भाग्यनिर्धारणं क्रियते तथा जीवनचर्यायाः फलाफलं विचार्यते। भचक्रे सूर्यचन्द्रमसोः स्थित्यनुरोधेन सप्तविंशतियोगाः कल्पितास्सन्ति, यैः कार्यसम्पादनार्थं उचितानुचितकालनिर्धारणं

क्रियते। यथोक्तं –

**यस्मिन्नृक्षे स्थितो भानुर्यत्र तिष्ठति चन्द्रमाः।**

**एकीकृत्य त्यजेदेकं योगा विष्कम्भकादयः।।३१।।**

अर्थात् चन्द्राक्रान्ते दिननक्षत्रे सूर्याक्रान्तनक्षत्रेण युते सप्तविंशतितमे तद्दिननक्षत्रान्ते स्थूलमानेन योगो भवति। सूक्ष्मविचारस्तु रविस्पष्टचन्द्रस्पष्टयोगे कलीकृते अष्टशतकलाभक्ते विष्कम्भादिरेको योगो भवति। एवं समग्ररूपेण सप्तविंशतियोगाः सन्ति। यथा –

**योगनामानि –**

**विष्कम्भः प्रीतिरायुष्मान् सौभाग्यः शोभनस्तथा।**

**अतिगण्डः सुकर्मा च धृतिः शूलस्तथैव च।।३२।।**

**गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा।**

**वज्रः सिद्धिर्व्यतीपातो वरीयान् परिघः शिवः।।३३।।**

**सिद्धः साध्यः शुभः शुक्लो ब्रह्मैन्द्रौ वैधृतिस्ततः।**

**क्रमादेता योगसंख्या सप्तविंशति-कीर्तिता।।३४।।**

विष्कम्भः 1, प्रीतिः 2, आयुष्मान् 3, सौभाग्यम् 4, शोभनः 5, अतिगण्डः 6, सुकर्मा 7, धृतिः 8, शूलम् 9, गण्डः 10, वृद्धिः 11, ध्रुवम् 12, व्याघातः 13, हर्षणः 14, वज्रः 15, सिद्धिः 16, व्यतिपातः 17, वरीयान् 18, परिघः 19, शिवः 20, सिद्धः 21, साध्यः 22, शुभ 23, शुक्लः 24, ब्रह्म 25, ऐन्द्रः 26, वैधृतिः 27, इति सप्तविंशति योगाः।

**योगानां त्याज्याः घटयः –**

**परिघार्धं पञ्चशूले षट् च गण्डाति गण्डयोः।**

**व्याघाते नव नाड्यश्च वर्ज्याः सर्वेषु कर्मसु।।३५।।**

परिघयोगस्य पूर्वार्द्धः भागः शूलादियोगस्य प्रारम्भिकाः पञ्च घट्यः गण्डातिथयोः षट् घट्यः व्याघातयोगस्य च आदि नवघट्यः शुभकर्मसु त्याज्याः भवन्ति।

## करणज्ञानम्

**करणनामानि –**

**बवाह्वयं बालवकौलवाख्ये ततो भवेत्तैतिलनामधेयम्।**

**गराभिधानं वणिजं च विष्टिरित्याहुराय्याः करणानि सप्त।।३६।।**

**चतुर्दशी या शशिना प्रहीणा तस्यार्धभागे शकुनिर्द्वितीये।**

**दर्शार्धयोः स्तश्चतुरङ्घ्रिनागौ किंस्तुघ्नमाद्ये प्रतिपद्येकं च।।३७।।**

बवः 1, बालवः 2, कौलवः 3, तैतिलः 4, गरः 5, वणिजः 6, विष्टिः 7, शकुनी 8, चतुष्पद 9, नागः 10, किंस्तुघ्नम् 11, इति एकादश करणानि।

**तिथ्यर्धं करणं कथ्यते।**

अत्र आदितः सप्त चरकरणानि अन्येचत्वारश्च स्थिराणि करणानि भवन्ति। स्थिर करणानि कृष्णपक्षे चतुर्दश्युत्तरार्धतो शुक्लपक्षे प्रतिपत्पूर्वार्द्धं यावद् भवन्ति।

| | तिथि | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शुक्लपक्षे | पूर्वार्ध | किं. स्थि | बा. | तै. | व. | ब. | कौ. | ग. | भ. | बा. | तै. | व. | ब. | कौ. | ग. | भ. |
| | परार्ध | ब. | कौ. | ग. | भ. | बा. | कौ. | व. | ब. | कौ. | ग. | भ. | बा. | तै. | व. | ब. |
| कृष्णपक्षे | तिथि | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | ३० |
| | पूर्वार्ध | बा. | तै. | व. | ब. | कौ. | ग. | भ. | बा. | तै. | व. | व. | कौ. | ग. | भ | ना स्थि |
| | परार्ध | कौ. | ग. | भ. | बा. | तै. | व. | ब. | कौ. | ग. | भ. | बा. | तै. | व. | श. स्थि | च. स्थि |

## राशिपरिचयः

राशिर्नाम समूहः। क्षेत्रं, गृहं, ऋक्षं, भः, भावश्चेत्यादयस्तस्य पर्यायाः। सम्पूर्णब्रह्माण्डे 360° परिमितमेकं भचक्रं विद्यते, यस्मिन् द्वादशराशयः सन्ति। यथा – मेषः, वृषः, मिथुनः, कर्कटः, सिंहः, कन्या, तुला, वृश्चिकः, धनुः, मकरः, कुम्भः मीनश्च।

### राशयः –

**मेषो वृषोऽथ मिथुनं कर्कः सिंहश्च कन्यका।**

**तौलिश्च वृश्चिकश्चैव धनुर्मकर एव च।।३८।।**

**कुम्भमीनौ क्रमादेते राशयः परिकीर्त्तिताः।**

**मेषाद्या विषमाः क्रूरा वृषाद्याश्च समाः शुभाः।।३९।।**

द्वादश राशयोः भवन्ति – मेषः 1, वृषभः 2, मिथुनः 3, कर्कः 4, सिंहः 5, कन्याः 6, तुलाः 7, वृश्चिकः 8, धनुः 9, मकरः 10, कुम्भः 11, मीनः 12।

### राशीनां स्वामिनः –

राशयः द्वादश भवन्ति। तासां स्वामिग्रहाणां नामानि वर्णितानि श्लोके अस्मिन्

**मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाधिपः।**

**कन्यामिथुनयोः सौम्यः कर्कस्वामी च चन्द्रमा।।४०।।**

**सिंहस्याधिपतिस्सूर्यः गुरुस्तु धनुमीनयोः।**

**शनिर्नक्रस्य कुम्भस्य कथितो गणकोत्तमैः।।४१।।**

मेषवृश्चिकयोः मङ्गलः, वृषतुलयोः शुक्रः,कन्यामिथुनयोः बुधः, कर्कस्य चन्द्रमा, सिंहस्य सूर्यः, धनुमीनयोः बृहस्पतिः (जीवः), मकरकुम्भयोश्चशनिः इति द्वादशराशीनां स्वामिनो भवन्ति।

### नक्षत्रवशाद्राशिज्ञानम् –

एकस्य नक्षत्रस्य भुक्तिकालः चतुर्षु पादेषु विभक्तः भवति। नवनां पादानां कालः एकस्य राशेः कालः भवति तदनुसारं श्लोकेऽस्मिन् नक्षत्रबलात् राशेः ज्ञानं वर्णितम्।

**अश्विनी भरणी कृत्तिकापादमेकं मेषः।**

**कृत्तिकायास्त्रयः पादाः रोहिणी मृगशीर्षोऽर्धं वृषभः।।४२।।**

**मृगशीर्षोऽर्धं आर्द्रा पुनर्वसु पादत्रयं मिथुनः।**

**पुनर्वसुपादमेकं पुष्य आश्लेषान्तं कर्कः।।४३।।**

**मघा पूर्वाफाल्गुनी उत्तराफाल्गुनी पादमेकं सिंहः।**

**उत्तराफाल्गुनी पादत्रयं हस्तः चित्रार्द्धं कन्या ।।४४।।**

**चित्रार्द्धं स्वाती विशाखायाः पादत्रयं तुला ।**

**विशाखापादमेकं अनुराधा ज्येष्ठान्तं वृश्चिकः ।।४५।।**

**मूलं पूर्वाषाढा उत्तराषाढायाः पादमेकं धनुः ।**

**उत्तराषाढापादत्रयं श्रवण धनिष्ठार्द्धं मकरः ।।४६।।**

**धनिष्ठार्द्धं शतभिषा पूर्वाभाद्रपदापादत्रयं कुम्भः ।**

**पूर्वाभाद्रपदापादमेकं उत्तराभाद्रपदारेवत्यान्तं मीनः ।।४७।।**

| राशि संज्ञा | राशि नाम | राशयः नक्षत्रं चरणाक्षरञ्च | | |
|---|---|---|---|---|
| १ | मेष | अश्विनी ४ चू, चे, चो, ला | भरणी ४ ली, लू, ले, लो | कृत्तिका १ अ |
| २ | वृषभ | कृत्तिका ३ ई, ऊ, ए | रोहिणी ४ ओ, वा, वी, वु | मृगशिरा २ वे, वो |
| ३ | मिथुन | मृगशिरा २ का, की | आर्द्रा ४ कु, घ, ङ, छ | पुनर्वसु ३ के, को, ह |
| ४ | कर्क | पुनर्वसु १ ही | पुष्य ४ हु, हे, हो, डा | अश्लेषा ४ डी, डू, डे, डो |
| ५ | सिंह | मघा ४ मा, मी, मू, मे | पूर्वाफाल्गुनी ४ मो, टा, टी, टू | उत्तराफाल्गुनी १ टे |
| ६ | कन्या | उत्तराफाल्गुनी ३ टो, पा, पी | हस्त ४ पू,ष, ण, ठ | चित्रा २ पे, पो |
| ७ | तुला | चित्रा २ रा, री | स्वाती ४ रू, रे, रो, ता | विशाखा ३ ती, तू, ते |
| ८ | वृश्चिक | विशाखा १ तो | अनुराधा ४ ना, नी, नू, ने | ज्येष्ठा ४ नो, य, यी, यु |
| ९ | धनु | मूल ४ ये, यो, भा, भी | पूर्वाषाढा ४ भु, धा, फा, ढा | उत्तराषाढा १ भे |
| १० | मकर | उत्तराषाढा ३ भो, जा, जी | श्रवण ४ खी, खू, खे, खो | धनिष्ठा २ गा, गी |
| ११ | कुम्भ | धनिष्ठा २ गू, गे | शतभिषा ४ गो, सा, सी, सू | पूर्वाभाद्रपद ३ से, सो, दा |
| १२ | मीन | पूर्वाभाद्रपद १ दी | उत्तराभाद्रपद ४ दू, थ, झ, ञ | रेवती ४ दे, दो चा, ची |

## ग्रहपरिचयः

ज्योतिषशास्त्रानुसारं सम्पूर्णब्रह्माण्डे नव ग्रहाः सन्ति। यथा – सूर्यः, चन्द्रमा, मङ्गलः, बुधः, गुरुः, शुक्रः, शनिः, राहुः, केतुश्च। तदुक्तम् –

**सूर्यस्सोमो महीपुत्रस्सोमपुत्रो बृहस्पतिः ।**

**शुक्रश्शनैश्चरो राहुः केतवश्च ग्रहाः स्मृताः ।।४८।।** ( याज्ञवल्क्यस्मृतिः/आचाराध्याये/श्लोक २९१ )

**ग्रहपर्यायः –**

1. **रविः –** आदित्य-सविता-भास्कर-तपन-सूर्य-दिवाकर-भानु-तीग्मांशु-प्रभाकर-सहस्रांशु-अर्क-हेल्यादयः।

2. **चन्द्रः –** हिमांशु-चन्द्रमा-मृगाङ्क-सोम-शीतरश्मि-शशाङ्क-शशलाञ्छन-निशाकर-निशानाथ-इन्दु-हेम्नादयः।

3. **मङ्गलः –** कुज-क्रुराक्ष-अङ्गारक-लोहिताङ्ग-भौम-महीसूत-वक्र-आर-क्षितिसूत-कुज-आवनेय-अवनीपुत्रादयः।

4. **बुधः –** चन्द्रसूत-वुध-बोध-ज्ञ-तारापुत्र-कुमार-राजपुत्र-विवुधादयः।

5. **बृहस्पतिः –** जीव-सुरमन्त्री-सुराचार्य-सुरी-स्मृत-वचसाम्पति-गुरु-अङ्गिर-वागीश-सुरगुरु-मुस्तर्यः।

6. **शुक्रः –** काव्य-दैत्यमन्त्री-भुगुज-उशना-भार्गव-भृगु-दैत्याध्यक्ष-पुरोहित-सित-आस्फुजित-कणादयः।

7. **शनिः** –पतङ्ग-शौरि-शनैश्चर-सूर्यसूत-असिताम्बर-पङ्गु-कोष-मन्द-छायापुत्र-सूर्यसूनु-भाष्करपुत्र-काल-यमादयः।

8. **राहुः –** सुरारि-तम-सिंहिकासुत-सैंहिकेय-उपप्लव-अगु-असुर-चण्डालादयः।

9. **केतुः –** शिखी-ज्ञेय-धुम्र-ब्रह्मसुतादयः।

## मासज्ञानम्

**मधुस्तथा माधवसंज्ञकश्चशुक्र शुचिश्चाथ नभो नभस्यः।**

**तथेष ऊर्जश्च सहाःसहस्यस्तपस्तपस्यश्च तथा क्रमेण।।४९।।**

अत्र मासानां नामानि वर्ण्यन्ते-मासाः द्वादशैव भवन्ति-तेषाम् नामानि मधु-माधव-शुक्र-शुचि-नभो-नभस्-ईष-ऊर्जः-सहाः-सहस्य-तपस्-तपस्यश्च इति। तेषां प्रचलिता नामानि निम्न प्रकारेण भवन्ति-चैत्र-वैशाख-ज्येष्ठ-आषाढ़-श्रावण-भाद्रपद-आश्विन-कार्तिक-मार्गशीर्षः-पौष-माघ-फाल्गुनः।

**पक्षौ –**

**पूर्वापरं मासदलं पक्षौ नीलसिताभिधौ।**

**आदौ शुक्लः प्रवक्तव्यः केचित् कृष्णोऽपि मासके।।५०।।**

एकस्मिन् मासे पक्षद्वयं भवति। एक-कृष्णपक्षः अपरश्च-शुक्लपक्षः। कश्चित् आचार्यस्य मते शुक्लपक्षः प्रथमः, अपरस्य मतानुसारं कृष्णपक्षः तु पूर्वपक्षः इति अवगन्तव्यः।

चैत्रः, वैशाखः, ज्येष्ठः, आषाढः, श्रावणः, भाद्रपदः, आश्विनः, कार्तिकः, मार्गशीर्षः, पौषः, माघः, फाल्गुनः चेति द्वादश मासाः भवन्ति।

**मासारम्भः –**

**विन्ध्योत्तरभागे कृष्णप्रतिपत्तोमासारम्भः।**

**विन्ध्यदक्षिणभागे शुक्ल प्रतिपत्तो मासारम्भः।।५१।।**

एकस्मिन् मासे पक्षद्वयम् भवति। तत्र विन्ध्यपर्वतस्योत्तरभागे कृष्णपक्षस्य प्रतिपदः तिथितः मासारम्भः मन्यते अर्थात् पूर्वं कृष्णपक्षः अनन्तरं शुक्लपक्षः भवति। एतस्य विपरीतं विन्ध्यपर्वतात् दक्षिणभागे शुक्लपक्षस्य प्रतिपदः मासारम्भः गण्यते। तत्र पूर्वं शुक्लपक्षः अनन्तरं कृष्णपक्षः भवति मासे।

**ऋतुपरिभाषा –**

**मृगादिराशिद्वयभानुभोगात्**

**षडर्त्तवः स्युः शिशिरो वसन्तः।**

**ग्रीष्मश्च वर्षा च शरच्च-**

**तद्वच्चेमन्त नामा कथितोऽत्रषष्ठः।।५२।।**

सूर्यस्य मकरराशितः आरम्भराशिद्वयस्य भोगकालः एकस्य ऋतोः कालः भवति। अर्थात् मकरकुम्भयोः सूर्यस्य स्थितिकाले शिशिरः ऋतुः भवति। मीनमेषयोः सूर्ये सति वसन्तर्तुः भवति। वृषमिथुनयोः ग्रीष्मः। कर्कसिंहयोः वर्षा कन्यातुलयोः

शरद्। वृश्चिकधनवो: हेमन्त: ऋतु: भवति। एवं षड् ऋतव: भवन्ति।

**मासपरिभाषा –**

**दर्शावधिं मासमुशन्ति चान्द्रं,**

**सौरं तथा भास्कारराशिभोगात्।**

**त्रिशद्दिनं सावन संज्ञमाहु:**

**नाक्षत्रमिन्दोर्भगण भ्रमाच्च।।५३।।**

शुक्लपक्षस्य प्रतिपद: आरभ्य कृष्णपक्षस्य अमावस्यापर्यन्तं चान्द्रमास: उच्यते। सूर्यस्य एकस्य सक्रान्ते: भोगकाल: सौरमास: भवति। त्रिंशत सूर्योदयानां काल: सावनमास: कथ्यते यस्य आरम्भ: कृष्णपक्षस्य प्रतिपद: भूत्वा शुक्लपक्षस्य पूर्णिमायां समाप्ति: भवति। चन्द्रस्य एकस्मात् नक्षत्रभोगात् पुन: तस्मिन् एव नक्षत्रपर्यन्तम् आगमनस्य काल: नाक्षत्रमास: भवति।

**कार्यानुसारं मासानामुपयोग-निर्धारणम् –**

**विवाहादौ स्मृत सौरो यज्ञादौ सावनो मत:।**

**पितृकार्येषु चान्द्रं च ऋक्षं दानव्रतेष्वपि।।५४।।**

विवाहादिसंस्कारेषु सौरमास:, यज्ञादिपुण्यकर्मसु सावनमास:, पितृकार्येषु (श्राद्धादिषु) चान्द्रमास: दानोपवासादिकर्मसु च नाक्षत्रमास: गणनाया: आधारो भवति।

**अयनपरिभाषा –**

**अथायने कीटमृगादिषट्के क्रमेण ते दक्षिणसौम्यसंज्ञे।**

**तमीदिने सायनभागभास्वदुत्थे स्फुटे नाकसदामुभेस्त:।।५५।।**

यदा कर्कसिंहकन्यातुलावृश्चिकधनुराशिषु सूर्य: भवति तदा दक्षिणायनं उच्यते। यदा च मकरकुम्भमीनमेषवृश्चिकमिथुनराशिषु सूर्यस्य सञ्चारो भवति तदा उत्तरायणम् उच्यते। सूर्यस्य दक्षिणायने सति देवानां रात्रि: भवति उत्तरायणे सति दिनं भवति। एतस्य विपरीतक्रमेण दक्षिणायने सति सूर्ये राक्षसानां दिनं भवति उत्तरायणे तु रात्रि:।

**काल-परिभाषा –**

**गुर्वक्षराणामुदितं च षष्ठ्या**

**पलं पलानां घटिका किलैका।**

**षष्ठ्या घटीनां भदिनं**

**तथाद्यैक्तिथ्यैकया चन्द्रमसो दिनं स्यात्।।५६।।**

षष्टे: गुरुवर्णनाम् उच्चारणकाल: एकं पलं भवति। षष्टे: पलानां काल: एकघटि:, षष्टे: घटिनां काल: एका तिथि: भवति सा च एकं चन्द्रदिनं अथवा नाक्षत्राहोरात्रमुच्यते।

60 गुर्वक्षर: = 1 पलम् = 24 सैकण्डम्

60 पलम् = 1 घटि: = 24 मिनिटस्य

60 घटि: = 1 दिनम् = 24 घण्टा

अंशादि परिभाषा –

वृत्तम् = 360 अंश: = 12 राशि: = 1 भगण:

60''' प्रति विकला = 1'' विकला:

60'' विकला = 1'' कला:

60' कला = 1'' अंश:

30° अंश = 1 राशि:

शास्त्रेषु काल: द्विध: उक्त: अस्ति। स च मूर्तामूर्तश्च। मूर्तकाल: स्थूलकाल: नाम्ना तथा च अमूर्तकाल: सूक्ष्मकाल: नाम्ना अप्यभिधीयते।

**स्थूलकाल: –**

अयं काल: प्राणादिकाल: भवति। व्यवहारे अस्य ग्रहणं भवति। अयं मूर्त्तकालनाम्नाऽपि व्यवह्रियते। कालस्य अस्यां गणनायां प्राणा: लघूत्तमा: मात्रका: भवन्ति। अत एव अयं प्राणादिकालनाम्ना व्यवह्रियते। प्राणकालस्य परिभाषा–कस्यचित् स्वस्थपुरुषस्यैकश्वासोच्छ्वासान्तर्वर्ती काल: प्राणकाल: (असु:)।

**सूक्ष्मकाल: –**

इत: पूर्वं प्राणादिकाल: भवता ज्ञात:। इदानीं सूक्ष्मकालस्य (अमूर्तकालस्य) विवेचनं विधीयते। त्रुट्यादिकाल: अमूर्तकाल: वा सूक्ष्मकाल: भवति। स्थूलकाले लघूत्तम: मात्रक: प्राण: आसीत्। सूक्ष्मकाले लघूत्तम: मात्रक: त्रुटि: इति वर्तते। अस्य कालस्य गणनाया: आरम्भ: त्रुटित: भवति। अत एव अयं त्रुट्यादिकाल:। त्रुटे: परिभाषा इदानीं क्रियते। पश्यतु। अस्माकं नेत्रयो: पक्ष्मपात: भवति। पक्ष्मपातकरणे यावान् काल: गच्छति तस्य कालस्य त्रिसहस्रतम: भाग: त्रुटि: कथ्यते। अत एव नेत्रपक्ष्मद्वयसंयोगकालस्य सहस्रत्रयतमभागतुल्या त्रुटि: इति कथ्यते।

# सामान्य मुहूर्त्तपरिचय:

**अमृतयोग निर्णय: –**

**चन्द्रार्कयो: भवेत्पूर्णा कुजे भद्रा जया गुरौ।**

**शनिचन्द्रजयोर्नन्दा भृगौरिक्ताऽमृताह्वया।।१।।**

यदि रविसोमवासरयो: पूर्णातिथि: स्यात् मङ्गलवासरे भद्रातिथि: भवेत् गुरुवासरे जया, नन्दातिथि बुधशनिवासरयो: अथवा शुक्रवासरे रिक्तातिथि: स्यात् तदा अमृतयोग: भवति।

**मृत्युयोग: –**

**आदित्यभौमयोर्नन्दा भद्रा भार्गवचन्द्रयो:।**

**बुधे जया गुरौ रिक्ता शनौ पूर्णा च मृत्युदा।।२।।**

यदि रविमंगलवासरयो: नन्दातिथि, सोमशुक्रयो: भद्रातिथि, बुधवासरे जया गुरुवासरे रिक्ता अथवा शनिवासरे पूर्णातिथि: भवेत् तर्हि मृत्युयोग: भवति।

**तिथिवारजन्य सिद्धियोग –**

**शुक्रे नन्दा बुधे भद्रा जया क्षितिज नन्दने।**

**शनौ रिक्ता गुरौ पूर्णा सिद्धियोगा: प्रकीर्त्तिता:।।३।।**

शुक्रवासरे नन्दातिथि: भवेत् बुधवासरे भद्रातिथि:, मङ्गलवासरे जयातिथि: स्यात् शनिवासरे रिक्तातिथि: अथवा गुरुवासरे पूर्णातिथि: भवेत् तदा सिद्धियोग: भवति।

| तिथि | | | संज्ञा | सिद्धियोग: | अमृतयोग: | मृत्युयोग: |
|---|---|---|---|---|---|---|
| 1 | 6 | 11 | नन्दा | शुक्र | बुध, शनि | रवि, मंगल |
| 2 | 7 | 12 | भद्रा | बुध | मंगल | सोम, शुक्र |
| 3 | 8 | 13 | जया | मंगल | गुरु | बुध |
| 4 | 9 | 14 | रिक्ता | शनि | शुक्र | गुरु |
| 5 | 10 | 15 | पूर्णा | गुरु | रवि, सोम | शनि |
| अशुभ | मध्यम | शुभ | | शुक्लपक्षस्य फलम् | | |
| शुभ | मध्यम | अशुभ | | कृष्णपक्षस्य फलम् | | |

**त्याज्य-योग: –**

**वर्जयेत् सर्वकार्येषु हस्तार्कं पञ्चमीतिथौ।**

**भौमाश्विनीं च सप्तम्यां षष्ठ्यां चन्द्रैन्दवं तथा।।४।।**

**बुधानुराधामष्टम्यां दशम्यां भृगुरेवतीम्।**

**नवम्यां गुरु पुष्यं चैकादश्यां शनिरोहिणीम्।।५।।**

यदि पञ्चम्यां तिथौ हस्तनक्षत्रं रविवासर: च भवेत्, सप्तम्यां तिथौ अश्विनीनक्षत्रं मङ्गलवासर: च स्यात् षष्ठयां मृगशीर्ष: सोमवासर: च अष्टम्यां अनुराधानक्षत्रं बुधवासर: च दशम्यां रेवतीनक्षत्रं शुक्रवासर: च नवम्यां पुष्यनक्षत्रं गुरुवासर: च भवेत् अथवा एकादश्यां तिथौ रोहिणी नक्षत्रं शनिवासर: च स्यात् तदा सर्वविधकार्याणि त्याज्यानि भवन्ति।

**रात्रावधं प्रहरविचार –**

**रवौ रसाब्धौ हिमंगौ हयाब्धी**

**द्वयं महोजे शशिजे शराद्री।**

**गुरौ शराष्टौ भृगुजे तृतीयं**

**शनौरसाद्यन्तमिति क्षपायाम्।।६।।**

रविवासरे रात्रौ षष्ठ: चतुर्थश्च अर्धयामौ, सोमवासरे सप्तम: चतुर्थश्च मङ्गलवासरे द्वितीय: अर्धयाम: बुधवासरे पञ्चम: सप्तमश्च, गुरुवासरे पञ्चम: अष्टमश्च अर्धयामौ, शुक्रवासरे तृतीय: तथैव शनिवासरे रात्रौ प्रथम: षष्ठ: अष्टमश्च अर्धयामा: शुभकार्यार्थं त्याज्या: सन्ति।

**शुक्रास्तादौ वर्ज्यकर्माणि –**

**वाप्यारामतडागकूपभवनारम्भप्रतिष्ठे व्रता-**

**रम्भोत्सर्गवधूप्रवेशनमहादानानि सोमाष्टके।**

**गोदानाग्रयणप्रपाप्रथमकोपाकर्म वेदव्रतं**

**नीलोद्वाहमथातिपन्नशिशुसंस्कारान् सुरस्थापनम्।।७।।**

**दीक्षामौञ्जिविवाहमुण्डनमपूर्वं देवतीर्थेक्षणं**

**संन्यासाग्निपरिग्रहौ नृपतिसंदर्शाभिषेको गमम्।**

**चातुर्मास्यसमावृती श्रवणगोर्वेधं परीक्षां त्यजेत्**

**वृद्धत्वास्तशिशुत्व ईज्यसितयोर्न्यूनाधिमासे तथा ।।८।।**

वापी-उद्यान-तडाग-कूप गृहाणां आरम्भः प्रतिष्ठा च, व्रतस्य आरम्भोद्यापने, वध्वः प्रवेशः तुलादिमहादानं सोमयज्ञ काम्यवृषोत्सर्गः, अन्नप्राशनमनतरसंस्काराः देवप्रतिष्ठा, यज्ञदीक्षा, विवाहः राजदर्शनम्, राज्याभिषेकः, यात्रा, चातुर्मास्य व्रतम्, समावर्तनम्, कर्णवेधः, रत्नपरीक्षा चेति एतानि कर्माणि बृहस्पतेः शुक्रस्य च बालवृद्धास्तेषु, क्षयमासे, अधिकमासे च न करणीयानि। देशभेदात् वक्रे बृहस्पत्यौ त्रयोदशदिनात्मके पक्षेऽपि एतानि कर्माणि न कर्त्तव्यानि।

**अतिचारादि-व्यवस्था –**

**अतिचारे सप्तदिनं वक्रे द्वादशमेव च।**

**नीचस्थिते च वागीशे मासमेकं विवर्जयेत् ।।९।।**

बृहस्पतेः अतिचारे सति सप्तदिनानि यावत्, वक्रे सति द्वादश दिनानि यावत् नीचे सति मासं यावत् शुभकार्याणि न आचरणीयानि।

**ताराज्ञानम् –**

**जन्म संपद्विपत्क्षेम प्रत्यरिः साधको वधः।**

**मैत्रं चैवातिमैत्रञ्च जन्मभात्तारकाः स्मृताः ।।१०।।**

जन्म सम्पद् विपद् क्षेम प्रत्यरिः साधकः वधः मैत्रः अतिमैत्रः चेति जन्मनक्षत्रात् नव ताराः भवन्ति। स्वस्य नाम्नः नक्षत्रात् दिननक्षत्रस्य गणनां कृत्वा नवभिः विभाजनं क्रियते तर्हि ताराज्ञानं भवति।

**रव्यादिसंक्रमणे त्याज्यघटिकाः –**

**देवद्व्यङ्कर्तवोष्टाष्टौ नाड्योङ्काः खनृपाः क्रमात्।**

**वर्ज्याः संक्रमणेऽर्कादेः प्रायोऽर्कस्यातिनिन्दिताः ।।११।।**

सूर्यस्य सङ्क्रान्तिकालात्प्राक् पश्चात् च त्रयस्त्रिशत् घट्यः, चन्द्रसंक्रान्तौ द्वे घट्यौ, मङ्गलसंक्रान्तौ ९ घट्यः, बुधसंक्रान्तौ षट् घट्यः गुरुसंक्रान्तौ ८८ घट्यः, शनिसंक्रान्तौ च १६० घट्यः शुभकार्यार्थं त्याज्याः सन्ति। परं मेषकर्कतुलामकरेषु यदि सूर्यसंक्रान्ति भवति तर्हि संक्रान्तेः दिनं, पूर्वदिनं, परदिनं एवं दिनत्रयं त्याज्यं भवति।

**ध्यातव्यम् –** सूर्यस्य अन्यस्यां राशौ परिवर्तनकालः संक्रान्ति कालः कथ्यते।

**पंचकज्ञानम् –**

**वासवोत्तरदलादिपञ्चके याम्यदिग्गमनगेहगोपने।**

**प्रेतदाहतृणकाष्ठसंग्रहे शय्यकावितननं च वर्जयेत् ।।१२।।**

धनिष्ठानक्षत्रस्य उत्तरार्धात् रेवतीनक्षत्रपर्यन्तं सार्धचतुष्टयनक्षत्राणां कालः पञ्चकः भवति। एतस्मिन् काले दक्षिणदिशि यात्रा, भवनस्य छदिनिर्माणं, प्रेतदाहः तृणकाष्ठसंग्रहः शय्यावितननं च अशुभं भवति।

**वस्त्रादि-धारण मुहूर्तः –**

**पौष्णाध्रुवाश्विकरपञ्चकवासवेज्यादित्ये प्रवालरदशंखसुवर्णवस्त्रम्।**

**धार्यं विरिक्तशनिचन्द्रकुजेऽह्नि रक्तं भौमे ध्रुवादितियुगे शुभगा न दध्यात् ।।१३।।**

रेवती, ध्रुवः, अश्विनी, हस्तादि पञ्च नक्षत्राणि (हस्तः, चित्रा, स्वाति, विशाखा, अनुराधा चेति पञ्च) धनिष्ठा पुष्यः इति एतेषु दशसु नक्षत्रेषु शनिवासरं, चन्द्रवासरं, मङ्गलवासरञ्च तथा रिक्तातिथिं (चतुर्थी, नवमी, चतुर्दशी च) विहाय प्रवालगणदन्तसुवर्णाभूषणानि वस्त्राणि च धारणीयानि। सौभाग्यवती नारी उत्तराफाल्गुनी-उत्तराषाढा-उत्तराभाद्रपदा-रोहिणी-

पुनर्वसु-पुष्यनक्षत्रेषु नूतनवस्त्रादीनां धारणं न कुर्यात्।

**लता पादपारोप-नृपदर्शन-मद्यकर्म-गोक्रयविक्रयमुहूर्ताः –**

> **राधामूलमृदुध्रुवर्क्षवरुणक्षिप्रैर्लतापादपा-**
>
> **रोपोऽथो नृपदर्शनं ध्रुवमृदुक्षिप्रश्रवो वासवैः।**
>
> **तीक्ष्णोग्राम्बुपभेषु मद्यमुदितं क्षिप्रान्त्यवह् नोन्द्रभा-**
>
> **दित्येन्द्राम्वुपवासवेषु हि गवां शस्तः क्रयो विक्रयः।।१४।।**

विशाखा, मूलः, मृदुसंज्ञकाः (मृगशीर्ष रेवती चित्रा अनुराधा इत्येतानि मृदुसंज्ञकनक्षत्राणि) शतभिषा क्षिप्रसंज्ञकः (हस्तः अश्विनी पुष्यः अभिजित् इत्योतानि क्षिप्रसंज्ञकनक्षत्राणि) चेत्येषु एकादशसु नक्षत्रेषु लतावृक्षाणां रोपणं फलदो भवति। ध्रुवसंज्ञकः (उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी चेति) मृदुसंज्ञकः (मृगशीर्षः, रेवती, चित्रा, अनुराधा चेति) क्षिप्रसंज्ञकः (हस्तः, अश्विनी, पुष्यः, अभिजित् चेति) श्रवणः धनिष्ठा चेत्येतेषु नृपदर्शन करणीयम्। तीक्ष्णसंज्ञकः (मूल ज्येष्ठा आर्द्रा, आश्लेषा चेति) उग्रसंज्ञकः (पूर्वाफाल्गुनी पूर्वाषाढा पूर्वाभाद्रपदा मघा चेति) शतभिषा चेतेषु नक्षत्रेषु मद्यपानं शुभकारकं भवति। क्षिप्रसंज्ञकः (हस्तः अश्विनी, पुष्यः अभिजित् चेति) रेवती विशाखा पुनर्वसुः ज्येष्ठा, शतभिषा धनिष्ठा चेत्येतेषु नक्षत्रेषु गवां क्रयविक्रयणं फलदं भवति।

**वस्तुविक्रय-विपणिमुहूर्त्तौ –**

> **पूर्वाद्वीशकृशानुसार्पयमभे केन्द्रद्विकोणे शुभैः**
>
> **षट्त्र्यायेष्वशुभैर्विना घटतनुं सन्विक्रयः सत्तिथौ।**
>
> **रिक्ताभौमघटान्विता च विपणिर्मित्रध्रुवक्षिप्रभे-**
>
> **र्लग्ने चन्द्रसिते व्ययाष्टरहितैः पापैः शुभैर्द्वयाखे।।१५।।**

पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, विशाखा, कृतिका, आश्लेषा, भरणी इति एतेषु नक्षत्रेषु लग्नात् केन्द्रे द्वितीये कोणे (1-4-7-10-2-9-5) च शुभग्रहः भवेत् षष्ठे, तृतीये, एकादशे च पापग्रहः स्यात् कुम्भं विहाय अन्यो लग्नो भवेत् तदा वस्तुविक्रयणं शुभं भवति। रिक्तातिथिः (4-9-14) मङ्गलवासरं कुम्भलग्नं च विहाय अन्येषु तिथिवासरलग्नेषु यदि मित्रध्रुवक्षिप्रसज्ञकं नक्षत्रं स्यात्। लग्ने शुक्रः चन्द्र वा स्यात् द्वादशे अष्टमे च पापग्रहः न स्यात्। द्वितीये एकादशे दशमे च शुभग्रहः भवेत् तदा विपण्यारम्भः शुभं भवति।

**पञ्चपर्वाणि –**

> **चतुर्दश्यष्टमी कृष्णा त्वमावास्या च पूर्णिमा।**
>
> **पर्वाणि पञ्च राजेन्द्र रविसंक्रान्तिरेव च।।१६।।**

चतुर्दशी, अष्टमी, अमावस्या, पूर्णिमा एताः चतस्रः तिथयः तथा प्रतिमासं सूर्यसंक्रान्तिः इति पंच पर्वाणि भवन्ति।

**ध्यातव्यम् –** एतेषां पर्वाणां उपयोगः अत्यावश्यकेषु दानादिकार्येषु प्रयुज्यते।

**लुप्तवस्तु -विचारः –**

> **अन्धाक्षं वसुपुष्यधातृजलभद्वीशार्यमान्त्याभिधं।**
>
> **मन्दाक्षं रविविश्वमित्रजलपाऽऽश्लेषाश्विश्चांन्द्र भवेत्।।१७।।**
>
> **मध्याक्षं शिवपित्रजैकचरणात्वाष्ट्रेन्द्रविध्यन्तकं**
>
> **स्वक्षं स्वात्यदितिश्रवोदहनभाऽऽहिर्बुध्न्यरक्षोभगम्।।१८।।**

चौर्यंगतस्य वस्तुन: प्राप्त्यप्राप्तिविचारार्थं नक्षत्राणां चतुर्धाविभाग: कृत:। तत्र अन्धाक्षसंज्ञक-नक्षत्राणि रोहिणी, पुष्य: उत्तराफाल्गुनी, विशाखा, पूर्वाषाढा, धनिष्ठा, रेवती च सन्ति। मृगशीर्ष: आश्लेषा, हस्त:, अनुराधा, उत्तराषाढा, शतभिषा, अश्विनी चेति मन्दाक्ष संज्ञकानि नक्षत्राणि सन्ति। मध्याक्षसंज्ञकानि नक्षत्राणि तु आर्द्रा, मघा, चित्रा, ज्येष्ठा, अभिजित्, पूर्वाभाद्रपदा, भरणी च वर्तन्ते। पुनर्वसु, पूर्वाफाल्गुनी, स्वाती, मूल, श्रवण, उत्तरभाद्रपदा कृतिका चेति सुलोचनसंज्ञकानि नक्षत्राणि सन्ति। वस्तुत: रोहिणीनक्षत्रात् आरभ्य अन्धाक्ष: मन्दाक्ष: मध्याक्ष: सुलोचन: चेति नक्षत्राणां क्रमश: संज्ञा वर्तते।

| **अन्धाक्ष:** | रोहिणी | पुष्य: | उत्तराफाल्गुनी | विशाखा | पूर्वाषाढा | धनिष्ठा | रेवती |
|---|---|---|---|---|---|---|---|
| **मन्दाक्ष:** | मृगशीर्ष | आश्लेषा | हस्त: | अनुराधा | उत्तराषाढा | शतभिषा | अश्विनी |
| **मध्याक्ष: ( करणाक्ष: )** | आर्द्रा | मघा | चित्रा | ज्येष्ठा | अभिजित् | पूर्वाभाद्रपदा | भरणी |
| **सुलोचन:** | पुनर्वसु | पूर्वाफाल्गुनी | स्वाति | मूल: | श्रवण: | उत्तराभाद्रपदा | कृतिका |

**अन्धाक्षे लभते शीघ्रं मन्दाक्षे च दिनत्रयम्।  काणाक्षे च प्रयत्नेन सुलोचने कदापि न।।१९।।**

**विनष्टार्थस्य लाभोऽन्धे शीघ्रं मन्दे प्रयत्नत:।  स्याद् दूरे श्रवणं मध्ये श्रुत्याप्ती न सुलोचने।।२०।।**

अत्र लुप्तस्य वस्तुन: प्राप्तिविषये नक्षत्रानुसारं फलं वर्णितमस्ति। एतदनुसारं अन्धाक्षसंज्ञकनक्षत्रेषु लुप्तं वस्तु शीघ्रं प्राप्नोति। मन्धासंज्ञकनक्षत्रेषु लुप्तं तर्हि दिनत्रये मिलति। मध्याक्षे अर्थात् काणाक्षसंज्ञकनक्षत्रेषु किमपि वस्तु लुप्तं तर्हि बहुविधप्रयत्नै: प्राप्नोति किन्तु सुलोचनसंज्ञकनक्षत्रेषु लुप्तं वस्तु कदापि न मिलति। पुनश्च अन्धाक्षे विनष्टस्य धनस्य प्राप्ति: शीघ्रं भवति मन्दाक्षे विनष्टं तर्हि उपायेन मिलति। मध्याक्षे विनष्टविषये बहुकालान्तरं श्रवणं भवति। सुलोचने यदि नष्टं तर्हि तस्य विषये न श्रवणं भवति न प्राप्ति:।

### नष्टद्रव्यविचार: –

**तीक्ष्णमिश्रध्रुवोग्रैर्यद् द्रव्यं दत्तं निवेशितम्।**

**प्रयुक्तं च विनष्ट च विष्ट्यां पाते च नाप्यते।।२१।।**

यदि किमपि वस्तु अथवा द्रव्यं तीक्ष्ण-मिश्र-ध्रुव-उग्रसंज्ञकेषु नक्षत्रेषु कस्मै अपि दत्तम् अथवा व्यवहारे व्यापारे वा निवेशितं कुत्रापि भूमौ विष्टयां पातितं तर्हि न प्राप्यते।

### वर्ग-विचार: –

**अ क च ट त प य श वर्गा: खगेशमार्जारसिंहशुनाम्।**

**सर्पाखुमृगावीनां निजपञ्चमवैरिणामष्टौ।।२२।।**

अवर्ग (सर्वे स्वरा:), कवर्ग: (क ख ग घ ङ), चवर्ग (च छ ज झ ञ), टवर्ग (ट ठ ड ढ ण), तवर्ग: (त थ द ध न), पवर्ग (प फ ब भ म), यवर्ग: (य र ल व) शवर्ग: (श ष स ह) इत्येते अष्ट वर्गा: सन्ति। एते वर्गा: क्रमश: गरुड:, मार्जार:, सिंह:, श्वान:, सर्प:, मूषक:, मृग:, मेषश्च संज्ञका: सन्ति एतेषु स्वस्मात् पञ्चम: वर्ग: शत्रु भवति।

### काकिणी-विचार: –

**स्ववर्गं द्विगुणं कृत्वा परवर्गेण योजयेत्।**

**अष्टभिस्तु हरेच्छेषे योऽधिक: स ऋणी भवेत्।।२३।।**

स्ववर्गं द्विगुणितं कृत्वा अन्यस्य वर्गं योजयित्वा या संख्या प्राप्ता भवति ताम् अष्टभि: भाजने कृते यद् शिष्टं भवति सा काकिणी उच्यते। द्वयो: जनयो: यस्य काकिणी अधिका भवति सो अन्यस्य ऋणी भवति।

# परिशिष्टम्

**ज्योतिषशास्त्रवाङ्मयम् –** कल्पवृक्षात्मकमिदं ज्योतिषशास्त्रं गणितफलितविभागेन द्विविधम्। ग्रहनक्षत्राणां गति-स्थिति-अयनांश-पातादिविचारो यत्र विद्यते तद्गणितस्कन्धः। शुभाशुभसमयानां निर्धारणं,यागादिकार्याणां समयनिर्धारणादिकं फलितभागान्तर्गतं वर्तते। यथोक्तं प्रश्नमार्गे –

**प्रमाणफलभेदेन द्विविधं च भवेदिदम्।**

**प्रमाणं गणितस्कन्धः स्कन्धावन्यौ फलात्मकौ।।** (प्र.मा. - १/१९)

पुनः द्वयोः विभागयोः स्कन्धत्रयेण विभागत्रयं कृतम्। यथा गणित-संहिता-होराभेदेन।

**स्कन्धत्रयात्मकं ज्योतिश्शास्त्रमेतत् षडङ्गवत्।**

**गणितं संहिता होरा चेति स्कन्धत्रयं मतम्।।** (प्रश्नमार्गे - १/५)

वेदस्य षडङ्गवत् ज्योतिषशास्त्रस्यापि षडङ्गानि वर्तन्ते। तानि यथा –

**जातक-गोल-निमित्त-प्रश्न-मुहूर्ताख्य-गणित-नामानि।**

**अभिदधतीह षडङ्गान्याचार्या ज्यौतिषे महाशास्त्रे।।** (प्र.मा. - १/६)

तत्रापि त्रिषु स्कन्धेषु एतेषां षडङ्गानां विभागः स्कन्धत्रयेषु कृतम्। यथोक्तं प्रश्नमार्गे –

**गोलो गणितञ्चेति द्वितयं खलु गणितसंहिते स्कन्धे।**

**होरासंहितयोरपि निमित्तमन्यत्र यच्च होराख्ये।।** (प्र.मा. - १/७)

अर्थात् गोलगणिताङ्गयोरन्तर्भावः गणिते वा सिद्धान्तस्कन्धे भवति। जातकप्रश्नमुहूर्तभागाः होरास्कन्धेऽन्तर्भवन्ति। अन्तिमाङ्गत्वेन निमित्तः संहितास्कन्धे गण्यते।

**ज्योतिषस्य प्रसिद्धाः ग्रन्थाः ग्रन्थकाराश्च –** ज्योतिषशास्त्रं प्रथमं ब्रह्मणा यज्ञप्रवर्तनाम् सृष्टं तच्च शिष्यपरम्परया बुधैर्गृहीतमिति समालोचकैः उच्यते। अष्टादश ज्योतिषशास्त्रप्रवर्तकाः श्रूयन्ते। यथा –

**।। ज्योतिःशास्त्रप्रवर्तकाष्टादशाचार्याः ।।**

**कश्यपमतेन –**

**सूर्यः पितामहो व्यासो वसिष्ठोऽत्रि पराशरः।**

**कश्यपो नारदो गर्ग्गो मरीचिर्मनुरङ्गिरा।।**

**लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।**

**शौनकोऽष्टादशाश्चैते ज्योतिःशास्त्र प्रवर्त्तकाः।।**

सूर्यः, पितामहः, व्यासः, वसिष्ठः, अत्रिः, पराशरः, कश्यपः, नारदः, गर्गः, मरीचिः, मनुः, अङ्गिराः, लोमशः, पौलिशः, च्यवनः, यवनः, भृगुः, शौनकः च एते अष्टादश ज्योतिःशास्त्रस्य प्रवर्तकाः सन्ति।

**पराशरमतेन –**

**विश्वसृङ् नारदो व्यासो वसिष्ठोऽत्रिपराशरः।**

**लोमशो यवनः सूर्यश्च्यवनौः कश्यपो भृगुः।।**

**पुलस्त्यो मनुराचार्यः पौलिशः शौनकोऽङ्गिराः।**

**गर्ग्गो मरीचिरित्येते ज्ञेयाः ज्योतिः प्रवर्त्तकाः।।**

नारदः, व्यासः वसिष्ठः, अत्रिः, पराशरः लोमशः, यवनः, सूर्यः, च्यवनः, कश्यपः, भृगुः, पुलत्स्य आचार्योमनुः, आचार्यः पौलिशः, शौनकः, अङ्गिरा, गर्गः, मरीचि च इति अष्टादशः ज्योतिःप्रवर्तकाः ज्ञातव्या।

संहिता–होरा–सिद्धान्तरूपेण ज्योतिषवाङ्मयस्य त्रिधा विभागः उपरि प्रदर्शितः। अधुना एतेषु स्कन्धेषु उपलब्धानां केषाञ्चन ग्रन्थानां ग्रन्थकाराणां च नामानि अधस्तात् प्रस्तूयते।

| **(क) सिद्धान्तग्रन्थाः –** | | | **(ख) होराग्रन्थाः –** | | |
|---|---|---|---|---|---|
| **क्र.सं.** | **ग्रन्थः** | **ग्रन्थकारः** | **क्र.सं.** | **ग्रन्थः** | **ग्रन्थकारः** |
| १ | सूर्यसिद्धान्तः | आर्षग्रन्थः | १ | बृहज्जातकम् | वराहमिहिरः |
| २ | आर्यभट्टीयम् | आर्यभट्टः | २ | होरारत्नम् | बलभद्रः |
| ३ | शिष्यधीवृद्धदतन्त्रम् | लल्लाचार्यः | ३ | जातकपारिजातः | वैद्यनाथः |
| ४ | पञ्चसिद्धान्तिका | वराहमिहिरः | ४ | ताजिकनीलकण्ठी | नीलकण्ठः |
| ५ | बाह्मस्फुटसिद्धान्तः | ब्रह्मगुप्तः | ५ | भावकुतुहलम् | जीवनाथः |
| ६ | राजमृगाङ्कम् | भोजः | ६ | जातकालङ्कारः | गणेशः |
| ७ | सिद्धान्तशेखरः | श्रीपतिः | ७ | जातकपद्धतिः | केशवः |
| ८ | करणप्रकाशः | ब्रह्मदेवः | **(ग) संहिताग्रन्थाः –** | | |
| ९ | भास्वती | शतानन्दः | १ | गर्गसंहिता | आर्षग्रन्थः |
| १० | सिद्धान्तशिरोमणिः | भास्कराचार्यः | २ | वसिष्ठसंहिता | वशिष्ठः |
| ११ | सिद्धान्तदर्पणः | सामन्तचन्द्रशेखरः | ३ | भृगुसंहिता | भृगुः |
| १२ | ग्रहलाघवम् | गणेशदैवज्ञः | ४ | कश्यपसंहिता | कश्यपः |
| १३ | सिद्धान्ततत्त्वविवेकः | कमलाकरः | ५ | नारदसंहिता | नारदः |
| १४ | लीलावती (पाटिगणितम्) | भास्करः | ६ | बृहत्संहिता | वराहमिहिरः |
| १५ | चापीयत्रिकोणगणितम् | नीलाम्बरः | ७ | रमलनवरत्नम् | परमसुखः |
| | | | ८ | मुहूर्तमार्तण्डः | नारायणः |
| | | | ९ | मुहूर्तचिन्तामणिः | रामदैवज्ञः |
| | | | १० | नरपतिजयचर्यास्वरोदयः | नरपतिः |

## अभ्यास-दीर्घा

प्रश्न : १. पंचाङ्गस्य कानि अङ्गानि?

प्रश्न : २. तिथीनां संज्ञा: कति का: च ता:?

प्रश्न : ३. रिक्तासंज्ञायां का: तिथय: भवन्ति?

प्रश्न : ४. वारक्रमं संक्षेपेण प्रस्तूयताम्?

प्रश्न : ५. अहोरात्रे कति प्रहरा: भवन्ति?

प्रश्न : ६. स्थिर करणानि कानि? नामानि लिखत।

प्रश्न : ७. 'विष्टि:' इति करणस्य अपरं नाम किम्?

प्रश्न : ८. मृदु-मैत्रसंज्ञकनक्षत्राणि कानि? तेषां नामानि लिखत।

प्रश्न : ९. योगा: कति? तेषां नामानि कानि?

प्रश्न : १०. सिंहस्याधिपति क: ग्रह:?

प्रश्न : ११. 'सुरेश:' इति नाम्न: का राशि: भवति?

प्रश्न : १२. भौमवासरेण सह भद्रा तिथे: संयोग: कं योगं निर्माति?

प्रश्न : १३. सिंहवर्गे के वर्णा: भवन्ति?

प्रश्न : १४. एकस्मिन् प्रहरे कति अर्धयामा:?

प्रश्न : १५. श्रवणनक्षत्रस्य चरणा: के?

इति ज्योतिष-अवकहडाचक्रम्

■■■